।। श्रीगणेशाय नमः ।।



गुरुमण्डलग्रन्थमालाया अष्टादशपुष्पम् :—

# पद्मपुराणम्

## श्रीमन्महर्षिकृष्णद्वैपायनव्यासविरचितम्

षष्ठोत्तरखण्डोत्तरार्द्धसप्तमक्रियायोगसारखण्डात्मकम्

तस्य

## पञ्चमो भागः

---

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं बटुकत्रयम्पदयुगं दूतीक्रमंमण्डलम् ( शाम्भवम् ) ।।
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ।।

---

५, क्लाइव रो, कलकत्ता-१

ख्रीस्ताब्दः

१९४८

GURUMADAL SERIES No. XVIII.

# PADMA PURANAM



With

Sixth Latter ( Half ) & Seventh Volumes

UTTAR KHANDAM ( Uttarardham )

AND

KRIYAYOGASARKHANDAM.

*BY*

## SHRIMAN MAHARSHI KRISHNA DWAIPAYAN VEDAVYAS



Part V

**5, CLIVE ROW**

Calcutta-1

*Christian Era.*

**1946**

* श्रीगणेशायनमः *

# पद्मपुराणस्थषष्ठोत्तरखण्डोत्तरार्द्धभागस्य

## विषयानुक्रमणिका

—*—

| अध्याय संख्या | विषयः | पृष्ठाङ्कः |
|---|---|---|
| १८४ | ब्रह्महंसस्यकार्ष्ण्यपतनवर्णनम् | ५८६ |
| " | गीतादशमाध्यायद्वारोद्धारोपायवर्णनम् | ५६१ |
| १८५ | विश्वरूपाभिधैकादशाध्यायमाहात्म्यवर्णनम् | ५६२ |
| " | दिव्यतीर्थवार्त्तावर्णनम् | ५६५ |
| " | विश्वरूपाध्यायाद्रक्षउद्धारवर्णनम् | ५६७ |
| १८६ | राजपुत्रकथानकपुरःसरं गीताद्वादशाध्यायमाहात्म्यवर्णनम् | ५६६ |
| " | कोल्हापुरस्थसिद्धसमाधिवर्णनम् | ६०१ |
| १८७ | सहरिदीक्षितविप्रभार्यावृत्तं गीतात्रयोदशाध्यायमाहात्म्यवर्णनम् | ६०३ |
| " | दुराचाराया दुर्गतिवर्णनम् | ६०५ |
| १८८ | शौर्यविक्रमवेतालराज्ञोःकथापुरस्सरं गीताचतुर्दशाध्यायमाहात्म्यवर्णनम् | ६०६ |
| " | शशशुनीवृत्तान्तवर्णनम् | ६०७ |
| १८६ | गौड़ाधिपतिनरसिंहवृत्तपुरस्सरं गीतापञ्चदशाध्यायमाहात्म्यवर्णनम् | ६०८ |
| १६० | सौराष्ट्रिकराज्ञः खड्गबाहोर्विप्रमुखात्षोडशोध्यायोपदेशेनोद्धारपुरःसरं-गीताषोडशोध्यायमाहात्म्यवर्णनम् | ६११ |
| " | राज्ञःषोडशाध्यायान्मुक्तिवर्णनम् | ६१३ |
| १६१ | मालवभूपतिपुत्रभृत्यस्यमत्तगजमारणेन पुनर्गजप्राप्तिः सप्तदशाध्यायजप-प्रभावान्मुक्तिवर्णनम् | ६१४ |
| " | मालवभूपतेर्मुक्तिवर्णनम् | ६१५ |
| १६२ | गीताष्टादशाध्याये श्लोकपञ्चकजापकस्येन्द्रपदप्राप्तिपुरःसरमष्टादशाध्याय-माहात्म्यवर्णनम् | ६१६ |
| १६३ | सतीश्वरसम्वादे सूतशौनकसम्वादमुखेनश्रीमद्भागवतमाहात्म्यवर्णनम् | ६१६ |
| " | सनकादिभिर्नारदस्यसम्वादवर्णनम् | ६२१ |

समाप्तैषा पद्मपुराणस्योत्तरखण्डस्थोत्तरार्द्धभागस्य विषयानुक्रमणिका

॥ शुभमस्तु ॥



* श्रीगणेशायनमः *

# पद्मपुराणस्थसप्तमक्रियायोगसारखण्डस्य

## विषयानुक्रमणिका

—*—

| अध्याय संख्या | विषयः | पृष्ठाङ्कः |
|---|---|---|
| ९ | गङ्गामाहात्म्यवर्णनम् | ९९७ |
| " | गङ्गास्नानविधिवर्णनम् | ९९९ |
| " | सत्यधर्मराजमहिषीविजययोःकथावर्णनम् | १००१ |
| " | हिंसाहिंसयोर्वर्णनम् | १००३ |
| " | गङ्गामाहात्म्यवर्णनम् | १००५ |
| १० | माघादिषुसविष्णुपूजाविधानंतत्फलवर्णनम् | १००६ |
| " | चम्पकपुष्पमाहात्म्येसुवर्णराज्ञोवर्णनम् | १००७ |
| " | चम्पकपुष्पमहिमा | १००९ |
| ११ | हरिपूजाविधिवर्णनम् | १०१० |
| " | विष्णुसेवाप्रशंसनम् | १०११ |
| " | विष्णुपूजनेदिग्बन्धनम् | १०१३ |
| " | विष्णुपूजाविधिवर्णनम् | १०१५ |
| " | हरिपूजाफलवर्णनम् | १०१७ |
| १२ | श्रीमद्भगवतोविष्णोरर्चनप्रकारपुरःसरं अश्वत्थपूजने विष्णुपूजनाभेदत्व-प्रतिपादनं तत्र धनञ्जयब्राह्मणाख्यानम् | १०१८ |
| " | मासेषुविष्णुप्रीत्यर्थंनानाफलवर्णनम् | १०१९ |
| | अश्वत्थकर्त्तनेप्रकटितविष्णोर्दर्शनम् | १०२१ |
| " | ब्राह्मणद्वाराविष्णोःसमक्षंक्षमाप्रार्थनम् | १०२३ |
| १३ | विविधमासेषुनानापुष्पादिद्रव्यैर्हरिपूजाविधानपुरस्सरंप्रजानाम्नोब्राह्मणस्य पूर्वजन्मशबरकुलोत्पत्तिवृत्तपूर्वकंहरिभक्तिप्रसादेनमुक्तिलाभोहरिपूजाफल-वर्णनञ्च | १०२५ |
| " | असंस्कृतगृहेविष्णुपूजननिषेधः | १०२७ |
| " | प्रजानामकब्राह्मणोदन्तवर्णनम् | १०२९ |



कलिकातानगर्यां गुरुमण्डलग्रन्थमालाप्रकाशिकाया मोरप्राच्यशोधसंस्थायाः-
सपादनकार्येनियोजिता विद्वच्चरणचञ्चरीकाः लक्ष्मणदुर्गवास्तव्य-
ब्रह्मदत्तत्रिवेदि-नवलगढ़ (जयपुर ) वास्तव्य मिश्रोपनामक
कजोडीलाल-दाधीचोपाह्व रामनाथशास्त्रिणः

॥ शुभमस्तुसताम् ॥

——*——

* श्रीगणेशायनमः *

# विनम्र निवेदन

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यिस्विद्धनम् ॥

ईश्वर का आदेश है कि सृष्टि के सारे प्राणी मेरी ही आत्मा हैं। ज्ञान के द्वारा प्राणीमात्र की पूर्णरूपेण रक्षा का ध्यान रखते हुए अपना भोग जोकि प्रकृति द्वारा निर्दिष्ट किया हुआ है—भोगो। ( किसी की भी हिंसा मत करो। सभी प्राणी सृष्टि की परिचर्या में पूर्णरूपेण सहायक हैं )। किसी भी प्राणी की शक्ति (दूध) हरण करने की मन में भावना भी न आने दो। यही कल्याण का मार्ग है।

वेदञ्चैवाऽभ्यसेन्नित्यं शुचौ देशे समाहितः ।
धर्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः ॥
स्मृतिर्हीनाय विप्राय श्रुतिर्हीने तथैव च ।
दानं भोजनमन्यच्च दत्तं कुलविनाशनम् ॥
तस्मात् सर्वप्रयत्नेन धर्मशास्त्रं पठेद् द्विजः ।
श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते ॥

( लघुहारीत स्मृ० )

समाहित मन से शुद्ध देश में वेद का अभ्यास करे। उच्च भावों से धर्मशास्त्रों का पठन-पाठन करे। स्मृति एवं श्रुतिहीन जो मनुष्य हैं उनका भोजन व नित्यकर्म व्यवहार अपने तथा कुल के लिये हानिकारक है। अतः यत्नपूर्वक धर्मशास्त्र को पढ़े। महर्षियों द्वारा रचित वेद, स्मृति एवं पुराणादि धर्मशास्त्र मानव मात्र के नेत्र [ प्रकाश ] हैं।

मानवमात्र से मेरी करबद्ध प्रार्थना है कि संस्कृत भाषा पढ़ें। महर्षि प्रणीत श्रुति स्मृति आदि का उच्च आदर्श रखते हुए प्राणीहित की भावना से मनन कर सच्चे ज्ञान की प्राप्ति करें। इसी में अपना कल्याण है।

"कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्"

५, क्लाइव रो,
कलकत्ता—१

आपका सेवक—
मनसुखराय मोर

* श्रीगणेशायनमः *

# पाद्मपुराणम्

## उत्तरखण्डम्

# उत्तरार्द्धम्

---

## द्वात्रिंशदधिकशततमाऽध्यायः

### पुष्करादिनानातीर्थमाहात्म्यवर्णनम्

पार्वत्युवाच ।

द्वीपेऽस्मिन्यानि तीर्थानि तानि मे वद सुव्रत ! ।
द्वीपानां द्वीपराजोऽयं सर्वदा भुवि निर्मितः ॥
सङ्ख्यया त्वं वद स्वामिन्कृपां कृत्वा ममोपरि ॥ १ ॥

महादेव उवाच ।

सर्वगः सर्वभूतेषु द्रष्टव्यः सर्वतो भुवि । सप्तलोकेषु यत्किञ्चिद्दृश्यते सचराचरम् ॥
तत्त्वं तेन विना देवि न दृष्टं न श्रुतं मया । अतो विष्णुर्महादेवः केशवः क्लेशनाशनः
तीर्थरूपेण वर्तेत द्वीपे ह्यस्मिन्सुरेश्वरि । तानि तीर्थानि वक्ष्यामि साम्प्रतं नाऽत्रसंशयः
प्रथमं पुष्करं क्षेत्रं तीर्थानां प्रवरं शुभम् । वाराणसी द्वितीयं तु क्षेत्रं मुक्तिप्रदायकम्
तृतीयं नैमिषं क्षेत्रमृषीणां पावनं स्मृतम् । प्रयागं वै चतुर्थं तु तीर्थानामुत्तमं स्मृतम्

कार्मुकं पञ्चमं प्रोक्तमुत्पन्नं गन्धमादने । षष्ठं वै मानसं तीर्थं देवानां रम्यमेव च ॥
सप्तमं विश्वकायं तु ह्यवरे पर्वते शुभे । अष्टमं गौतमाख्यं च मन्दरे निर्मितं पुरा ॥८॥
मदोत्कटं तु नवमं दशमं रथचैत्रकम् । एकादशं कान्यकुब्जं यत्र तिष्ठति वामनः ॥९॥
द्वादशं मलयं चैव कुब्जाम्रकमतःपरम् । विश्वेश्वरं गिरिकर्णं केदारं गतिदायकम् ॥
वाह्यं हिमवतः पृष्ठे गोकर्णं गोपकं तथा । स्थानेश्वरं हिमाद्रौ च विल्वके विल्वपत्रिकम्
श्रीशैले माधवं तीर्थं भद्रं भद्रेश्वरे तथा । वाराहे विजयं प्रोक्तं वैष्णवं वैष्णवो गिरौ

रौद्रं तु रुद्रकोटे तु पैत्र्यं कालञ्जरे गिरौ ।
कम्पिले काम्पिलं तीर्थं मुकुटे कर्कोटकं तथा ॥ १३ ॥
शालग्रामोद्भवं तीर्थं गण्डिकायां सुरेश्वरि ! ।
नर्मदायां शिवाख्यं तु मायायां विश्वरूपकम् ॥ १४ ॥

उत्पलाक्षसहस्राक्षं जातं वै रैवते गिरौ । गङ्गायां पितृतीर्थं च विष्णुपादोद्भवं तथा

विपाशायां विपापा च पाटले पुण्ड्रवर्धनम् ।
नारायणं सुपार्श्वे तु त्रिकूटे विष्णुमन्दिरम् ॥ १६ ॥

विपुले विपुलं नाम कल्याणं मलयाचले । कौरवं कोटितीर्थे च सुगन्धं गन्धमादने॥

कुब्जाम्रके त्रिसन्ध्यं तु गङ्गाद्वारे हरिप्रियम् ।
शैलं विन्ध्यप्रदेशे तु बदर्यां सारस्वतं स्मृतम् ॥ १८ ॥
कालिन्द्यां कालरूपं च सह्येवै सायकं स्मृतम् ।
चान्द्रं चन्द्रप्रदेशे तु रमणं तीर्थनायकम् ॥ १९ ॥

यमुनायां मृगाख्यं तु करवीरे कुरूद्भवम् । विनायके पर्वते वै ह्युमाख्यं तीर्थमेव च ॥
आरोग्यं भास्करे देशे महाकाले महेश्वरम् । तीर्थमभयदं नामामृताख्यं विन्ध्यकन्धरे
मण्डपे विश्वरूपं च स्वाहाख्यं चेश्वरे पुरे । वैगलेयं प्रचण्डायां चाण्डिकं मरकण्टके
सोमेश्वरं तथा तीर्थे प्रभासे पुष्करं तथा । देवमात्रं सरस्वत्यां पारावततटे स्थितम्
महालयं महापद्मे पयोष्ण्यां पिङ्गलेश्वरम् । सिंहिकायां तथा तीर्थं सौरवे रविसंज्ञकम्
कार्त्तिकं कृत्तिकाक्षेत्रे शाङ्करं शङ्करे गिरौ । उत्पलाख्यं ततो दिव्यं सुभद्रासिन्धुसंगमे

गाणपत्यं ततश्चैव पर्वते विष्णुसंज्ञके । जालन्धरे ततः प्रोक्तं तीर्थं विष्णुमुखं च यत्
तारे वै तारकं प्रोक्तं पर्वते विष्णुसंज्ञके । देवदारुवने पौण्ड्रं पौष्कं काश्मीरमण्डले
भीमं हिमं हिमाद्रौ च तुष्टिकं पौष्टिकं पुनः । कपालमोचनं तीर्थं जातं मायापुरे तथा
शङ्खोद्धारं ततश्चैवं देवं वै शङ्खधारकम् । पिण्डे वै पिण्डनं नाम सिद्धे वैखानसं भवेत्
अच्छोदे विष्णुकामं तु धर्मकामार्थमोक्षदम् । औपध्यंचोत्तरे कूले कुशद्वीपे कुशोदकम्
मन्मथं हेमकूटे तु कुमुदे सत्यवादनम् ।
वन्दन्त्यामाश्वकं तीर्थं विन्ध्ये वै मातृकं स्मृतम् ॥३१ ॥
चित्ते ब्रह्ममयं तीर्थं तीर्थानां पावनं स्मृतम् । एतेषां सर्वतीर्थानामुत्तमं शृणु सुन्दरि
विष्णोर्नामसमं तीर्थं न भूतं न भविष्यति । ब्रह्महा हेमहारी वा बालहा गोघ्न एव च
मुच्यते नाममात्रेण प्रसादात्केशवस्य तु । कलौ द्वारवती रम्या धन्यो देवो जनार्दनः
ये पश्यन्ति नरा देवं मुक्तिस्तेषां सुनिश्चला । एवं धन्यतमं देवं विष्णुं सर्वेश्वरं प्रभुम्
नित्यशासि महादेवि विद्धत्संस्थो जनार्दनम् । अष्टोत्तरं तु तीर्थानां शतमेतदुदाहृतम्
यो जपेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते । एषु तीर्थेषु यः स्नात्वा पश्येन्नारायणं हरिम्
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ।
जगन्नाथं महातीर्थं लोकानां पावनं स्मृतम् ॥ ३८ ॥
ये गच्छन्ति नरश्रेष्ठास्तेऽपि यान्ति परां गतिम् । अष्टोत्तरशतं पुण्यं श्रावयेत्पितृकर्मणि
इहलोके सुखं भुक्त्वा याति विष्णोः परं पदम् ।गोदाने श्राद्धदाने वा अहन्यहनि वा पुनः॥
देवार्चनविधौ विद्वान्परं ब्रह्माऽधिगच्छति ॥ ४० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे जम्बूद्वीप-
तीर्थवर्णनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

---

# त्रयस्त्रिंशदधिकशततमोऽध्यायः

## वेत्रवतीमाहात्म्यवर्णनम्

महादेव उवाच ।

वेत्रवत्यास्तु माहात्म्यं वक्ष्यामि शृणु सुन्दरि ! ।
यत्र स्नात्वा विमुच्यन्ते यावदाभूतसंप्लवम् ॥ १ ॥

वृत्रेण च कृतः कूपो महागम्भीरसंज्ञकः । कूपात्सा निःसृता देवी महापापौघनाशिनी
यथा गङ्गा तथेयं च सरिच्छ्रेष्ठा सुरोत्तमे । अस्या दर्शनमात्रेण पापौघा यान्ति च क्षयम्

शृणु देवि ! प्रवक्ष्यामि इतिहासं पुरातनम् ।
यच्छ्रुत्वा पापिनो दोषैर्विमुक्ताः कर्मबन्धनात् ॥ ४ ॥

चम्पके नगरे चैव राजा राज्यं करोति सः । सदा कुष्ठी दुष्टरूपो जनानां स प्रपीडकः
अधमोऽधर्मरूपश्च विष्णुनिन्दापरायणः । देवद्विजनिहन्ता च आश्रमाणां विदूषकः ॥
वेदनिन्दापरः श्रीमान्मूर्खो वा निर्घृणःशठः । असच्छास्त्रेषु निरतः परदाराभिमर्शकः
विदारुणेति नामा च संजातो मूर्ख एव च । कदाचिद्दैवयोगेन आगतस्तां नदीं प्रति
आखेटकसमायुक्तः स्वयं कुष्ठी सुरेश्वरि!। महापापादयं जातो ब्राह्मणानां च निन्दनात्

वृथावादी दुरात्मा च शठो वै निर्घृणः पशुः ।
वेदनिन्दारतो नित्यं गोशास्त्राणां प्रदूषकः ॥ १० ॥

एवं विधो वने भ्राम्यंस्तृषार्तः ससुहृद्वृतः । अश्वादुत्तीर्य राजासौ जलंपीत्वागृहंगतः
तेनैवोदकपानेन गतं कुष्ठं न संशयः । बुद्धिस्तु निर्मला जाता तस्य राज्ञो विशेषतः॥
विष्णौ भक्तिः समुत्पन्ना तदातस्य सुरेश्वरि । ततः प्रभृति कालेन स्नानं वै कृतवान्सदा
निर्मलो बहुरूपाढ्यो जातस्तत्र सुरेश्वरि । इह लोके सुखं भुक्त्वा कृत्वा यज्ञाननेकशः

विप्रेभ्यो दक्षिणां दत्त्वा स गतो वैष्णवं पदम् ।
इति ज्ञात्वा तु भो देवि ! वेत्रवत्यां विशेषतः ॥ १५ ॥

स्नानं कुर्वन्ति ये विप्रास्ते मुक्ता नगनन्दिनि । राजन्योवाथ वैश्योवाशूद्रोवा सुरसत्तमे

येऽत्र स्नानं प्रकुर्वन्ति ते मुक्ताः पापबन्धनात् ।
कार्त्तिके वाथ माघे वा ब्राह्मो वा वेदनिन्दकः ॥ १७ ॥
सरितां संगमे स्नात्वा मुच्यते देवि किल्बिषात् ।
साभ्रमत्याः समं यत्र तस्याः सङ्गः प्रदृश्यते ॥ १८ ॥
तत्र स्नात्वा विशेषेण मुच्यते ब्रह्महा सदा । खेटकं नगरं दिव्यं स्वर्गरूपं तु वाऽनघे
ब्रह्मणा तत्र वै देवि योगाश्च बहवः कृताः । तत्र स्नात्वा च भुक्त्वा च पुनर्जन्म न विद्यते
सा छिर्नाथा स्मृता गङ्गा कलौ देवि ! विशेषतः ।
ये नराः सुखमिच्छन्ति धनमिच्छन्ति ये नराः ॥ २१ ॥
स्वर्गमिच्छन्ति ये लोकास्ते वै स्नात्वा पुनःपुनः ।
इह लोके सुखं भुक्त्वा यान्ति विष्णोः परं पदम् ॥ २२ ॥
सूर्यवंशे च ये जाताः सोमवंशे तथैव च । आगता वेत्रवत्यां तु स्नात्वा निर्वृतिमागताः
दर्शनाद्धरते दुःखंस्पर्शनात्मानसं त्वघम् । स्नात्वा भुक्त्वा तथा देवि मुक्तिभागी न संशयः
स्नानाज्जपात्तथा होमादनन्तं फलमश्नुते ।
गत्वा वाराणसीतीर्थं भक्त्या चान्द्रायणं चरेत् ॥ २५ ॥
तत्र गत्वा महत्पुण्यं तत्पुण्यं सुरसत्तमे । वेत्रवत्यां विशेषेण पक्षन्त्वं यदि गच्छति॥
स वै चतुर्भुजो भूत्वा याति विष्णोःपरम्पदम् ।
पृथिव्यां यानि तीर्थानि ये देवाः पितरस्तथा ॥ २७ ॥
ते सर्वे च वसन्तीह वेत्रवत्यां सुरेश्वरि । किमन्यद्बहुनोक्तेन भूयोभूयो वरानने ॥
वेत्रवत्याः समं तीर्थं पृथिव्यां न सनातनि!। अहं विष्णुस्तथा ब्रह्मा देवाश्च परमर्षयः
तिष्ठन्ति देवताः सर्वा वेत्रवत्यां महेश्वरि । एककालं द्विकालं वा त्रिकालं च विशेषतः
स्नानं कुर्वन्ति ये तत्र ते वै मुक्ता न संशयः ॥ ३१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वेत्रवती-
माहात्म्ये त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

# चतुस्त्रिंशदधिकशततमोऽध्यायः

## साभ्रमतीमाहात्म्यवर्णनम्

श्रीमहादेव उवाच ।

साभ्रमत्यास्तु माहात्म्यं वक्ष्ये देवि ! यथातथम् ।
कश्यपो वै मुनिश्रेष्ठस्तपो वै तप्तवान्महत् ॥ १ ॥

अनेकवर्षपर्यन्तं तेन तप्तं महत्तपः । अर्बुदे पर्वते रम्ये नानाद्रुमसमाकुले ॥ २ ॥
तत्र गत्वा तपस्तप्तमृषिणा कश्यपेन वै । सरस्वती यत्र रम्या पवित्रा पापनाशिनी ॥
एकस्मिन्दिवसे देवि गतोऽसौ नैमिषं प्रति । तदा तत्रर्षयः सर्वे कथां चक्रुरनेकशः ॥
तदा तैस्तुद्विजैः सम्यक्पृष्टोऽसौ कश्यपोमुनिः । अहो कश्यपनःप्रीत्यैगङ्गाहार्नायतांप्रभो

भवन्नाम्ना तु सा गङ्गा भविष्यति सरिद्वरा ।
तेषां वाक्यमुपाकर्ण्य नमस्कृत्य द्विजांश्च तान् ॥ ६ ॥

आगतो ह्यर्बुदारण्ये सरस्वत्याश्च सन्निधौ । तत्र तप्तं तदा तेन तपः परमदुष्करम् ॥
आराधितो ह्यहं तेन कश्यपेन द्विजेन वै । प्रत्यक्षोऽहं तदा जातस्तस्य द्विजवरस्य च

वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥ ८ ॥

कश्यप उवाच ।

वरं दातुं समर्थोऽसि देवदेव जगत्पते । शिरःस्थिता या गङ्गेयं पवित्रा पापहारिणी ॥
मम देया विशेषेण महादेव नमोऽस्तुते । तदा देवि मयोक्तं च गृहीष्व त्वं द्विजोत्तम
जटामेकां परित्यज्य दत्ता गङ्गा तदा मया । तां गृहीत्वाद्विजश्रेष्ठः स्वस्थानं हर्षतोययौ
केशरन्ध्रं नाम तीर्थं वासो वै कश्यपस्य च । गतस्तत्र तु देवेशि मुनिभिः परिवारितः
कश्यपेन समानीता काश्यपी सा सरिद्वरा । यस्या दर्शनमात्रेण ब्रह्महा मुच्यते किल

पार्वत्युवाच ।

स्नानमात्रेण किं पुण्यं तत्र तीर्थे वदस्व मे । विश्वनाथकृपालुस्त्वं दयां कुरु ममोपरि

दर्शने किं भवेत्पुण्यं स्नाने किं वद देवराट् । महिमा कीदृशो ब्रह्मन्सर्वं त्वं वक्तुमर्हसि

महादेव उवाच ।

मया श्रुतान्यनेकानि तीर्थान्यायतनानि च ।
श्रीविष्णोश्च प्रसादाच्च नद्यः सागरगाः प्रभोः ॥ १७ ॥

गङ्गा च यमुना रेवा तापीचैव महानदी । गोदावरी तुङ्गभद्रा कौशिकी गल्लिका तथा॥ कावेरी वैदिका भद्रा सरयूः पापहारिणी । अन्याश्च विविधानद्यः सर्वपापहरा भुवि प्रयागस्तीर्थराजश्च काशीपुष्करएव च । नैमिषारण्यसंज्ञं तु तीर्थं चामरकण्टकम् ॥ उत्तमं द्वारकाक्षेत्रमर्बुदारण्यमुत्तमम् । एवंविधानि दिव्यानि क्षेत्राणि विविधानि च श्रुतानि तत्र देवेशि मया विष्णोः प्रसादतः । पूर्वं भगीरथेनैव याचितोऽहं तु पार्वति तदादत्ताइयं गङ्गा विष्णोर्लोकमभीप्सुना । कश्यपाय पुनर्दत्ता ऋषीणां वचनान्मया इयं वै काश्यपी गङ्गा रोगदोषहरा सदा । इयं या कथ्यते लोके युगे वै नामपूर्वकम् तदहं कथयिष्यामि शृणु सुन्दरि तत्त्वतः । कृते कृतवती नाम त्रेतायां गिरिकर्णिका

द्वापरे चन्दना नाम कलौ साभ्रमती स्मृता ।
दिने दिने विशेषेण स्नान्ति तस्यां नराश्च ये ॥ २६ ॥

सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् । प्लक्षावतरणे तीर्थे सरस्वत्यां तथेश्वरि केदारे च कुरुक्षेत्रे यत्फलं स्नानतो भवेत् । तत्फलं तु नृणां नूनं साभ्रमत्यादिनेदिने भवतीति न संदेहो व्यासस्य वचनं यथा । नभस्येऽपरपक्षे तु प्रत्यहं वा सुरेश्वरि ॥

अमावास्यादिने सम्यक्छ्राद्धदाने च यत्फलम् ।
नरस्तत्फलमाप्नोति साभ्रमत्यवगाहनात् ॥ ३० ॥

कार्तिक्यां कृत्तिकायोगे श्रीस्थलेमाधवाग्रतः । तत्फलं लभते मर्त्यः साभ्रमत्यवगाहनात् एषा श्रेष्ठतमा देवि सर्वलोकेषु पावनी । इयं धन्यतमा देवि पवित्रा ह्यघनाशिनी ॥ यस्यां वै साभ्रमत्यां च एते तिष्ठन्ति नित्यशः । पूर्वसम्बन्धिनो ये च उत्तरीयेतथापुनः

पाश्चात्या दाक्षिणात्याश्च सर्वे यान्ति च नित्यशः ।
तीर्थयात्रामिषेणैव खेटके ब्रह्मसन्निधौ ॥ ३४ ॥

आयान्ति सर्वदा देवि कार्त्तिक्यां च न संशयः ।
तत्र श्राद्धं प्रकुर्वन्ति तथा वै विप्रभोजनम् ॥ ३५ ॥
नानाधर्मान्प्रकुर्वन्तिनानायज्ञांश्च नित्यशः । विविधानिच दानानि प्रकुर्वन्तिजनाःसदा
चतुर्युगेषु सर्वेषु नात्रकार्या विचारणा । यवक्रीतोऽथ रैभ्यश्च कक्षीवानुशिजस्तथा ॥
भृग्वङ्गिरास्तथा कण्वो मेधावी च पुनर्वसुः ।
वन्दी च गुणसम्पन्नः प्राच्यां दिशि उपश्रिताः ॥ ३८ ॥
उदीच्यां ये महाभागा मधुमत्प्रमुखास्तथा । सुबन्धुश्च महाभागो दत्तात्रेयश्चवीर्यवान्
शिखिर्दीर्घतमाश्चैव गौतमः कश्यपस्तथा । श्वेतकेतुः कहोडश्च पुलहो देवलस्तथा ॥
विश्वामित्रभरद्वाजौ जमदग्निश्च वीर्यवान् । ऋचीकपुत्रो गर्गश्च ऋषिरुद्दालकस्तथा ॥
देवशर्माऽथ धौम्यश्च आस्तीकः कश्यपस्तथा । लोमशो नाभिकेतुश्च लोमहर्षणएव च
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा । वालखिल्यादयो ये च सर्वे गच्छन्ति तत्र वै
कृतस्नाना निराहाराः सदा विष्णुपरायणाः । शङ्खचक्रधरास्सर्वे तटेतिष्ठन्ति नित्यशः
पितृतीर्थं गयानाम सर्वतीर्थवरं शुभम् । यत्राऽऽस्ते देवदेवेशः स्वयमेव पितामहः ॥
गीता या पितृभिर्गाथा श्राद्धभागमभीप्सुभिः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ ४६ ॥
यजेतवाऽश्वमेधेननीलं वा वृषमुत्सृजेत् । तथा वाराणसी पुण्या पितॄणां वल्लभासदा
या चैव ममसांनिध्याद्भुक्तिमुक्तिफलप्रदा । ममाऽऽज्ञया तु देवेशो विन्दुमाधवसंज्ञकः
नित्यं तिष्ठति देवेशि वाराणस्यां विशेषतः । अतो धन्यतमा श्रेष्ठा पुरीयं मम सर्वदा
पितॄणां वल्लभं तीर्थं पुण्यं वै विमलेश्वरम् । पितृतीर्थं प्रयागं च सर्वतीर्थसमन्वितम्॥
साभ्रमत्युदके देवि आयान्ति वचनान्मम । वटेश्वरश्च भगवान्माधवेन समन्वितः ॥
दशाश्वमेधकं पुण्यं गङ्गाद्वारं तथैव च । मन्नियोगाच्च देवेशि साभ्रमत्यां वसन्तिहि॥
नदाथललिता देवी तीर्थं यत्सप्तधारकम् । तथा मित्रपदं नाम केदारं शङ्करालयम् ॥
गङ्गासागरमित्याहुः सर्वतीर्थमयं शुभम् । तीर्थं ब्रह्मसरस्तद्वच्छतद्रुसलिले ह्रदे ॥५४॥
तीर्थं तु नैमिषं नाम आज्ञया मम सर्वदा । साभ्रमत्युदके देवि निवसन्ति न संशयः ॥

श्वेता वल्कलिनी पुण्या ततः श्वेता हिरण्मयी ।
हस्तिमत्यथवार्त्तघ्नी नदी सागरगामिनी ॥ ५६ ॥

पितॄणां वल्लभा ह्येताः श्राद्धकोटिफलप्रदाः । तत्र श्राद्धानि देयानि पुत्रैः पितृहिताय वै
पाटलं वाडवाख्यं च नगरं तत्र सुन्दरि । साभ्रमत्यां सदा एताः प्राप्तनद्यो विशेषतः॥

तत्र स्नानं च दानं च ये कुर्वन्ति नरा भुवि ।
इहलोके सुखं भुक्त्वा यान्ति विष्णोः परं पदम् ॥ ५६ ॥

जम्बूद्वीपं महापुण्यं यत्र पुण्यं विवर्धने । तत्रार्याख्यं महापुण्यं सर्वकामफलप्रदम् ॥
नीलकण्ठमिति ख्यातं तीर्थं नन्दह्रदस्तथा । तथा रुद्रह्रदस्तीर्थं पुण्यं रुद्रमहालयम् ॥

मन्दाकिनी महापुण्या तथाऽच्छोदा महानदी ।
साभ्रमत्यां वहन्त्येताः स्वात्मना दर्शनं गताः ॥ ६२ ॥

भूम्रामित्रपदं तद्वद्वैजनाथं वृषध्वजम् । क्षिप्रा नदी महाकालं तथा कालञ्जरो गिरिः ॥
गङ्गोद्भूतं हरोद्भेदं नर्मदोङ्कारमेव च । गङ्गापिण्डप्रदानेन समान्याहुर्मनीषिणः ॥
एतानित्रह्मतीर्थानि साभ्रमत्युत्तरे तटे । गुप्तीकृतानि देवेशि देवैर्ब्रह्मपुरोगमैः ॥ ६५ ॥
स्मरणादपि लोकानां पापघ्नानि महेश्वरि । किं पुनः श्राद्धदातॄणां मानवानांसुरेश्वरि
ॐकारं पितृतीर्थं च कावेरी कपिलोदकम् । संभेदश्चण्डवेगायास्तथैवामरकण्टकम्
कुरुक्षेत्राच्छतगुणमस्मिन्स्नानादिकं भवेत् । वार्तघ्नीसंगमे देवि गणेश्वरपुरःसरैः ॥
साभ्रमत्यां पुरा नीतं गणैस्तीर्थकदम्बकम् । एष तूद्देशतः प्रोक्तस्तीर्थानां संगमो मया

वागीशोऽपि न शक्नोति तीर्थानां तत्त्वविस्तरम् ।
सत्यं तीर्थं दयातीर्थं तीर्थमिन्द्रियनिग्रहः ॥ ७० ॥

तस्मात्तीर्थे प्रयत्नेन स्नानं कुर्यान्नसंशयः । प्रातःकालो मुहूर्त्तांस्त्रीन्सङ्गवस्तावदेव तु

तदा स्नानादिकं तीर्थे देवानां प्रीतिदायकम् ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥ ७२ ॥

पितॄणां प्रीतिजननं स्नानपिण्डादितर्पणम् । सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धंतत्रनकारयेत्
राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु । अह्नो मुहूर्ताविख्याता दशपञ्च च सर्वदा

तत्राष्टमो मुहूर्तो यः स कालःकुतुपःस्मृतः। मध्याह्ने सर्वदा यस्मान्मन्दीभवतिभास्करः
तस्मादनन्तफलदः पितृणां पिण्डदानतः। मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः
रूप्यं दर्भास्तथागावो दौहित्रं कुतुपास्तिलाः।
पापं कुत्सितमित्याहुस्तस्य संतापकारकाः ॥ ७७ ॥
अष्टावेते यतस्तस्मात्कुतपा इतिविश्रुताः। ऊर्ध्वं मुहूर्तात्कुतुपाद्यन्मुहूर्तचतुष्टयम् ॥७८
मुहूर्तपञ्चकं चैतच्छ्राद्धकाले समिष्यते।
विष्णोर्देहात्समुद्भूताः कुशाः कृष्णतिलाः स्मृताः ॥ ७९ ॥
श्राद्धस्य रक्षणार्थाय एवमाहुर्दिवौकसः। तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः
सदर्भहस्तैरेकेन श्राद्धमेवं न हिंस्यते। साभ्रमत्यां नामधेयेगिरितीर्थप्रवेशनम् ॥८१ ॥
कारयित्वा मया देवि दत्ता वै कश्यपाय च। मम भक्तः कश्यपोऽसौ वल्लभोममसर्वदा
दत्ता तस्मादियं गङ्गा पवित्रा पापनाशिनी। साभ्रमत्यां महाभागे तीर्थेऽब्रह्मचारिके
आत्मानं च प्रतिष्ठाप्य तन्नाम्ना शङ्करो ह्यहम्।
स्थितो लोकहितार्थाय ब्रह्मचारीशसंज्ञकः ॥ ८४ ॥
साभ्रमत्या उपकण्ठे ब्रह्मचारीशसंज्ञके। कलौ भक्तो विशेषेण पूजनं कुरुते यदा ॥
इहलोकेसुखं भुक्त्वा याति शैवं पदं महत्। महद्भिर्व्याधिभिश्चैव पीडितोयदिगच्छति
यस्याऽऽशु नश्यति व्याधिर्दर्शनाच्चमहेश्वरि। गत्वावैतस्य संस्थानउपवासीजितेन्द्रियः
पूजनं कुरुते भक्त्या रात्रौ तिष्ठन्सुनिश्चलः। तदाऽहं योगिरूपेण दर्शनं तस्य यामि हि
ददामि वाञ्छितान्कामान्सत्यं सत्यं वरानने॥
मम स्थाने विशेषेण समायान्ति च ये जनाः ॥ ८६ ॥
तेषां व्याधिप्रशमनं करोमि सुचिरादहम्। चतुरशीतिसंज्ञेयो व्याधिःसंकथितो मया
सस्व्याधिर्विनश्येतद्दर्शनादेव सुन्दरि। न लिङ्गं वर्तते तत्र मामकं नगनन्दिनि ॥८९॥
स्थानमात्रं तु तत्रैव मामकं नात्र संशयः। एकस्मिन्नेव काले तु अस्यांभूमौमहातपाः
राजा वै सूर्यवंशीयो ब्रह्मदत्तस्तु वीर्यवान्। तेन राज्ञा तपस्तप्तं बहुकालं सुरेश्वरि ॥
पञ्चाग्निसाधनं तेन कृतं च बहुधा ततः। मासोपवासकादीनि तपस्तप्तान्यनेकशः ॥

एवं बहुतरं कालं राज्ञा तप्तं तपो महत् । प्रत्यक्षोऽहं तदा जातो वरार्थं वरवर्णिनि
ब्रह्मदत्त शृणुष्व त्वं मद्वाक्यं नरेश्वर । यं यं वाञ्छयसे नित्यं तं ददामि न संशयः
तेनोक्तं मम देवेश वाञ्छितं यदि दीयते । एकएव वरो देव दीयतां मम सर्वदा ॥
मम नाम्ना हि देवेश ईश्वरो भुवि जायताम् । तेन वाक्येन संतुष्टो वरो दत्तो मयाऽनघे
तदाऽहं तेन वै सार्धं निवसामि सुरेश्वरि । अत्र स्थित्वा निराहारो भक्तिं कुर्यादशेषतः

ददामि वाञ्छितान्कामान्यावदिन्द्राश्चतुर्दश ।
अत्राऽऽगत्य तु ये विप्रा रुद्रजाप्यादिकं च यत् ॥ १०० ॥
प्रकुर्वन्ति विशेषेण तेषां दद्मि शृणुष्व तत् ।
स्त्रीसौख्यं पुत्रसौख्यं च लक्ष्मीवृद्धिकरं पुनः ॥ १०१ ॥

यशऐश्वर्यमेवाऽपि तथा रोगादिनाशनम् । तत्सर्वं प्राप्यते क्षिप्रं वाञ्छितं वै कलौयुगे

अस्मिन्कलौ युगे घोरे मद्भक्ता भुवि पार्वति ! ।
अत्राऽऽगत्य प्रकुर्वन्ति स्नानदानादिकाः क्रियाः ॥ १०३ ॥

ददामि वाञ्छितानर्थान्सत्यं सत्यं सुरेश्वरि । ब्रह्मदत्तं तु तन्नाम्नाद्वितीयं ब्रह्मचारिणम्
गङ्गाधरं प्रतिष्ठाप्य उषित्वा दिनपञ्चकम् । स राजा गतवांस्तत्र स्वके राज्ये ततः पुनः
ब्रह्मदत्तस्तु विख्यातो लोके ऽ परमोमहान् । राज्यं चकार धर्मज्ञो ह्ययुतं वर्षसंज्ञकम्
ततः कतिपये काले राज्यं भुक्त्वा स वै नृपः । गतवाञ्छिवलोकं तं ब्रह्माख्यं पदमुत्तमम्

देवौ द्वौ तत्र वर्त्तेते मम नामाभिधायकौ ।
एको वै ब्रह्मचारीशो ह्यन्यो गङ्गाधरः स्मृतः ॥ १०८ ॥

मम स्थाने विशेषेण पूजां कुर्वन्ति ये जनाः । तेषां सर्वं ददामीह वाञ्छितं नाऽत्र संशयः
स्थानमेव सदालिङ्गं गन्तव्यं च नृभिः सदा । तत्र पुष्पं च धूपं च नैवेद्यं विविधं तथा

यः करोति नरः प्राज्ञः स सर्वं लभते ध्रुवम् ।
बिल्वपत्रैश्च पुष्पैश्च तथा वा चन्दनादिभिः ॥ १११ ॥

पूजां कुर्वन्ति मत्स्थाने तेषां सर्वं ददाम्यहम् । य इदं शृणुयान्नित्यं ब्रह्मचारिकथानकम्
इह लोके सुखं प्राप्य व्रजते शिवसन्निधौ । यत्र गङ्गाधरो देवो नित्यं तिष्ठति भूतिदः

ब्रह्मचारीशसंज्ञस्तु द्वितीयो वर्त्तते सदा ।
ताभ्यां ध्यानसमायोगाच्छिवत्वमश्नुते ध्रुवम् ॥ ११४ ॥
दर्शनान्नश्यते रोगः पूजनादायुराप्नुयात् । स्नानात्तत्र तु देवेशि मुक्तिभागी न संशयः
शृणु सुन्दरि वक्ष्यामि तीर्थं परममद्भुतम् । राजखड्गइति ख्यातं साभ्रमत्यां विशेषतः
सूर्यवंशसमुत्पन्नो राजा वै कर्त्तनस्तथा ।
दुराचारी तु पापात्मा ब्राह्मणानां च निन्दकः ॥ ११७ ॥
गुरुद्रोही सदा रुष्टो निन्दकः सर्वकर्मणाम् । परदाररतो नित्यं नित्यं विष्णुप्रदूषकः
प्रजापीडनकं नित्यं करोति बहुधा ततः । एवं विधः स दुष्टात्मा पृथिव्यां वर्त्तते सदा
कियत्येवं गते काले शृणु सुन्दरि तत्त्वतः । पापेन दैवयोगाच्च कुष्ठिन्वं समजायत ॥
निरीक्ष्य स्वं शरीरं तु विचार्य च पुनःपुनः ।
किंकर्त्तव्यमिति ध्यायन्निति चिन्तापरोऽभवत् ॥१२१॥
कदाचिद्दैवयोगाच्च क्रीडार्थं गतवान्वने । तत्र साभ्रमतीतीरं समासाद्य स तिष्ठति ॥
तत्र स्नानं कृतं तेन पीतं पानीयमुत्तमम् । तत्र स्नानेन सपदि शरीरं दिव्यसंज्ञकम् ॥
यथा स्वर्णमयी मूर्त्तिर्दृश्यते नगनन्दिनि । तद्वदेव तु संजातः स राजा नाऽत्र संशयः
दिव्यरूपमनुप्राप्य कियत्कालं ततो नृपः । राज्यं भुक्त्वा तु देवेशि गतो वै परमंपदम्
तदातीर्थमिदं जातं राजखड्गेति संज्ञकम् । अत्र स्नानं प्रकुरुते दानं यो वै ददाति च
इह लोके सुखंभुक्त्वा याति विष्णोः परं पदम् ।
न रोगो वर्त्तते तेषां न शोकश्च कदाचन ॥ १२७ ॥
प्रत्यहं कुरुते स्नानं खड्गेऽस्मिन्राजसंज्ञके ।
यो नरः प्राप्नुयात्स्वर्गं ब्रह्माद्यैः स च पूज्यते ॥ १२८ ॥
कृते सत्येश्वरो नाम त्रेतायां भुवनेश्वरः । राजेश्वरसमाख्यातो द्वापरे नगनन्दिनि ॥
अस्मिन्कलियुगे घोरे गुप्तीभूतोऽथ विश्वराट् ।
अतो वै तीर्थसम्भूतं राजखड्गेतिसञ्ज्ञकम् ॥ १३० ॥
पितृणां तर्पणं चाऽत्र श्रद्धया ये प्रकुर्वते । ते नराः पुण्यकर्माणः पृथिव्यां परिकीर्तिताः

ब्रह्मघ्ना बालहन्तारः स्नानं येऽत्र प्रकुर्वते । यैर्दोषैरहितास्ते च गच्छन्ति शिवसन्निधौ
नीलोत्सर्गं करिष्यन्ति साभ्रमत्यां नराश्च ये । तेषां वै पितरस्तृप्ता यावदाभूतसंप्लवम्

इदमाख्यानकं दिव्यं राजखड्गेतिसंज्ञकम् ।
ये शृण्वन्ति नरा देवि न तेषां विद्यते भयम् ॥ १३४ ॥
रोगा दोषा विनश्यन्ति श्रवणात्पठनात्ततः ॥ १३५ ॥

इति श्रीपाद्मे महापुराणेपञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे साभ्रमतीमाहात्म्यं नाम चतुस्त्रिंशदधिकशततमोऽध्याय ॥ १३४ ॥

# पञ्चत्रिंशदधिकशततमोऽध्यायः

## नन्दितीर्थमहिमवर्णनम्

पार्वत्युवाच ।

साभ्रमत्यपि यान्देशान्नन्दिकुण्डाद्विनिःसृता
गच्छन्ती पावयामास कान्कान्देशान्वदस्व मे ॥
चकार कानि तीर्थानि विलङ्घ्यार्बुदपर्वतम् ॥१॥

सूत उवाच ।

इति तत्रोदिते देव्या महादेवः स विश्वराट् ।
उवाच वचनं तां वै पार्वती विश्वमोहिनीम् ॥ २ ॥

महादेव उवाच ।

नन्दिकुण्डात्प्रथमतस्तीर्थात्परमपावनात् । कपालमोचनं तीर्थं मुनिभिःसम्प्रकारितम्
सर्वतेजोऽधिकं तीर्थं पावनात्पावनं परम् । अत्र मया परित्यक्तं कपालं ब्रह्मसञ्ज्ञकम्
कपालमोचनं तीर्थमतो जातं हि पार्वति । पावनं सर्वभूतानां प्रकटं लोकविश्रुतम् ॥
कपालकुण्डमाख्यातं तत्तीर्थं तीर्थराजकम् । यत्र देवास्तथा नागागन्धर्वाः किन्नरादयः

निवसन्ति महात्मानस्तीर्थे वै निर्मले शुभे । त्रैलोक्ये विश्रुतं तीर्थं ज्ञानदं मुक्तिदायकम्
तत्र स्नात्वा शुचिर्भूत्वा कपालेशं प्रपूजयेत् । उपोष्य रजनीमेकां कृत्वा ब्राह्मणभोजनम्
तत्रापि वस्त्रदानेन अग्निहोत्रफलं लभेत् । तस्मिंस्तीर्थे तु यः कश्चिद्दर्शनव्रतमास्थितः

संत्यज्य देहमात्मानं शिवलोकं व्रजेद्ध्रुवम् ।
अस्मिंस्तीर्थे पुरा स्नानात्सौदासो ब्रह्महत्यया ॥ १० ॥

मोचितो विमलं ज्ञानं प्राप्तवान्वै सुरेश्वरि । भगीरथान्वये जातः सुदासाख्यो महाबली

तस्य पुत्रोऽमित्रसहः सौदासेति च विश्रुतः ।
वसिष्ठशापतः प्राप्तः सौदासो राक्षसीं तनुम् ॥ १२ ॥

साभ्रमत्यां कृतस्नानो विमुक्तः शापजाद्भयात् । अत्र गङ्गा च यमुना गोदावरी सरस्वती
नन्दितीर्थे वसन्त्येताः पवित्राः पुण्यदाः सदा । गोदानं भूमिदानं च शय्यादानं तथैव च
कन्यादानं विशेषेण कर्तव्यं ज्ञानिभिर्नरैः । एतद्दानसमं प्रोक्तं साभ्रमत्यवगाहनम् ॥
यत्र वै सकलान्येव पतितानीह भूतले । वारिणा स्पर्शमात्रेण शुद्धत्वं यान्ति तान्यपि
अत्र श्राद्धं प्रकुर्वाणो नरो वै भक्तितत्परः । पितरस्तस्य सन्तुष्टा गच्छन्ति परमं पदम्

एतदाख्यानकं दिव्यं ये शृण्वन्ति नराः सदा ।
सर्वपापविनिर्मुक्ता विष्णोः सायुज्यमाप्नुयुः ॥ १८ ॥

कर्मणा मनसा वाचा ये स्तुवन्ति महेश्वरम् । न तेषां विद्यते दुःखं यावदाभूतसंप्लवम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे नन्दितीर्थमहिमा नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥१३५॥

---

# षट्त्रिंशदधिकशततमोऽध्यायः

## विकीर्णतीर्थमाहात्म्यवर्णनम्

### महादेव उवाच ।

अथ नन्दिप्रदेशात्तु यथा साभ्रमती नदी । समायाता विकीर्णं च वनं विप्रर्षिसेवितम्

बहुधा जलवेगेन पर्वतानां च रोधसः । सप्तधा प्रविभक्ता च दक्षिणोदधिगामिनी ॥
आद्या साभ्रमती पुण्या द्वितीया सेटिका तथा ।
तृतीया वल्किनी पुण्या चतुर्थी च हिरण्मयी ॥ ३ ॥
सर्वपापहरा प्रोक्ता हस्तिमत्यथ पञ्चमी । वेत्रवती सा च षष्ठी वृत्रेण निर्मिता पुरा ॥
इयं सा परमा देवी वृत्रकूपाद्विनिःसृता । वेत्रवती ततो जाता महापापप्रणाशिनी ॥
भद्रामुखी शुभप्राया सप्तमी लोकपावनी । एतैस्तु सप्तभिर्देवि तांस्ताञ्जनपदांस्तथा ॥
पवित्रीकृत्य चैकेन सप्तस्रोताः प्रतिष्ठिता । विकीर्णतीर्थे यः श्राद्धं पितॄनुद्दिश्यदास्यति
गयापिण्डप्रदानस्य फलं यत्तद्भविष्यति । अवकीर्णाच्युता ये च लुप्तपिण्डोदकक्रियाः
ते विकीर्णे प्रमुच्यन्ते दत्तपिण्डोदकक्रियाः ।
तत्र श्राद्धं तु यः कुर्याद्गाणपत्यं भवेद्ध्रुवम् ॥ ६ ॥
तस्मात्चर्याविधानेन श्रद्धया श्राद्धमाचरेत् । अस्मिंस्तीर्थे विशेषेण सततन्त्वुदये द्विजाः
स्नानं कुरुत विप्रेन्द्रा स्रपिलोकमभीप्सवः । इत्युक्तं कश्यपेनाऽथ द्विजान्प्रति विशेषतः
यदि चेत्क्रियते स्नानं सर्वदुःखापहं सदा । तीर्थानां प्रवरं तीर्थं क्षेत्राणामुत्तमोत्तमम्
तीर्थमेतद्विकीर्णं च शुभदं रोगदोषहृत् । कुर्वन्त्यत्र विशेषेण ये स्नानं सर्वदा कलौ॥
ते नराः पुण्यभाजो हि जायन्ते नाऽत्रसंशयः । गयातीर्थसमं तीर्थं विकीर्णं पावनंपरम्
पितॄणां पुण्यदं नित्यं लोकानां दुःखनाशनम् ॥ १४ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे विकीर्णतीर्थमहिमा नाम षट्त्रिंशदधिकशततमोऽध्यायः ॥१३६॥

## सप्तत्रिंशदधिकशततमोऽध्यायः

### श्वेतातीर्थमाहात्म्यवर्णनम्

तीर्थादस्मात्परं तीर्थं श्वेतोद्भवमनुत्तमम् । यत्र श्वेता नदी जाता मत्पृष्ठोदरभस्मना
विश्रुता त्रिषु लोकेषु सर्वपापप्रणाशिनी । हराङ्गभस्मसंयोगाज्जाता देवैस्तु मानिता॥

तस्यां स्नातः शुचिर्दान्तस्त्रिरात्रमुषितः पुमान् । महाकालेश्वरं दृष्ट्वा रुद्रलोके महीयते
पिण्डं पितृभ्यो यो दद्यात्तस्यास्तीरे कुशैस्तिलैः ।
सुतृप्ताः पितरस्तस्य भवन्तीति न संशयः ॥ ४ ॥
श्वेतगङ्गा महापुण्या दुःखदारिद्र्यमोचनी । यत्र स्नानेन भो देवि परं सुखमवाप्यते॥
तस्या वै संगमे पुण्ये नित्यं तिष्ठामि पार्वति ! ।
येऽत्र दानं प्रकुर्वन्ति स्नानं च तत्र सुन्दरि ! ॥ ६ ॥
तदनन्तफलं तस्य भवेद्वै नाऽत्रसंशयः । तत्र भूतेश्वरो देवः संगमे वसते ध्रुवम् ॥७ ॥
तत्र धूपं च दीपं च पुष्पमारार्तिकं तथा । ये कुर्वन्ति नरश्रेष्ठास्ते नराः पुण्यरूपिणः
विल्वदलं समादाय यो ददाति शिवोपरि । वाञ्छितं लभते नित्यं श्वेतायांशिवसन्निधौ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमा-
महेश्वरसम्वादे श्वेतार्तीर्थं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥१३७॥

---

# अष्टत्रिंशदधिकशततमोऽध्यायः

## गणतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

गणतीर्थं ततो गच्छेत्तीर्थयात्रापरायणः । त्रिविष्टपमिति प्रोक्तं गणैस्तु चन्दनातटे ॥
त्रिविष्टपे नरः स्नात्वा पौर्णमास्यां समाहितः ।
संशयो नाऽत्र कर्त्तव्यो मुच्यते ब्रह्महत्यया ॥ २ ॥
चतुरो वार्षिकान्मासान्स्थितो यस्तु त्रिविष्टपे । सोऽपि पुण्यो महाभागे रुद्रलोकेमहीयते
गणतीर्थे नरः स्नात्वाकृष्णाष्टम्यामुपोषितः । बकुलासंगमेस्नात्वास्वर्गंगच्छतिमानवः
तस्मिंस्तीर्थे नरः स्नात्वा बकुलेशं विलोक्यच । गणेश्वरप्रसादेन गाणपत्यमवाप्नुयात्

इदं पवित्रं परमं पुण्यायुष्यविवर्धनम् । श्रुत्वा तु लभते पुण्यं गङ्गास्नानसमं नरः ॥
अत्र स्थित्वा निराहारो जितेन्द्रियः समाहितः । जपत्येवं परंदेवं गणेश्वरं मनोरमम् ॥
सम्प्राप्नोत्यखिलान्भोगान्सत्यं सत्यं वरानने ! ।
अत्र राजा सोमवंश्यो विश्वदत्तः स वीर्यवान् ॥ ८ ॥
तेन तपो महत्तप्तं बहुकालं सुरेश्वरि ! । गाणपत्यं तदा प्राप्तं श्रीगणेशप्रसादतः ॥९॥
वसिष्ठो वामदेवश्च कहोडः कौशीतको मुनिः ।
भरद्वाजोऽङ्गिराश्चैव विश्वामित्रोऽथ वामनः ॥ १० ॥
एते वै मुनयः सर्वे पुण्यरूपा महेश्वरि ! । नित्यं सेवां प्रकुर्वन्ति श्रीगणेशप्रसादतः ॥
अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् । अविद्यो लभतेविद्यां मोक्षार्थीमोक्षमाप्नुयात्
किमन्यद्बहुनोक्तेन भूयो भूयो वरानने । योऽत्र स्नानं प्रकुर्वीत पूजनं वा करोति च
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् । शिवाय विष्णुरूपाय विष्णवेशिवरूपिणे
नाऽन्तरं देवि ! पश्यामि श्रीविष्णोश्च प्रसादतः ॥ १५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे गणतीर्थं नामाऽष्टत्रिंशदधिकशततमोऽध्यायः ॥१३८ ॥

---

## एकोनचत्वारिंशदधिकशततमोऽध्यायः

### अग्निपालेश्वरादितीर्थमहिमवर्णनम्

महादेव उवाच ।

साभ्रमत्युत्तरे कूले त्वग्नितीर्थमिति श्रुतम् । तस्याश्चोत्तरपूर्वेण नातिदूरे कृतास्पदम्
तीर्थं पालेश्वरं नाम चण्डी यत्र प्रतिष्ठिता । पीठं तद्योगमातॄणां सर्वसिद्धिविधायकम्
यत्र ताः सर्वदेवानां कार्यार्थे मातरः स्थिताः । परमं यत्नमास्थाय लोकानुग्रहकारणात्

त्रिरात्रमुषितो भूत्वा तस्मिंस्तीर्थेदृढव्रतः । अभिगच्छेत्तमीशानं देवेशंचण्डिकेश्वरम्
साभ्रमत्यां कृतस्नानो मातृतीर्थस्यसन्निधौ । समाधिविधिनायुक्तोगच्छेद्वैमातृमण्डलम्
गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः । अग्नितीर्थे नरः स्नात्वा चामुण्डादर्शने कृते
न भयं जायते तस्य रक्षोभूतपिशाचजम् । गोखुरा च नदी यत्र साभ्रमत्यां तु संगता
तत्र तीर्थसहस्राणि तिष्ठन्तीति सुरेश्वरि । श्राद्धं तत्र प्रकर्तव्यं तिलचूर्णेन पार्वति ॥
पिण्डान्दत्त्वाद्विजान्भोज्य अक्षयं पदमाप्नुयात् । यत्र कुकर्दमोराजा पापिष्ठोदुर्धरःखलः
मूढोऽहङ्कारसंयुक्तो द्विजानां परनिन्दकः । गोघ्नोऽपि बालहा चैव पापिष्ठो दुर्दमःसदा
राज्यं च कुर्वतस्तस्य पुरे पिण्डारसंज्ञके । तदा मृतिः समापन्ना धर्मे योगे सुरेश्वरि॥
मृतोऽसौ तत्र संजातः प्रेतरूपो महेश्वरि । पीतास्यः शुष्कतुण्डश्च पीतरोमाऽथकर्कशः
उच्चैस्तरो बहुरोमा क्षुत्पिपासाप्रपीडितः । वायुभक्षं प्रकुर्वाणः प्रगच्छति इतस्ततः॥
बहुप्रेतैः समायुक्तो हाहेतिकरुणं रुदन् । किंकर्तव्यमिति प्राहुः प्रेतास्ते वै समीपगाः

तेऽपि तदा रोदमानाः क्षुत्पिपासादिपीडिताः ।
अन्ये प्रेता दुरात्मानो राज्ञः संगतिमाययुः ॥ १५ ॥
राज्ञा सार्द्धं च गच्छन्ति लोकान्विजनकान्बहून् ।
नोदकमथवा चान्नं न मार्गो दृश्यते कदा ॥ १६ ॥

ते प्रेतादुष्टरूपाश्च विचरन्ति महीतले । भक्षन्ति शवमांसानि पिबन्ति रुधिरं सदा ॥
एवं कुकर्दमो राजा सदा तैः परिवारितः । कदाचिद्दैवयोगेन गुरोराश्रममन्वगात् ॥

पूर्वजन्मकृतं पुण्यं तेन योगेन संगतः ॥ १९ ॥

पार्वत्युवाच ।

किं कृतं तेन वै पुण्यं वद विश्वेश्वरप्रभो । अयं पापी दुरात्मा च ब्राह्मणानांचदुःखदः

सत्संगतिः कथं जाता तन्मे दुस्तरतो वद ॥ २० ॥

महादेव उवाच ।

एतेन नरदेवेन पूर्वजन्मनि यत्कृतम् । तत्सर्वं कथयिष्यामि शृणु त्वं नगनन्दिनि ॥
पूर्वजन्मन्ययं देवि ब्राह्मणो वेदपाठकः । सम्पूज्य च महादेवं कृत्वा चातिथिपूजनम्॥

भोजनं कुरुते नित्यमसौ वाडवसत्तमः । तेन पुण्यप्रभावेण पुरे पिण्डारसञ्ज्ञके॥२३॥
राजा वै तत्र संजातःकुकर्दमइति श्रुतः । कर्मणा मनसा चैव न कृतं पुण्यमेव च ॥
तेनदैवाभियोगेन मृतो वै प्रेतराडभूत् । पूर्वजन्मकृतं पुण्यं न नश्यति सुरेश्वरि!॥२५॥
तेन पुण्याभियोगेन संगतो गुरुणाऽऽश्रमे । कहोडो वर्तते तत्र तेन दृष्टोऽथ प्रेतराट्
शुष्कास्यः शुष्करूपश्च पीतवर्णः करालकः । गम्भीराक्षो महापापी दुष्टैःप्रेतैश्चसंयुतः
ऊर्ध्वरोमा जटायुक्तः कालरूपो भयङ्करः । एवं दृष्ट्वा तदा देवि विह्वलो वाडवोऽभवत्

कहोड उवाच ।

अस्मिन्मनोरमे चाऽहं स्थाने वै परमाद्भुते । अग्निपालेश्वरे तीर्थे नित्यं तिष्ठामिभूमिप
यजमानस्त्वमस्माकं कथंजातोऽसि प्रेतराट् । दुरात्मा दुष्टरूपश्च कालरूपो भयङ्करः॥
केन कर्मविपाकेन जातो वै भूतले शुभे ॥ ३१ ॥

प्रेत उवाच ।

शृणु वाडव ! मे पापं पूर्वजन्मनि यत्कृतम् । अहं कुकर्दमो राजा पुरे पिण्डारसंज्ञके॥
तत्रस्थेन मया देव यत्कृतं तच्छृणुष्व हि । ब्रह्मणां हिंसनं चैव पुराऽसत्यादिभाषणम्
प्रजानां पीडनं चैव जीवानां हिंसनं सदा । गवां वै दुःखकर्ताऽहं ब्राह्मणव्रतलोपनः ॥
अस्नातः सर्वदा विप्र ! सज्जनानां विदूषकः ।
विष्णुनिन्दापरो नित्यं वैष्णवानां च निन्दकः ॥ ३५ ॥
दुराचारो दुरात्मा च वृषलीसंयुतः सदा । तत्र तत्र प्रभुञ्जानो नाऽहं शौचपरायणः ॥
तेन कर्माभियोगेन मृतो वै द्विजराट्ततः । प्रेतयोनिं प्रपन्नोऽस्मि दुःखी जातोह्यनेकधा
यस्य माता पिता नास्ति यस्य स्वजनबान्धवाः।तस्य बन्धुर्गुरुर्मातापितापि गुरुरेवच
इति ज्ञात्वा तु भो ब्रह्मन्मुक्तिं दातुं त्वमर्हसि ॥ ३६ ॥

कहोड उवाच ।

शृणु त्वं नृपतिश्रेष्ठ! करिष्ये वचनं तव । मुक्तिं यास्यति वै सद्यो भवांस्त्विहनसंशयः
एकादश पुरोगाश्च प्रेतास्ते तव संगताः । ते चापि मुक्तिमायान्ति सुतीर्थेऽस्मिन्विशेषतः
तदा तौ तेन विप्रेण तीर्थे गत्वा सुरेश्वरि!। सर्वैश्च कारयामास तिलपिण्डोदकक्रियाः

न मासो न तिथिर्देवी तीर्थे गत्वा पुनःपुनः । कर्तव्यं श्राद्धकर्मादि ब्रह्मणोक्तं पुरा मम
कृते कर्मणि देवेशि मुक्तास्ते तीर्थराजके । विमानवरमारूढास्ते गता मामकीं पुरीम्
संगता गोखुरा यत्र साभ्रमत्या सुरेश्वरि । तत्र स्नानं च दानं च कोटियज्ञफलं लभेत्
यत्राऽग्नितीर्थं वर्तेत कपालेश्वरसञ्ज्ञकम् । तत्रमुक्तिस्तुसंप्रोक्ता सत्यं सत्यं भवेद्ध्रुवम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादेऽग्निपालेश्वरमहिमा नाम एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

# चत्वारिंशदधिकशततमोऽध्यायः

## हिरण्यासंगमतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

भो देव्यन्यत्प्रवक्ष्यामि हिरण्यासङ्गमं महत् ।
यदा साभ्रमती गङ्गा सप्तस्रोताः पुराऽभवत् ॥ १ ॥

तदा सा ब्रह्मतनया सप्तस्रोताः प्रकीर्तिता । सप्तमं तद्धिरण्याख्यं स्रोतइत्यभिधीयते ॥२

तस्मिंस्तीर्थे नरः स्नात्वा पापी सद्गतिमाप्नुयात् ।
ऋक्षुमञ्जुमयोर्मध्ये सत्यवान्नामपर्वतः ॥ ३ ॥
तस्य प्राक्सुमहत्तीर्थं हिरण्यासङ्गमं शुभम् ।
तत्र स्नात्वा च पीत्वा च शुभां गतिमवाप्नुयात् ॥ ४ ॥

वनस्थल्यां ततो गच्छेद्दृष्ट्वा नारायणं हरिम् । तीर्थमप्सरसां पुण्यं हिरण्यासङ्गमेश्वरम्
यत्रोर्वशी पुरा जाता समस्ताप्सरसां शुभा । नरनारायणौ तत्र तपस्तेपतुरुत्तमम् ॥६
हिरण्यासङ्गमे रम्ये महापापहरे शुभे । यत्र वै ऋषयः सर्वे मज्जन्ति वीतकल्मषाः ॥७
वसिष्ठाद्याश्च ये विप्रा वालखिल्यादयश्च ये । यत्र मज्जन्ति देवेशि हिरण्या सह सङ्गमे

यत्र हिरण्मयं रूपं स्नानाद्धै भवति ध्रुवम् । कपिलागोसहस्रस्य दानेनैव तु यत्फलम्
तत्फलं समवाप्नोति हिरण्यासङ्गमे सदा । दशाश्वमेधे यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ॥
तदनन्तगुणं प्रोक्तं हिरण्यासंगमे पुनः । तुलापुरुषदाने च यत्फलं समवाप्नुयात् ॥
तत्फलं लभते मर्त्यो हिरण्यासंगमे सदा । हिरण्याक्षो महादैत्यस्तेन तप्तं महत्तपः ॥
हिरण्यसदृशं तत्र शरीरमभवत्पुरा । जनमेजये तथा राज्ञि यत्र स्नानं प्रकुर्वति॥१३॥

ब्रह्महत्या गता देवि ! हिरण्यासंगमे तदा ।
विश्वामित्रोऽथ राजर्षिः स्नानार्थं वै समागतः ॥ १४ ॥
स्नानं कृत्वा विशेषेण गतोऽसौ मामकीं पुरीम् ॥ १५ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चाऽथ सुरेश्वरि! ।
स्नानं येऽत्र प्रकुर्वन्ति ते गच्छन्ति शिवालयम् ॥ १६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
संवादे हिरण्यासंगमतीर्थं नाम चत्वारिंशदधिकशततमोऽध्यायः ॥१४०॥

---

## एकचत्वारिंशदधिकशततमोऽध्यायः

### मधुरादितीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

ततो देवि ! प्रवक्ष्यामि हिरण्यासंगमादनु । धर्मावती नदी यत्र संगता सह गङ्गया

तत्र स्नात्वा नरो धन्यस्त्रिदिवं यात्यसंशयम् ।
यत्र धर्मकृतं तीर्थं यः पश्यति स पुण्यभाक् ॥ २ ॥

श्राद्धं तत्रैव ये कुर्युर्मुच्यन्ते पितृजादृणात् । ततश्च मधुरातीर्थं सर्वपापप्रणाशनम् ॥
स्नातव्यं मधुरातीर्थं द्रष्टव्यो मधुहा हरिः । यत्र विश्रान्तवान्कृष्णो जरासन्धभयाकुलः

कंसासुरवधे वृत्ते गन्तुकामः कुशस्थलीम् । उषित्वा सप्तरात्रं तु स देवश्चन्दनातटे ॥
भोजवृष्ण्यन्धकवृतो वीरैर्यादवपुङ्गवैः । मधुरातीर्थमासाद्य स्नानं कृत्वा विधानतः
मधुरादित्यनामानं यत्र स्थापितवान्हरिः । अष्टादशसहस्राणि विप्राणां यज्ञशालिनाम्

स्थापयित्वा ययौ दत्त्वा दानानि विविधानि च ।
तत्र तीर्थसहस्राणि तिष्ठन्ति च सुरेश्वरि ! ॥ ८ ॥

श्राद्धं तत्र प्रकर्तव्यं पितॄणां हितकाम्यया । न भेतव्यं जरासन्धान्मत्तीर्थे वसतां सदा

इत्युक्त्वा तान्द्विजान्कृष्णः प्रययौ द्वारकां प्रति ।
तस्मिंस्तीर्थे नरः स्नात्वा मधुरार्कं प्रपूजयेत् ॥ १० ॥

माघस्य शुक्लसप्तम्यां कपिलागोप्रदानतः । चिरसौख्यानि भुक्त्वेह पदमादित्यमाव्रजेत्

शृणु सुन्दरि ! वक्ष्यामि इतिहासं पुरातनम् ।
यं श्रुत्वा मुच्यते लोको ब्रह्महत्यादिपातकात् ॥ १२ ॥

एकस्मिन्समये देवि ! माण्डव्यऋषिसत्तमः । गङ्गाद्वारे महापुण्यं तप्तवांस्तु महत्तपः ॥
पत्राशी च फलाशी च वायुभक्षकरः सदा । अहोरात्रं सदा देवि विष्णुध्यानपरायणः ॥
योगाभ्यासरतो नित्यं नित्यं धर्मपरायणः । तस्मिन्देशे तु वै देवि राजा वै विश्वमोहनः
गजाश्वरथपत्तीनां सम्पदो बहुला भुवि । सोमचन्द्रेति विख्यातः पुत्रस्तस्य सुलक्षणः
एकदा तु तदा देवि ! गतो ह्याखटके वने । तत्र गत्वा तदा तेन कृत्वा ह्याखेटकक्रिया
स्वात्मानं रमयामास स्वलोकैः परिवारितः । क्रीडान्ते तदा राज्ञि रात्रिर्जाता सुरेश्वरि
तस्यां रात्रौ तदा राजा ह्यवासाखेटके वने । तस्यां रात्र्यां व्यतीतायां मुहूर्ते ब्रह्मसंज्ञके

हृतोऽश्वोऽथ विशेषेण चौरेणाऽत्र दुरात्मना ।
तदा हाहेति शब्दोऽभूत्क गतः क्व गतो हरिः ॥२०॥
तदा राज्ञो भयात्सर्वे गन्तुकामाः समुत्सुकाः ।
चौरेणाऽपहृतश्चाऽश्व इत्येवं सम्वदन्ति हि ॥ २१ ॥

निरीक्षमाणास्ते सर्वे हरिद्वारं समागताः । ऋषिस्तत्र तु माण्डव्यस्तपस्तपति नित्यशः
ध्यानेन च समायुक्तो दृष्टोऽसौ तैर्भटैस्तदा । अयं चौरः सदा पापी ध्यानं कृत्वा प्रतिष्ठते

बद्ध्वाश्वं तु समायातो ज्ञात्वा राजभटैस्तदा। एवं विचार्य ते सर्वे गृहीत्वा तं महामुनिम्
राज्ञे निवेदयामासुस्तं चौरं मुनिसत्तमम्। अश्वापहारी ह्यानीतश्चौरोऽयं नृप सर्वदा
आज्ञा दत्ता तदा तेन शूलिकारोपणे पुनः। तदा तैस्तुभटैः सर्वैर्मिलित्वा बन्धनं कृतम्
पश्चाद्धैशूलिकाप्रोतस्तत्क्षणात्तु कृतस्तदा। न ज्ञातं तेन तत्कर्म शूलिकायाः प्रतोदनम्
यतो योगसमारूढोविष्णुध्यानपरायणः। शूलिकाप्रोतनं ज्ञातं कतिचित्कालयोगतः॥

माण्डव्योऽहमृषिश्रेष्ठःकेन कर्म त्विदं कृतम्।
त्रिकालज्ञानी सर्वज्ञो भगवांस्तद्व्यचिन्तयत्॥ २९॥
धर्मस्य च इदं कर्म न चान्यस्य कदाचन
योगारूढः स धर्मात्मा गतोऽसौ धर्मसन्निधौ॥ ३०॥
तत्र गत्वा ह्यवाचेदं शृणु त्वं धर्म! साम्प्रतम्।
त्वं वै धर्मइति ख्यातो लोके वेदे च सर्वदा॥ ३१॥

शूलिकाप्रोतनं कर्म कथं चैव त्वया कृतम्। तत्सर्वं श्रोतुमिच्छामि त्वत्तो देव न संशयः

धर्म उवाच।

शृणुष्व त्वं द्विजश्रेष्ठ पूर्वजन्मनि पातकम्। तदहं कथयिष्यामि कृपां कुरु ममोपरि॥
बालत्वे तु इदं कर्म पूर्वजन्मजपातकम्। तच्छृणुष्व महाप्राज्ञ भवेऽस्मिन्पातकं कृतम्
एकस्मिन्समये विप्र त्वं गतो विजने वने। तत्र गत्वा त्वया विप्र जीवः शलभसञ्ज्ञकः
आरोपितः स वै शूल्यां कर्मणा तेन दुःखितः। राज्ञा शूलेऽर्पितस्त्वं वै कर्मणानेन सुव्रत
सर्वथैव प्रभोक्तव्यं कृतं कर्म शुभाशुभम्। अल्पमात्रमिदं कर्म त्वया भुक्तं न संशयः॥

सुखीभवतु विप्रेन्द्र! गच्छत्वं हि यथेच्छया।
एतद्वाक्यं ततः श्रुत्वा माण्डव्यो द्विजसत्तमः॥ ३८॥
उवाच वचनं तत्र स कोपादरुणेक्षणः॥ ३९॥

माण्डव्य उवाच।

रे पापिष्ट! दुराचार! किंकृतं बहुपातकम्। येन कृत्वा इदं कर्म शूलिकायाः प्रतोदनम्
मम वाक्यप्रकोपेण शूद्रस्त्वं भव सर्वथा। कियता कालयोगेन वंशे वै चन्द्रसञ्ज्ञके॥

जातो विदुरनामाख्यो विष्णुभक्तिपरायणः । तीर्थयात्रामिषेणैव गतः साभ्रमतींनदीम्
यत्र धर्मावतीसञ्ज्ञो वर्त्तते च सुरेश्वरि । तत्र वै कृतवान्स्नानं विदुरो धर्मरूपवान् ॥
त्यक्तं तत्र हि शूद्रत्वं धर्मावत्यां न संशयः । एतस्मात्कारणाद्देवियेऽत्र स्नानं प्रकुर्वते

ते नराः पुण्यकर्माणो गच्छन्ति परमं पदम् ।
अत्र श्राद्धं च दानं च ये कुर्वन्ति नरा भुवि ॥
इह लोके परामृद्धिं प्राप्य तैर्दिवि मुद्यते ॥ ४५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे साभ्रमतीमाहात्म्येमधुरादितीर्थमाहात्म्यं नामैकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

# द्विचत्वारिंशदधिकशततमोऽध्यायः

## कम्बुकपीश्वरतीर्थयोर्माहात्म्यवर्णनम्

श्रीमहादेव उवाच ।

कम्बुतीर्थे नरः स्नात्वा कृत्वा वा पितृतर्पणम् । अर्चयेद्देवदेवेशं नारायणमनामयम्

दत्त्वा दानानि विधिवद्ब्राह्मणेभ्यो विधानतः ।
विष्णुलोकमवाप्नोति तीर्थस्याऽस्य प्रभावतः ॥ २ ॥

अत्र राजर्षिणा पूर्वं विश्वामित्रेण धीमता । तपस्तप्तं विशेषेण प्रजाकामेन सुन्दरि !
वायुभक्षो निराहारो यत्रासीदनिलाशनः । विष्णुपूजापरोनित्यं विष्णुध्यानपरायणः
तापसोऽनेन सञ्जातः प्रजाकाममवाप्तवान् । प्रजाकामो नरो यश्च कम्बुतीर्थं हि गच्छति

स प्रजां लभते नित्यं सत्यं सत्यं वरानने ! ॥ ६ ॥

इतिकम्बुतीर्थमाहात्म्यम् ।

ततोगच्छेत्सुरश्रेष्ठे तीर्थंनाम कपीश्वरम् । सन्निधौ रक्तसिंहस्य महापातकनाशनम्

बध्यमाने पुरा सेतौ रामरावणविग्रहे । गृहीत्वा पर्वतश्रेष्ठं विशेषात्कपिभिः कृतम्
नाम्ना कपीश्वरादित्यं चक्रुस्तीर्थमनुत्तमम् ।
यत्र तीर्थे नरः स्नात्वा कृत्वा वा पितृतर्पणम् ॥ ६ ॥
दृष्ट्वा कपीश्वरादित्यं मुच्यते ब्रह्महत्यया । तत्र स्नानं प्रकर्तव्यं चैत्राष्टम्यां विशेषतः॥
हनुमत्प्रमुखैस्तत्र स्नातं यत्र दिनत्रयम् । कपितीर्थप्रभावोऽयं भवत्यै समुदीरितः॥११
अस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा कपीश्वरम् ।
रूपवान्बहुभोगश्च जायते नाऽत्रसंशयः ॥ १२ ॥
बलं वाञ्छति यो लोको धर्मं वा पुत्रमेव च । सर्वं स तु लभेन्नित्यं कपितीर्थप्रभावतः
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमा-
महेश्वरसम्वादे कपितीर्थमाहात्म्यं नाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥१४२॥

# त्रिचत्वारिंशदधिकशततमोऽध्यायः

## एकादिसप्तधारमहिमवर्णनम्

एकधारं ततो गच्छेत्तीर्थं परमपावनम् । एकधारे नरः स्नात्वा एकरात्रमुपोषितः॥१॥
अर्चयन्स्वामिदेवेशं कुलानां तारयेच्छतम् । स्वामितीर्थसमं ज्ञेयं यत्र तीर्थेऽवगाहनम् ॥
रुद्रलोकं नरो गच्छेत्तीर्थस्याऽस्य प्रभावतः ।
यत्र स्नात्वा च पीत्वा च ब्रह्मलोकं च गच्छति ॥ ३ ॥
ते लोकाः पुण्यकर्माणस्तटेऽस्मिन्संवसन्ति ये ।
न भयं विद्यते तेषां खड्गधारादिकं च यत् ॥ ४ ॥
तत्सर्वमाशु नश्येत तीर्थे ह्येकप्रधारके ॥ ५ ॥
इत्येकधारतीर्थवर्णनम् ।
सप्तधारं ततो गच्छेत्तीर्थानां तीर्थमुत्तमम् । सप्तसारस्वतं नाम यत्कृते मुनिभिःकृतम्

त्रेतायुगे मङ्कितीर्थं कृतं मङ्किमहर्षिणा । द्वापरे पाण्डुपुत्रैस्तु सप्तधारं प्रवर्त्तितम् ॥७॥
सप्तधारकतां प्राप्तं तीर्थं हरजटाच्युतम् । सप्तरूपाणि गङ्गाया यानि लोकेषु सप्तसु ॥
वहन्ति तानि पुण्यानि तीर्थेऽस्मिन्सप्तधारके ।
सप्तधारे कृतं श्राद्धं पितॄणां तृप्तिदायकम् ॥ ६ ॥
शृणु देवि प्रवक्ष्यामि इतिहासं पुरातनम् । यच्छ्रुत्वा देवदेवेशि ब्रह्मलोकं व्रजेद्ध्रुवम्
कौषीतकस्य पुत्रो वै मङ्किनामाऽतिविश्रुतः । विष्णुध्यानरतो नित्यं विष्णुलोकप्रपूजकः
वेदाध्ययनकर्त्ता च अग्निहोत्रपरायणः । सुरूपाविश्वरूपेति स्त्रियौ द्वेस्तस्तु तद्गृहे ॥
ताभ्यां पुत्रविहीनाभ्यांदृष्ट्वादेविविशङ्कितः । किंकर्तव्यमितिध्यायन्नतिचिन्तापरोऽभवत्
स्थिरो वंशस्तु पुत्रेण ह्यन्यथा नरकं व्रजेत् ।
एवं चिन्तां प्रकुर्वाणो न सुखं लभते क्वचित् ॥ १४ ॥
तदा स्वगृहमुत्सृज्य गतो वै गुरुसन्निधौ । नमो वै गुरवे तुभ्यं देवानामुपकारिणे ॥
त्वं नाथः सर्वलोकानां ब्राह्मणानां च रक्षकः । यज्ञानांत्वंप्रकर्त्ताचद्विजराजनमोस्तुऽते
अपुत्रोऽहं तु विप्रर्षे किं कर्त्तव्यं मया प्रभो! । वद त्वं तु यथा सर्वं पुत्रो भवति निश्चितम्
अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च । येन केनाऽप्युपायेन पुत्रस्य जननं चरेत्
इति वाक्यं तु संस्मृत्य ह्यागतस्तवसन्निधौ ॥ १६ ॥

गुरुरुवाच ।

गच्छ त्वं मुनिशार्दूल यत्र साभ्रमती नदी । तत्रगत्वामुनिश्रेष्ठ पुत्रान्वैप्राप्स्यसे ध्रुवम्
तद्वाक्यं तु समाकर्ण्य नमस्कृत्य तु दण्डवत् ।
स गतो विप्रराजस्तु नदीं साभ्रमतीं प्रति ॥ २१ ॥
मङ्किनामा तु विप्रर्षिस्तत्र गत्वा तपो महत् । अतप्यत तदा देवि यावद्वर्षचतुष्टयम् ॥
तत्र तीर्थं कृतं तेन मङ्किना ब्रह्मवादिना । त्रेतायुगे तदा देवि तदा तीर्थं महाद्भुतम् ॥
जातं तत्र न सन्देहः पुत्रदं सार्वकामिकम् । अद्याऽपि मङ्कितीर्थाभं न भूतं न भविष्यति
स वै द्विजवरो मङ्किः पुत्रान्प्राप्य यथासुखम् ।
भोगान्नानाविधान्भुक्त्वा स गतो मन्दिरं मम ॥ २५ ॥

एतदाख्यानकं दिव्यं पवित्रं परमं महत् । पुत्रसौख्यादिकं सर्वं लभते श्रवणादतः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे सप्तधरतीर्थमहिमा नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥१४३॥

# चतुश्चत्वारिंशदधिकशततमोऽध्यायः

## ब्रह्मवल्ल्यादिनानातीर्थमहिमवर्णनम्

महादेव उवाच ।

ब्रह्मवल्लीमहत्तीर्थं ततो गच्छेत्सुरेश्वरि ! । तस्य तीर्थस्य स्वरूपं साक्षाच्छृणुसुरोत्तम
यत्र साभ्रमतीतोयं ब्रह्मवल्ल्यम्भसा सह । युज्यते ब्रह्मतीर्थं तत्प्रयागेन समं स्मृतम् ॥
तत्र पिण्डप्रदानेन तृप्तिर्द्वादशवार्षिकी । पितॄणां जायते नूनं ब्रह्मणो वचनं यथा ॥
गयाश्राद्धसमं पुण्यं ब्रह्मवल्ल्यां विशेषतः । यत्र ज्ञात्वा प्रकुर्वन्ति पितरस्तृप्तिमाप्नुयुः
गोदानं भूमिदानं च अन्नदानं तथैव च । एतद्दानसमं पुण्यं ब्रह्मवल्ल्यां विशेषतः ॥
अत्रैव सनकाद्यास्तु स्नात्वा च विधिपूर्वकम् । परं ब्रह्मपदध्यानाद्विष्णुलोकमवाप्नुयुः
पुष्करे चैव गङ्गायां क्षेत्रे चाऽमरकण्टके । तत्र गत्वा तु देवेशि यत्फलं लभते नरः ॥
तत्फलं समवाप्नोति ब्रह्मवल्ल्यां विशेषतः । चन्द्रसूर्योपरागे च दानं ये ददते नराः ॥
तत्फलं समवाप्नोति ब्रह्मवल्ल्यां सुरेश्वरि । भूताः प्रेताः पिशाचाश्च ये केचिद्दुष्टयोनयः
दिव्यरूपधरास्ते च शङ्खचक्रगदाधराः । तेऽपि स्वर्गं हि गच्छन्ति स्नानंकृत्वासुरेश्वरि

धृत्वा तुलसिजां मालां नारायणमनुस्मरन् ।
वैकुण्ठं दिव्यमानन्दं याति वै पदमव्ययम् ॥ ११ ॥

इति ब्रह्मवल्लीतीर्थमाहात्म्यम् ।

वृषतीर्थं ततो गच्छेत्खण्डतीर्थेति विश्रुतम् ।
तत्र स्नात्वा दिवं गावो गोलोकं च पुराश्रिताः ॥ १२ ॥

खण्डरूपेण धर्मेण या गावो लोकमातरः । शापात्प्रच्याविताम्तेन खण्डतीर्थमथोच्यते

पार्वत्युवाच ।

शापो हि लोकमातॄणां गवां कस्यपुराऽभवत् । कथंलोकात्परिभ्रष्टाःकथंधर्मेणरक्षिताः

महादेव उवाच ।

पुरा वृषेण गोलोके क्रीडता सह मातृभिः । मुक्तं तथा शकृन्मूत्रं पतितं हरमूर्द्धनि ॥
ततस्तासां ददौ शापं तेन दोषेण वै हरः । नष्टसञ्ज्ञाःस्वलोकाच्च गावोयास्यथमेदिनीम्
गावः शप्ता भगवता संप्रसाद्य पुनर्हरम् । प्राप्स्यामहे पुनर्लोकमिति देवं ययाचिरे ॥

हर उवाच ।

यदा साभ्रमतीतीर्थे वल्लवल्लीसमीपतः ।
खण्डसंज्ञह्रदे स्नात्वा स्वर्गं वै प्राप्स्यथ ध्रुवम् ॥ १८ ॥

ततस्तस्मिन्ह्रदे स्नात्वा गावो गोपतिना सह । स्वर्गं गताः शुद्धतमा महादेवसमीपतः
गोह्रदे तु नरः स्नात्वा कृत्वा वै पितृतर्पणम् । गवां लोकमवाप्नोति दाहप्रलयवर्जितम्
तत्र स्थित्वा निराहारो गोपिण्डं च ददाति वै । स नरः सुखमेधेत यावदिन्द्राश्चतुर्दश
गवां कोटिप्रदानेन यत्फलं प्राप्यते ध्रुवम् । तत्फलं समवाप्नोति खण्डतीर्थे न संशयः
गृहीत्वावृषमूत्रं च तीर्थे यः पिबते नरः । तत्क्षणादेव शुद्धिः स्यात्खण्डतीर्थे न संशयः
खण्डतीर्थात्परं तीर्थं न भूतं न भविष्यति । ये गच्छन्ति सुरश्रेष्ठे तेनराःपुण्यभागिनः
तत्र गत्वा सुरश्रेष्ठे गवां पूजनमाचरेत् । वृषभं च ततः पूज्य स्नानं कृत्वा समाहितः
पूजनाद्धि न संदेहो गोलोके तु वसेच्चिरम् । तत्र गत्वा विशेषेण स्वर्णगां वितरन्ति ये
ते नरा भुञ्जते सौख्यं यावदिन्द्राश्चतुर्दश । दशधेनु ततः कृत्वा यो ददाति द्विजातये ॥
खण्डतीर्थे सुरश्रेष्ठे तदनन्तफलं स्मृतम् । तत्र गत्वा तु कर्त्तव्यं पिप्पलारोपणं बुधैः
तत्कृते सति देवेशि पितृलोकं स गच्छति । पञ्चवामलकीर्दिव्या ये कुर्वन्ति प्ररोपणम्
इह लोके सुखं भुक्त्वा हरिलोकं व्रजन्ति ते ॥३० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे खण्डतीर्थं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥१४४ ॥

# पञ्चचत्वारिंशदधिकशततमोऽध्यायः

## सोमेश्वरतीर्थमहिमवर्णनम्

श्रीमहादेव उवाच ।

ततो गच्छेन्महत्तीर्थं सङ्गमेश्वरमुत्तमम् । यत्र हस्तिमती पुण्या साभ्रमत्या हि संगता॥

शापं कौडिन्यमुनितः प्राप्य शुष्काऽभवन्नदी ।
वहिश्चर्येति नाम्ना वै लोके ख्यातिमुपागता ॥ २ ॥
तत्तीर्थं संप्रवक्ष्यामि पुण्यं त्रैलोक्यविश्रुतम् ।
सर्वपापहरं पुण्यं त्रैलोक्ये चाऽपि विश्रुतम् ॥ ३ ॥

यत्र तीर्थे नरः स्नात्वा दृष्ट्वा देवं महेश्वरम् । मुच्यते सर्वपापेभ्यो रुद्रलोकं प्रगच्छति
शृणु देवि प्रवक्ष्यामि एतच्छापस्य कारणम् । यथेह शुष्करूपा हि जाताशापस्यकारणात्
यत्र साभ्रमती पुण्या गङ्गा नाम महानदी । तत्र हस्तिमती नाम गङ्गया सह संगता॥
तत्राऽऽरब्धं च मुनिना तपो वै परमं महत् । शतं वहुगते कालऋषिणापरमात्मना ॥
आराधितो हृषीकेशो नारायणनिरञ्जनः । तस्यास्तटे तु देवेशि वर्षाणि च बहून्यपि ॥
गतानि च विशेषेण मुनेस्तस्य तु पार्वति । कदाचिद्दैवयोगाच्च वर्षाकालः समागतः॥
नदी तत्र तु सम्पूर्णा कालयोगेन सुव्रते । तत्कौण्डिन्येनऋषिणा स्थानं त्यक्तं तदा निशि
रात्रौ दुःखं महज्जातं हाहेतिकरुणं रुदन् ! किंकर्त्तव्यमिति ध्यायन्नतिचिन्तापरोऽभवत्
आश्रमोहि महाद्दिव्यऋषिणैव समायुतः । स गतो वारियोगेन हस्तिमत्यां सुरोत्तमे॥
फलानि चैव मूलानि पुस्तकानि बहून्यपि । तानि तस्यां गतान्येव वारियोगेन सुन्दरि

स कौण्डिन्यऋषिश्रेष्ठः शशाप तां नदीं किल ।
उदकेन विना त्वं च भविष्यसि कलौ युगे ॥ १४ ॥

एवं स दत्त्वा वै शापं हस्तिमत्यै महेश्वरि । गतोऽसौ विप्रप्रवरो विष्णुलोकं सनातनम्

अद्याऽपि वर्तते तीर्थं सङ्गमेश्वरसञ्ज्ञकम् । यद्दृष्ट्वा मुच्यते पापी ब्रह्महत्यादिपातकात्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे सोमेश्वरतीर्थमहिमा नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥१४५॥

# षट्चत्वारिंशदधिकशततमोऽध्यायः

## रुद्रमहातीर्थमहत्त्ववर्णनम्

महादेव उवाच ।

ततो गच्छेत देवेशि ! तीर्थं रुद्रमहालयम् । केदारानुपमं साक्षाद्रुद्रेण परिनिर्मितम् ॥
श्राद्धं तत्रैव कर्तव्यं पितृणां तृप्तिकारणम् । तत्र श्राद्धप्रदानेन पितरः सपितामहाः ॥
तृप्ताः समभिगच्छन्ति रुद्रस्य परमं पदम् । वृषमुत्सृजते यस्तु तत्र रुद्रमहालये ॥३॥
कार्त्तिक्यामथ वैशाख्यां रुद्रेण सह मोदते । केदारउदकं पीत्वा पुनर्जन्म न विद्यते॥४

अत्र तु स्नान मात्रेण मुक्तिभार्गी न संशयः ।
एकस्मिन्समये देवि ! त्यक्त्वा कैलासमागतः ॥ ५ ॥
साभ्रमतीं महागङ्गां ज्ञात्वा लोकहिताय वै ।
तत्र स्नात्वा च पीत्वा च कृत्वा तीर्थमनुत्तमम् ॥ ६ ॥

ततोऽहं च स्वकं स्थानं कैलासं प्रति भामिनि । तदन्तरं महापुण्यं तीर्थं जातं महालयम्
रुद्रमहालयमिति लोके ख्यातिं गमिष्यति । कार्त्तिक्यामथ वैशाख्यां येगच्छन्तिसुरोत्तमे

न तेषां विद्यते दुःखं सर्वसंसारजं पुनः ॥ ८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्सहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे रुद्रमहातीर्थं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

# सप्तचत्वारिंशदधिकशततमोऽध्यायः

## खड्गतीर्थमहत्त्ववर्णनम्

महादेव उवाच ।

देवि वै श्रूयतां तीर्थं देवानामपि दुर्लभम् । खड्गतीर्थमिति ख्यातं सर्वपापप्रणाशनम्
खड्गतीर्थे नरः स्नात्वा दृष्ट्वा खड्गेश्वरं शिवम् । न नरो दुर्गतिं गच्छेत्स्वर्गलोकं प्रगच्छति
खड्गधारेश्वरं देवं यः पश्यति सुरोत्तमे । कार्त्तिक्यां तु विशेषेण पूजनं तत्र कारयेत्
अयं विश्वेश्वरो देवः सर्वदा भुवि वल्लभे । सर्वं ददाति सर्वेशो वाञ्छितार्थप्रदायकः
वैशाखे राज्यकामार्थी यः पश्यति तमीश्वरम् । तमर्थं लभते क्षिप्रं विश्वनाथप्रसादतः॥
पुष्पैर्धूपैश्च नैवेद्यैर्दीपैर्वा नगनन्दिनि ! । फलप्रदानैर्विल्वैश्च विश्वेशं पूजयेत्ततः ॥६ ॥
धनधान्यप्रदं चाऽऽशु पुत्रपौत्रादिसम्पदः । प्राप्यन्ते नात्र सन्देहः श्रीविश्वेश्वरपूजनात्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे खड्गतीर्थं नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

# अष्टचत्वारिंशदधिकशततमोऽध्यायः

## मालार्कतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

साभ्रमत्यास्तटे तीर्थं गयातीर्थादनुत्तमम् । चित्राङ्गवदनं नाममालार्काधिष्ठितं शुभम्
कल्पपादपसन्तानैर्मन्दारैश्चोपशोभितम् । चूतनिम्बकदम्बैश्च काश्मर्यश्वत्थतिन्दुकैः
तस्मादपहरेत्कुष्ठं योजनस्मृतिविभ्रमात् । यस्य संजायते कुष्ठं तस्य मालार्कोहरेत्
या तु वेदोक्तविधिना नारी तत्राऽभिषिञ्चति ।

मृतवत्साऽथवा वन्ध्या पुत्रं प्राप्नोति साऽचिरात् ॥ ४ ॥
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।
कृतं भास्करभक्तेन मालार्के ह्यक्षयं भवेत् ॥ ५ ॥

अत्र गत्वा तु देवेशि! श्रीरवेर्व्रतमाचरेत् । इह लोके सुखं भुक्त्वा रवेर्लोकं हि याति वै
मृतवत्सो हि राजर्षिस्तत्र गत्वाऽकरोत्तपः । सराजाप्राप्तवान्पुत्रं श्रीमालार्कप्रसादतः
अत्र गत्वा विशेषेण उपचार्सी जितेन्द्रियः । मालार्कं पूजयेद्योवै मुक्तिभागीभवेद्ध्रुवम्
वसिष्ठप्रमुखा विप्रा देवा इन्द्रादयः सदा । निवसन्ति सुरश्रेष्ठे मालार्के रविसन्निधौ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे मालार्कतीर्थं नामाष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

# एकोनपञ्चाशदधिकशततमोऽध्यायः

## चन्दनेश्वरमाहात्म्यवर्णनम्

महादेव उवाच ।

तीर्थादस्मात्परं तीर्थं मालार्कान्तरतःस्थितम् । चन्दनेश्वरमागच्छेदामोदस्थानमुत्तमम्
दुःशासनस्यरुधिरं पीत्वा भीमो महाबलः । प्रतिज्ञामात्मनःसर्वांपूरयित्वासुदारुणाम्

कराभ्यां रुधिराक्ताभ्यां द्रौपद्याः केशबन्धनम् ।
कृत्वा दत्त्वा द्विजातिभ्यस्तीर्थयात्रां ततोऽगमत् ॥ ३ ॥
साभ्रमत्यास्तटे रम्ये गतो वै भ्रातृभिः सह ।
आनीतः साभ्रमत्यां यः स्वर्गाच्चन्दनपादपः ॥ ४ ॥
स तु लिङ्गतया जातः पुण्यतीर्थप्रभावतः ।
तत्र स्नात्वा च पीत्वा च कृत्वा वै पितृतर्पणम् ॥ ५ ॥

न नरो निरयं गच्छेद्रुद्रलोकमवाप्नुयात् । चन्दनेशं ततो दृष्ट्वा विश्वेशं लोकशङ्करम्

पूजयेच्च यथाशक्त्या यत्र गत्वा न शोचति । यत्र कैवर्तको राजा पूजांकृत्वाह्यनेकशः
स गतः शिवलोकं तं यत्र गत्वा न शोचति । मज्जन्ति ऋषयो यत्र यत्र देवःसनातनः
साक्षाद्विष्णुः परमात्मा नित्यं तिष्ठति भूतिदः ।
इयं साभ्रमती धन्या धन्यो विश्वेश्वरः प्रभुः ॥ ६ ॥
यत्र तीर्थान्यनेकानि जातानि भुवि पार्वति!। अत्र चामर्दकपुष्पैःफलैर्नानाविधैःशुभैः
कर्त्तव्यमर्घदानं च विधिना तत्र सुन्दरि !॥ ११ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे चन्दनेश्वरमाहात्म्यं नामैकोनपञ्चाशदधिकशततमोऽध्यायः ॥१४६॥

# पञ्चाशदधिकशततमोऽध्यायः

## जाम्बवन्ततीर्थमाहात्म्यवर्णनम

महादेव उवाच ।

जम्बूतीर्थं ततो गच्छेत्स्नानार्थं पापनाशनम् ।
कलिकाले च यत्पुंसां स्वर्गसोपानवत्स्थितम् ॥ १ ॥
यत्र जाम्बवता पूर्वं दशाङ्गे पर्वतोत्तमे । स्थापितं चर्क्षराजेन लिङ्गं सुरगणार्चितम् ॥
रामेण हि यदा पूर्वं हतो वै रावणोऽसुरः । तदा जाम्बवता दिक्षु भेरीघोषैःप्रघोषितम्
जितं वै रामचन्द्रेण रावणो निहतो रणे । लब्ध्वा सीतेति संघुष्य स्नानंतीर्थवरेशुभे
स्थापितं तत्र लिङ्गं तु स्वनाम्ना तु सुरेश्वरि !।
तत्र स्नात्वा नरः सद्यः स्मृत्वा रामं सहानुजम् ॥ ५ ॥
जाम्बवन्तेश्वरं स्नात्वा रुद्रलोके महीयते । यत्रयत्र हि भो देवि! श्रीरामस्मरणंकृतम्
भवबन्धविमोक्षो हि दृश्यते सचराचरे । अहं रामस्तु विज्ञेयो रामो वै रुद्रएव च ॥

एवं ज्ञात्वा तु ते देवि! न भेदो वर्त्तते क्वचित् । रामरामेति रामेति मनसा ये जपन्ति च
तेषां सर्वार्थसिद्धिश्च भविष्यति युगे युगे । अहं हि सर्वदा देवि श्रीरामस्मरणं चरे ॥

यं श्रुत्वा तु पुनर्देवि ! न भवो जायते क्वचित् ।
काश्यां हि निवसन्नित्यं श्रीरामं कमलेक्षणम् ॥ १० ॥
स्मरामि सततं देवि ! भक्त्या च विधिपूर्वकम् ।
जाम्ववता तदा पूर्वं स्मृत्वा रामं सुशोभनम् ॥ ११ ॥

जाम्ववन्तमितिख्यातं प्रस्थाप्यजगतांगुरुम् । तत्र स्नात्वाचभुक्त्वाचकृत्वादेवस्यपूजनम्
शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्दश । अत्र हि स्नानमात्रेण यथा जाम्ववतो वलम्
तथा वै वलमाप्नोति श्रीविश्वेशप्रसादतः । अत्र गत्वा तु भूदानं पुमान्यश्च करोति वै

फलं सहस्रगुणितं जाम्ववन्तेशदर्शनात् ॥ १४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे जाम्ववन्ततीर्थमाहात्म्यं नाम पञ्चाशदधिकशततमोऽध्यायः ॥१५०॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः

### धवलेश्वरमाहात्म्यपुरःसरं शिवपूजयानन्दिकिरातयोः शिवलोकेगणप्राप्तिवर्णनम्

महादेव उवाच ।

अस्मात्तीर्थात्परं तीर्थमिन्द्रग्राममितिस्मृतम् ।
यत्र स्नात्वा पुरा शक्रो विमुक्तो घोरकिल्बिषात् ॥ १ ॥

पार्वत्युवाच ।

केनेह कर्मणा शक्रः प्राप्तवान्घोरकिल्बिषम् । विपाप्मा च कथंसोऽभूदितिविस्तरतोवद

महादेव उवाच ।

इन्द्रः सुरेश्वरः पूर्वं नमुचिश्चाऽसुरेश्वरः । अशस्त्रवधमन्योन्यं समयं तौ प्रचक्रतुः॥३॥

अथेन्द्रस्तु नभोवाणीनिर्देशान्नमुचिं तदा । जघान फेनमादाय ब्रह्महत्या तदाऽभवत् ॥
पप्रच्छ च गुरुं शक्रः पापनिर्णाशकारणम् । बृहस्पतेरथाऽऽदेशात्साभ्रमत्युत्तरे तटे ॥
अस्मिन्स्थाने समागत्य स्थानंचक्रेसुरेश्वरः । तस्येह स्नानमात्रेण गतपापस्यतत्क्षणात्
पूर्णेन्दुधवला कान्तिः शरीरे समजायत । धवलेश्वरमीशानं स्थापयामास वृत्रहा ॥
इन्द्रनाम्ना च तल्लिङ्गं विश्रुतं पृथिवीतले । पूर्णिमायां तथा दर्शे संक्रान्तौ ग्रहणे तथा
श्राद्धे कृते पितृणां तु तृप्तिर्द्वादशवार्षिकी । धवलेश्वरमासाद्य यः कुर्याद्विप्रभोजनम्

एकस्मिन्भोजिते विप्रे सहस्रं भोजितं भवेत् ।
हिरण्यभूमिवासांसि दातव्यानि स्वशक्तितः ॥ १० ॥
शुक्ला गौर्ब्राह्मणे देया सवत्सा च पयस्विनी ।
अत्राऽऽगत्य तु यो विप्रो रुद्रजाप्यादिकं चरेत् ॥ ११ ॥

तत्कृतं कोटिगुणितं श्रीमहेशप्रसादतः । अत्र तीर्थे नरो यस्तु उपवासादिकं चरेत् ॥
स एव सर्वकामाढ्यो भवत्येव न संशयः । बिल्वपत्रं समानीय यः पूजयति तं प्रभुम्
धर्ममर्थं च कामं च लभते मानवो भुवि । सोमवारे विशेषेण ये गच्छन्ति नरोत्तमाः
तेषां रोगं तथा दोषं शमयेद्धवलेश्वरः । रवौ वाऽथ विशेषेण ह्यर्चनं कुरुते यदा॥१५॥

तेषां महिमा तु भो देवि ! न ज्ञातः कर्हिचिन्मया ।
दूर्वया चार्कपुष्पैर्वा कह्लारैः कमलैर्दलैः ॥ १६ ॥

पूजनं कुर्वते येऽत्र ते नराः पुण्यभागिनः । श्वेतार्कपुष्पमानीय धवलेशं प्रपूजयन् ॥
वाञ्छितं लभते नित्यं धवलेशप्रसादतः । कृते वै नीलकण्ठस्तु सर्वेषां शङ्करः सदा ॥
त्रेतायुगे स विख्यातो हरो वै भगवान्प्रभुः । द्वापरे शर्वसंज्ञस्तु कलौ वै धवलेश्वरः॥
अत्राऽर्थे यत्पुरावृत्तं तच्छृणुष्व सुरेश्वरि !। नन्दिनामा पुरा वैश्य इन्द्रग्रामे समावसत्

शिवध्यानपरो भूत्वा शिवपूजां चकार सः ।
नित्यं तपोवनस्थं हि लिङ्गं धवलसञ्ज्ञकम् ॥ २१ ॥

उषस्युषसि चोत्थाय प्रत्यहं शिववल्लभः । नन्दी लिङ्गार्चनरतो बभूवाऽतिशयेन हि ॥
यथाशास्त्रेण विधिवा पुष्पार्चनपरोऽभवत् । एकदा मृगयालुब्धः किरातो भूतहिंसकः

पापी पापसमाचारश्चरन्साभ्रमतीतटे । अनेकश्वापदाकीर्णे हन्यमानो मृगाञ्छरैः ॥२४
एवं विचरमाणोऽसौ किरातो भूतहिंसकः । यदृच्छया गतस्तत्र यत्र लिङ्गं सुपूजितम्
धवलेश्वरविख्यातमनेकाश्चर्यमण्डितम् । दृष्टं सुपूजितं लिङ्गं नानापुष्पैःफलैस्तथा ॥
एवं लिङ्गं समालिङ्ग्य गतः साभ्रमतीतटे । तत्र पीत्वा पयः सोऽथ मुखं गण्डूषपूरितम्
कृत्वा चैकेन हस्तेन मृगमांसं समुद्वहन् । करेणैकेन पूजार्थं विल्वपत्राणि वै दधत् ॥

शीघ्रमागत्य लिङ्गान्ते तदा पूजां समाहरत् ।
पुष्पाणि तानि सर्वाणि विधूतानि इतस्ततः ॥ २९ ॥
स्नापनं तस्य लिङ्गस्य कृतं गण्डूषवारिणा ।
करेणैकेन पूजार्थं विल्वपत्राणि सोऽर्पयत् ॥ ३० ॥

द्वितीयेन करेणैव मृगमांसं समार्पयत् । दण्डप्रणामसंयुक्तः संकल्पं मनसाऽकरोत् ॥
अद्यप्रभृति पूजां वै करिष्यामि प्रयत्नतः । त्वं मे स्वामी च भक्तोऽहमद्यप्रभृति शङ्कर
एवं नियमवान्भूत्वा किरातो गृहमागमत् । तथा प्रभातसमये देवायतनमागतः ॥३३॥
नन्दी ददर्शतत्सर्वं किरातेन च यत्कृतम् । अव्यवस्थं च तद्दृष्ट्वा अमेध्यं शिवसन्निधौ

विधूतानि च सर्वाणि हिंसकेन दुरात्मना ।
चिन्तायुक्तोऽभवन्नन्दी जातं किं चित्रमद्य मे ॥ ३५ ॥

कथितानि च विघ्नानि शिवपूजारतस्य हि । उपस्थितानि तान्येव मम भाग्यविपर्ययात्
एवं विमृश्य सुचिरं प्रक्षाल्य शिवमन्दिरम् । यथागतेन मार्गेण नन्दी स्वगृहमागमत्
ततो नन्दिनमालक्ष्य पुरोधागतमानसम् । अब्रवीद्वचनं तं तु कस्मात्त्वं गतमानसः ॥
पुरोहितं प्रति तदा नन्दी वचनमब्रवीत् । अद्य दृष्टं मया विप्र ! अमेध्यं शिवसन्निधौ
केनेदं कारितं तत्र न जानामीह किञ्चन । ततः पुरोधा वचनं नन्दिनं चाब्रवीत्तथा॥

येन विस्खलितं तत्र पुष्पादीनां प्रपूजनम् ।
सोऽपि मूढो न संदेहः कार्याकार्येषु मन्दधीः ॥ ४१ ॥
तस्माच्चिन्ता न कर्तव्या त्वया पुनरपि प्रभो ! ।
प्रभाते च मया सार्धं गम्यतां तच्छिवालयम् ॥ ४२ ॥

निरीक्षणार्थं दुष्टस्य तस्य दण्डं करोम्यहम् । एतच्छ्रुत्वा तु वचनं नन्दी तस्य पुरोधसः
आस्थितः स्वगृहे नक्तं दूयमानेन चेतसा । तस्यां रात्र्यां व्यतीतायामाहूय च पुरोधसम्
गतः शिवालयं नन्दी समं तेन महात्मना । प्रक्षाल्य पूजनं कृत्वा नानारत्नपरिच्छदम्
पञ्चोपचारसंयुक्तं कृत्वा वै ब्राह्मणैः सह । एवं यामद्वयं जातं स्तुवानस्य तु नन्दिनः

आयातोऽसौ महाकालस्तथा रूपो महाबलः ।
कालरूपो महारौद्रो धनुष्पाणिः प्रतापवान् ॥ ४७ ॥

तं दृष्ट्वा भयसंत्रस्तो नन्दी तत्र न्यलीयत । पुरोधाश्चैव सहसा भयभीतस्तदाऽभवत्
किरातेन कृतं तत्र यथापूर्वमपि स्खलन् । तां पूजां स पदाहृत्य बिल्वपत्रं समार्पयत्
नैवेद्येन पलेनैव किरातः शिवमार्चयत् । दण्डवत्पतितो भूमावुत्थाय स्वगृहं गतः ॥
तं दृष्ट्वा महदाश्चर्यं चिन्तयामास वै चिरम् । पुरोधसा तदा नन्दी सह व्याकुलचेतसा
तेनाहूतास्तदा विप्रा बहवो वेदवादिनः । निवेदितं च तत्सर्वं किरातेन च यत्कृतम् ॥

किंकार्यमद्य भो विप्राः ! कथ्यतां च यथातथम् ।
संप्रधार्य ततः सर्वे मिलित्वा धर्मशास्त्रतः ॥ ५३ ॥

ऊचुः सर्वे तदा विप्रा नन्दिनं जातशङ्कितम् । ईशविघ्नं समुत्पन्नं दुर्निवार्यं सुरैरपि ॥

तस्मादानय लिङ्गं त्वं स्वगृहे वैश्यसत्तम ! ।
तथेति मत्वाऽसौ नन्दी शिवस्योत्पाटनं महत् ॥ ५५ ॥

कृत्वा स्वगृहमानीय प्रतिष्ठाप्य यथाविधि । सुवर्णपीठिकां कृत्वा नवरम्भासुशोभिताम्
उपहारैरनेकैश्च पूजयामास वै तदा । अथापरेद्युरायातः किरातः शिवमन्दिरम् ॥५७
यावद्विलोकयामास लिङ्गमैशं न दृष्टवान् । मौनं विहाय सहसा सक्रोशमिदमब्रवीत्

हे शम्भो ! क्व गतोऽसि त्वं दर्शयाऽत्मानमद्य वै ।
यदि नो दर्शनं देयं त्यक्ष्याम्यद्य कलेवरम् ॥ ५९ ॥

हे शम्भो हे जगन्नाथ ! त्रिपुरान्तक शङ्कर ! । हे रुद्र हे महादेव ! दर्शयात्मानमात्मना

एवं साक्षेपमधुरैर्वाक्यैः क्षिप्त्वा सदाशिवम् ।
किरातोऽसौ क्षुरिकया धीरो वै जठरं स्वकम् ॥ ६१ ॥

विभिद्याऽऽशु ततो बाहुमासाद्योच्चैरुषाऽब्रवीत् ।
हे शम्भो ! दर्शयात्मानं कुतो मां त्यज्य यास्यसि ॥६२ ॥
इति क्षिप्त्वा ततोऽन्त्राणि मांसमुद्धृत्य सर्वतः ।
तस्मिन्गर्ते करेणैव किरातः सहसाऽक्षिपत् ॥६३ ॥

स्वच्छं च हृदयं कृत्वा साभ्रमत्यां निमज्जतु । तथैव जलमानीय बिल्वपत्रं त्वगान्वितः पूजयित्वा यथान्यायं दण्डवत्पतितो भुवि । यदा ध्यानस्थितस्तत्र किरातः शिवसन्निधौ प्रादुर्भूतस्तदा रुद्रः प्रमथैः परिवारितः । कर्पूरगौरो द्युतिमान्कपर्दी चन्द्रशेखरः ॥६६ तं गृहीत्वा करे रुद्र उवाच परिसान्त्वयन् । भो भो वीर महाप्राज्ञ मद्भक्तोऽसि महामते! वरं वृणीष्व भो भक्त! यत्ते मनसि वर्त्तते । एवमुक्तः स रुद्रेण महाकालो मुदान्वितः पपात दण्डवद्भूमौ भक्त्या परमया युतः । ततो रुद्रमुवाचेदं न वरं प्रार्थयाम्यहम् ॥

अहं दासोऽस्मि ते रुद्र ! त्वं मे स्वामी न संशयः ।
एतच्छ्लाघ्यतमं लोके देहि जन्मनि जन्मनि ॥ ७० ॥
त्वं माता पिता च त्वं च त्वं बन्धुश्च सखा च मे ।
त्वं गुरुस्त्वं महामन्त्रो मन्त्रैर्ज्ञेयोऽसि सर्वदा ॥ ७१ ॥

निष्कामं वाक्यमाकर्ण्य किरातस्य तदा भवः । ददौ पार्षदमुख्यत्वं द्वारपालत्वमेव च तदा डमरुनादेन नादितं भुवनत्रयम् । भेरीझङ्कारशब्देन शङ्खानां निनदेन च ॥ ७२ ॥ तदा दुन्दुभयो नेदुः पटहाश्च सहस्रशः । नन्दी तं नादमाकर्ण्य विस्मयात्त्वरितो ययौ तपोवनं यत्र शिवः स्थितः प्रमथसंवृतः । किरातो हि तथा दृष्टो नन्दिनाच्च तदाभृशम्

उवाच प्रसृतो वाक्यं स नन्दी विस्मयान्वितः ।
किरातं स्तोतुकामोऽसौ परमेण समाधिना ॥ ७६ ॥

इहानीतस्त्वया शम्भुस्त्वं भक्तोऽसि परन्तप!। त्वद्भक्तोऽहमिह प्राप्तो मां निवेदय शङ्करे तच्छ्रुत्वा वचनं तस्य किरातस्त्वरयान्वितः । नन्दिनं च करे गृह्य शङ्करं समुपागतः॥

प्रहस्य भगवान्रुद्रः किरातं वाक्यमब्रवीत् ।
ब्रूहि कोऽसौ त्वया नीतो गणानामिह सन्निधौ ॥ ७८ ॥

किरात उवाच ।

त्वद्भक्तोऽसौ तदा देव तत्र पूजारतो ह्यसौ । प्रत्यहं रत्नमाणिक्यपुष्पैश्चोच्चावचैरिह ॥
जीवितेन धनेनाऽपि पूजितोऽसि न संशयः ।
तस्माज्जानीहि भो स्वामिन्नन्दिनं भक्तवत्सल !॥ ८१ ॥

महादेव उवाच ।

जानाम्यहं महाभाग ! नन्दिनं वैश्यवर्तनम् । त्वं मे भक्तः सखाचेति महाकालमहामते
उपाधिरहिता ये च ये निष्कपटमानसाः । ते प्रियास्ते च मे भक्तास्ते विशिष्टानरोत्तमाः
तावुभौ स्वीकृतौ तेन पार्षदत्वेन शम्भुना ॥ ८३ ॥
ततो विमानानि बहूनि तत्र समागतान्येव महाप्रभाणि ।
किरातवर्येण स वैश्यवर्य उद्धारितस्तेन महाप्रभेण ॥ ८४ ॥

कैलासलोकमापन्नौ विमानैर्वेगवत्तरैः । सारूप्यमेव संप्रापार्वाश्वरस्य महात्मनः ॥
नीराजितौ गिरिजया पुत्रवत्तौ गणावुभौ । उवाचेदं ततो देवी प्रहस्य गजगामिनी ॥
यथा त्वं हि महादेव ! तथा चैतौ न संशयः ।
सारूप्येण च गत्या च हास्यभावैः सुपूजितैः ॥ ८७ ॥

देव्यास्तद्वचनं श्रुत्वा किरातो वैश्य एव च । सद्यःपराङ्मुखौ भूत्वा शंकरस्य च पश्यतः
ऊचतुस्त्वरया युक्तौ गणौ रुद्रस्य पश्यतः । उभावप्यनुकम्प्यौ च भवताहित्रिलोचन
तव द्वारि स्थितौ नित्यं भवावस्ते नमो नमः ।
तयोर्भावं स भगवान्विदित्वा प्रहसन्भवः ॥ ९० ॥

उवाच परया भक्त्या भवतोरस्तु वाञ्छितम् । ततः प्रभृति द्वावेतौ द्वारपालौबभूवतुः
शिवद्वारि स्थितौ देवि मध्याह्नेशिवदर्शिनौ । एको नन्दी महाकालोद्वावेतौशिववल्लभौ
ये पापिनोऽप्यधर्मिष्ठा अन्धा मूकाश्च पङ्गवः ।
कुलहीना दुरात्मानः श्वपचाद्या हि मानवाः ॥ ९३ ॥
यादृशास्तादृशाश्चान्य आराध्य धवलेश्वरम् ।
गतास्तेऽपि गमिष्यन्ति नाऽत्र कार्या विचारणा ॥ ९४ ॥

अत्र स्नानं च दानं च सान्निध्यं शंकरस्य च । साभ्रमत्यां कृतस्नाना धवलेश्वरपूजकाः
ते रुद्रलोकं गच्छन्ति नाऽत्रकार्या विचारणा । अत्र स्नानंचदानंचयेकुर्वन्तिनरोत्तमाः
धर्मार्थकामभोगांश्च भुक्त्वा यान्ति हरालयम् । चन्द्रसूर्योपरागे च पितुःसांवत्सरे दिने
यत्फलं लभते मर्त्यस्तत्फलंप्राप्नुयाद्ध्रुवम् । स्वर्गात्कामदुघादेविनित्यमायातिसर्वथा
आगत्य तं शिवं देवं समभ्यर्च्य यथा तथा । सा गच्छति सुरश्रेष्ठेस्वर्गंप्रतिनसंशयः
तेन दुग्धाभियोगेन लिङ्गं तद्धवलीकृतम् । धवलेश्वरं नाम ततः सञ्जातं भुवि सर्वदा॥
जन्तवोऽत्र सदा देवि म्रियन्ते कालनोदिताः । ते ते शिवपदं यान्ति यावच्चन्द्रदिवाकरौ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे धवलेश्वरमाहात्म्यं नामैकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

# द्विपञ्चाशदधिकशततमोऽध्यायः

## सबालावतीवृत्तं बालापेन्द्रतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

तीर्थानां प्रवरं तीर्थं साभ्रमत्यास्तटे स्थितम् । बालापइतिविख्यातंभुक्तिमुक्तिप्रदायकम्
तपस्विभिश्चारितं तीर्थं विबुधानां समाश्रयम् । तत्र कन्या तपस्तेपे परमं सुदृढव्रता ॥२
कन्या कण्वमुनेःसाध्वीरूपेणाऽप्रतिमा भुवि । बालाबालावतीनामकुमारीब्रह्मचारिणी

व्रतं चचार सावित्र्या नियमैर्बहुभिर्युता ।

भर्ता मे भास्करो भूयादिति निश्चित्य भामिनि ! ॥ ४ ॥

समास्तस्याःसमाक्रान्तादशसाभ्रमतीतटे । चरन्त्यानियमांस्तांस्तान्भक्त्यापरमदुश्चरान्
तस्यास्तु तेन वृत्तेन तपसा व्रतचर्यया । भक्त्या च भगवान्प्रीतः परया भक्तिसम्पदा॥
आजगामाऽऽश्रमपदं देवदेवो दिवाकरः । आस्थाय रूपं विप्रर्षेः प्रविष्टस्तु महामनाः

सा तं दृष्ट्वोग्रतपसा वरिष्ठं ब्रह्मवित्तमम् । वानप्रस्थविधानेन पूजयामास तं द्विजम् ॥
उवाच रविभक्ता सा कल्याणी तं तपोधनम् । भगवन्मुनिशार्दूल! किमाज्ञापयसिप्रभो
सर्वं तुभ्यं यथाशक्ति दास्यामि स्वतनुं विना ।
सूर्यभक्ताऽस्मि ते पाणिं दास्यामि न कथञ्चन ॥ १० ॥
व्रतैश्च नियमैश्चापि तपोभिश्च तपोधन ! । सूर्यस्तोषयितव्यो मे देवस्त्रिभुवनेश्वरः ॥
इत्युक्तवत्यां तस्यां तु स्मयन्निव निरीक्ष्य ताम् ।
उवाच नियमस्थां तां सान्त्वयन्निव भास्करः ॥ १२ ॥
उग्रं चरसि कल्याणि ! तपः परमदुष्करम् । यदर्थं च समारम्भस्तव बाले! तथैव तत्
तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति । देवत्वं प्राप्यते भद्रे तपसा मोक्षएव च ॥
इमानि पञ्च सुभगे बदराणि प्रतीच्छ मे । दत्त्वा स बदराण्यस्यै पच्स्वेत्युक्त्वा रविर्ययौ
अपृष्ट्वा तां तु कल्याणीं ब्रह्मरूपी विहाय ताम् । स्थितोऽसौनातिदूरेणइन्द्रग्रामेमहायशाः
स्थित्वा जिज्ञासया भावं तस्याश्च ब्राह्मणो रविः ।
बदराणामुपवनं कारयामास भास्करः ॥ १७ ॥
ततः सा प्रयता बाला प्राञ्जलिर्विगतश्रमा । पाकाय बदराणां सा पावकंसमशिश्रयत्
अपचत्परमा देवि बदराणि महाप्रभा । तस्याः पचन्त्याःसुमहान्कालोऽगाच्चसुरेश्वरि
भस्मपुञ्जो महाञ्जातो दिनं च क्षयमन्वगात् । हुताशनेन दग्धस्तु महान्वै काष्ठसञ्चयः
पादौ प्रक्षाल्य सा पश्चात्पावके चारुदर्शने । ददाह बदरार्थं च ब्राह्मणप्रियकाम्यया ॥
दग्धा दग्धा पुनः पादावुपर्याधार्यतेऽनघे । अथाऽस्याः कर्मतद्दृष्ट्वा प्रीतोदेवोदिवाकरः
ततः संदर्शयामास कन्यायै रूपमात्मनः । उवाच परमप्रीतस्तां कन्यां सुदृढव्रताम् ॥
सूर्य उवाच ।
प्रीतोऽस्मि बाले भक्त्या ते तपसा व्रतचर्यया । यस्मादभिमतः कामो बालेसम्पद्यतांतव
अस्मिंस्तीर्थे तपोयुक्ता मद्गेहे त्वं निवत्स्यसि । इदं च तीर्थप्रवरं तवनाम्नाच लक्षितम्
बालापइति विख्यातं साभ्रमत्यास्तटे स्थितम् ।
विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिःस्तुतं पुरा ॥ २६ ॥

बालातीर्थे नरः स्नात्वा त्रिरात्रमुषितःशुचिः । रक्तादित्यमुखं दृष्ट्वा सूर्यस्योदयनं प्रति
सूर्यलोकमवाप्नोति नाऽत्रकार्या विचारणा । सूर्यवारेऽथ संक्रान्तौ सप्तम्यां तु विशेषतः
विषुवत्ययने चाऽपि चन्द्रसूर्यग्रहेऽपि च ।
स्नात्वा संतर्पयेद्देवान्पितृनथ पितामहान् ॥ २९ ॥
गुडधेनुं ततो दद्याद्ब्राह्मणेभ्यो गुडौदनम् । करवीरैर्जपापुष्पै रक्तादित्यप्रपूजनम् ॥
ये कुर्वन्ति नरास्ते वै सूर्यलोके वसन्ति वै । रक्तां धेनुं नरो दद्यादेकं चैव धुरन्धरम्
सयज्ञफलमाप्नोति न नरो निरयम्व्रजेत् । व्याधितोमुच्यते रोगाद्बद्धोमुच्येतबन्धनात्
तीर्थेऽस्मिन्पिण्डदानेन तृप्तिं यान्ति पितामहाः ॥ ३२ ॥

महादेव उवाच ।

तथान्यदपि माहात्म्यं तीर्थस्याऽस्य तपोधने । श्रूयतां यत्पुरावृत्तंव्यासेनकथितंमहत
पुराऽत्र महिषो वृद्धो जरया जर्जरीकृतः । अशक्तो भारमुद्वोढुं सार्थवाहस्तमत्यजत् ॥
स निदाघे जलं पातुं जगाम च महानदीम् । दैवात्पङ्के निमग्नोऽसौततोमृत्युवशंगतः
प्लावितास्थिर्जले पुण्ये तीर्थस्याऽस्य प्रभावतः ।
कान्यकुब्जेश्वरसुतो राजा जातिस्मरोऽभवत् ॥ ३६ ॥
संस्मृत्य च स्ववृत्तान्तं प्रभावं तीर्थजं महत् । आगत्य तज्जलेस्नात्वा ददौदानान्यनेकशः
स तत्र स्थापयामास देवदेवं महेश्वरम् ।
अत्र तीर्थे नरः स्नात्वा सम्पूज्यमहिषेश्वरम् ॥ ३८ ॥
रक्तादित्यमुखं दृष्ट्वा सर्वपापैः प्रमुच्यते । साभ्रमत्युदकं यत्र पूर्वतः पश्चिमं व्रजेत् ॥३९
प्रयागादपि तत्पुण्यं सर्वकामप्रदं महत् ॥ ४० ॥
दत्तं द्विजेन्द्रेषु हुतं यदग्नौ श्राद्धं कृतं जाप्यमिहाऽक्षयं स्यात् ।
गोभूतिलाः काञ्चनवस्त्रधान्यं शय्यासनं वाहनछत्रदानम् ॥ ४१ ॥
यं यं वाञ्छयते कामं तं तं प्राप्नोति मानवः । श्रीमहेशप्रसादाच्च तीर्थस्याऽस्यप्रभावतः
बालापेन्द्रमिदं तीर्थं पुण्यं पापहरं सदा । यं दृष्ट्वा मुनयः सर्वे वीतरागाः सदैव तु ॥
यत्र माहिषनामेति श्वेताख्यं पुण्यदं महत् । यत्र स्नात्वा तु देवेशि पुनर्जन्म न विद्यते

गोदावर्यां कृते स्नाने यत्फलं लभते नरः । तत्फलं लभते देवि अत्र तीर्थे न संशयः ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे बालापेन्द्र-तीर्थं नाम द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

# त्रिपञ्चाशदधिकशततमोऽध्यायः

## दुर्धर्षेश्वरमाहात्म्यवर्णनम्

महादेव उवाच ।

अन्यत्तीर्थं प्रवक्ष्यामि दुर्धर्षेश्वरमुत्तमम् । यस्य स्मरणमात्रेण पापोऽपिपुण्यवान्भवेत्
वृत्ते दैवासुरे युद्धे दैत्ये च निधनं गते । दुर्धर्षं च व्रतं कृत्वा यत्र भार्गवनन्दनः ॥२॥
समाराध्य महादेवं दुर्धर्षं लोककारणम् । मृतसञ्जीवनीमाप यत्र विद्यां हि त्र्यम्बकात्
दैत्यार्थमुशनस्तीर्थं विख्यातं जगतीतले । काव्यतीर्थे कृतस्नानः पूज्य देवं महेश्वरम् ॥
दुर्धर्षेश्वरसञ्ज्ञं वै सर्वपापैः प्रमुच्यते । अत्र वृत्तं तु श्रोतव्यं त्वया च नगनन्दिनि॥५
पुरा यदा भवेद्युद्धं वृत्रवासवयोरिह । तदाऽसुरैर्जिता देवा मघवान्वै सुरेश्वरः ॥
किंकर्त्तव्यमिति ध्यात्वा गतोऽसौ तं गुरुं प्रति ॥ ६ ॥

इन्द्र उवाच ।

अस्माकं त्वं गुरुः साक्षाद्देवानां पालकः सदा ।
ऋषीणां त्वं वरः श्रीमान्कृपां कुरु दयानिधे ! ॥ ७ ॥
वृत्रेण निर्जितोऽहं च क्व गच्छामि च सुव्रत ! ॥ ८ ॥

बृहस्पतिरुवाच ।

शृणु देवेन्द्र ! वक्ष्यामि येन त्वं हि सदा सुखी ।
मम वाक्यं कुरुष्वैव यदीच्छस्यात्मनः शुभम् ॥ ९ ॥

साभ्रमत्यां तदा गच्छ तत्र गत्वा सुखी भव । दुर्धर्षाख्योयत्र देवोनित्यंतिष्ठतिभूतिदः
ददाति वाञ्छितान्कामान्सत्यं सत्यं सुरेश्वर ! । गुरोर्वचनमाकर्ण्यसगतस्तांनदींप्रति
तत्र स्नात्वा तु देवेशो महेशं तमपूजयत् । स्नानाच्च पूजनादेव सन्तुष्टः श्रीमहेश्वरः ॥

महादेव उवाच ।

यं यं प्रार्थयसे नित्यं तत्सर्वं हि ददाम्यहम् । श्रुत्वा वाक्यं तु देवेशो ह्युवाचपरमम्वचः

इन्द्र उवाच ।

त्वं नाथः सर्वलोकानां त्वमेवकारणम्परम् । त्वंहि विश्वेश्वरो देवःसर्वदालक्ष्यसेमया
यदि त्वं मे प्रसन्नोऽसि विश्वेश्वर सुरेश्वर !। वृत्रं जहि महादेव एष कामो महान्मम

महादेव उवाच ।

तव वाक्यात्तु देवेश वृत्रोऽसौ निहतो मया । मया यद्दीयते शस्त्रं तद्गृह्णीष्वसुरेश्वर
तेनैव चाऽस्त्रयोगेन हनिष्यसि न संशयः ॥ १७ ॥

इन्द्र उवाच ।

किमस्त्रंवद विश्वेश! येन वृत्रं हि हन्म्यहम् । वज्रादप्यधिकं किं तन्निर्मितंतुत्वयाकदा

महादेव उवाच ।

इदं पाशुपतं ह्यस्त्रं निर्मितं तु मया पुरा । न दत्तं कस्यचिच्छक्र ! तवार्थे रक्षितं मया
अत्र स्नातं त्वया देव पूजनं वै त्वया कृतम् । अतो गृह्णीष्व मे शस्त्रं येन वृत्रंहनिष्यसि
श्रीमहेशप्रसादाच्च प्राप्तं मघवता ततः । तेन पाशुपतास्त्रेण हतो वृत्रो महाबलः ॥२१
तत्सर्वमत्र सञ्जातं दुर्धर्षेशप्रसादतः । स्नानमात्रात्तु देवेशि पूजनादेव साम्प्रतम् ॥२२
तीर्थप्रभावात्सम्प्राप्तं सत्यं सत्यं वरानने!। एवं ज्ञात्वा तु देवेशि तत्रवै स्नानमाचरेत्
दर्शनं तु महेशस्य सर्वपापप्रणाशनम् ॥ २३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे दुर्धर्षेश्वर-
माहात्म्यं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

---

# चतुष्पञ्चाशदधिकशततमोऽध्यायः

## सकिरातवृत्तखड्गधारेश्वरमाहात्म्यवर्णनम्

साभ्रमत्यास्तटे गुप्तं तीर्थं परमपावनम् । खड्गधारमितिख्यातं कलौ गुप्तं भविष्यति॥
यत्र प्रसङ्गतः स्नात्वा पीत्वा वाऽऽपो यदृच्छया । सर्वपापविनिर्मुक्तो रुद्रलोकेमहीयते
यत्र साभ्रमती पुण्या कश्यपाऽनुगता सती । रुद्रेण हि जटाजूटे धृता पातालगामिनी

खड्गधारेति वै नाम्ना रुद्रस्तत्रैव संस्थितः ।
यत्र स्नात्वा दिवं याताः पापिनोऽपि सुरेश्वरि ! ॥ ४ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । किरातेन कृतं यच्च व्रतं परमदुष्करम् ॥ ५ ॥

पार्वत्युवाच ।

किंनामा वै किरातोऽभूत्किं तेन व्रतमाहितम् ।
तत्सर्वं श्रोतुमिच्छामि यथातथ्येन कथ्यताम् ॥ ६

न ह्यन्यो विद्यते लोके त्वां विना वदतांवरः । तस्मात्कथय भो देव! सर्वंशुश्रूषवेहितम्

महादेव उवाच ।

आसीत्पुरा महारौद्रश्चण्डो नाम दुरात्मवान् । क्रूरः शठोनैष्कृतिकोभूतानांचभयावहः

जालेन मत्स्यान्दुष्टात्मा घातयत्यनिशं ततः ।
भल्लैर्मृगाञ्छ्वापदांश्च कृष्णसारान्सशल्लकान् ॥ ६ ॥
खगान्नानाविधांश्चैव विद्ध्वा कांश्चित्प्रपातयेत् ।
पक्षिणो घातयन्क्रुद्धो बर्हिणश्च विशेषतः ॥ १० ॥

लुब्धको हि महापापो दुष्टो दुष्टजनप्रियः । भार्या तथाविधा तस्य पुंश्चलीचमहाभया
एवं विहरतस्तस्य बहुकालो व्यवर्त्तत । एकदा निशि पापीयाञ्छ्रीवृक्षोपरि संस्थितः
कोलं हन्तुं धनुष्पाणिः शरं संयोज्य कार्मुके । एवंनिशागतातस्यजाग्रतोऽनिमिषस्यहि

माघमासे सितायां वै चतुर्दश्यां नगात्मजे ! ॥ १३ ॥

श्रीवृक्षपत्राणि वहूनि तत्र संछेदयामास रुषाऽन्वितोऽपि ।
श्रीवृक्षमूले परिवर्त्तमानं लिङ्गं च तस्योपरि ता निपेतुः ॥ १४ ॥
श्रीवृक्षपर्णानि च दैवयोगाज्जातं च सर्वं शिवपूजनं तत् ॥ १५ ॥

गण्डूषकारिणा तेन स्नापनं च महत्कृतम् । अज्ञानिना च तेनैव पुष्कसेन दुरात्मना माघमासेऽसितेपक्षे चतुर्दश्यां विधूदये । पुष्कसो हि दुराचारो निष्पन्नो गतकल्मषः

तस्य भार्या प्रचण्डा च आगता तस्य सन्निधौ ।
निराशा च निराहारा यत्राऽसौ पुष्कसः स्थितः ॥ १८ ॥

न प्राप्तः शूकरस्तेन मृगोऽपि महिषोऽपि वा । अशनार्थंच तस्यैव अन्नमादायभामिनी तेन दृष्टा प्रचण्डा सा आयान्ती क्रूरलोचना । सा तस्य भार्यानद्यास्वै जलमध्येपपातह तावत्तयोक्तश्चण्डात्मा एहि शीघ्रञ्चभक्षय । समानीतं त्वदर्थंच मत्स्यमांसं मयाऽधुना कृतं किं मूढ पूर्वेद्युर्मांसं पार्श्वे न दृश्यते । नाऽशितं च त्वया मूढ कुटुम्बं लङ्घते नव एतच्छ्रुत्वा तु वचनं चण्डायाश्चण्डरूपवान् । शिवराज्युपवासेन रात्रौ जागरणेन च

शुद्धान्तःकरणो जातः स्नातुं नद्यां शुचिव्रतः ।
यावत्स्नाति स दुष्टात्मा तावच्छ्वा तत्र चाऽगतः ॥ २४ ॥

शुना तदा भक्षितंच सर्वमांसं सुरेश्वरि ! । चण्डा प्रकुपितातंच श्वानंहन्तुमुपस्थिता निवारिताहि चण्डेन चण्डाप्रकुपितातदा । न हन्तव्यस्त्वयाचैव किमनेनाऽशुभं कृतम् तयोक्तं भक्षितं चान्नमनेनैव दुरात्मना । किं त्वं भक्षयिता मूढ भविताऽद्य बुभुक्षितः

पुष्कस उवाच ।

यच्छुना भक्षितं चान्नं तेनाऽहं परितोषितः । किममेन शरीरेण नश्वरेण गतायुषा ॥ ये पुष्यन्ति शरीरं वै सर्वभावेन भामिनि !। मूढास्ते पापिनो ज्ञेयालोकद्वयवहिष्कृताः तस्मान्मानंपरित्यज्यकामंचापिदुरात्मताम्। स्वस्थाभावविमर्शनतत्त्वबुद्ध्यास्थिराभव अहमेतच्छरीरं वै खड्गधारव्रतेन च । त्यक्ष्याम्यद्य वरारोहे ! किं चिरञ्जीवनेन मे ॥

महादेव उवाच ।

इत्युक्त्वा खड्गमाकृष्य यावच्छिनत्ति कं स्वकम् ।

आगताश्च गणास्तावद्बहवः शिवनोदिताः ॥ ३२ ॥

विमानानि बहून्यत्र आगतानि तदन्तिके। दृष्ट्वा स चैव तान्येवं विमानानि गणांस्तथा

उवाच परया भक्त्या पुष्कसोऽपि च तान्प्रति ॥ ३३ ॥

पुष्कस उवाच ।

कस्मात्समागता यूयं सर्वे रुद्राक्षधारिणः । सर्वे स्फटिकसङ्काशाः सर्वे चन्द्रार्धशेखराः

कपर्दिनश्चर्मपरीतवाससो भुजङ्गभोगैः कृतहारभूषणाः ।

श्रियान्विता रुद्रसमानवीर्या यथातथं भो ! वदतोचितं मम ॥ ३५ ॥

पुष्कसेन तदा पृष्टा ऊचुस्ते रुद्रपार्षदाः ॥ ३६ ॥

गणाऊचुः ।

प्रेषिताः स्मो वयं चण्ड ! शिवेन परमेष्ठिना ।

आगच्छ त्वग्निो भूत्वा सस्त्रीको यानमारुह ॥ ३७ ॥

लिङ्गार्चनं कृतं यच्च त्वया रात्रौ शिवस्य च । तेन कर्मविपाकेन प्राप्तोऽसि परमां गतिम्

तथोक्तो वीरभद्रेण उवाच प्रहसन्निव । किं मया सुकृतं चीर्णं पापिनापुष्कसेन हि ॥

मृगयारसिकेनैव मूढेन च दुरात्मना । पापाचारो ह्यहं नित्यं कथं स्वर्गे वसाम्यहम् ॥

कथंलिङ्गार्चनं चाऽद्य कृतमस्ति तदुच्यताम् । परं कौतुकमापन्नः पृच्छामि कृपया वद

वीरभद्र उवाच ।

देवदेवो महादेवो यो गङ्गाधरसञ्ज्ञकः । परितुष्टोऽद्य ते चण्ड ! सभार्यस्य उमापतिः॥

प्रासङ्गिकं त्वया चाऽद्य कृतमर्चनमेव च । कोलं निरीक्षमाणेन बिल्वपत्राणि चैव हि

छेदितानि त्वया चण्ड पतितानि तदैवहि । लिङ्गस्यमस्तके तानि तेन त्वं सुकृती प्रभो !

तवैवं जागरो जातो महावृक्षोपरि ध्रुवम् । तेनैव जागरेणैव तुतोष जगदीश्वरः ॥४५

छलेनैव महाभाग ! कोलसन्दर्शनेन हि । शिवरात्रिदिनं व्याधप्रसङ्गेनाऽप्युपोषितम् ॥

तेनोपवासेन च जागरेण तुष्टो ह्यसौ देववरो महात्मा ।

तव प्रसादाय महानुभावो ददाति सर्वान्वरदो वरांश्च ॥ ४७ ॥

एवमुक्तस्तदा तेन वीरभद्रेण धीमता । पुष्कसोऽपि विमानाग्र्यमारुरोह च पश्यताम् ॥

गणानां देवतानां च सर्वेषां प्राणिनामपि । तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥
वीणावेणुमृदङ्गानि लास्यनाट्ययुतानि च । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरो गणाः ॥
चामरैर्वीज्यमानो हि छत्रैश्च विविधैरपि । महोत्सवेन महता ह्यानीतः शिवसन्निधौ

पुष्कसोऽपि तदा प्राप्तस्तीर्थस्नानशिवार्चनात् ।
किं पुनः श्रद्धया भक्त्या शिवाय परमात्मने ॥ ५२ ॥
पुष्पादिकं फलं गन्धं ताम्बूलाक्षतमेव च ।
ये प्रयच्छन्ति लोकेऽस्मिंस्ते रुद्रा नाऽत्रसंशयः ॥ ५३ ॥

महादेव उवाच ।

तदाप्रभृति तत्तीर्थं खड्गधारेति विश्रुतम् । एतत्तीर्थं कलौ गुप्तं भविष्यति सुरेश्वरि !

माघमासेऽथ वैशाखे कार्त्तिक्यां च विशेषतः ।
स्नानं ये च प्रकुर्वन्ति मुक्तास्ते नगनन्दिनि ! ॥ ५५ ॥
वसिष्ठो वामदेवश्च भरद्वाजोऽथ गौतमः ।
स्नानार्थं वै समायान्ति देवं द्रष्टुं पिनाकिनम् ॥ ५६ ॥

त्रियुगे वर्त्तते लिङ्गं कलौ नैव तु पार्वति !। विश्वामित्रेण ऋषिणा दत्तशापो ह्यहं तदा

पार्वत्युवाच ।

कथं शापस्तु ऋषिणा दत्तश्चैव सुरेश्वर !। तदहं श्रोतुमिच्छामि त्वत्तो देव! न संशयः

महादेव उवाच ।

एकस्मिन्समये देवि ! विश्वामित्रो महातपाः ।
आगतः खड्गधारेऽस्मिंस्तीर्थे वै परमाद्भुते ॥ ५९ ॥

साभ्रमत्यां कृतस्नानो दर्शनं कृतवान्मम । तत्र तिष्ठति नित्यं वै पूजां कुर्वन्ननेकधा ॥
तत्र कोऽपि महादुष्टः कौलिकः पापरूपधृत् । मांसं दत्तं तदा तेन शिवस्योपरि भामिनी
दृष्ट्वा तदपि मांसं च विश्वामित्रोऽथ वै पुनः । अब्रवीच्च तदा तत्र दुष्कृतं पापिना कृतम्
न दत्तस्तस्य दण्डो हि शर्वेण परमात्मना । तस्मादहं हि निश्चित्य शापं दास्ये न संशयः
विचार्यैवं तदा तेन शप्तोऽहं देवि वै तदा । अस्मिन्कलियुगे घोरे गुप्तस्त्वं भव सर्वथा

इति दत्त्वाऽथ वै शापं गतवान्मुनिसत्तमः। तदाप्रभृति भो देवि गुप्तोऽहमृषिशापतः
मम स्थाने विशेषेण पूजनं कुरुते यदि। तेषां हि दुरितं यच्च नश्यते तत्क्षणादपि॥
मृन्मयीं मामकीं मूर्ति कृत्वा ये पूजयन्ति वै।
अत्र स्थाने विशेषेण मामके तु वसन्ति हि॥ ६७॥
खड्गधारेश्वरइति नाम्ना ख्यातः कलौ युगे। कृते वै मन्दिरं नाम त्रेतायां गौरवः स्मृतः
द्वापरे विश्वविख्यातः कलौ खड्गेश्वरः स्मृतः।
दक्षिणं भागमाश्रित्य मम स्थानं सुरेश्वरि!॥ ६९॥
इति ज्ञात्वा तु तत्रैव कृत्वा मूर्ति सदा बुधः। पूजनं कुरुते नित्यं वाञ्छितं फलमाप्नुयात्
धर्मार्थकाममोक्षांश्च लभते मानवो भुवि। धूपं दीपं च नैवेद्यं तथा वै चन्दनादिकम्
येऽर्पयन्ति हि देवेशि लोकनाथे महेश्वरि!। न दुःखं तु भवेत्तेषां सत्यं सत्यं वरानने!

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
खड्गधारेश्वरमाहात्म्यं नाम चतुष्पञ्चाशदधिकशततमोऽध्यायः॥१५४॥

# पञ्चपञ्चाशदधिकशततमोऽध्यायः

## सदधीचिवृत्तं दुग्धेश्वरमाहात्म्यवर्णनम्

श्रीमहादेव उवाच।

खड्गधाराद्दक्षिणतस्तीर्थं परमपावनम्। दुग्धेश्वरमिति प्रोक्तं सर्वपापप्रणाशनम्॥
यस्मिंस्तीर्थे नरः स्नात्वा दृष्ट्वा दुग्धेश्वरं हरम्।
पुमान्सद्यो विमुच्येत दुःखात्पापसमुद्भवात्॥ २॥
दधीचिना तपस्तप्तं साभ्रमत्यास्तटे शुभे। चन्द्रभागा महापुण्या गङ्गया सङ्गता यतः
तत्र स्नानं च दानं च जपः पूजा तपस्तथा। सर्वमक्षयतां याति दुग्धतीर्थप्रभावतः॥

पार्वत्युवाच ।

दुग्धेश्वरससमुत्पत्तिं श्रोतुमिच्छामि भो प्रभो । महिमा दुग्धतीर्थस्य कथ्यतां च सुरेश्वर!

महादेव उवाच ।

पुरा दैवासुरे युद्धे दैत्यैर्देवाः पराजिताः । पलायनपरा भूत्वा दधीचाश्रममागताः ॥६
मुक्त्वा तत्रायुधान्येव गता देवा दिशोदश । पश्चात्कोलाहलं श्रुत्वा दधीचो दैत्यसंभवम्

पीतवांस्तानि शस्त्राणि जलेनाऽऽप्लाव्य भार्गवः ।
कालेन ते सुराः सर्वे अस्त्राण्यादातुमुत्सुकाः ॥ ८ ॥

गुरुणा सहिताः सर्वे परस्परमुदान्विताः । नकुलैः सहसर्पाश्च क्रीडन्ते ते परस्परम् ॥
एवम्विधान्यनेकानि साश्चर्याणि तदाश्रमे । पश्यन्तो विबुधाः सर्वे विस्मयं परम गताः
ददृशुस्ते मुनिवरमासनोपरि संस्थितम् । यत्र साभ्रमती पुण्या मिलिता चन्द्रभागया॥
वर्चसा परमेणैव भ्राजमानं यथा रविम् । विभावसुद्वितीयं च सुवर्चो भार्यया सह ॥
यथा ब्रह्मा हि सावित्र्या तथाऽसौ मुनिसत्तमः । दृष्टः सुरवरैः सर्वैः प्रणिपातपुरःसरम्
ऊचिरे तं तदा देवा बृहस्पतिपुरोगमाः । त्वं दाता त्रिषु लोकेषु विदितः पूर्वमेवच ॥

याच्ञार्थं च वयं सर्वे त्वत्सकाशं समागताः ।
भयभीता वयं सर्वेऽस्त्राणि नो दातुमर्हसि ॥ १५ ॥

इत्युक्तो मुनिवर्योऽसौ देवानाह महामतिः । पीतानि तानि भो देवा जलेनाप्लाव्य मन्त्रतः

ततो देवाऽब्रुवन्विप्रं दैत्यानां निधनाय च ।
देहास्थीनि त्वया विप्र! दत्तानीति द्विजोऽवदत् ॥ १७ ॥
इत्युक्त्वा तान्स्वपत्नीं स प्रेषयामास चाऽऽश्रमम् ।
तदोवाच द्विजो हृष्टो देवान्स्मित्वा महामतिः ॥ १८ ॥
पीतानि तानि भो देवा गृह्णीध्वं च यथातथम् ।
इत्युक्त्वा च द्विजो देवि योगमास्थाय योगवित् ॥ १९ ॥

ततोऽब्रुवन्सुरा विप्रं स्मयन्तंछलयागिरा । त्वयिजीवतिभोब्रह्मन्कुतोऽस्थीनिलभामहे
प्रहस्योवाच विप्रर्षिस्तिष्ठध्वं क्षणमेकतः । स्वयमेव च भो देवास्त्यक्ष्याम्यद्य कलेवरम्

इत्युक्त्वा स द्विजो देवि ! योगमास्थाय योगवित् ।
ब्रह्मलोकं गतः सद्यो यतो नाऽऽवर्त्तते पुनः ॥ २२ ॥

ततः सर्वे सुरास्तत्र दृष्ट्वा तं विलयं गतम् । चिन्तयन्तः सुरगणाः कथं च विशसामहे॥
सुरभिं चाह्वयामास तामुवाच शचीपतिः । कलेवरं द्विजेन्द्रस्य लीढ त्वं वचसा मम

तथेति च वचो मत्वा तत्क्षणादेव लिह्य तत् ।
निर्मांसं च कृतं सद्यस्तया धेन्वा कलेवरम् ॥ २५ ॥
जगृहुस्तानि चाऽस्थीनि चक्रुः शस्त्राणि वै सुराः ।
तस्य वंशोद्भवं त्वस्त्रमासीद्ब्रह्मशिरस्तथा ॥ २६ ॥

शस्त्राण्यस्त्राणि कृत्वा ते महाबलपराक्रमाः । ययुर्देवास्त्वरायुक्ता वृत्रघातनतत्पराः

ततः सुवर्चास्तु दधीचपत्नी संप्रेषितायासुरकार्यसिद्धये ।
विलोकयामास समेत्य तत्र मृतं पतिं देहमथोविशस्तम् ॥ २८ ॥
ज्ञात्वा तु तत्सर्वमथो सुराणां कृत्यं तदानीं च चुकोप साध्वी ।
ददौ तदा शापमतीव रुष्टा तदा सुवर्चा ऋषिवर्यपत्नी ॥ २९ ॥
अहो सुरा दुष्टतराश्च सर्वे ह्यनेकशमाश्च तथैव लुब्धाः ।
तस्मात्तुसर्वे ह्यप्रजा भवन्तु सेन्द्राः सुराऽद्यप्रभृतीत्युवाच ॥ ३० ॥

एवं शापं ददौ तेषां सुराणां सा तपस्विनी । उपविश्याऽश्वत्थमूले साभ्रमत्यास्तटेस्थिता
सगर्भा सा सती साध्वी स्वोदरं विददार ह । निर्गतोजठराद्गर्भो दधीचस्य महात्मनः
साक्षाद्रुद्रावतारोऽसौ पिप्पलादो महाप्रभुः ।प्रहस्य जननी गर्भमुवाच वचनं महत् ॥
सुवर्चास्त्वं पिप्पलादं चिरं तिष्ठास्य सन्निधौ । अश्वत्थस्य महाभाग सर्वेषां शुभदो भव
तथैव भाषमाणा सा सुवर्चास्तनयं प्रति । पतिं प्रत्यागमत्साध्वी परमेण समाधिना

एवं दधीचपत्नी सा पतिना स्वर्गमास्थिता ।
ते देवाः कृतशस्त्रास्त्रा दैत्यान्प्रतिसमुत्सुकाः ॥ ३६ ॥

आजग्मुश्चेन्द्रमुख्याश्च महाबलपराक्रमाः । कामधेनुः प्रसुस्राव ययौ यत्र द्विजक्षयः
मुनेः प्रभावतो दुग्धं लिङ्गरूपं व्यजायत । दुग्धेश्वरमिति ख्यातं देवि साभ्रमती तटे ॥

तदा प्रभृति तीर्थं हि तन्नाम्ना प्रथितं भुवि । अतुलं यस्य माहात्म्यं श्रवणात्पातकापहम्
ये शृण्वन्ति नरा भक्त्या दुग्धेश्वरसमुद्भवम् । तेऽपि पापविनिर्मुक्ता यान्ति रुद्रपदं महत्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे दुग्धेश्वर-
माहात्म्यं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

# षट्पञ्चाशदधिकशततमोऽध्यायः

## चन्द्रेश्वरचन्द्रभागामाहात्म्यवर्णनम्

महादेव उवाच ।

दुग्धेश्वरस्य पूर्वे तु तीर्थं परमपावनम् । चन्द्रभागेति वै नाम्ना नदी तत्र तु संगता ।

तत्र चन्द्रेश्वरो देवो नित्यं तिष्ठति पुण्यदः ।
यो हरः सर्वदा व्यापी लोकानां सुखदो महान् ॥ २ ॥
अत्र स्नानं प्रकुर्वन्ति ध्यानं कुर्वन्ति नित्यशः ।
तत्फलं प्राप्नुयुस्ते वै साभ्रमत्यां शिवार्चनात् ॥ ३ ॥

सोमेनाऽत्र तपस्तप्तं कालं बहुतरं किल । तस्माच्चन्द्रेश्वरो नाम स्थापितो वै महेश्वरः
शुक्रेणाऽपि तपस्तप्तं चन्द्रभागासमीपतः । अतस्तीर्थाधिकं तीर्थं पावनं सर्वदा भुवि
कलौ गुप्तं तु ऋषिणा कारितं वै सुरेश्वरि! । यत्र हेममयं लिङ्गं दृश्यते नाऽत्रसंशयः

अत्र स्नात्वा च पीत्वा च कृत्वा वै शिवपूजनम् ।
ये नराः सङ्क्रमिष्यन्ति धर्मार्थाँल्लभन्ति ते ॥ ७ ॥

वृषोत्सर्गादिकं कर्म ये कुर्वन्ति विशेषतः । भुक्त्वा स्वर्गपदं ते वै पश्चाद्यान्ति हरालयम्

स्नानार्थं प्रत्यहं देवि ! चन्द्रभागासमीपतः ।
आगमिष्यन्ति ये लोकास्ते ज्ञेयाः पुण्यभागिनः ॥ ६ ॥

गत्वा परतटे ये वै ह्यर्चयन्ति च तं शिवम् । चन्द्रेश्वरेति नामानं श्रीहरं पापकृन्तनम्
अत्र गत्वा विशेषेण रुद्रजाप्यादिकं तथा । ये कुर्वन्ति नरश्रेष्ठास्ते ज्ञेयाः शिवरूपिणः
सर्वदा तु सुरश्रेष्ठे येऽत्र स्नानं प्रकुर्वते । ते नरा विष्णुरूपा हि विज्ञेया नाऽत्रसंशयः
येऽत्र श्राद्धंप्रकुर्वन्ति तिलपिण्डेन वा पुनः । तेऽपिविष्णुपदं यान्ति पिण्डदानप्रभावतः

अत्र दानं प्रकर्त्तव्यं स्नानं वै विधिपूर्वकम् ।
यत्र स्नात्वा तु मुच्यन्ते ब्रह्महत्यादिकिल्बिषात् ॥ १४ ॥

तटेऽस्मिन्ये विशेषेण वटं चारोपयन्ति ते । मृताः शिवपदं यान्ति यावच्चन्द्रदिवाकरौ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे चन्द्रेश्वर-
चन्द्रभागामहिमा नाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

# सप्तपञ्चाशदधिकशततमोऽध्यायः

## पिप्पलादतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

दुग्धेश्वरसमीपे तु तीर्थं चातीवपावनम् । रम्यं तत्पिप्पलादस्य नाम्ना वै प्रथितं भुवि
यत्र कृत्वा तपः पूर्वं मातुर्वचनतो मुनिः । उत्पादयामास कृत्यां वडवानलसम्मिताम्

पितुरानृण्यमन्विच्छन्दधीचस्य महात्मनः ।
तत्र स्नात्वा च पीत्वा च ब्रह्महत्यां व्यपोहति ॥ ३ ॥
साभ्रमत्यास्तटे शुभ्रं पिप्पलादं सुरेश्वरम् ।
तत्र स्नात्वा तु भो देवि ! मुक्तिभागी भवेन्नरः ॥ ४ ॥

आरोपणं पिप्पलानां कर्त्तव्यं विधिपूर्वकम् । कृते सति महादेवि मुच्यते कर्मबन्धनात्

पार्वत्युवाच ।

किमर्थं सा तु कृत्या वै चोत्पन्ना तां निबोधय ।

तया वै कृत्यया पूर्वं किं कृतं वद मे प्रभो ! ॥ ६ ॥
येन पुत्रेण साऽऽनीता पितुरानृण्यकारणात् ॥ ७ ॥

महादेव उवाच ।

दधीचिऋषिवर्योऽसौ ह्यागतस्तपः कारणात् । अत्र तेन महत्तप्तमृषिणा परमात्मना ॥
तत्र कोलासुरो नाम विघ्नार्थं वै समागतः । तेन विघ्नं बहुतरं कृतं वै नाऽत्रसंशयः॥
तद्दृष्टं तु सुपुत्रेण कहोडेन च धीमता । कृत्या ह्युत्पादिता तत्र हननार्थं सुरेश्वरि !
तया वै निहतो दैत्यः कोलो नाम महासुरः ।
तस्मात्तीर्थं महज्जातं कलौ गुप्तं तु पार्वति ! ॥ ११ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे पिप्पलादतीर्थं नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

# अष्टपञ्चाशदधिकशततमोऽध्यायः

## निम्बार्कदेवतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

पिप्पलादात्ततस्तीर्थात्पिचुमन्दार्कमुत्तमम् । तीर्थंसाभ्रमतीतीरेव्याधिदौर्गन्ध्यनाशनम्
पुरा कोलाहले युद्धे दानवैर्निर्जिताः सुराः । वृक्षेषु विविशुस्तत्रसूक्ष्माःप्राणपरीप्सया
तत्र बिल्वे स्थितः शम्भुरश्वत्थे हरिरव्ययः । शिरीषेऽभूत्सहस्राक्षोनिम्बेदेवः प्रभाकरः
एवमादि यथायोग्यं वृक्षेषु विबुधास्तथा । यावत्कोलाहलोदैत्यो विष्णुनाप्रभविष्णुना
हतो महाहवे तावत्स्थितास्ते वृक्षमाश्रिताः । येन येन हि यो वृक्षो विबुधेनसमाश्रितः
स तु तन्मयतां यातस्तस्मात्तं न विनाशयेत् ।
इति सूर्यस्य विश्रामात्पिचुमन्दार्कमुत्तमम् ॥ ६ ॥
तीर्थं रोगहरं स्नानात्साभ्रमत्यास्तटेऽभवत् । अत्र गत्वा विशेषेण तं रविंयदिपूजयेत्

पूजयित्वा सुरश्रेष्ठे ! लभते वाञ्छितंफलम् । अत्र द्वादशनामानि गत्वा येऽपठन्तिच
ते नराःपुण्यकर्माणो यावज्जीवंनसंशयः । आदित्यं भास्करं भानुं रविं विश्वप्रकाशकम्
तीक्ष्णांशुं चैव मार्तण्डं सूर्यं चैव प्रभाकरम् । विभावसुं सहस्राक्षं तथापूषणमेव च ॥
एवं द्वादशनामानि यः पठेत्प्रयतः सुधीः । धनं वै पुत्रपौत्रांश्च लभते नगनन्दिनि ! ॥
एकैकं नामआश्रित्य योऽर्चयेत नरो भुवि । सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥

क्षत्रियो लभते राज्यं वैश्यो धनमवाप्नुयात् ।
शूद्रो वै लभते भक्तिं तस्मात्सूक्तं परं जपेत् ॥ १३ ॥
निम्बार्कतः परं तीर्थं न भूतं न भविष्यति ।
अत्र स्नात्वा च पीत्वा च मुक्तिभागी भवेद्ध्रुवम् ॥ १४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
निम्बार्कदेवतीर्थं नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

# एकोनषष्ट्यधिकशततमोऽध्यायः

## कोटरातीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

तस्माद्दूरतरे देवि ! सिद्धक्षेत्रमनुत्तमम् । अनिरुद्धो वृतः पूर्वमुषार्थे चित्रलेखया॥१॥
नीतो बाणासुरपुरं तिष्ठति स्म गृहे पुरा । पाशैर्बाणैश्च संरुद्धः कोटराक्षीमथाऽस्मरत्
साक्षाद्या वैष्णवी शक्तिः सदा रक्षणतत्परा । सेयं देवी नदीतीरे कृष्णेनात्र प्रतिष्ठिता

जित्वा बाणासुरं सङ्ख्ये द्वारकां प्रति गच्छता ।
अनिरुद्धस्य स्तोत्रेण साक्षात्सान्निध्यमागता ॥ ४ ॥

तत्र तीर्थे नरःस्नात्वा वर्षमेकं प्रयत्नतः । कोटराक्षीमुखं दृष्ट्वा लक्ष्मीमाप्नोतिपुष्कलाम्
सिद्धतीर्थे नरः स्नात्वा दृष्ट्वा कोटरवासिनीम् । सिंहयुक्तेन यानेन रुद्रलोके महीयते॥

यस्यां वै स्मरणादेव मुक्तः सोऽपि वरानने ! ।

अतो येऽत्र प्रगच्छन्ति ते नरा मुक्तिभागिनः ॥ ७ ॥
तत्र गत्वा विशेषेण स्नानंकृत्वा तु पार्वति !। कोटराक्ष्यास्ततःस्तोत्रं पठेद्वैबुद्धिपूर्वकम्
कोटराक्षी विश्वरूपा महामाया बलाधिका । त्रिपुरा त्रिपुरघ्नी च शिवावैशिवरूपिणी
कन्या सारस्वती प्रोक्ता दुर्गा दुर्गतिहारिणी । भैरवी भैरवाक्षी च लक्ष्मीर्देवीजनप्रिया
एतानि बहुधोक्तानि नामानि च सुरेश्वरि!। ये पठन्ति नरश्रेष्ठास्तेयान्ति शिवसन्निधौ
अनिरुद्धकृतं स्तोत्रं ये जपन्ति मनीषिणः । मुच्यन्ते कष्टबन्धात्ते सत्यं सत्यं वरानने
तीर्थानां परमं तीर्थं कोटरानिर्मितं भुवि । दर्शनादेव नश्यन्ति पापानां राशयस्तथा ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कोटरातीर्थं नामैकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

## षष्ट्यधिकशततमोऽध्यायः

### वामनतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

अस्मात्तीर्थात्परं तीर्थं तीर्थराजेतिविश्रुतम् । सप्तनद्यो वहन्त्यत्र चन्दनोदकमिश्रिताः॥
अन्यतीर्थाच्छतगुणं स्नानं चाऽत्र विशिष्यते ।
देवानां प्रवरो देवो यत्राऽऽस्ते वामनः स्वयम् ॥ २ ॥
द्वादश्यां माघमासस्य दद्याद्यस्तिलधेनुकाम् । विमुक्तःसर्वपापेभ्यःकुलानांतारयेच्छतम्
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति ॥ ४ ॥
तीर्थेऽस्मिन्भोजयेद्यो वै ब्राह्मणान्गुडपायसैः। एकस्मिन्भोजितेविप्रे सहस्रंभोजितंभवेत्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वामनतीर्थं नाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

# एकषष्ट्यधिकशततमोऽध्यायः

## सोमतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

सोमतीर्थं ततो गच्छेदुत्तमं साभ्रमतीतटे । पातालात्तत्र निर्गत्य कालाग्निरभवद्भवः ॥
सोमतीर्थे नरः स्नात्वा दृष्ट्वा सोमेश्वरं शिवम् । सोमपानफलंसाक्षाद्भवतीति न संशयः
रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः । नरो भवति लोकेऽस्मिन्परत्र च शिवंव्रजेत्

अत्रेतिहासं वक्ष्यामि शृणु सुन्दरि!तत्त्वतः ।
यं श्रुत्वा मुच्यते चाऽत्र ब्रह्महत्यादिपातकात् ॥ ४ ॥

कौपीतकेन ऋषिणा तपस्तप्तं विशेषतः । निराहारः स वै जातः पर्णाशनरतः परम् ॥
वायुभक्षस्तपः कुर्वन्नात्मध्यानपरायणः । एवं बहुयुगं तत्र तप्तं तेन महत्तपः ॥ ६ ॥
कदाचिद्दैवयोगेन सुप्रसन्नो महेश्वरः । यद्यत्प्रार्थयसे विप्र ! तत्सर्वं प्रददाम्यहम् ॥७॥

कौपीतक उवाच ।

तव प्रसादाद्देवेश अत्र लिङ्गं प्रजायताम् । अत्र सोमेश्वरइति ख्यातो देवो भवेद्ध्रुवम्

यत्र स्नात्वा च भुक्त्वा च वाञ्छितं फलमाप्नुयात् ।
अत्र स्थाने विशेषेण रुद्रजाप्यादिकं यदि ॥ ९ ॥

कुर्वन्ति ये नरश्रेष्ठा धर्मानर्थाँल्लभन्ति ते । अपुत्रो लभते पुत्रं निर्धनो लभते धनम् ॥
राज्यकामी तु तद्राज्यं लभते नाऽत्र संशयः । यदिचेत्त्वं प्रसन्नोऽसितत्सर्वंदेहिमे प्रभो

महादेव उवाच ।

तदा चैव सुरेशेन सर्वं दत्तं द्विजन्मने । तदा प्रभृति तत्तीर्थं सोमलिङ्गेति विश्रुतम् ॥
चन्दनैर्वा बिल्वपत्रैर्येऽर्चयन्ति सदा शिवम् । लभन्ते मानुषे देहे सौख्यंपुत्रादिसंभवम्
सोमवारे तथा प्राते यो गच्छति हरालयम् । वाञ्छितं लभते नित्यंसोमलिङ्गप्रसादतः

अत्र गत्वा तु यो देवि ! यद्ददाति फलादिकम् ।

यस्य कामनया चैव स तं प्राप्नोति निश्चितम् ॥ १५ ॥
श्वेतैर्वा करवीरैश्च पारिजातैस्तथा पुनः । येऽर्चयन्ति च तं देवं श्रीमहेशंपिनाकिनम्
ते लभन्ते सुरश्रेष्ठे शैवं पदमनुत्तमम् ॥ १७ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
सोमतीर्थवर्णनं नामैकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

## द्विषष्ट्यधिकशततमोऽध्यायः

### सकपोताख्यानं कापोततीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

ततो गच्छेत्तथा देवि ! तीर्थं कापोतिकं पुनः । यत्र साभ्रमतीतोयं प्राचीनं सम्प्रवर्त्तते
पिण्डं ददाति यस्तत्र पितृतर्पणपूर्वकम् । वन्यैः फलैस्तथा पुष्पैः सदा पर्वणि पर्वणि
काकादिभ्यश्च श्वादिभ्यो बलिं सन्ददते तु यः ।
यमस्य पन्थानं सोऽपि ससखं निस्तरेन्नरः ॥ ३ ॥
तत्र तीर्थे नरः स्नात्वा वैशाख्यां गौरसर्षपैः । पूजयेद्देवमीशानं प्राचीनेश्वरमुत्तमम् ॥
आत्मानं तारयेत्सोऽथ पितॄनथ पितामहान् ।
कपोतो यत्र चात्मानं दत्त्वा चाऽतिथये मुदा ॥ ५ ॥
स्तुतो देवगणैः सर्वैर्विमानेन दिवं गतः । तदाप्रभृति तत्तीर्थं कापोतमिति विश्रुतम् ॥
तत्र स्नात्वा नरः पीत्वा ब्रह्महत्यां व्यपोहति ॥ ६ ॥

पार्वत्युवाच ।

कपोतेन कथं दत्तं शरीरं च वद प्रभो ! । निमित्तं किं तथा देव नाहं वेद्मि सुरेश्वर ! ॥

महादेव उवाच ।

अत्र तीर्थेऽतिदेवेशि वटो वै परमो महान् । तस्य शाखा ह्यनन्ताश्च दृश्यन्ते विपुला भुवि

तत्र जीवा वसन्तीह पक्षिणो बहवस्तथा । कपोतेन गृहं तत्र कारितं तु सुरेश्वरि !॥
तत्र तिष्ठति पक्षीशो नित्यं विष्णुपरायणः । कुटुम्बेन समायुक्तो शाखायां वसति ध्रुवम्
एकस्मिन्वासरे देवि ! द्वादश्यां विष्णुवासरे ।
श्येनस्तत्र समायातो ह्यतिथित्वेन भामिनि ! ॥ ११ ॥
कपोत! भो देहिमांसं तव शारीरकं मम । नो चेच्छापं प्रदास्यामि इत्युक्तं नगनन्दिनि!
अद्य वै वासरे विष्णोः क्षुधार्तोऽहं समागतः ।
तस्माद्देयं हि मांसं मे क्षुधार्ताय त्वया प्रभो ! ॥ १३ ॥
श्येनोक्तं तत्तु वै श्रुत्वा कपोतो वैष्णवो महान् । तेन दत्तं तदा देवि शरीरं नाऽत्रसंशयः
तेन दानप्रभावेण तीर्थं जातं सुरोत्तमे । कापोतकं महत्तीर्थं पावनानां च पावनम् ॥
अत्र तीर्थे नरः स्नात्वा कृत्वा वै शिवपूजनम् । ददाति चातिथिभ्यश्च मिष्टमन्नं सुरोत्तमे
इह लोके सुखं भुक्त्वा याति विष्णोः परं पदम् ।
दत्त्वा वै स्वशरीरं तु कपोतोऽथ महात्मने ॥ १७ ॥
स गतो वैष्णवं तत्र यावच्चन्द्रदिवाकरौ । अतो गत्वा तु भो देवि अतिथिं पूजयेत्सदा
पूजिते चातिथौ तत्र सर्वं च लभते ध्रुवम् ॥ १८ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कापोततीर्थं
नाम द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

---

# त्रिषष्ट्यधिकशततमोऽध्यायः

## गोतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

तीर्थानां प्रवरं तीर्थं महापातकनाशनम् । गोतीर्थमिति ख्यातं काश्यपह्रदसमीपतः ॥१
यानि कानि च पापानि ब्रह्महत्यासमानि च ।

गोतीर्थे तु ततः स्नात्वा भ्रश्यन्ते नाऽत्र संशयः ॥ २ ॥
गावः कृष्णां तनुं प्राप्य पूर्वपातकयोगतः । यत्र तीर्थे ततः स्नात्वा शुक्लत्वं पुनरागताः
तत्र तीर्थे नरः स्नात्वा दत्त्वा गोभ्यो गवाह्निकम् ।
गोमातृणां प्रसादेन मातृणामनृणी भवेत् ॥ ४ ॥
गोतीर्थे तु नरो गत्वा स्नात्वा गां तु पयस्विनीम् ।
ददाति विप्रमुख्येभ्यः स याति ब्रह्मणः पदम् ॥ ५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे साभ्रमतीमाहात्म्ये गोतीर्थं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥१६३॥

---

# चतुःषष्ट्यधिकशततमोऽध्यायः

## काश्यपह्रदमाहात्म्यवर्णनम्

महादेव उवाच ।

अत्र तीर्थं महच्चान्यत्कश्यपाख्यं सुरेश्वरि! । यत्र ह्रदो महानासीज्जगद्देवविनिर्मितः॥१
तत्र कुशेश्वरो नाम देवो यत्र विराजते । यत्र कुण्डं तथा रम्यं कश्यपेन विनिर्मितम्
तत्र स्नात्वा तु भो देवि न नरो निरयं व्रजेत् । अग्निहोत्रकरा विप्रा नित्यं वेदपरायणाः
निवसन्ति महादेवि! काश्यपायां बहुश्रुताः । यथा काशी तथा चेयं नगरी ऋषिनिर्मिता
काश्यपेन यतश्चात्र ततं बहुतरं तपः । गङ्गा वै तपसा येन आनीतेशजटोद्भवा ॥ ५ ॥
सा गङ्गा काश्यपी देवि ! महापातकनाशिनी ।
यस्या दर्शनमात्रेण मुच्यन्ते दुष्टकिल्बिषात् ॥ ६ ॥
गोदानं च प्रशंसन्ति रथदानं तथैव च । श्राद्धं कृत्वा तु तत्रैव दानं देयं प्रयत्नतः ॥७॥
कलौ युगे तथा घोरे महापातकनाशनम् । कश्यपाख्यं समं तीर्थं न भूतं न भविष्यति

यत्र वै देवताः सर्वा ऋषयो वीतकल्मषाः । नित्यं तिष्ठन्ति देवेशि तीर्थराजप्रसादतः॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे साभ्रमती-माहात्म्ये काश्यपह्रदमाहात्म्यं नाम चतुःषष्ट्यधिकशततमोऽध्यायः ॥१६४॥

## पञ्चषष्ट्यधिकशततमोऽध्यायः

### भूतेश्वरतीर्थवैद्यनाथमाहात्म्यवर्णनम्

महादेव उवाच ।

भूतालयं ततो गच्छेत्तीर्थं पापहरं परम् । भूतालयो वटो यत्र यत्र प्राची तु चन्दना ॥१
भूतालये नरः स्नात्वा कृष्णाष्टम्यामुपोषितः । यस्तु कृष्णतिलान्दद्यात्र स प्रेतोऽभिजायते
पितॄनुद्दिश्य यो दद्यादुदकुम्भं तिलैः सह । पूर्वजान्प्रेतभावात्स मोचयेन्नाऽत्र संशयः॥
यस्य नाम्ना नरः स्नाति प्रेतत्वात्स विमुच्यते । चतुर्दश्यामथाऽष्टम्यां प्रभाते विमलोदके
तीर्थे भूतालये स्नात्वा दृष्ट्वा भूतालयं वटम् । भूतेश्वरप्रसादेन भूतेभ्यो न लभेद्भयम् ॥

इति श्रीभूतेश्वरतीर्थम् ।

अतस्तीर्थान्परं तीर्थं घटेश्वरमितिस्मृतम् । यत्र स्नात्वा तु तं दृष्ट्वा मुक्तिभागी भवेद्ध्रुवम्
यत्र साभ्रमतीतीर्थं घटो वै परमो महान् । दृष्ट्वा चैव महादेवं मुच्यते नाऽत्रसंशयः ॥
तत्र गत्वा विशेषेण पुष्पपूजां करोति यः । मनसाऽभीप्सितान्कामाँल्लभते मानवो भुवि

इति घटेश्वरतीर्थम् ।

ततो गच्छेन्नरो भक्त्या वैद्यनाथेति विश्रुतम् । तत्र स्नात्वा नरस्तीर्थे शिवपूजनतत्परः
पितॄन्संतर्प्य विधिना सर्वयज्ञफलं लभेत् । विजयो देवसंभूतः सर्वपापक्षयङ्करः ॥
यं दृष्ट्वा विविधान्कामान्प्राप्नुयुस्ते नराः सदा ॥ १० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वैद्यनाथ-तीर्थमाहात्म्यं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ॥१६५॥

# षट्षष्ट्यधिकशततमोऽध्यायः

## पाण्डुरार्यातीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

वैद्यनाथात्परं तीर्थं सर्वसिद्धिप्रदायकम् । तीर्थानामुत्तमं तीर्थं देवतीर्थमनुश्रुतम् ॥१॥
विभीषणाद्राक्षसेन्द्राद्गृहीत्वा करमोजसा । प्रारब्धो धर्मपुत्रेण राजसूयो महाक्रतुः
दिग्जये दक्षिणे जाते नकुलेन हि पाण्डुना । साभ्रमत्यास्तटे देवि पाण्डुरार्येति विश्रुता

स्थापिता परया भक्त्या भुक्तिमुक्तिप्रदायिनी ।
स्नातः साभ्रमतीतोये पाण्डुरार्यां नमस्य च ॥ ४ ॥
अणिमाद्याः सिद्धयोऽष्टौ तथा मेधां महीयसीम् ।
नरः प्राप्नोति वै नूनं नाऽत्र कार्या विचारणा ॥ ५ ॥

पाण्डुरार्यां नमस्कृत्य शुद्धभावेन मानवः । संवत्सरकृता पूजा ज्ञातव्या तत्त्वबुद्धिभिः
तत्र तीर्थे तनुं त्यक्त्वा पाण्डुरार्यासमीपतः । कैलासशिखरं प्राप्य चण्डेश्वरगणो भवेत्
पुरा हनूमता तत्र तपस्तप्तं सुदुष्करम् । समुद्रभुवने शक्तिर्जाता तीर्थप्रभावतः ॥ ८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
पाण्डुरार्यातीर्थं नाम षट्षष्ट्यधिकशततमोऽध्यायः ॥१६६॥

---

# सप्तषष्ट्यधिकशततमोऽध्यायः

## सचण्डेशतीर्थगणतीर्थमाहात्म्यवर्णनम्

अत्र तीर्थात्परं तीर्थं चण्डेश इति विश्रुतम् । यत्र चण्डेश्वरो देवो नित्यं तिष्ठति भूतिदः
यं दृष्ट्वा मुच्यते पापादज्ञानादथवा कृतान् । सर्वाभिर्देवताभिश्च मिलित्वा नगरं कृतम्

चण्डेश इति विख्यातं नाम्ना चैव महेश्वरि! ॥ २ ॥

इतिचण्डेशतीर्थम् ।

अत्र तीर्थात्परं तीर्थं गाणपत्यं ततो भुवि ।

साभ्रमत्यां समीपे तु विख्यातं देवि निर्मितम् ॥ ३ ॥

तत्र स्नात्वा नरो देवि मुच्यते नाऽत्रसंशयः । मन्ये साभ्रमतीतीरे जनानां हितकाम्यया

पृथिव्यां यानि तीर्थानि सागरान्तानि यानि च ।

तानि सर्वाणि सन्त्यज्य तीर्थे वै परमाद्भुते ॥ ५ ॥

श्राद्धं करोति यस्तत्र रुद्रभक्त्या जितेन्द्रियः । फलं प्राप्नोति शुद्धात्मा सर्वयज्ञसमुद्भवम्

पितॄनुद्दिश्य यत्किञ्चिद्गणतीर्थे प्रदीयते । तत्सर्वं जायते क्षिप्रं गणनाथप्रसादतः ॥७॥

तस्मिंस्तीर्थे नरः स्नात्वा वृषं विप्राय दापयेत् ।

सर्वांल्लोकानतिक्रम्य स गच्छेत्परमां गतिम् ॥ ८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गणतीर्थं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

# अष्टषष्ट्यधिकशततमोऽध्यायः

## भीष्मयुधिष्ठिरसम्वादे भूतेश्वरकृपयाशक्रकृतवृत्रस्यपराभववर्णनम्

महादेव उवाच ।

ततो गच्छेन्महादेवि! वार्त्रघ्न्या गिरिकन्यया ।

शक्रश्चैव तया साध्व्या संगमं यत्र लब्धवान् ॥ १ ॥

तत्र स्नानं प्रकुर्वन्ति नरा नियतमानसाः । दशानामश्वमेधानां यत्फलं स्नानकृल्लभेत्

तत्र यः कुरुते श्राद्धं पिण्डान्वै तिलचूर्णजान् । पुनाति पुरुषो वंशान्सप्तसप्तपरावरान्

सम्पूज्य विधिवत्स्नात्वा संगमे गणनायकम् । न विघ्नैरभिभूयेत लक्ष्म्यानैवविहीयते

पार्वत्युवाच ।

कस्मिन्कार्यसमारम्भे समायातः पुरन्दरः । स्वर्गलोकादिमं लोकमेतदाख्यातुमर्हसि ॥
वार्तघ्नी च नदी केन निरुक्तेन निगद्यते । पुरन्दरपुरं देवं ब्रह्मघोषनिनादितम् ॥
सम्भावयति योऽजस्रं मम तत्संगमं वद ॥ ६ ॥

महादेव उवाच ।

अस्मिंश्चैव तु भूलोके प्रश्नोऽयं समभूत्पुरा ।
युधिष्ठिरेति विख्यातो राजा वै धार्मिको महान् ॥ ७ ॥
पृष्टवान्स तु भीष्माय धर्मिणे ज्ञानरूपिणे । तेनोक्तं यत्तु तद्देवि! प्रवक्ष्यामि तवाऽग्रत.
दशवर्षसहस्राणि दशवर्षशतानि च । वृत्रवासवयोर्युद्धमभवल्लोमहर्षणम् ॥ ९ ॥
ततः पराजितः शक्रः कृत्वा वृत्रेण सम्विग्रम् । अद्रोहे स रणं त्यक्त्वा जगामशरणं मम
वार्त्रघ्न्यासंगमे पुण्ये तोषयामास शङ्करम् । अथान्तरिक्षेऽहं देवि दर्शनं दत्तवांस्तदा॥
मम गात्रात्त यद्भस्म पतितं काश्यपीतटे । भस्मगात्रेति तत्पुण्यं लिङ्गं देवि निर्मितम्
भूतेश्वरं भस्मगात्रं ब्रह्मणा सम्प्रतिष्ठितम् । तस्य वै दर्शनादेव ब्रह्महत्यालयं व्रजेत् ॥
यो मुच्यते सर्वपापेभ्यः श्राद्धं कृत्वा युगादिषु । तदहं सुप्रसन्नोऽभूदिन्द्रायसुमहात्मने
यद्यत्त्वं वाञ्छसे देव तत्सर्वं हि ददामि ते । अनेन वज्रयोगेन शीघ्रं वृत्रं हनिष्यसि ॥

शक्र उवाच ।

भगवंस्त्वत्प्रसादेन दितिजं च दुरासदम् । वज्रेण निहनिष्यामि पश्यतस्ते सुरोत्तम!

महादेव उवाच ।

एवमुक्त्वा तदा इन्द्रो गतवांश्चासुरं प्रति । तदा दुन्दुभयो नेदुर्देवसैन्ये विशेषतः ॥१७
मृदङ्गडिण्डिमाश्चैव भेरीतूर्याण्यनेकशः । असुराणां च सर्वेषां वृत्तिलोभो महानभूत्
बलवान्मघवा चैव क्षणेन समजायत । तमाविष्टं ततो ज्ञात्वा ऋषयः पन्नगास्तथा ॥
स्तुवन्ति शक्रमीशानंस्तुत्वाजयजयेति च । गच्छतस्तस्य शक्रस्य युद्धकामस्यसन्निधौ
ऋषिभिः स्तूयमानस्य रूपमासीत्सुदुर्भरम् ।
वृत्रस्य सहसा देवि! तदा सङ्ग्राममूर्धनि ॥ २१ ॥

अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु । ज्वलदास्योऽभवद्घोरो वैवर्ण्यमभवत्परम्
गात्रकम्पश्च सुमहाञ्छ्वासः सोष्मा व्यजायत ।
रोमहर्षश्च तीव्रोऽभूच्छ्वासश्चैव महानभूत् ॥ २३ ॥
निष्पपात महाघोरा उल्काः पार्श्वं प्रपेदिरे । गृध्रा वटाः श्येनकङ्कावाचोऽमुञ्चन्सुदारुणाः
वृत्रस्योपरि ते सर्वे चक्रवत्परिबभ्रमुः । ततः स गजमास्थाय इन्द्रस्तत्र समागतः ॥२५
वज्रोद्योतकरस्तत्र शक्रस्तं दैत्यमासदत् । अमानुषमथो नादं स मुमोच सुरेश्वरः ॥
वृत्रासुरस्य यततः शक्रो वज्रमपातयत् । सवज्रः सुमहातेजाः कालाग्निसदृशो महान्
समुद्रस्य तटे वृत्रं शक्रो दैत्यमपातयत् ॥ २७ ॥
ततो नादः समभवत्पुनरेव समन्ततः ॥ २८ ॥
वृत्रं विनिहतं दृष्ट्वा सर्वदेवभयङ्करम् । पुष्पवृष्टिस्तु महती इन्द्रमूर्ध्नि पपात ह ॥ २९॥
वृत्रं हत्वा स मघवान्दानवेशं भयङ्करम् । स्तूयमानोऽमरैः सार्द्धं देवदानीं तमाविशत्
अथ वृत्रशरीरात्तु निर्गतं तेज उत्तमम् । ब्रह्महत्या महाघोरा रौद्रा लोकभयङ्करी ॥३१
करालवदना सा च विकृता कृष्णपिङ्गला । कपालमालिनी चैव सुकृशा नगनन्दिनि!
रुधिराक्ता च पापिष्ठा मीनगन्धाऽतिभीषणा । सा निष्कम्पमहादेवि ताद‍ृग्रूपाभयावहा
इन्द्रमन्वेषयामास तदा वै सुरसत्तमे ! । निर्धावती ततः सा तु दृष्ट्वा शक्रं महौजसम्
कण्ठे जग्राह देवेन्द्रं सुलग्ना साऽभवत्तदा । स च तस्मिन्समुद्भ्रान्तो ब्रह्महत्याकृतेभये
निलीय बिसमध्येऽसौ स्थितो वर्षगणान्बहून् ।
तया गृहीतो भो देवि ! निश्चेष्टः समपद्यत ॥ ३६ ॥
तस्या व्यपोहने शक्रः प्रयत्नं च चकार ह । न शक्तोऽभून्महादेवि ब्रह्महहत्यां व्यपोहितुम्
तया गृहीतमात्रस्तु देवेन्द्रो मेषरूपधृत् । पितामहमुपागम्य शिरसा प्रत्यपूजयत् ॥३८
ज्ञात्वा गृहीतं शक्रं तु द्विजप्रवरहत्यया । ब्रह्मा सञ्चिन्तयामास तदा वै सुरसत्तमे ॥
सा चिन्त्यमाना ब्रह्माणमुपगम्याऽब्रवीद्वचः ।
प्राप्ताऽस्मि भगवन्देव ! त्वत्सकाशं हि मानद ! ॥ ४० ॥
यत्कर्त्तव्यं मया देव तद्भवान्वक्तुमर्हति । तामुवाच महाभागे ब्रह्महत्यां पितामहः ॥

स्वरेणमधुरेणाऽथ संक्षेपेण यथातथम् । मुच्यतां देवराजोऽयं मत्प्रियं कुरु भामिनि!
ब्रूहि किं ते करोम्यद्य कामं त्वं किमिहेच्छसि ॥ ४२ ॥

हत्योवाच ।

शक्रादपगमिष्यामि वचनात्ते सुरोत्तम ! । देवदेव नमस्तेऽस्तु निवासं च ददस्व मे ॥
त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना ॥ ४३ ॥

महादेव उवाच ।

तथेति तां प्रतिज्ञाय हत्यां चाऽपि पितामहः । उपायमथ शक्रस्य ब्रह्महत्यापनोदने ॥
ततोवह्निं समाहूय ब्रह्मा वचनमब्रवीत् । शक्रहत्याचतुर्थांशं जातवेदो गृहाण भोः ॥

अग्निरुवाच ।

मम मोक्षस्य को हेतुर्ब्रह्महत्याकृते प्रभो ! । एतदिच्छामि विज्ञातुंतत्त्वतो लोकपूजित!

ब्रह्मोवाच ।

यस्त्वां ज्वलन्तमासाद्य न होष्यति नरः क्वचित् ।
बीजौषधितिलानग्रे फलमूलसमित्कुशान् ॥ ४७ ॥

तदैव त्यक्ष्यति त्वाञ्च तत्रैव च निवत्स्यति । ब्रह्महत्याहव्यवाह व्येतु ते मनसो ज्वरः
ततः स परिजग्राह तद्वचो हव्यकव्यभुक् । पितामहश्च भगवांस्तथा तदलभत्प्रियम् ॥
ततो वृक्षौषधितृणान्याहूय स पितामहः । इममर्थं महाभागे वक्तुं समुपचक्रमे ॥५०॥
ततो वृक्षौषधितृणैस्तथैवोक्तं यथातथम् । व्यथितान्यग्निवद्देवि ब्रह्माणं वाक्यमब्रुवन्
अस्माकं ब्रह्महत्यायाः कथयाऽन्तं पितामह! । स्वभावनिहिता तस्मान्नपुनर्हन्तुमर्हसि
वयमग्निं तथा शीतं वर्षं च पवनेरितम् । सहामः सततं देव! तथा च्छेदनभेदनम् ॥५३

ब्रह्मोवाच ।

अकारणं नरो यस्तु युष्मच्छेदनभेदनम् । करिष्यति महामोहात्तमेषाऽनुप्रयास्यति ॥

महादेव उवाच ।

ततो महौषधितृणैरोमित्युक्तं महात्मभिः । ब्रह्माणमपि संपूज्य जग्मुश्चाऽथ यथागतम्
आहूयाप्सरसो देवस्ततो लोकपितामहः । वाचा मधुरया प्राह सान्त्वयन्निव सत्तमे

इयं वृत्रादनुप्राप्ता ब्रह्महत्या वराङ्गनाः । चतुर्थमस्या भागं च मयोक्तं संप्रतीच्छथ ॥

अप्सरस ऊचुः ।

ग्रहणे कृतबुद्धीनां देवेश! तव शासनात् । सम्मोक्षसमयोऽस्माकं चिन्तनीयः पितामह!

पितामह उवाच ।

रजस्वलासु नारीषु यो वै मैथुनमाचरेत् । तमेषा यास्यति क्षिप्रं व्येतु वो मनसो ज्वरः

महादेव उवाच ।

तथेति हृष्टमनसः प्रत्युक्त्वा ह्यप्सरोगणाः । स्वानि स्थानानि संप्राप्य रेमिरे शैलजे तदा

ततश्च लोककृद्देवः पुनरेव पितामहः । अपः संचिन्तयामास ततस्तांश्च समागमन् ॥

ताश्च सर्वाः समागम्य ब्रह्माणममितौजसम् ।
इदमूचुर्वचो देवि प्रणिपत्य पितामहम् ॥ ६२ ॥

इमाः स्म देव सम्प्राप्तास्त्वत्सकाशमरिन्दम । शासनात्तव देवेश समाज्ञापय तत्प्रभो!

ब्रह्मोवाच ।

इयं वृत्रादनुप्राप्ता पुरुहूतं भयानका । ब्रह्महत्याचतुर्थांशं यूयमस्याः प्रतिच्छथ ॥६४॥

आपऊचुः ।

एवं भवतु लोकेश यत्त्वं वदसि नः प्रभो! । मोक्षस्य समयं नस्त्वं संचिन्तयितुमर्हसि

त्वं हि देवेन्द्र सर्वस्य जगतः परमा गतिः ।
कोऽन्येभ्यो हि प्रसादोऽपि यः कृच्छ्रान्नः समुद्धरेत् ॥ ६६ ॥

ब्रह्मोवाच ।

अल्पामेव मतिकृत्वा यो नरो बुद्धिमोहितः । श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्षति

तमेव यास्यति क्षिप्रं तत्रैव च निवत्स्यति । ततो वै भवति मोक्षइति सत्यं ब्रवीमि वः

महादेव उवाच ।

ततो विमुच्य देवेन्द्रं ब्रह्महत्या सुरेश्वरि! । गताऽतिहृष्टो देवेशो ह्यभवद्देवशासनात्

एवं शक्रेण सम्प्राप्ता ब्रह्महत्या पुरा युगे ।
अस्मिंस्तीर्थे तपस्तप्त्वा शुद्धात्मा त्रिदिवं ययौ ॥ ७० ॥

अश्वमेधं ततः कृत्वा विपाप्मा समपद्यत । इति साभ्रमतीतीर्थे वार्त्रघ्नीयं नगात्मजे ! ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
वार्त्रघ्नीमाहात्म्यं नामाऽष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

# एकोनसप्तत्यधिकशततमोऽध्यायः

## वाराहतीर्थमाहात्म्यवर्णनम्

महेश उवाच ।

ततः परं देवनदी वार्त्रघ्नी सङ्गमात्किल । प्रविष्टा भद्रया सार्धं सागरं वरुणालयम् ॥ १ ॥
समुद्रोऽपि तया तावदागम्य प्रियकाम्यया । साभ्रमत्यानुरागेण कृतवान्प्रियमेलनम् ॥

भद्रा वाऽपि सुभद्रा या वयस्या सा नदी पुरा ।
सहायमकरोन्मार्गे साक्षाल्लक्ष्मी रूपधारिणी ॥ ३ ॥

तयोस्तु सङ्गमः पुण्यः सागरस्योत्तरे तटे । तत्र तीर्थे नरः स्नात्वा मुष्टिं वापि ददाति यः

नमस्कृत्य वराहाय वारुणं स्थानमाप्नुयात् ।
प्रविश्य भगवान्विष्णुस्तेन मार्गेण सागरम् ॥ ५ ॥

जित्वा वै दानवान्सर्वान्देवानां परिपन्थिनः । देवो यज्ञवराहश्च संक्षोभ्य मकरालयम्

क्रीडित्वा सुचिरं कालं कर्दमालेन निर्ययौ ॥ ६ ॥

पार्वत्युवाच ।

देवयज्ञवराहस्य साभ्रमत्यां प्रवेशनम् । निर्गमं कर्दमालेन ब्रूहि त्वं मम विस्तरात् ॥

महादेव उवाच ।

अन्तर्भूक्रीडितमिदं वराहस्य हरेः पुरा । तत्सर्वं कथयिष्यामि शृणु त्वं नगनन्दिनि ॥

योऽयं वै भगवान्साक्षाद् धृतवान्सौकरं वपुः ।
देवानां कार्यसिद्ध्यर्थं रूपं धृत्वा सुरेश्वरः ॥ ९ ॥

धृत्वा वै पृथिवीं देवीं निर्गतः कर्दमालयम्। तत्र तीर्थं महज्जातं वराहाख्यं तु सुन्दरि!
तत्र स्नाति नरो यस्तु मुक्तिभाक्स न संशयः। अत्र श्राद्धं प्रकुर्वीत पितॄणां मुक्तिहेतवे
विमुक्तस्तैः समं लोकं प्रयाति सुखदं महत्॥ ११ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वाराहतीर्थं नामैकोनसप्तत्यधिकशततमोऽध्यायः ॥१६९ ॥

---

# सप्तत्यधिकशततमोऽध्यायः

## सङ्गमतीर्थमाहात्म्यवर्णनम्

महादेव उवाच।

अत्र तीर्थान्तरं तीर्थं सङ्गमाख्यमिति श्रुतम्। यत्र साभ्रमती गङ्गामिलितासागरेण तु
तत्र स्नानं च दानं च कर्तव्यं विधिपूर्वकम्।
यत्र स्नात्वा तु मुच्यन्ते महापातकिनोऽपि ये ॥ २ ॥
तत्र श्राद्धं प्रकर्तव्यं स्वानां च हितमिच्छता। यत्र वै तु कृते श्राद्धे पितृलोके वसेद्ध्रुवम्
यत्र वै सागरो देवो नित्यं मिलति गङ्गया। ब्रह्महा तत्र मुच्येत किमन्यैरितरैर्नरैः॥४॥
यत्र तीर्थं न जानन्ति लोका वै मन्दबुद्धयः। तदा वै मम नाम्ना च कर्तव्यं तीर्थमुत्तमम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे सङ्गमतीर्थं नाम सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

---

# एकसप्तत्यधिकशततमोऽध्यायः

## आदित्यतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

सङ्गमस्य समीपे तु सत्तीर्थं लोकविश्रुतम् ।
आदित्याख्यं परं तस्मान्न भूतं न भविष्यति ॥ १ ॥
यस्य वै दर्शनं कार्यं स्नानं वै पुष्करेण तु । पूजनं चार्कपुष्पेण करवीरैस्तथा पुनः ॥
तत्र श्राद्धं च दानं च कुर्युर्वै मानवाः सदा । इदमादित्यकं तीर्थं पवित्रं पापनाशनम् ॥
दर्शनात्पुण्यदं तीर्थं महापातकिनामपि ॥ ४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे आदित्यतीर्थमाहात्म्यं नामैकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

# द्विसप्तत्यधिकशततमोऽध्यायः

## नीलकण्ठतीर्थमाहात्म्यवर्णनम्

महादेव उवाच ।

तस्मात्तीर्थात्परं तीर्थं नीलकण्ठेति विश्रुतम् ।
तस्य वै दर्शनं कार्यं मुक्तिं चैवेच्छता सदा ॥ १ ॥
बिल्वपत्रैस्तथा धूपैर्दीपैर्वाऽथ सुरेश्वरि ! । वाञ्छितं लभते मर्त्यो नीलकण्ठस्य दर्शनात् ।
उपवासपरो देवि निर्जनेऽसौ स्थितः सदा । यद्यद्वाञ्छन्ति ये लोकास्तेषां तत्तद्ददाति च
कलौ सा तु महादेवि विख्याता काश्यपीति वै ॥ ४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे नीलकण्ठमाहात्म्यं नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

## त्रिसप्तत्यधिकशततमोऽध्यायः

### साभ्रमतीमाहात्म्यवर्णनम्

महादेव उवाच ।

दुर्गया संगता यत्र देवि साभ्रमती नदी । संगमः सागरेणाऽथ स्नानं तत्र समाचरेत्

वीतदोषा भविष्यन्ति कलौ वै नाऽत्रसंशयः । यत्र श्राद्धं प्रकर्त्तव्यं दुर्गयासंगमे तथा

तत्र गत्वा विशेषेण ब्राह्मणानां च भोजनम् ।

दानं गोमहिषीणां च कर्तव्यं विधिपूर्वकम् ॥ ३ ॥

इयं धन्या धन्यतमा पवित्रा पापनाशिनी । यां दृष्ट्वा चापि भोदेवि मुच्यते पातकैर्नरः

यथा गङ्गा तथा चेयं ज्ञेया साभ्रमती नदी । कलौ देवि विशेषेण बहुकालफलप्रदा ॥

यदि चेच्छतशो जिह्वा मुखे वै मामके सति । तस्याऽपि न शक्नोमिगुणान्वक्तुंकदाचन

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे साभ्रमतीमाहात्म्यं नाम त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

## चतुःसप्तत्यधिकशततमोऽध्यायः

### उमामहादेवसम्वादेनृसिंहप्रहलादप्रसङ्गे ननृसिंहजयन्तीव्रतवर्णनम्

महादेव उवाच ।

शृणु देवि ! प्रवक्ष्यामि व्रतं त्रैलोक्यदुर्लभम् ।

यत्कृत्वा मुच्यते लोको ब्रह्महत्यादिपातकात् ॥ १ ॥

उत्पत्तिः स्वप्रकाशस्य भक्तानांसुखहेतवे । तिथिर्वाऽपि समासोवैसञ्जातःपुण्यकारकः

यस्य नाम गृणन्देवि मुक्तिमाप्नोतिशाश्वतीम् । सएव परमात्मा च कारणानांचकारणम्
विश्वात्मा विश्वरूपी च सर्वेषां भगवान्प्रभुः । द्वादशार्को धृता येन नृसिंहेनमहात्मना
स एव प्रकटीजातो भक्तानां शमभीप्सया ॥ ४ ॥

पार्वत्युवाच ।

अवताराह्यसङ्ख्याताः कथिताः सुरसत्तम !। नृसिंहाख्यं परं धाम वद विश्वेश्वरप्रभो!
येन विज्ञानमात्रेण सुखलोकमवाप्नुयात् ॥ ५ ॥

महादेव उवाच ।

हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुम् । सुखासीनं तदुत्सङ्गे स्थितो वचनमब्रवीत्॥
प्रह्लादो ज्ञानिनां श्रेष्ठो हन्तृहन्तारमुत्तमम् ॥ ७ ॥

प्रह्लाद उवाच ।

नमस्ते भगवन्विष्णो नृसिंहाद्भुतरूपिणे । त्वद्भक्तोऽहं सुरश्रेष्ठ त्वां पृच्छामि च तत्त्वतः
स्वामिंस्त्वयि ममाऽभिन्नाभक्तिर्जाताह्यनेकधा । कथं तेऽहंप्रियोजातःकारणंवदमेप्रभो

नृसिंह उवाच ।

कथयामि महाप्राज्ञ शृणुष्वेकाग्रमानसः । भक्तेर्यत्कारणं वत्स प्रियत्वस्य च यत्पुनः
पुरा कस्य द्विजस्याऽपि जातस्त्वं नाऽध्यगान्नवान् ।
नाम्ना तु वसुदेवो हि वेश्यायामतिलम्पटः ॥ ११ ॥
तस्मिञ्जन्मनि नैवञ्च चकार सुकृतं कियत् । भुक्त्वा मधुकृतं चैव वेश्यासंगमलालसः
मद्व्रतस्य प्रभावेण भक्तिर्जाता तवाऽनघ ! ॥ १३ ॥

प्रह्लाद उवाच ।

विस्तराद्वद देवेश कस्य पुत्रस्य किं व्रतम् । वेश्यायां वर्तमानेन कथञ्चिद्धि कृतं मया
ममोपरि कृपां कृत्वा सर्वं कथय साम्प्रतम् ॥ १४ ॥

नृसिंह उवाच ।

सृष्ट्यर्थं तु पुरा ब्रह्मा चक्रे ह्येतदनुत्तमम् । तद्व्रतस्य प्रभावेण निर्मितं सचराचरम्
ईश्वरेण व्रतं चीर्णं वधार्थं त्रिपुरस्य च । व्रतस्याऽस्य प्रभावेण त्रिपुरस्तु निपातितः

अन्यैश्च बहुभिर्देवैर्ऋषिभिश्च पुरातनैः । राजभिश्च महाप्राज्ञैर्विहितं व्रतमुत्तमम् ॥१७
व्रतस्याऽस्य प्रभावेण सर्वे सिद्धिमवाप्नुयुः । मम ते वै प्रियाजाता दिविभोगाननेकशः

भुक्त्वा मयि विलीनास्तु प्रह्लाद ! त्वं विशस्व माम् ।
कार्यार्थमवतारस्ते मच्छरीरात्पृथग्गतः ॥ १९ ॥

न तेषां पुनरावृत्तिर्महाकल्पशतैरपि । दरिद्रो लभते लक्ष्मीं धनदस्य च यादृशीं ॥२०
ततः कामीलभेत्कामं राज्यार्थीराज्यमुत्तमम् । आयुष्कामोलभेदायुर्यादृशंचशिवस्यहि
अवैधव्यकरं स्त्रीणां पुत्रदं भाग्यदं तथा । धनधान्यकरं चैव तथा शोकविनाशनम् ॥

स्त्रियो वा पुरुषा वाऽपि कुर्वन्ति व्रतमुत्तमम् ।
तेभ्यो ददाम्यहं सौख्यं भुक्तिमुक्तिफलं तथा ॥ २३ ॥

बहुनोक्तेन किं वत्स व्रतस्याऽस्य फलस्यहि । मद्व्रतस्यफलंवक्तुं नाऽहंशक्तोनशङ्करः

प्रह्लाद उवाच ।

भगवंस्त्वत्प्रसादेन श्रुतं व्रतमनुत्तमम् । व्रतस्याऽस्य फलं श्रोतुं त्वयिमेभक्तिकारणम्

अधुना श्रोतुमिच्छामि व्रतस्याऽस्य विधिं परम् ।
कस्मिन्मासे भवेद्देव कस्मिंश्चिद्वासरे प्रभो ! ॥ २६ ॥

एतद्विस्तरतो देव ! वक्तुमर्हसि साम्प्रतम् । विधिना येन वै स्वामिन्समग्रफलभाग्भवेत्

नृसिंह उवाच ।

प्रह्लाद वत्स भद्रं ते शृणुष्वैकमना व्रतम् । वैशाखेऽसितपक्षे तु चतुर्दश्यां समाचरेत्
ममाविर्भावसंयुक्तं मम सन्तुष्टिकारणम् । शृणु पुत्र ममोत्पत्तिं भक्तानां सुखहेतवे ॥

पश्चिमायां दिशायां च सञ्जातं कारणान्तरात् ।
मौलिस्तानमिदं क्षेत्रं पवित्रं पापनाशनम् ॥ ३० ॥

तस्मिन्क्षेत्रे तु विख्यातो ब्राह्मणो वेदपारगः । हारीतइति नाम्नाच ज्ञानध्यानपरायणः
तस्य स्त्री तु महापुण्या सतीरूपासदाप्रभो! । लीलावती तु नाम्नाच भर्तृवशपरा सदा
ताभ्यां तपो महत्तप्तं कालं बहुतरं सुत ! । एकविंशयुगाश्चेत्र यातास्तत्र न संशयः॥

तस्मिन्क्षेत्रे तु वै ताभ्यां प्रत्यक्षो वाऽभवत्तदा ॥ ३३ ॥

नृसिंह उवाच ।

यं यं वाञ्छयसे ब्रह्मंस्तं ददामि न संशयः । ताभ्यामुक्तं तदा तस्मै दीयते चेद्वरो मम
त्वादृशो मम पुत्रस्तु ह्ययुनैव भवत्विति । मयोक्तं तु तदा वत्स पुत्रोऽहं ते न संशयः
विश्वकर्मा ह्यहं साक्षात्परमात्मा परात्परः । उदरेऽहं न वत्स्यामियतोऽहं वैसनातनः
हारीतेन तदा चोक्तं भवत्वेवं न संशयः । तदाप्रभृति वै क्षेत्रे स्थितोऽहं भक्तकारणात्
अत्राऽऽगत्य प्रकुर्वीत दर्शनं भक्तसत्तमः । तस्याहं सकलां बाधां नाशयामि निरन्तरम्
एतस्मात्कारणाच्चैव व्रतं वै विधिपूर्वकम् । ये कुर्वन्ति नरश्रेष्ठा नतेषां विद्यते भयम्
बालरूपमयं ध्यात्वा ताभ्यां सह विशेषतः । पूजनं कुरुते रात्रौ स वै नारायणोभवेत्
चतुर्भुजं महादंष्ट्रं कालरूपं दुरासदम् । सूर्यकोटिप्रतीकाशं यमकोटिदुरासदम् ॥४९॥
सिंहवच्च मुखं यस्य नरवच्चाऽङ्गसंयुतम् । श्रीनृसिंहं दिव्यसिंहं कालरूपं भजेत्सदा ॥
एवं ज्ञात्वा विशेषेण यः स्थानं मामकं व्रजेत् । व्रतं पवित्रं परमं श्रीकदम्बप्रदं महत्
अन्ते मुक्तिप्रदं चैव भक्तानां च न संशयः । येन वै क्रियमाणेन सहस्रद्वादशीफलम् ॥
स्वातीनक्षत्रसंयोगे शनिवारे तु मद्व्रतम् । सिद्धियोगस्य संयोगे वणिजे करणे तथा
योगैः सर्वैश्च संयोगं हत्याकोटिविनाशनम् । एतदन्यतरे योगे मद्दिनं पापनाशनम्॥
विज्ञाय मद्दिनं यस्तु लङ्घयेत्स तु पापकृत् । अकर्त्ता नरकं याति यावच्चन्द्रदिवाकरौ
प्राप्ते मम दिने वत्स दन्तधावनपूर्वकम् । ममाऽग्रे व्रतसंकल्पं मद्भक्तो विजितेन्द्रियः ॥
अद्याऽहं ते विधास्यामि व्रतं निर्विघ्नतां नय । व्रतस्थेननकर्त्तव्यं दुष्टसम्भाषणादिकम्
ततो मध्याह्नसमये नद्यादौ विमले जले । गृहे वा देवखाते वा तडागे वाऽथ शोभने॥
वैदिकेन तु मन्त्रेण स्नानं कुर्याद्विचक्षणः । मृत्तिकागोमयेनैव तथा धात्रीफलेन च ॥
तिलैश्च विधिवत्स्नायात्सर्वपापौघशान्तये । परिधाय शुभे वस्त्रे नित्यकर्म समारभेत्
ततो गृहं विलिप्याऽथ कुर्यादष्टदलं शुभम् । कलशं तत्र संस्थाप्य ताम्रं रत्नसमन्वितम्
तस्योपरि न्यसेत्पात्रं तण्डुलैः परिपूरितम् ।
हैमीं च तत्र मन्मूर्तिं स्थाप्य लक्ष्म्या समन्विताम् ॥ ५४ ॥
निर्माय शक्त्यास्वर्णेन स्नाप्यपञ्चामृतैस्ततः । ततोब्राह्मणमाहूय आचार्यंनाऽतिलोलुपम

शास्त्रश्रमग्रतः कृत्वा ततो देवं समर्चयेत् । मण्डपं कारयेत्तत्र पुष्पस्तबकशोभितम् ॥
ऋतुकालोद्भवैः पुष्पैः पूज्योऽहं च यथाविधि । उपचारैः षोडशभिर्मन्मन्त्रैर्नियमैश्च यः
ततः पौराणिकैर्मन्त्रैः पूजनीयो विशेषतः । चन्दनं च सकर्पूरं घनकुङ्कुममिश्रितम् ॥

कालोद्भवानि पुष्पाणि तथा तुलसीदलानि च ।
श्रीनृसिंहाय यो दद्यात्स मुक्तो नाऽत्र संशयः ॥ ५६ ॥

कृष्णागुरुमयं धूपं सर्वदा हरिवल्लभम् । हरये गुरवे दद्यात्सर्वकामार्थसिद्धये ॥ ६० ॥
महादीपः प्रकर्त्तव्यो ह्यज्ञानध्वान्तनाशनः । महानीराजनं कुर्याद्घण्टानादपुरःसरम् ॥
नैवेद्यं शर्करां चाऽपि भक्ष्यभोज्यसमन्वितम् । ददामि ते रमाकान्त सर्वपापक्षयं कुरु

इति नैवेद्यमन्त्रः ।

नृसिंहाच्युत ! देवेश तव जन्मदिने शुभे । उपवासं करिष्यामि सर्वभोगविवर्जितः ॥
तेन प्रीतो भव स्वामिन्पापं जन्मनिराकुरु । रात्रौ जागरणं कार्यं गीतवादित्रनिःस्वनैः
पुराणपठनं नित्यं श्रीनृसिंहकथाश्रयम् । ततः प्रभातसमये स्नानं कृत्वा ह्यनन्तरम् ॥
पूर्वोक्तेन विधानेन पूजयेन्मां प्रतर्पयन् । वैष्णवं कारयेच्छ्राद्धं मदग्रे स्वस्थमानसः ॥

ततो दानानि देयानि वक्ष्यमाणानि यान्युत ।
पात्रेभ्यः सद्द्विजेभ्यो हि लोकद्वयजिगीषया ॥ ६७ ॥

सहस्त्रवर्णमयो देवो मम सन्तोषकारकः । गोभूतिलहिरण्यादि प्रददाति द्विजातये ॥
शय्या सतूलिका देया सप्तधान्यसमन्विता । अन्यानि च यथाशक्त्या देयानि निजशक्तितः

वित्तशाठ्यं न कुर्वीत यथोक्तफलकाङ्क्षया ।
ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्यात्सुदक्षिणाम् ॥ ७० ॥

निर्धनैरपि कर्त्तव्यं देयं शक्त्यनुसारतः । सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते ॥

मद्भक्तैस्तु विशेषेण कर्त्तव्यं मत्परायणैः ॥ ७१ ॥

ततः प्रार्थनामन्त्रः ।

मद्वंशे ये नरा जाता ये भविष्यन्ति मानवाः । तानुद्धरस्व देवेश दुःसहाद्भवसागरात्
पातकार्णवमग्नस्य व्याधिभिश्चाम्बुचारिभिः । जीवैस्तु परिभूतस्य महादुःखगतस्य मे

करावलम्बनं देहि शेषशायिञ्जगत्पते ! । अनेनाऽनेन देवेश भुक्तिमुक्तिप्रदो भव ॥७४॥
एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि । उपहारादिकं सर्वमाचार्याय निवेदयेत् ॥
दक्षिणाभिश्च सन्तोष्य ब्राह्मणांश्च विसर्जयेत् ।
मम ध्यानसमायुक्तो भुञ्जीत सह बन्धुभिः ॥ ७६ ॥
अकिञ्चनेन नियतमुपोष्या च चतुर्दशी । सप्तजन्मकृतात्पापान्मुच्यते नाऽत्र संशयः ॥
य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनम् । तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति ॥
पवित्रं परमं गुह्यं कीर्तयेद्यस्तु मानवः । सर्वकामानवाप्नोति व्रतस्याऽस्य फलं सदा ॥
य इदं कुरुते शक्त्या काले मध्याह्नसञ्ज्ञके । लीलावत्या सह श्रीपि श्रीनृसिंहं तथैव च
पूजयेत्परया भक्त्या मुक्तिं प्राप्नोति शाश्वतीम् ।
तस्मिन्क्षेत्रे तु यो गत्वा श्रीनृसिंहं प्रपूजयेत् ॥ ८१ ॥
वाञ्छितं लभते नित्यं श्रीनृसिंहप्रसादतः । श्रीनृसिंहमहद्रूपकालकोटिदुरासद ! ॥८२
भैरवेशहरारिघ्न बालरूप ! नमोऽस्तु ते । श्रीनृसिंहाय रूपाय बालाय बालरूपिणे ॥
व्यापकाय सुनन्दाय स्वात्मप्रकटरूपिणे । सर्वजीवात्मकायैव विश्वेशाय स्वरात्मने ॥
मार्तण्डमण्डलस्थाय दयासिन्धो ! नमोऽस्तु ते ।
चतुर्विंशस्वरूपाय कालरुद्राग्निरूपिणे ॥ ८५ ॥
जगदेकस्वरूपाय नृसिंहाय नमोऽस्तु ते । भाले दधार यो देवो नृसिंहो वीरभद्रजित्
द्वादशादित्यबिम्बानि सुतप्तानि प्रमाणतः । तत्र सिन्धुर्महापुण्या नदी रम्या विशेषतः
तस्याः समीपे नगरं वर्त्ततेऽद्यापि सुन्दरि ! । मौलिस्तानेति विख्यातं सर्वदा देवनिर्मितम्
वसतिर्वर्त्तते तत्र हारीतस्य महात्मनः । लीलावती तु तत्रैव तिष्ठते नाऽत्र संशयः ॥
प्रतिशब्दो भवेत्तत्र सिन्धुनद्याः समीपतः । कलौ युगे तु सम्प्राप्ते म्लेच्छा वै पापचारिणः
निवसन्ति तु तत्रैव बहवो नाऽत्र संशयः । नृसिंहजन्मनि यथा शब्दोऽभूदद्भुतः परः ॥
नृसिंहेति नृसिंहेति य उच्चैर्नदते नरः । तादृशः प्रतिशब्दो वै जायते नगनन्दिनि ! ॥
ब्रह्महा हेमहारी वा सुरापो गुरुतल्पगः । सिन्धौ गत्वा विशेषेण स्नानं कुर्वीत योजनः
मुच्यते नाऽत्र सन्देहः श्रीनृसिंहप्रसादतः । दशरात्रिप्रमाणेन मानवा ये वसन्ति हि ॥

ते ज्ञेयाः पुण्यकर्माणो नाऽसत्यं मामकं वचः । निवसन्ति कलौ तत्र वर्णा ये द्विजपूर्वकाः
म्लेच्छवत्तेऽपि विज्ञेया वेदबाह्याः सुरोत्तमे ! । मांसं खादन्ति ते तत्र मद्यपानं पपुः सदा
अतो ह्यधर्मरूपास्ते पापिष्ठा नाऽत्र संशयः । सन्ध्याहीना यथा विप्रा वेदबाह्यास्तथैव च
निवसन्ति पुरे तस्मिन्नच्छिमायां सुरेश्वरि ! । एकमेव परं तीर्थं नृसिंहाख्यं सुविस्तरम्
यच्छ्रुत्वा मुच्यते पापान्नरः सद्यो न संशयः ॥ ९८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरखण्डे नृसिंहोत्पत्तिर्नाम चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## पञ्चसप्तत्यधिकशततमोऽध्यायः

### सर्ताऽदरमस्याद्गीताप्रथमाध्यायमाहात्म्यवर्णनम्

पार्वत्युवाच ।

भगवन्सर्वतत्त्वज्ञ! श्रीविष्णोस्त्वत्प्रसादतः । श्रुता नानाविधा धर्मा लोकनिस्तारहेतवः
अधुना श्रोतुमिच्छामि गीतामाहात्म्यमप्यहम् । श्रुतेन येन देवेश हरिभक्तिर्विवर्धते ॥१॥
तद्वदस्वाऽधुना देव ! यद्यहं तव वल्लभा ॥ २ ॥

ईश्वर उवाच ।

अतसीपुष्पसङ्काशं खगेन्द्रासनमच्युतम् । शयानं शेषशय्यायां महाविष्णुमुपास्महे ॥३॥
कदाचिदासने रम्ये सुखासीनं मुरद्विषम् ।
आनन्दयित्री लोकानां लक्ष्मीः पप्रच्छ सादरात् ॥ ४ ॥

श्रीरुवाच ।

शयालुरसि दुग्धाब्धौ भगवन्केन हेतुना । उदासीनइवैश्वर्यं जगन्ति स्थापयन्निव ॥५॥

ईश्वर उवाच ।

इति देव्या वचः श्रुत्वा मुरभिज्ज्ञानगर्भितम् ।

उवाच श्लक्ष्णया वाचा विस्मयस्मेरलोचनः ॥ ६ ॥

श्रीभगवानुवाच ।

नाऽहं सुमुखि निद्रालुर्निजं माहेश्वरं वपुः । दृशातत्त्वानुवर्त्तिन्या पश्याम्यन्तर्निमग्नया
कुशाग्रया धिया देवि यदन्तर्योगिनो हृदि । पश्यन्ति यच्च वेदानां सारं मीमांसते भृशम्
तदेवमक्षरं ज्योतिरात्मरूपमनामयम् । अखण्डानन्दसंदोहनिस्पन्दि द्वैतवर्जितम् ॥९॥
यदाश्रया जगद्वृत्तिर्यन्मया चाऽनुभूयते । न येन रहितं किंचिज्जगत्तत्वं चराचरम् ॥

निर्मथ्य वहुधाऽऽलोक्य वेदशास्त्राम्बुधिं सुधीः ।
द्वैपायनो यदासाद्य गीताशास्त्रं निसृष्टवान् ॥ ११ ॥

यदाऽस्थायमहानन्दमानन्दीकृतमानसः । निद्रालुरिव देवेशि दुग्धाब्धौ प्रतिभामि वै
इति तस्य मुरारातेर्मितमानन्दवद्वचः । साहर्षोत्फुल्ललोलाक्षी लक्ष्मीः श्रुत्वाविसिस्मिये

श्रीरुवाच ।

भवानेव हृषीकेश ध्येयोऽस्ति यमिनां सदा । तस्मात्त्वत्तः परं यत्तच्छ्रोतुं कौतूहलं हि मे

चराचराणां लोकानां कर्त्ता हर्त्ता स्वयं प्रभुः ।
यथास्थितस्ततोऽन्यस्त्वं यदि मां बोधयाऽच्युत! ॥ १५ ॥

श्रीभगवानुवाच ।

मायामयमिदं देवि वपुर्मे न तु तात्त्विकम् । सृष्टिस्थित्युपसंहारक्रियाजालोपबृंहितम्
अतोऽन्यदात्मनो रूपं द्वैताद्वैतविवर्जितम् । भावाभावविनिर्मुक्तमाद्यन्तरहितं प्रिये ! ॥
शुद्धसंवित्प्रभालाभं परानन्दैकसुन्दरम् । रूपमैश्वरमात्मैक्यगम्यं गीतासु कीर्तितम् ॥
इत्याकर्ण्य वचो देवि देवस्याऽमिततेजसः । शङ्कमानाऽऽह वाक्येषु परस्परविरोधिषु
स्वयं चेत्परमानन्दमवाङ्मनसगोचरम् । कथं गीताबोधयति इति मे छिन्धि संशयम्

ईश्वर उवाच ।

श्रियः श्रुत्वा वचो युक्तमितिहासपुरःसरम् ।
आत्मानुगामिनीं दृष्टिं गीतां बोधितवान्प्रभुः ॥ २१ ॥

अहमात्मा परेशानि परापरविभेदतः । द्विधा ततः परः साक्षी निर्गुणो निष्कलः शिवः

अपरः पञ्चवक्त्रोऽहं द्विधा तस्याऽपि संस्थितिः ।
शब्दार्थभेदतो वाच्यो यथाऽऽत्माऽहं महेश्वरः ॥ २३ ॥

गीतानां वाक्यरूपेण यन्निरुच्छिद्यते दृढः । मदीयपाशबन्धोऽयं संसारविषयात्मकः ॥
यदाभ्यासपराधीनौ पञ्चवक्त्रमहेश्वरौ । इति तस्य वचः श्रुत्वा गीतासारमहोदधेः ॥
इदं परविभेदेन बुध्यते भवभीरुभिः । तमपृच्छदिदं लक्ष्मीरङ्गप्रत्यङ्गसंस्थितम् ॥

माहात्म्यं सेतिहासं च सर्वं तस्यै न्यवेदयत् ॥ २६ ॥

श्रीभगवानुवाच ।

शृणु सुश्रोणि ! वक्ष्यामि गीतासु स्थितिमात्मनः ।
वक्त्राणि पञ्च जानीहि पञ्चाध्यायाननुक्रमात् ॥ २७ ॥

दशाध्याया भुजाश्चैक उदरं द्वौ पदाम्बुजे । एवमष्टादशाध्याया वाङ्मयी मूर्तिरैश्वरी
विज्ञेया ज्ञानमात्रेण महापातकनाशिनी । अतोऽध्यायं तदर्धं वा श्लोकमर्द्धं तदर्धकम्

अभ्यस्यति सुमेधा यः सुशर्मेव समुच्यते ॥ २६ ॥

श्रीरुवाच ।

सुशर्मानामको देव ! किञ्जातीयः किमात्मकः । कुत्रत्यस्तस्य वै मुक्तिः केनाऽजायत हेतुना

श्रीभगवानुवाच ।

सुशर्मा नाम दुर्मेधाः सीमा पापात्मनामभूत् ।
जातोऽनात्मविदाम्वंशे विप्राणां क्रूरकर्मणाम् ॥ ३१ ॥

न ध्यानं न जपो होमो न चैवाऽतिथिपूजनम् । केवलं विषयेष्वेव वलाढ्येनाऽभिवर्त्तते
कृषिकर्मरतो नित्यं पर्णजीवी सुराप्रियः । मांसोपहारी सुचिरं कालमेवं निनाय सः
आनेतुकामः पर्णानि पर्यटन्नृषिवाटिकाम् । ततः स तत्र दष्टोऽभूत्कालसर्पेण मूढधीः
कालधर्मं समासाद्य गत्वा च निरयान्बहून् । पुनरागत्य मर्त्येषु बलीवर्दत्वमीयिवान्
पङ्गुना केन विक्रीतः स स्वजीवनहेतवे । नयन्पृष्ठेन शरदः सप्ताऽष्टौ कष्टतोऽनयत् ॥

कदाचित्पङ्गुना सोऽपि चिरमावर्तितो जवात् ।
पपात तरसा भूमौ मूर्च्छां च प्रतिपेदिवान् ॥ ३७ ॥

विकलाङ्गो विवृत्ताक्षः फेनसन्ततिमुद्गिरन् । न जीवति न मृत्युं वा प्रतिपेदे स्वकर्मणा
कौतुकाकृष्टलोकेऽस्मिंस्तस्मिञ्जनसमागमे । श्रेयसेतस्य सुकृतं कश्चित्पुण्यं वितीर्णवान्
कर्माणि स्वान्यनुस्मृत्य ददुरन्ये च केचन । गणिका काऽपि तत्रस्था लोकयात्रानुवर्तिनी
अज्ञातनिजपुण्या सा किंचिदुत्सृष्टवत्यभूत् । परेतनगरीमादौ स नीतः कालकिङ्करैः ॥
गणिकादत्तपुण्येन पुण्यवानिति मोचितः । पुनरागत्य भूलोकं कुलशीलवतां गृहे ॥४२

द्विजन्मनामसौ जज्ञे जातिं स्वामनुसंस्मरन् ।
काले महति जिज्ञासुः श्रेयः स्वाज्ञाननोदनम् ॥ ४३ ॥
उपेत्य गणिकां दत्तं ख्यापयित्वा स पृष्टवान् ।
आचष्ट मां शुको नित्यं पञ्जरस्थः पठत्यसौ ॥ ४४ ॥

तेन पूतान्तरात्माहं तत्पुण्यं पर्यकल्पयम् । ताभ्यां शुकस्तु कृष्टोऽसौ व्याख्यातुमुपचक्रमे

आख्यायिकां पुरावृत्तां स्मृत्वा जातिं निजामपि ॥ ४६ ॥

शुक उवाच ।

पुरा विद्वानहं भूत्वा वैदुष्यस्मयमोहितः । रागद्वेषेण विद्वत्सु गुणवत्स्वपि मत्सरी

कालेनाऽहं ततः प्रेत्य प्राप्य लोकाञ्जुगुप्सितान् ।
सोऽहं कीरकुलेऽभूवं सद्गुरावतिनिन्दकः ॥ ४८ ॥
काले धर्मणि दुष्कर्मा पितृभ्यां च वियोजितः ।
निदाघेऽध्वनि सन्तप्ते ह्यानीतो मुनिपुङ्गवैः ॥ ४९ ॥

पालितः पञ्जरस्थोऽहमाश्रमे महदाश्रये । आवर्तयद्भ्यो गीतानामाद्यमध्यायमादरात् ॥
श्रुत्वा ऋषिकुमारेभ्यः पाठं चाकरवं मुहुः । एतस्मिन्नन्तरे कश्चिद्व्याधः क्रूरकर्मकृत्

मामाहृत्य तदाऽरण्यादिति वृत्तमुदाहृतम् ॥ ५१ ॥

श्रीभगवानुवाच ।

अध्यायोऽयं पुराऽऽम्नातो येन पापमनोदयम् ।
पूतान्तरात्मा येनाऽसौ मोचितश्च द्विजोत्तमः ॥ ५२ ॥

एवमन्योन्यमाभाष्य तन्माहात्म्यं प्रशस्य च । ते जपन्तोऽनिशं धीरा मुक्तिं गेहे प्रपेदिरे

तस्मादध्यायमाद्यं यः पठते शृणुते स्मरेत् । अभ्यसेत्तस्य न भवेद्भवाम्भोधिर्दुरुत्तरः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे सतीश्वरसम्वादे-
गीतामाहात्म्ये पञ्चसप्तत्यधिकशततमोऽध्यायः ॥१७५॥

# षट्सप्तत्यधिकशततमोऽध्यायः

## सतीश्वरसम्वादे देवशर्मोपाख्यानमुखेन गीताद्वितीयाध्यायमाहात्म्यम्

श्रीभगवानुवाच ।

आदिमस्यैवमाख्यानमुदीरितमनुत्तमम् । शृणु माहात्म्यमन्येषामध्यायानामपीन्दिरे !
दक्षिणस्यां दिशि श्रीमानासीदाम्नायवादिनाम् । पुरे पुरन्दराह्वाने देवशर्मेति विश्रुतः ॥
अग्नितातिथिराम्नातो वेदशास्त्रविशारदः । आहर्ता क्रतुसङ्घानां तापसानां प्रियः सदा
देवानसन्तर्पयामास हव्यैर्हुतवहं चिरम् । न चोपलेभे धर्मात्मा शान्तिमैकान्तिकीं ततः
निःश्रेयसं स जिज्ञासुस्तापसाननुवासरम् । सिषेवे सत्यसङ्कल्पानन्नपैरेव कल्पकैः ॥
एवमाचरतस्तस्य काले महति गच्छति । मुक्तकर्मा ततः कश्चित्प्रादुरासीत्पुरा भुवि ॥
अनुभूतनिराकाङ्क्षी नासाग्रन्यस्तलोचनः । शान्तचेताः परं ब्रह्म ध्यायन्नानन्दनिर्भरः
पादौ तस्योपसंगृह्य प्रणतेनाऽन्तरात्मना । चकार विधिवत्तस्मै विद्वानतिथिसत्क्रियाम्
तं च शुद्धेन भावेन परितुष्टं तपस्विनम् । प्रणतः परिपप्रच्छ निर्वाणस्थितिमात्मनः ॥
स तस्मै कथयामास पुरेऽसौ पुरनामनि । मित्रवन्तमजापालमुपदेष्टारमात्मवित् ॥१०
स चाऽभिवन्द्य तत्पादावेत्य सौपुरमूर्जितम् । तस्योत्तरदिशो भागे ददर्श विपुलं वनम्
मारुतान्दोलितानेककुसुमामोदसुन्दरम् । उन्मत्तभ्रमरोद्गीतनादापूरितदिङ्मुखम् ॥१२
तस्मिन्वने सरित्तीरे निषीदन्तं शिलातले । मित्रवन्तं ददर्शाऽथ सानन्दस्तिमितेक्षणम्
अपिस्वाभाविकं वैरं हित्वाऽन्योन्यं विरोधिभिः । सत्त्वैरावृतमुद्यानेमन्दस्यन्दनभास्वति
शान्तेषु मृगयूथेषु दशानन्दमनोज्ञया । कृपानुविद्धयाभूमिं निषिञ्चन्तमिवामृतम् ॥१५

उपेत्य विनयेनामुन्मनाः प्रीतमानसः । किंचिदानम्रशिरसा तेनाऽपि स तु सत्कृतः ॥
उपतस्थे ततो विद्वान्मित्रवन्तमनन्यधीः । समाप्तध्यानकालं स पर्यपृच्छत्समाहितः ॥

देवशर्मोवाच ।

आत्मानं वेत्तुमिच्छामि तदमुष्मिन्मनोरथे । लब्धसिद्धिमुपायं मामुपदेष्टुं त्वमर्हसि

श्रीभगवानुवाच ।

परामृश्य क्षणं सोऽपि मित्रवानिदमब्रवीत् ॥ १९ ॥

मित्रवानुवाच ।

विद्वन्विद्धि पुरावृत्तमुच्यमानमिदं मया । अस्ति गोदावरीतीरे प्रतिष्ठानाभिधं पुरम् ॥
तत्र दुर्दमनामाऽऽसीदन्वये च मनीषिणाम् ॥ २० ॥
तत्राऽस्ति विक्रमो नाम सेव्यमानो महीपतिः । दानानि प्रत्यहं गृह्णन्वर्त्तते उदरम्भरिः
कालेन कालपाशेन बद्धानीतो यमालयम् । निरयेषु समग्रेषु यातनाअनुभूय च ॥२२॥
कस्मिंश्चित्स कुले जातो दुर्वृत्तानां द्विजन्मनाम् ।
भवान्तरानुवर्तिन्या विद्यया स पुरस्कृतः ॥ २३ ॥
उपयेमे दुराधर्षां कन्यकामधमे कुले । कालेन सा वयो हित्वा शैशवं यौवनं ययौ ॥
पीनस्तनी च सुश्रोणी मदविह्वललोचना । पतिं न सेहे दुर्वृत्तं चकमे स्वपतीन्परान्
वृत्तिमाहर्तुकामेऽस्मिन्निर्गता सा पुराद्बहिः ।
संगता कामुकेनाऽसौ चिरं चाण्डालजन्मना ॥ २६ ॥
दधे गर्भमसौ तस्मात्सा च कन्योपपद्यते । सैव भार्याऽपि तस्यासीत्पूर्वपापप्रसङ्गतः
सैववृद्धा ततः काले डाकिनी समजायत । कुसङ्गात्कुमतिर्जाता दुष्टनारीप्रसङ्गतः ॥
चखाद व्याधितं व्याघ्रमसृगास्वादलालसा । भ्रमन्ती विपिने घोरे जनैर्दृष्ट्वा बहिष्कृता
परैतलोकमासाद्य व्याधौ व्याघ्रोऽन्यवर्त्तत । नरकान्दारुणान्भुक्त्वा जीवहिंसाप्रभावतः
सापि कालेन दुष्टात्मा मृत्युवेगमुपागता । निरयानेत्य दुर्धर्षानजाऽजायतमद्गृहे ॥
तामन्या अप्यहं विद्वन्पालयन्काननान्तरे ।
अपश्यन्द्वीपिनं घोरं जिघांसन्तमिवाऽखिलम् ॥ ३२ ॥

समालोक्य तमायन्तं भयेन प्रपलायितम् । अजायूथं परित्यज्य मया मरणभीरुणा
उपदुद्राव स द्वीपी पूर्ववैरमनुस्मरन् । अजा तु तत्समीपेऽगात्सत्वरं सीरदन्तिके ॥
तत्र सा भयमुत्सृज्य हित्वा वैरमनर्गला । अवतस्थे स च द्वीपी तूष्णीमासीदमत्सरः

तं तथाविधमालोक्य सा वक्तुमुपचक्रमे ।
द्वीपिन्नभीप्सितं भुङ्क्ष्व मां समुद्धृत्य सादरः ॥ ३६ ॥
नेयं भवति ते बुद्धिः कथं वैरमति त्यजः ।
इत्याकर्ण्य तदा वाक्यं प्राह द्वीपी विमत्सरः ॥ ३७ ॥
स्थानेऽस्मिन्मे गतो द्वेषः क्षुत्पिपासा च निर्ययौ ।
न प्रार्थयामि तेन त्वां समीपे समुपस्थिताम् ॥ ३८ ॥

एवमुक्ता पुनःप्राह जाताऽहं निर्भयाकथम् । किमत्र कारणं वेत्सि यदि मे वक्तुमर्हसि
एवमुक्तः पुनर्द्वीपी तामाहाऽजां न वेद्म्यहम् । पुरोगतमिमं प्रष्टुं महान्तमितिनिर्गतौ
ताभ्यामुभाभ्यामागत्य पृष्टोऽहं बहुविस्मयः । अहं च सहितस्ताभ्यामपृच्छंवानरेश्वरम्
मयापृष्टः स विप्रेन्द्रमब्रवीत्सादरं कपिः । शृणु वक्ष्याम्यजापालवृत्तमत्र पुरातनम् ॥
इदमायतनं पश्य पुरो वनगतं महत् । अत्र त्र्यम्बकलिङ्गं हि द्रुहिणेन प्रतिष्ठितम्॥४३॥
सुकर्मानाम मेधावी पर्युपास्ते तपश्चरन् । वनपुष्पाण्यपाहृत्यसुरपूज्यं पुरोभवम् ॥४४

संस्नाप्य सरिदम्भोभिः केवलं कर्मणा वसन् ।
काले महति तस्यागादतिथिःकश्चिदन्तिकम् ॥ ४५ ॥

उपाहृत्य फलाहारं स तस्मै पर्यकल्पयत् । तेनाऽऽतिथ्येन सम्प्रीतः सुकर्माणमभाषत
किमिदं कर्मणो मूलं फलं भुक्त्वा तु तिष्ठसि । गतानुगतया वृत्त्या किंवा केवलमीहसे
स एवमुक्तः प्रायेण प्रीतेनाऽऽत्मविदा तदा । प्रत्युवाच वचः स्पष्टमात्मनो हितमुत्तमम्
विद्वन्न वेद्मि तत्त्वेन फलमेतस्य कर्मणः । बुभुत्सया परः शम्भुः सेव्यते केवलं यया ॥
फलमेतस्य सेवायाः परिपाकं कपर्दिनः । यत्मां समनुगृह्णासि संस्पृश्यात्ममनोरथम्

तस्यैवं सूनृतं वाक्यं श्रुत्वा प्रीतस्तपोधनः ।
द्वितीयमालिलेखाऽसौ गीताध्यायं शिलातले ॥ ५१ ॥

आदिदेशाऽऽशु तं विप्रं पठनाभ्यसनाय च । फलिष्यत्यात्मनः स्वैरं परितस्ते मनोरथः

इत्युक्त्वाऽन्तर्दधे धीमान्पुरतस्तस्य पश्यतः ।
विस्मितस्तस्य चाऽऽदेशात्सोऽभ्यतिष्ठदनारतम् ॥ ५३ ॥

ततः कालेन महता भावितात्मा प्रसन्नधीः । यत्रयत्र चचाराऽसौ शान्तं तत्तत्तपोवनम्
न द्वन्द्वबाधा नैव क्षुत्पिपासा नच वा भयम् । तपसा तस्य जानीहि द्वितीयाध्यायजापिन

मित्रवानुवाच ।

एवमुक्तश्च तेनाऽहंस्थापयित्वापरां कथाम् । अनुज्ञातःप्रसन्नेन च्छागोऽव्याघ्रयुतोऽगमम्
गत्वा शिलातलेऽपश्यमध्यायं लिखितंपठेत् । तस्यैवावर्त्तनाद्दाप्तं तपसः पारमुत्तमम् ॥
तेन त्वमपि कल्याणनित्यमाहर्तुमर्हसि । अध्यायं तेन ते मुक्तिरदूरस्था भविष्यति ॥
देवशर्मा समादिष्टस्तेन मित्रवता स्वयम् । अभ्यर्च्य प्रणतो भूत्वा पुरन्दरपुरं ययौ ॥
तत्राऽऽत्मविदमासाद्य देवतायतने क्वचित् । वृत्तमेतन्निवेद्यादावध्यायमपठत्ततः ॥ ६७॥
शिक्षितस्तेन पूतात्मा पठन्नध्यायमादरात् । द्वितीयमासमादोच्चैर्निरवद्यं परं पदम् ॥

द्वितीयस्येदमाख्यानं कथितं शृणु साम्प्रतम् ।
तृतीयस्याऽथ वक्ष्यामि माहात्म्यमपि चेन्दिरे ! ॥ ६९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताद्वितीयाध्याय माहात्म्ये सतीश्वरसम्वादे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

---

# सप्तसप्तत्यधिकशततमोऽध्यायः

## जडब्राह्मणकथामुखेनगीतातृतीयाध्यायमाहात्म्यवर्णनम्

श्रीभगवानुवाच ।

जनस्थाने जडो नाम द्विजन्मा कौशिकान्वयी ।
हित्वा जात्युचितं धर्मं वणिग्वृत्त्यां मनो दधे ॥ १ ॥

व्यसनी परदारेषु दीव्यन्नक्षैः पिबन्मधु । मृगयानिरतो नित्यं कालमेवं निनाय सः ॥
क्षीणे वित्ते ततो रात्रौ चौर्यमारब्धवांस्ततः । प्रतिपेदे धनं तेन यज्वनां यष्टुमर्थिनाम्
सद्रूप्यमगमत्तेनवाणिज्यायोत्तरांदिशम् । कस्तूरिमगुरुं कृष्णं चामरांश्चन्द्रिकोज्ज्वलान्
गृहीत्वा वृत्य चानिन्ये पञ्चषाद्ध्वयोजनात् । अथाऽपरस्मिन्नहनि प्रियादर्शनदोहनि॥
दूरमध्वानमुल्लङ्घ्य रवावस्तमिते सति । ध्वान्ते प्रसर्पति स्वैरं दिशो दश तरोस्तले ॥
गतो वशं स दस्यूनां निजघ्ने तैश्च सत्वरम् । धर्मलोपादसौ जज्ञे घोरश्चोग्रतरो ग्रहः॥
पिपासितो बुभुक्षार्तो लेलिहानश्च सृक्किणी । ऊर्ध्वकेशोऽतिजङ्घालः पृष्ठलग्नोदरोमहत्
अस्थिमात्रशरीरोऽभूद्दुर्वृत्तनयनो भृशम् । अत्राऽन्तरे सुतस्तस्य धर्मात्मावेदकोविदः
पर्यपालयदत्यर्थं दिदृक्षुस्तं तदाऽगमत् । नित्यमन्वेषयन्वार्त्तां पान्थेभ्योनोपलब्धवान्
ततः कदाचिदायाते सहायिनि च मानवे । तस्माद्विदितवृत्तान्तः शुशोच पितरं बहु॥

ततो विमृश्य मेधावी चिकीर्षुः पारलौकिकम् ।
वाराणसीं ससंभारः स गन्तुमुपचक्रमे ॥ १२ ॥
मार्गे निवासान्सप्ताऽष्टौ नीत्वा तस्य तरोस्तले ।
सन्ध्यां प्रचक्रमे कर्तुं यत्राऽस्य निहतः पिता ॥ १३ ॥

तत्राऽध्यायं सर्गातानां तृतीयं संजजाप ह । ततो घोरस्वरस्तत्र व्योममध्येपरामृशन्
ददर्श घोरमाकाशात्पतन्तं पितरं ततः । विस्मयेन भयेनाऽपि विकलीकृतचेतनः ॥

तेजसा भूयसा व्याप्तमालुलोके पुरोऽम्बरे ।
किङ्किणीकोटिसंकीर्णं तेजसाव्याप्तदिङ्मुखम् ॥ १६ ॥

विमानमग्रतोऽपश्यद्दिव्यमव्यग्रचेतनः । तत्राऽपश्यत्समारूढं दिव्याभिः स्त्रीभिरावृतम्
संस्तूयमानं मुनिभिः पितरं पीतवाससम् । प्रणतस्तं समालोक्य युयुजे तेनचाऽऽशिषा
ततोऽपृच्छदिदं वृत्तंसच तस्मैन्यवेदयत् । दुस्त्यजात्कर्मणो वत्स वपुषोपुण्यकारणात्

मोचितोऽस्मि त्वया दैवादध्यायं जपतान्तिके ।
तन्निवर्त्तस्व जपतः साम्प्रतं त्वामुपस्थितम् ॥ २० ॥
वाराणसीं यदर्थं यत्तदनुष्ठितमात्मनः ॥ २१ ॥

श्रीभगवानुवाच ।

एवमुक्तः स च प्राह पितरं दीप्ततेजसम् ॥ २२ ॥

सूत उवाच ।

हितं ममाऽनुशाधि त्वं कार्यमन्यन्मया नु किम् ॥ २३ ॥

श्रीभगवानुवाच ।

ततः प्राह पिता पुत्रं कार्यमेतत्त्वयाऽनघ ! ॥ २४ ॥

यन्मयाऽऽचरितं कर्म भ्रात्रा मम तु तत्कृतम् । स यातो नरकंघोरं तं मोचयितुमर्हसि

अन्ये मदन्वये ये वै निरयं प्रतिपेदिरे । ते च मोचयितव्यास्ते इति मेऽस्ति मनोरथः

इत्येवमुक्तः पुत्रस्तं पुनःप्राह कृताञ्जलिः । कर्मणाकेन तान्सर्वान्मोचयामि तदाऽऽदिश

एवं निवेदितो वाक्यं पितासुतमुवाच ह ॥ २७ ॥

पितोवाच ।

येनाऽहं मोचितो वत्स! तदनुष्ठातुमर्हसि ॥ २८ ॥

अनुष्ठाय तदुत्पन्नं तेभ्यः पुण्यं समुत्सृज । ततोऽहमिव ते सर्वे पूर्वं संत्यज्य यातनाम्

गमिष्यन्त्यचिरेणैव तद्विष्णोः परमम्पदम् । स संदिष्टोऽवदत्पुत्रो यथैवं तातनारकान

सर्वानपि विमोक्ष्यामि यदि ते रोचते वचः । एवमस्तु शिवं भूयादुपपन्नं महत्प्रियम्

इत्यादिश्य पिता पुत्रं ययौविष्णोःपरम्पदम् । सोऽपितस्मात्परावृत्त्यजनस्थानंप्रपद्यच

सुन्दरस्य पुरः शौरेश्चालये कालमभ्यगात् । स कुर्वाणः समादीनिपित्राचयदुदीरितम्

उत्ससर्ज कृतं पुण्यं मोचयिष्यन्स नारकान् । अत्रान्तरे पदे विष्णोर्यातनापदमीयुषः

नारकान्मोचयिष्यन्तः किङ्करा यममभ्ययुः । तेन ते पूजिताः सर्वे सत्क्रियाभिरनेकधा

कुशलं परिपृष्टास्ते सर्वतः सुखमूचिरे । यमं सत्कृत्य मेधावी पितृलोकमहेश्वरः ॥३६

हेतुमागमनेऽपृच्छत्ते च तस्मै न्यवेदयन् । विद्धि कीनाशनाथ त्वं शेषपर्यङ्कशायिना ॥

शौरिणा प्रहितानस्मान्समादेष्टुं त्वदन्तिके । अस्मन्मुखेन देवस्त्वांकुशलंपरिपृच्छति

नारकान्प्राणिनः सर्वान्विमोक्तुं च नियच्छति ।

इत्याकर्ण्य समादिष्टं विष्णोरमिततेजसः ॥ ३९ ॥

नतेनमूर्ध्नासम्भाव्यदध्यौकिञ्चनचेतसा। विमुक्तान्निरयात्सर्वांस्तान्विलोक्यमदोत्कटा
स तैरनुगतः सर्वैर्विष्णोरायतनं ततः। ययौ स वरयानेन यत्राऽऽस्ते दुग्धवारिधिः॥
तदन्तरुदितानेकसूर्यकोटिसमप्रभम्। इन्दीवरदलश्याममालुलोके जगद्गुरुम्॥ ४२॥
शय्याफणिफणारत्नमरीच्यामिश्रतेजसम्। विलोक्यमानमानन्दनिर्भरं प्रीतमानसम्॥

भावानुगैर्दृगालोकैः श्रिया प्रेम्णेक्षितं मुहुः।
योगिभिः परितो जुष्टं ध्याननिष्पन्दतारकैः॥ ४४॥

स्तूयमानं महेन्द्रेण पराजेतुं विरोधिनः। आम्नायवचसामन्ते ब्रह्मणो निःसृतैर्मुखात्॥
मूर्तिमद्भिर्वचोभिश्च गीयमानं गुणोत्करम्। सम्प्रीतं चाप्युदासीनमपि सर्वासुयोनिषु
योगसञ्चितपुण्यानां योगपथेन जन्तुषु। विलोकमानमात्मानमखिलं सचराचरम्॥
आमोदयन्तमालोकैरात्मानंदीप्तिपूरितैः। आविभ्राणं वपुर्ध्यापिच्छोतितंभोगिनस्त्विषा
इन्दीवरदलश्यामं ज्योत्स्नयेव नभस्तलम्। विलोक्य तं स तुष्टाव धियावहुलया नतः

यम उवाच।

नमः समस्तनिर्माणनिर्मलीभूतचेतसे। वदनोद्गीर्णवेदाय विश्वरूपाय वेधसे॥ ५०॥
वलवैरादुर्दुर्धर्षदानवेन्द्रमदद्रुहे। नमः स्थितौ च सत्त्वाय विश्वाधाराय विष्णवे॥५१
नमः पातकसङ्घातजिष्णवेऽखिलदेहिनाम्। ईषदुन्मीलल्ललाटनेत्राग्निप्रभवार्चिषे॥५२॥
त्वं हि सर्वस्य लोकस्य गुरुरात्मामहेश्वरः। विसृज्य वैष्णवान्सर्वानतस्त्वमनुकम्पसे
व्यापयन्नखिलं लोकं मायया परिवृंहितम्। न तया परिभूतोऽसि न च तत्प्रभवैर्गुणैः
अन्तरा वर्तमानोऽपि न ताभ्यामभिभूयसे। दृशा विषयवर्तिन्या निगृहीतमना अपि॥

तया फलाभिगामिन्या आत्मन्येवाऽभिलीयसे।
न तवाऽस्ति महिम्नोऽन्तो यथानिरवधिः स्वयम्॥५६॥
मौनमेवाऽत्र युक्तं मे विषयोऽसि कथं गिराम्।
इति स्तुत्वा ततो वाक्यमिदमाह कृताञ्जलिः॥ ५७॥

विनियोगादमीयुक्ता देहिनो निर्गुणा मया। समादिश यदन्यन्मे कार्यमस्ति जगद्गुरो!
इतिविज्ञापितस्तेन तमाह मधुसूदनः। मेघगम्भीरया वाचा सिञ्चन्निव सुधारसैः॥५९॥

पापादुद्धार्यते लोको मया समयवर्तिना । त्वयि विन्यस्तभारोऽहं नाऽनुशोचामि देहिनः

तदाचर निजं कर्म प्रयाहि स्वं निकेतनम् ॥ ६१ ॥

श्रीभगवानुवाच ।

इत्युक्त्वाऽन्तर्दधे देवः सोऽपि स्वपुरमाययौ ।

सोऽपि स्वजातिजान्सर्वान्निरयस्थाननेकशः ।

उद्धृत्य वरयानेन विष्णुलोकं ययौ स्वयम् ॥६३॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतातृतीयाध्याय-माहात्म्ये सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः

### गीताचतुर्थाध्यायमाहात्म्यवर्णनम्

श्रीभगवानुवाच ।

चतुर्थस्याऽपिमाहात्म्यमाख्यास्याम्यधुनाशृणु । बदरीत्वंसमुत्सृज्य येन कन्ये दिवंगते

श्रीरुवाच ।

कथं कन्ये दिवं याते बदरीत्वं विसृज्य वै ।

ते के चाऽऽस्तां पुरा देव ! कथं प्राप्ते तु मुग्धताम् ॥ २ ॥

एतद्वेदितुमिच्छामि नाथवक्तुं त्वमर्हसि । न तु तृप्यामि शृण्वन्ती परमां च कथामिमाम्

श्रीभगवानुवाच ।

अस्ति भागीरथीतीरे नाम्ना वाराणसी पुरी । भरतो नाम युक्तात्मा तत्र विश्वेश्वरालये

नित्यमात्मरतस्तुर्यं जपत्यध्यायमादरात् । तदभ्यासाद्विशुद्धात्मा न द्वन्द्वैरभिभूयते॥५॥

काले कदाचन क्रीडन्ययौ स नगराद्बहिः । उपान्त्यवर्तिनो देवान्दिदृक्षुः स तपोधनः

विशश्राम तयोर्मूले बदर्योर्न्यपतत्फले । उपधाय तयोरेकामन्यामालम्ब्य चाऽङ्घ्रिणा
तपस्विनि ततो याते बदर्योश्च तयोर्द्वयम् । शुष्कं निष्पत्रशाखं च दिवसैः पञ्चभैरभूत्
गृहे क्वचन विप्राणां जज्ञाते कन्यके ततः । वर्धमानं तयोर्युग्मं सप्तभिः परिवत्सरैः ॥६
विहृत्य दूरदेशेभ्यो यतिमायान्तमैक्षत । गृहीत्वा चरणौ तस्य वचः सूनृतमब्रवीत् ॥
त्वत्प्रसादादेव मुने मोचितं द्वन्द्वमावयोः । उत्सृज्य बदरीभावं मानुष्यं प्रतिपद्यते ॥

एवमुक्तो मुनिस्ताभ्यां विस्मृतः प्रत्युवाच सः ।
कदा वत्से युवां केन हेतुना मोचिते मया ॥१२ ॥

युवयोर्बदरीत्वे च हेतुं ब्रूतं न वेद्म्यहम् । ऊचतुः कन्यके तस्मै बादर्ये हेतुमात्मनः ॥

आदौ विमोचने तस्माद्दुस्त्यजादपि कारणम् ।
अस्ति गोदावरीतीरे तीर्थं पुण्यप्रदं नृणाम् ॥ १४ ॥

छिन्नपापमितिख्यातं परां कोटिमवापयत् । तत्र सत्यतपानाम तपस्तेपे सुदारुणम् ॥
ग्रीष्मे महति दीप्तानां मध्यगोजातवेदसाम् । वर्षासु जलधाराभिर्नित्यमासिक्तमूर्द्धजः

शिशिरे च वसन्नप्सु बिभ्रत्कण्टकितां तनुम् ।
विशुद्धः सततं काले तपस्तप्त्वा स संयमी ॥ १७ ॥
आत्मन्येव मतिं चक्रे परां प्राप्य सुनिर्वृतिम् ।
सदा फलानि बिभ्रत्सु सान्द्रच्छायेषु शाखिषु ॥ १८ ॥

निर्मत्सरेषु सत्त्वेषु बद्धा प्रीतिं परामपि । तपः फलानुसंधाने वैदुष्ये नोपपादितम् ॥
ब्रह्माऽप्येनं स्वयं पृच्छन्नुपतस्थे तमन्वहम् । तेन संकोचहीनत्वाद्ब्रह्मण्यनुगतेऽन्वहम्
तद्ध्यानानुगतव्यक्तिर्ववृधे तस्य तत्तपः । विमुक्तकल्पं मन्वानः समृद्धादात्मनः पदात्
अन्तरायशतं चक्रे ततो भीतः पुरन्दरः । आहूयाप्सरसां मध्यादावां तुल्यं समादिशत्
कुरुतं तत्तपोविघ्नमनेनाऽऽचरितंयुवाम् । यो मां पदादवष्टभ्य स्वराज्यं भोक्तुमिच्छति
इतिसन्देशमापन्ने पुरस्ताच्च विडौजसः । गोदावरीमगच्छाव स मुनिर्यत्र वर्तते ॥२४।
मृदङ्गैर्मन्दगम्भीरैर्वेणुभिः कलवादिभिः । कलंगीतंसमारब्धं तन्वङ्गीभिः समन्वितम्
उद्वहन्त्यौपृथुश्रोणीघनपीनपयोधरे । स्मरस्मेरमुखाम्भोजे किञ्चिदाकुञ्चितालके ॥२६

मणिकुण्डलगृष्टांसे पुण्डरीकोज्ज्वलेक्षणे । तनुमध्ये सुवृत्तोरुवहन्त्यौ च समे पदे ॥

आनर्तौ यो वनस्याऽर्थे स्वरताललयानुगाम् ।

दर्शयन्त्यौ स्वतः कृत्स्नां गतिं भावानुगामिनीम् ॥ २८ ॥

मृदूपक्रममुत्पन्नं मन्दमन्दं विवर्द्धनम् । गर्जयामास दिक्चक्रं तत्तयोर्नृत्यमानयोः ॥

ततोऽङ्गहारवेगेन वायुर्वासः सुशीतलः । ईषदुच्छ्वसिते चैले दर्शयन्त्यौ पयोधरौ ॥

उद्धर्षयन्ती कन्दर्पमुल्बणा गतिरावयोः । कोपमुत्पादयामास मुनेरविकृतात्मनः॥३१॥

ततः शापं ददौ कोपाज्जलमुत्सृज्य पाणिना । बदरीत्वं प्रपद्येथां जाह्नवीरोधसीति नौ

आवाभ्यां पारतन्त्र्येण यद्दुश्चरितमास्थितम् ।

तत्क्षमस्व विनम्राभ्यां मुनिः पश्चात्प्रसादितः ॥ ३३ ॥

ततः शापविमोक्षं नौ कथयामास पुण्यधीः । भरतागमनान्तोऽयमिति सत्यतया मुनिः

मर्त्येषु जन्मलाभश्च स्मृतिश्चातीतजन्मनाम् । आवयोरन्तिकं गत्वा बदरीभूतयोस्ततः

स्मरता तुर्यमध्यायं भवता निष्कृतिः कृता । तत्तावत्प्रणमावस्त्वां शापादेव न केवलात्

घोरादेव तु संसारात्त्वयैतेन विमोचिते ।

श्रीभगवानुवाच ।

एवमुक्तो मुनिस्ताभ्यामतिप्रीतमनास्ततः ॥ ३७ ॥

पूजितस्ते समामन्त्र्य यथागतमसौ ययौ । कन्ये चतुर्थमध्यायं जपेतां नित्यमादरात्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतातुर्याध्याय-
माहात्म्ये अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमोऽध्यायः

### पिङ्गलद्विजकथामुखेनगीतापञ्चमाध्यायमाहात्म्यवर्णनम्

श्रीभगवानुवाच ।

पञ्चमस्याऽधुना देवि! माहात्म्यंलोकपूजितम् । कथयामिसमासेनसावधानाश्शृणुप्रिये!

पिङ्गलो नाम भद्रेषु पुरुकुत्सपुरे द्विजः। अवदाते कुले जातो विश्रुते वेदवादिनाम्॥

कुलोचितानि शास्त्राणि तथा वेदान्विसृज्य सः।
तौर्यत्रिके मतिं चक्रे वादयन्मुरजादिकम्॥ ३॥

कृतश्रमस्ततस्तत्र गीते नृत्ये च वादने। परां प्रसिद्धिमासाद्य नृपसद्म विवेश सः॥४॥

समातस्थे स तेनाऽसौ पुरा भूमिभुजा सह। परदारानुपाहृत्य बुभुजे ताननन्यधीः॥

तत उत्सिक्तगर्वोऽयं सूचमानो निरङ्कुशः। परच्छिद्राणिचाऽमुष्मै विविक्तेसनिरन्तरम्

तस्याऽसीदरुणानाम भार्याहीनकुलोद्भवा। भ्रमत्यन्वेषयन्ती सा कामुकेन विहारिणी

तमन्तरायं मन्वाना निशीथिन्यां निजालये। निजघान शिरश्छित्त्वा निचखानमहीतले

वियोजितस्ततः प्राणैरुपेत्य यमसादनम्। दुर्जयान्नरकान्भुक्त्वा गृध्रोऽभूद्विजने वने

भगन्दरेण रोगेण साऽपि हित्वा वरां तनुम्। उपेत्य नरकान्घोराञ्जज्ञे तत्र वने शुकी

कणानादातुकामां तां सञ्चरन्तीमितस्ततः। विददार नखैस्तीक्ष्णैर्गृध्रो वैरमनुस्मरन्

नृकपाले पयः पूर्णे निपतन्तीं ततःशुकीम्। अभिदुद्राव गृध्रोऽपि निजघ्नेसचजालिकैः

पत्नी वियोजिता प्राणैर्नृकपालं जले ततः। तत्रैव निममज्जाऽसावेत्य क्रूरतरः खगः॥

पितृलोकं प्रपेदाते नीतौ तौ यमकिङ्करैः। प्राक्कृतं दुष्कृतं कर्म स्मरन्तौ भयभागिनौ

ततो यमः समालोक्य तयोः कर्म जुगुप्सितम्।
अकस्मादेव तत्स्नानान्मरणे सुकृतं महत्॥ १५॥

अनुजज्ञे ततो लोकमीप्सितं गन्तुमेतयोः। महापातकसङ्घातैरपि दुर्धर्षमानसौ॥१६॥

ततो विस्मयमापन्नौ स्मृत्वा तौ दुष्कृतं निजम्।
उपेत्य प्रणतौ भूत्वा वैवस्वतमपृच्छताम्॥ १७॥

गृध्रशुक्यावूचतुः।

सञ्चितं दुष्कृतं पूर्वमावाभ्यामपिगर्हितम्। लोकानामीप्सितानांतु को हेतुस्तद्वदस्वनौ

एवमुक्तस्ततस्ताभ्यामाह वैवस्वतो वचः॥ १८॥

यम उवाच।

आसीद्गङ्गातटे नाम्ना वटुर्ब्रह्मविदुत्तमः। एकाकी निर्ममः शान्तो वीतरागो विमत्सरः

गीतानां पञ्चमाध्यायमावर्त्तयति सर्वदा । तेन पुण्येन पूतात्मा बुद्ध्वा ब्रह्म सनातनम्
पार्थायानपि यं श्रुत्वा तनुमुत्सृष्टवानसौ । निर्मलीकृतदेहस्य गीताभिर्भावितात्मनः ॥
तत्कपालजलं प्राप्य युवां यातौ पवित्रताम् । तद्गच्छतं युवांलोकान्मनोरथपथिस्थितान्
गीतानां पञ्चमाध्यायमाहात्म्येन पवित्रितौ ॥ २३ ॥

श्रीभगवानुवाच ।

एवं तौ बोधितौ तेन मुदितौ समवर्तिना । व्योमयानं समारुह्य जग्मतुर्वैष्णवं पदम्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
गीतापञ्चमाध्यायमाहात्म्य एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

# अशीत्यधिकशततमोऽध्यायः

## गीताषष्ठाध्यायमाहात्म्यवर्णनम

श्रीभगवानुवाच ।

षष्ठाध्यायस्य माहात्म्यं प्रवक्ष्यामि वरानने ।। यदाकर्णयतांनृणां मुक्तिःकरतलेस्थिता
अस्ति गोदावरीतीरे प्रतिष्ठानं पुरं महत् । पिप्पलेशाभिधानोऽहं यत्राऽस्मिस्मेरलोचने
यत्र गोदावरीवारिशीकरैरेव शीतलैः । हंसाः पक्षपुटैः कीर्णैर्हरन्ति यमिनां श्रमम् ॥
स्फुरत्पद्मावलीकोशपरागसुरभीकृतम् । श्लाघ्यं गोदावरीतोयं येन ते निर्जरा नराः ॥
धिक्सुधामौषधीशस्यविकलक्षयविधायिनीम् । महाराष्ट्रवधूकानां मज्जन्तीनांमुनीश्वराः
स्पृशन्ति तत्र वक्त्राणि फुल्लपङ्कजशङ्कया । यत्र खेलन्महाराष्ट्राः क्वणत्कङ्कणसुन्दराः॥
हरन्ति ध्वनयोऽलीनां मनांस्यपि तपस्विनाम् ।
अत्युच्चसौधशिखरविहारिवनितामुखम् ॥ ७ ॥
पश्यन्ननुदिनं यत्र क्षीयते मृगलाञ्छनः । अत्युच्चसौधवलभीमहामणिमरीचिभिः ॥८॥

चुम्ब्यन्ते मुनिगन्धर्वैर्दूर्वाचन्दनचञ्चलैः । यस्मिन्नाधूयमानानां पताकानां समीरणैः ॥
गतश्रमा रवेर्याने भवन्ति रथवाजिनः । राशीकृतैर्मलयजैरसङ्ख्यातैर्वणिग्गणैः ॥१० ॥
यस्मिन्नुपलशेषोऽसौ लक्ष्यते मलयाचलः । पुञ्जीकृतानि दृश्यन्ते यत्र मुक्ताफलान्यपि
नगरीदेवताहास्यस्तवका इव सर्वतः । तत्र ज्ञानश्रुतिर्नाम्ना मेदिनीवल्लभोऽभवत् ॥१२

यस्मिन्नुद्धरति क्षोणीं शेषोऽयं मणिसन्निभाम् ।
अपि प्रतापमार्तण्डमण्डलीतीव्रतेजसि ॥ १३ ॥

नित्यमध्वरधूमेन श्यामलाः कल्पशाखिनः । असाधारणदातृत्वं पश्यन्त इव लज्जया ॥
यदध्वरपुरोडाशचर्वणास्वादलम्पटाः । न तत्यजुः सुपर्वाणः प्रतिष्ठानपुरं मनाक् ॥

यस्य दानाम्बुधाराभिः प्रतापज्योत्स्नयाऽनिशम् ।
मखधूमैश्च सम्पुष्टा ववृषुः समये घनाः ॥ १६ ॥

स्वप्नमात्रमपि क्वाऽपि न पदं प्रापुरीतयः । नीतयः प्रसरन्तिस्म यस्मिञ्छासतिमेदिनीम्
वापिकूपतडागानां छद्मनायोऽनुवासरम् । हृदयस्थानिमेदिन्या निधानान्यलोकयत्

पाण्डुराभिः पताकाभिः प्रासादो यस्य राजते ।
वियद्गङ्गातरङ्गौघैर्हिमाद्रिरिव सानुमान् ॥ १९ ॥

दानैस्तपोभिर्यज्ञैश्च प्रजानां पालनेन च । तुष्टाः स्वर्गौकसस्तस्मै वरं दातुं समागमन
ततोऽन्तरिक्षमार्गेण धुन्वानाः पक्षसंहतीः । मृणालधवलादेविदेवहंसा विनिर्गताः ॥

त्वरया गच्छतां तेषामन्योन्यं तत्र भाषिणाम् ।
भद्राश्वप्रमुखा क्षिप्राः पुरस्तान्निर्ययुर्जवात् ॥ २२ ॥
पाश्चात्यहंसा ऊचुस्तान्पुरस्ताद्गच्छतो जवात् ॥ २३ ॥

पाश्चात्यहंसाऊचुः ।

कथं वेगेन निर्याता भवन्तः पुरतः स्थिता । सर्वैर्मिलित्वा गन्तव्यमस्मिन्नध्वनि दुर्गमे
प्रकाशमानं पुरतस्तेजःपुञ्जं न पश्यथ । ज्ञानश्रुतेर्महीभर्तुः पुण्यमूर्त्तेरतिस्फुटम् ॥२५॥

श्रीशिव उवाच ।

निशम्येति वचः सम्यक्पाश्चात्यानांपुरःस्थिताः । हंसाहसित्वासावज्ञमूचुर्वचनमुच्चकैः

पुरःस्थितहंसाऊचुः ।

रैक्वाभिधस्य दुर्धर्षतेजसो ब्रह्मवादिनः । किं नु ज्ञानश्रुतेरस्य राज्ञस्तीव्रतरं महः ॥

श्रीशिव उवाच ।

इति शुश्राव हंसानां गिरो ज्ञानश्रुतिर्नृपः । अत्युच्चसौधभवनमारुह्य च सुखं स्थितः॥

ततः सारथिमाहूय भूपालो विस्मयान्वितः ।
संदिदेश महात्माऽसौ रैक्व आनीयतामिति ॥ २६ ॥

ततोऽवधार्य भूपालवचः पीयूषगर्भितम् । निर्जगाम महोनाम्ना सारथिः प्रथयन्मुदम्
यत्र वाराणसीनाम नगरी मुक्तिदायिनी । यत्र विश्वेश्वरोनाम ह्यपदंष्ट्रा जगत्पतिः ॥
ततो गयाभिधे क्षेत्रे यत्र देवो गदाधरः । उद्धर्तुमखिलाँल्लोकान्वसत्युत्फुल्ललोचनः ॥
ततो गौरीगुरोः पार्श्वे सर्वैस्तीर्थैरनेकधा । पर्यटन्नातवान्यत्र केदारः पापदारणः ॥

यमालोक्य सकृन्मर्त्या मुक्ताः स्युर्नाऽत्र संशयः ।
महापापविनिर्मुक्ता भुक्त्वा भोगान्यथेप्सितान ॥ ३४ ॥

ततो गौडेषु निर्यातो यत्राऽऽस्ते पुरुषोत्तमः । यस्यावलोकनादेव नराःस्वर्लोकगामिनः
ततो द्वारावतींप्रागान्नगरींमुक्तिदायिनीम् । यत्राऽऽस्तेगोमतीतीरेरुक्मिणीवल्लभोहरिः

स्नात्वा च गोमतीतीर्थे पञ्चकृष्णान्विलोक्य च ।
मर्त्यो मुक्तिमवाप्नोति भुक्त्वा भोगान्यथेप्सितान् ॥ ३७ ॥

ततः समुद्रमासाद्य सोमनाथं विलोक्य च । भुक्तिमुक्तिप्रदं देवं ततो निरगमत्सुधीः॥
अवन्तिकांपुरीम्प्रासोभुक्तिमुक्तिप्रदायिनीम् । यत्रोमयासुखंक्रीडन्महाकालोऽस्तिशङ्करः
अथोङ्कारं समासाद्य शर्मदं नर्मदातटे । भुक्तिमुक्तिप्रदातारं त्वरया निर्गतस्ततः ॥४०॥
अश्वमेधकरं नाम्ना नगरं पर्यटंस्ततः । यत्र शार्ङ्गधरः साक्षादास्ते लक्ष्मीपतिः स्वयम्

ततो विष्णुगया प्राप्तः कुण्डलोणारसञ्ज्ञितम् ।
यत्र स्नात्वा च पीत्वा च मुच्यते बन्धनान्नरः ॥ ४२ ॥

ततः कोल्हापुरं नाम गतो रुद्रगयां प्रति । आस्ते भगवती यत्र लक्ष्मीर्भक्तिप्रदायिनी
पञ्चनद्यां नरः स्नात्वा महालक्ष्मींविलोक्यच । भुक्त्वाभोगान्यथाकामंभक्तिंचप्रतिपद्यते

ततोऽमलगिरिं नाम नगरीं प्रतिपद्य च । नन्दिकेश्वरमारुह्य सोमनाथोऽस्ति यत्र तु ॥
दृष्ट्वा चतुर्भुजं देवं वरदानोद्यतं शिवम् । सोमनाथं नृणां मुक्तिर्भवत्येव न संशयः ॥
तुङ्गभद्रानदीतीरे दृष्ट्वा हरिहरं ततः । युगे युगे भुजा यस्य पतन्त्यवनिमण्डले ॥ ४७॥
यद्विलोक्य नराःसर्वे रम्यंहरिहरस्वपुः । भुक्त्वा भोगान्यथाकामंमुच्यन्तेबन्धनान्नराः

स्वर्गे कल्पशतं स्थित्वा मुक्तसंसारबन्धनाः ।
ततः स्वामिनमालोक्य लोकानां स्वामिनं विभुम् ॥ ४९ ॥

यमालोक्य न पश्यन्तिनिरयंजातुचिन्नराः । स्वर्गे कल्पशतंस्थित्वामुक्तसंसारवासनाः
मुक्तिं च प्रतिपद्यन्ते नाऽत्रकार्याविचारणा । ततः श्रीशैलमासाद्यसिद्धगन्धर्वसेवितम्
गिरिजावल्लभो यत्रमल्लिनाथोऽभिधाननः । उद्धर्तुमखिलाँल्लोकान्संसाराम्भोधिमध्यतः

स्वर्गे कल्पशतं स्थित्वा मुक्तसंसारबन्धनाः ।
मुक्तिं च प्रतिपद्यन्ते नाऽत्रकार्या विचारणा ॥ ५३ ॥

ततः श्रीशैलमासाद्य सिद्धगन्धर्वसेवितम् । गिरिजावल्लभो यत्र मल्लिनाथोऽभिधानतः
उद्धर्तुमखिलाँल्लोकान्संसाराम्बुधिमध्यतः । काले काले परं ज्योतिर्यःसन्दर्शयतेस्वयम्
अवलोकयतां नृणां यमनुस्मरतामपि । दूरे तिष्ठन्ति सन्त्रस्ता दूरं निरययातनाः ॥५६
स्वर्गे लोके सुखंभुक्त्वा भुक्तसंसारबन्धनाः । मुक्तिं च प्रतिपद्यन्ते मानवानाऽत्रसंशयः

रामोऽस्ति सानुजः सार्धं जानक्याऽपि ततो गतः ।
तत्र स्नात्वा च पीत्वा च मुच्यते नरकाद्ध्रुवम् ॥ ५८ ॥

कल्पकोटिशतं भुक्त्वा स्वर्गलोकसुखंनराः । मुक्तसंसारवर्त्मानो मुक्तियान्तिनसंशयः
ततो निवृत्य आयातः पश्यन्भीमरथीतटे । द्विभुजं विट्ठलं देवं भुक्तिमुक्तिप्रदायकम् ॥
यत्र गोदावरीजन्मस्थानंब्रह्मगिरिर्महान् । गौतमालयमासाद्य यत्राऽऽस्तेत्र्यम्बकोहरः
अरुणावरुणयोर्मध्ये यत्र गोदावरीनदी । तत्र स्नात्वा च पीत्वा च ब्रह्महत्याविलीयते
असङ्ख्यतीर्थसम्पन्नं दृष्ट्वा ब्रह्मगिरिं नराः । मुक्तिमेव प्रपद्यन्ते मुक्ताः संसारदुःखतः ॥
गौतम्युभयतीरस्थतीर्थान्वेषणकौतुकी । ततो जगाम सूतस्तु मथुरां पापनाशिनीम् ॥
यत्र स्वायम्भुवं देवं भजन्ति सुरमानवाः । आद्यं भगवतःस्थानं महन्मुक्तिप्रदायकम् ॥

त्रैलोक्येशजनिस्थानं विख्यातं वेदशास्त्रयोः । नानादेवगणैर्जुष्टं द्विजर्षिगणसेवितम्
कालिन्दीकूलसंशोभि ह्यर्धं चन्द्रप्रभाकृति । सर्वतीर्थनिवासैकपूर्णमानन्दसुन्दरम्॥६७
गोवर्धनगिरिप्रख्यं पुण्यद्रुमलतावृतम् । द्विपद्‌वनं महापुण्यं विश्रान्तिश्रुतिसाम्भृत् ॥
ततः काश्मीरनगरमपश्यत्प्रत्यगुत्तरम् । दृष्ट्वा धर्मयुं क्षेत्रं कुरुक्षेत्रं समन्ततः ॥ ६९ ॥
यत्राभ्रंलिहगेहानां पङ्क्तयः शङ्खपाण्डुराः । ता जाता धूर्जटेः स्पष्टअट्टहाससदृशा इव ॥
भक्तिप्रसादमालानां सुवर्णकलशैर्वृतम् । स्वः सिन्धुपतितानीव हेमपद्मानि मारुतैः ॥
यत्र प्रासादशिखरे नीलपट्टपताकिकाः । शैवालवलया भान्ति स्वसिन्धोर्लतिका इव ॥
यत्र काश्मीरमाश्रित्य नित्यं वसति भारती । नो चेद्युगपदेवेदं कथं लिखति वाङ्मयम्

विश्राममन्त्याः सरस्वत्याश्चिरं यत्र मदालसाः ।
मृणालचञ्चवो हंसा वाहनानि चरन्त्यमी ॥ ७४ ॥

कलाविशेषं प्रहिता यत्र बोद्धुं विरिञ्चिना । नागाइव विराजन्ते हंसा याताः समन्ततः
स्थलपद्मानि दृश्यन्ते करस्पर्शसुखानि च । शयनाय नितम्बिन्या यस्मिन्दानववैरिणा
उपन्यासैर्द्विजातीनां यत्र न श्रूयते स्फुटम् । मूकोऽपि निर्जरो वाचा पदकल्लोलडम्बरः
यस्मिन्नध्वरधूमेन व्याप्तं गगनमण्डलम् । अपि च क्षालितं मेघैः कालिमानं न मुञ्चति

गलितायाः सुधायास्तु यत्राऽध्वरमहात्विषा ।
लाञ्छितं छद्मना स्थानं दृश्यते तुहिनत्विषि ॥ ७९ ॥
जन्माभ्यासवशादेव पठन्ति बटवः स्वयम् ।
यत्रोपाध्यायसान्निध्यमाश्रित्य सकलाः कलाः ॥ ८० ॥

यत्र ब्राह्मणपत्नीनां कङ्कणध्वनिहुङ्कृतिः । लुम्पत्यनुदिनं भ्राम्यद्भ्रमराणां च गर्जितम्
यत्र ब्राह्मणपत्नीनां कपोलफलकं मुहुः । स्पृशन्समीरणो मन्दं वाति शापभयादिव ॥
माणिक्येश्वरनामाऽसौ यत्र शीतांशुशेखरः । वसन्त्यनुदिनं देवो वरदानाय देहिनाम्
अर्चितोभूपतीञ्जित्वामणिकेशेनचाऽऽदृतः । माणिक्येश्वरइत्याख्यांतदाप्रभृतियो दधौ

राज्ञा काश्मीरदेवेशदिग्जयोत्सवकारिणा ।
असौ सुपूजितो यस्मान्माणिक्यैर्भूरिभूतिभिः ॥ ८५ ॥

संसेवमानं तद्वारिच्छायां शकटिकोपरि। कण्डूयमानमङ्गानि यन्ता रैक्यमपश्यत ॥ राज्ञाऽपि कथितैस्तैस्तैश्चिह्नैः परिचितं जवात्। प्रणतः सारथी रैक्यं प्रणम्यतमभाषत सारथिरुवाच।

कस्मिन्ब्रह्मन्किन्नामाऽसि स्वच्छन्दोऽसि निरन्तरम्।
किमर्थमत्र विश्रान्तः किञ्च कर्तुं चिकीर्षसि ॥ ८८ ॥

श्रीशिव उवाच।

इत्याकर्ण्य च तद्वाक्यं परमानन्दनिर्भरः। स्मृत्वा सारथिमित्यूचे वयं पूर्णमनोरथाः परं केनाऽपि बहुना परिचर्याविधायिना। भवितव्यं मनोवृत्तिं जानताऽस्माकमेव हि हृदयस्थितमादाय रैक्याभिप्रायमादरात्। शनैर्निरगमद्यन्ता यत्राऽऽस्ते वसुधाधिपः ततः प्रणम्य भूपालं यथावृत्तं न्यवेदयत् ।बद्धाञ्जलिपुटोहृष्टः सारथिः स्वामिदर्शनात्॥ ततो निशम्य तद्वाक्यं विस्मयस्मेरलोचनः। श्रद्धालुरभवद्भूपो रैक्यसम्भावनाविधौ आदायाश्वतरीयुग्मयुक्तां शकटिकामगात्। मुक्ताहारदुकूलानि सहस्रं च गवां नृपः

गतोऽसौ तत्र यत्राऽऽस्ते योगी काश्मीरमण्डले।
तन्निवेद्य पुरो राजा दण्डवत्पतितो भुवि ॥ ९५ ॥

आनम्य परया भक्त्या रैक्यो राज्ञे चुकोप ह। रे शूद्र! मामकं वृत्तं न जानासि दुरीश्वर!

गृहाण शकटीमेतामुत्थाप्याऽश्वतरीयुताम्।
वस्त्राणि मुक्ताहारांश्च गाश्च दोर्घ्रारपि स्वयम् ॥ ९७ ॥

इत्थमाज्ञप्तवान्भूपो रैक्यस्य भयमादधे। ततः शापभयाद्राजा तत्पदाम्भोरुहद्वयम् ॥

गृह्णन्भक्त्या प्रसीदेति ब्रह्मन्नित्यूचिवान्स्वयम् ॥ ९९ ॥

राजोवाच।

भगवंस्तवमाहात्म्यमेतदत्यद्भुतं कुतः। प्रसन्नीभूय भगवन्नाख्याहि मम तत्त्वतः ॥१०० ॥

रैक्य उवाच।

गीतानांषष्ठमध्यायं जपामि प्रत्यहं नृप!। तेनैव तेजोराशिर्मे सुराणामपि दुःसहः ॥

श्रीशिव उवाच

गीतानां षष्ठमध्यायं रैक्यादभ्यस्य यत्नतः। ज्ञानश्रुतिर्महीपालो मुक्तिमाप ततः सुधीः

रैक्योऽपि सुखमालेभे माणिक्येश्वरसन्निधौ । गीतानां षष्ठमध्यायं जपन्मोक्षप्रदायकम्
मरालवेषमास्थाय वरदानार्थमागताः । दिवौकसोऽपि निर्जग्मुः स्वैरं विस्मयकारिताः
इममध्यायमप्येकं यो जपेत्सततं नरः । सोऽपि तत्पदवीमेति विष्णोरेव न संशयः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताषष्ठाध्याय-
माहात्म्ये अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

# एकाशीत्यधिकशततमोऽध्यायः

## शङ्कुकर्णब्राह्मणाख्यानमुखेनगीतासप्तमाध्यायमाहात्म्यवर्णनम्

श्रीभगवानुवाच ।

अथ ते वर्णयिष्यामि सप्तमाध्यायगौरवम् । यदाकर्ण्यसुधापूरपूर्णिर्भवति कर्णयोः ॥१॥
अस्तिपाटलिपुत्राख्यं दुर्गमुत्तुङ्गगोपुरम् । तत्राऽभूद्ब्राह्मणो नाम शङ्कुकर्णो दयार्णवः
वैश्यवृत्तिं समासाद्य धनमर्जितवान्बहु । पितॄन्न तर्पयामास पूजयामास नो सुरान् ॥
पार्थिवान्पूजयाञ्चक्रे धनार्जनपरायणः । तुरीयपाणिग्रहणमङ्गलार्थं गृहान्तरे ॥ ४ ॥
तनुजैर्बन्धुभिः सार्धं सम्प्रतस्थे कदाचन । रजन्यां धर्मकल्पायां निद्रालोस्तस्य दोस्तले
दशतिस्म समागत्य दन्दशूकः कुतश्चन । स दष्टमात्रोऽसाध्यात्मा मणिमन्त्रौषधादिभिः
क्षणैः कतिपयैरेव गतासुरभवत्ततः । पिचुमन्ददलैर्नालैरवकुण्ठितविग्रहम् ॥ ७ ॥
तमारोप्य तरुस्कन्धे सूनवो गृहमाययुः । ततः कालेन बहुना ततो जातः सरीसृपः ॥
तद्वासनानिबद्धात्मा जन्मपूर्वमनुस्मरन् । वञ्चयित्वा सुतानेतान्पूरयामि गृहाद्बहिः ॥

आत्मनः कोटिसङ्ख्याकं यत्राऽऽस्ते स्थापितं वसु ।
ततो नारायणबलिं श्रद्धया परयाऽन्विताः ॥ १० ॥

कृतवन्तः परे तस्य सूनवो हि द्विजन्मनः । एकदा स्वप्नमागत्य पीडितः सर्पजन्मना ॥

अभाषयन्मनोवृत्तं पुत्राणामग्रतः पिता । ततस्ते प्रातरुत्थाय परं विस्मयमोहिताः ॥
इतरेतरमाख्याय पश्यन्तस्ते निरङ्कुशाः । एकस्तत्र पितृस्नेहादुद्धर्तुमपि वाञ्छति ॥
अन्यो द्रविणलोभेन निहन्तुं सर्पमीहते । इतरस्तु पितृस्नेहरसमोहितमानसः ॥ १४ ॥

किम्वा अहिमयो न स्याच्छोचन्नोदिति केवलम् ।
मध्यमस्तु ततः पुत्रो वञ्चयित्वा सहोदरौ ॥ १५ ॥
केनाऽपि च्छद्मनोत्थाय जगाम निजमालयम् ।
ततः शनैः समाहूय गृहिणीं गुणशालिनीम् ॥ १६ ॥

कुद्दालहस्तो निरगाद्यत्राऽऽस्ते पन्नगः पिता । तेनाऽविदितवित्तेन चिह्नैर्निश्चित्यतत्त्वतः
स्थानमागत्य तं हन्तुं वल्मीकं लोभबुद्धितः । भार्ययोत्सार्यते मृत्स्ना स्वयं तेन च खन्यते
निखन्यमानादत्युग्रो वल्मीकादहिरुत्थितः । ततो गरलगण्डूपैर्निर्गतैरतिदुःसहैः ॥१९

गिरः स कथयाञ्चक्रे फणी फुत्कारमारुतैः ॥ २० ॥

अहिरुवाच ।

कस्त्वं किमर्थमायातः कथं वा खन्यते बिलम् ।
केन वा प्रहितो मूढ ! तदाख्याहि ममाऽग्रतः ॥ २१ ॥

पुत्र उवाच ।

पुत्रस्तेऽहं शिवोनाम हेमग्रहणकौतुकी । आगतो रात्रिलब्धस्यस्वप्नस्य तु सुविस्मितः

शिव उवाच ।

इत्थमाकर्ण्य पुत्रस्य गिरं लोकविगर्हिताम् । वक्तुमारभत स्पष्टं हसन्नुच्चैःफणी तदा

सर्प उवाच ।

यदिपुत्रोऽसि मे तूर्णं मामुन्मोचय बन्धनात् । निक्षेपार्थाय संजातं पन्नगं पूर्वजन्मनः

पुत्र उवाच ।

पितः ! कथं ते मुक्तिः स्यादित्याचक्ष्व ममाऽग्रतः ।
परित्यज्याऽखिलं लोकमागतोऽस्मि यथा निशि ॥ २५ ॥

पितोवाच ।

न तीर्थानि न दानानि न तपांसि न चाऽध्वराः । मामुन्मोचयितुं पुत्र प्रभवन्ति च सर्वथा
गीतानां सप्तमाध्यायमन्तरेण सुधामयम् । जन्तोर्जरामृत्युदुःखनिराकरणकारणम् ॥
सप्तमाध्यायिनं विप्रं मदीये श्राद्धवासरे । भोजय श्रद्धया पुत्र ! तेन मुक्तिर्न संशयः॥
अन्यानपि द्विजान्वत्स! वेदविद्याविशारदान् । सम्भोजय यथाशक्ति परमश्रद्धयान्वितः
इत्याकर्ण्य पितुर्वाक्यमुरगत्वमुपेयुषः । ते सर्वे सूनवोऽकुर्वन्यथादिष्टं ततोऽधिकम्
शङ्कुकर्णस्ततः श्रीमानुत्सृज्य तनुमौरगीम् । कृत्वा विभागं पुत्राणां दिव्यं देहमुपाददे
विभज्य दत्तं पित्राय द्रव्यं तत्कोटिसङ्ख्यया । तेन ते सूनवः सर्वे मुमुदुः साधुवृत्तयः
वापीकूपसरोयज्ञदेवप्रासादहेतवे । अन्नशालां ततोऽकुर्वन्पुत्रास्ते धर्मबुद्धयः ॥ ३३ ॥
सप्तमाध्यायजपतो मुक्तिभाजोऽभवंस्ततः । सप्तमिष्टतमं ज्ञात्वा निर्वाणार्पितदृष्टयः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतासप्तमाध्याय-
माहात्म्यंनामैकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## द्व्यशीत्यधिकशततमोऽध्यायः

### विप्रभावशर्मणस्तालीवृक्षरूपिणोऽष्टमाध्यायपाठादुद्धारवर्णन-
### मष्टमाध्यायमाहात्म्यञ्च

शिव उवाच ।

अष्टमाध्यायमाहात्म्यं शृणुवक्ष्यामि पार्वति ! । यस्य श्रवणमात्रेण परां मुदमवाप्स्यसि
आमर्दकं पुरं नाम्ना विश्रुतं दक्षिणापथि । द्विजन्मा भावशर्मेतितत्राऽऽसीद्गणिकापतिः
खादन्मांसं पिबन्मद्यं चोरयन्साधुसंपदः । रममाणः परस्त्रीभिराखेटककुतूहली ॥३॥
अत्यवाहयदत्युग्रो गरीयांसं मनोरथम् । सुहृदां विटगोष्ठ्यां च तालीफलसुधारसम्

निपीय कण्ठपर्यन्तमजीर्णेनाऽतिपीडितः। मृतः कालेन पापात्मा जातस्तालीतरुर्महान्

तस्य च्छायामुपाश्रित्य निबिडामतिशीतलाम्।
अभूतां दम्पती कौचिद्ब्रह्मराक्षसतां गतौ ॥ ६ ॥

देव्युवाच ।

किंजातीयौ किमात्मानौ किंवृत्तावित्युदीरय। कर्मणा केन वा देव ब्रह्मराक्षसता तयोः

शिव उवाच ।

वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रार्थकोविदः। सदाचारोऽभवत्कश्चिद्द्विजो नाम कुशीवलः
जाया च तस्य कुमतिनामधेया दुराशया। स सभार्यो महादानान्याददानोऽतिलोभवान्
महिषीं कालपुरुषं हयादीननुवासरम्। अप्रयच्छन्द्विजातिभ्यो दानलब्धां वराटिकाम्
कालेन दम्पती प्रेतौ ब्रह्मराक्षसरूपिणौ। पर्यटन्तौ महीमेतां क्षुत्तृषाकुलविग्रहौ ॥११॥
विश्रमतुरागत्य मूलं तालीतरोस्ततः। कथमेतन्महादुःखमावयोरपगच्छति ॥१२॥
कथं वा जायते मुक्तिर्ब्रह्मराक्षसयोनितः। इति पृष्टो गृहिण्याऽसौ ब्राह्मणः समभाषत

ब्रह्मविद्योपदेशेन विनाऽऽध्यात्मविचारणात्।
विना कर्मविधिज्ञानात्कथं मुच्येत सङ्कटात् ॥ १४ ॥

भार्योवाच ।

किंतद्ब्रह्म किमध्यात्मं किंकर्म पुरुषोत्तम!। एतावदुक्ते तत्पत्न्या यदाश्चर्यमभूच्छृणु ॥
अष्टमाध्यायश्लोकार्धश्रवणात्सतरुस्तदा। विहाय तालीरूपं तद्बभूव द्विजसत्तमः ॥

सद्यो ज्ञानविधूतात्मा विमुक्तः पापकञ्चुकात्।
तन्माहात्म्याद्विनिर्मुक्तौ दम्पती तौ बभूवतुः ॥ १७ ॥

एतावदेवमुक्तं च दैवान्निर्गत्य तन्मुखात्। ततोऽन्तरिक्षादायातं क्वणत्किङ्किणिकं शुभम्
दिवि दिव्याङ्गनावक्त्रचन्द्रमण्डलमण्डितम्। अप्सरोवदनाम्भोजभ्राम्यद्भ्रमरसङ्कुलम्
निर्मथ्यमानदुग्धाब्धिवेलाडिण्डिरपाण्डुरैः। गङ्गातरङ्गसुभगैश्चामरैरुपशोभितम् ॥
गायद्गन्धर्वसुभगं नृत्यत्सुरवधूशतम्। दिव्यं विमानमारूढौ दम्पती जग्मतुर्दिवम् ॥
अत्रत्यं वृत्तमखिलमेतद्विस्मयकारकम्। ततो लिलेख मेधावी श्लोकार्धमिदमादरात्

ययौ वाराणसीं नाम नगरीं मुक्तिदायिनीम् । आराधयितुमन्विच्छन्देवदेवं जनार्दनम्
स तत्र कर्तुमारेभे तपः परमुदारधीः । अत्रान्तरे जगन्नाथो देवदेवो जनार्दनः ॥२४॥
पृष्टो दुग्धाब्धिसुतया संयोज्य करसम्पुटम् ।
निद्रापथं विहायैव स्थीयते कथ्यतामिति ॥ २५ ॥

श्रीभगवानुवाच ।

काश्यां भागीरथीतीरे तपस्यतितरां द्विजः । भावशर्माऽतिमेधावी मद्भक्तिरसपूरितः ॥
जपन्गीताष्टमाध्यायश्लोकार्धं नियतेन्द्रियः । सन्तुष्टवानहं देवि! तदीयतपसा भृशम् ॥
चिरं विचारयन्नेव तत्तपःसदृशं फलम् । दातुमुत्कण्ठितमना वर्तेयं साम्प्रतं प्रिये ! ॥

पार्वत्युवाच ।

हरिः प्रसन्नभूतोऽपि चिन्तां प्राप यदि प्रभो! ।
भावशर्मा हरेर्भक्तः प्राप्तः किन्तत्फलं पुनः ॥ २६ ॥

श्रीमहादेव उवाच ।

ततः प्रसादमासाद्य प्रसन्नस्य मुरद्विषः । सुखमात्यन्तिकं प्राप भावशर्मा द्विजोत्तम.
लेभिरे पदवीं सर्वे तदीया अपि वंशजाः । तत्कर्मवशतो ये वै सम्प्राप्ता यातनां पुरा॥
एतदेवाऽष्टमाध्यायमाहात्म्यं किञ्चिदेव ते । कथितं मृगशावाक्षि! द्रष्टव्यं तु सदैव च
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताष्टमाध्याय-
माहात्म्यं नाम द्व्यशीत्यधिकशततमोऽध्यायः ॥१८२ ॥

---

# त्र्यशीत्यधिकशततमोऽध्यायः

## माधवब्राह्मणकथापुरस्सरं नवमाध्यायमाहात्म्यवर्णनम्

श्रीमहादेव उवाच ।

अतः परं प्रवक्ष्यामि नवमाध्यायमादरात् । संशृणुष्व स्थिरीभूय तुहिनाचलकन्यके !

अस्ति माहिष्मतीनाम नगरी नर्मदातटे ।
तत्राऽऽसीन्माधवो नाम द्विजन्मा स शिवो द्विजः ॥ २ ॥
वेदवेदाङ्गतत्त्वज्ञः कालेकालेऽतिथिप्रियः । अर्जयित्वा बहुधनं विद्ययैव विशुद्धधीः ॥
महान्तमध्वरंकर्तु समारेभे कदाचन । आलम्भनार्थमानीतश्छागः पूजितविग्रहः ॥ ४॥
वाचमूचेह सन्नुच्चैर्जगद्विस्मयकारकः । किमेतैर्बहुभिर्यागैर्विधिवद्विहितैरपि ॥ ५ ॥
विनश्वरफलैर्जन्मजरामरणहेतुभिः । एतावत्यपि मे विप्र ! दशेयं दृश्यतामिति ॥ ६ ॥
छागस्यैवं वचोऽतीव कुतूहलपरं जनाः । निशम्य विस्मयं याताः कृतमण्डपवासिनः॥
ततो बद्धाञ्जलिपुटो द्विजातिस्तिमितेक्षणः । प्रणम्य श्रद्दधानस्तमपृच्छच्छागमादरात्

द्विज उवाच ।

किंजातीयः किमात्मा त्वं किंवृत्तमिति मे वद ।
केन वा कर्मणाऽऽप्तं छागत्वमिति कारणम् ॥ ६ ॥

छाग उवाच ।

आसम्पुरा द्विजातीनामन्वये चाऽतिनिर्मले । आहर्ता क्रतुसङ्घानां वेदविद्याविशारदः
एकदा मम गेहिन्या पुत्ररोगप्रशान्तये । छागः प्रयाचितो मत्तश्चण्डिकाभक्तिनम्रया ॥
ततो निहन्यमानस्य चण्डिकामण्डपस्थले । छागस्य जननी मां तु शशाप ब्रह्मवादिनी
अशास्त्रीयाध्वना पाप मत्सुतं यज्जिघांससि। द्विजात्यधम तेन त्वमजायोनिमवाप्स्यसि
ततोऽहं प्रेत्यकालेन छागोऽभूवं द्विजोत्तम ! । निस्तीर्य चानेकविधा योनिसंतापयातनाः
जातिस्मरत्वमप्यस्ति पशुयोनिमुपेयुषः ॥ १४ ॥

विप्र उवाच ।

त्वदीयजन्मशुश्रूषाकुतूहलरसोन्मुखम् । मनःसर्वान्द्विजानेतानपि तत्कथयाऽखिलम् ॥

छाग उवाच ।

कदाचिन्मर्कटोऽभूवमाहितुण्डिकशिक्षया ॥ १६ ॥
क्रीडद्भिर्वीक्षितो डिम्भैर्नृत्यन्प्रतिगृहाङ्गणे । उदारानात्मनो दारान्विलोक्यतनयानपि ॥
क्रियापराङ्मुखो जातस्त्यक्तनर्तनसम्भ्रमः । ततोवर्तुलदण्डैश्च दुःसहैराहितुण्डिकः ॥

मामुच्चैस्ताडयाञ्चक्रे रुषा लोहितलोचनः । ततोऽहं मूर्च्छितोऽभूवं क्षरत्क्षतजसंततिः
आजिघ्रन्नन्नमुदकमगमं कालधर्मताम् । ततोऽहमासीच्छुनकः परिभ्राम्यन्गृहे गृहे ॥२०
कुक्षिम्भरिरहं मार्गे त्यक्तोच्छिष्टान्नभक्षकः । कदाचिदाविशंश्चासन्नात्मवेश्ममहानसम्
बुभुक्षितो भक्षयितुं स्थालीस्थापितमोदनम् । जिघ्रन्भूमितलं पश्यन्दिशो दश शनैर्भयात्
शंकमानो जनरवात्पार्श्वे च विलिहन्निव । ततः कदाचिदागत्य वीक्षितस्तनुजैर्निजैः ॥
जायया च जरत्याऽहं ताडितो लगुडादिभिः । ततो भग्नकटिर्यातो बहुशोणितमुद्वहन्

निर्जगाम बहिर्गेहात्कथंचिन्मूर्च्छयाऽऽकुलः ।
अङ्गेषु पूतिगन्धेषु क्रिमिगर्भेषु कालतः ॥ २५ ॥

ततः कदश्वतां प्राप्तः शौण्डिकस्य च वेश्मनि । अश्वोऽभवमहं विद्वन्मृतः कालक्रमादिह
कदाचिच्चत्वरे तेन समानीतो जनाकुले । विक्रयाय जरालीढपतयालुरदावलिः ॥२७॥
जायया द्वारकायात्रां कर्तुमुद्यतया सकृत् । मौल्येनाऽल्पीयसा क्रेतुं तुरङ्गं चेष्टमानया

जगृहेऽयं तया दाम्ना ह्यल्पेन वसुना जरन् ।
गन्तुं चारभ्य तद्वद्भिः पुत्रैरारुह्य मां समम् ॥ २६ ॥

शनैःशनैः सरस्तीरे मग्नोऽहं गाढकर्दमे । तत्राऽहं कुटिलग्रीवश्चापातं कर्दमान्तरे ॥३०॥
ताड्यमानो मुहुः पुत्रैर्लगुडोपलपाणिभिः । उत्थाप्यमानो बहुधा प्राणान्मोचितवानहम्

ततो निश्चित्य मां तत्र मृतं भग्नोद्यमाः सुताः ।
आक्रुश्य मातरं दीनां प्रावृत्य निर्ययुर्गृहम् ॥ ३२ ॥

ततः संप्रेत्य बहुना कालेन च्छागतां गतः । निस्तीर्णानिकृष्टीनोच्चयोनिसन्तापयातनः ॥

द्विज उवाच ।

किमनेन महाच्छाग ! दुःखजातेन नित्यशः । यथावदञ्जसा मह्यं सुखमात्यन्तिकं भवेत्

छाग उवाच ।

आश्चर्यं कथयिष्यामि पुनरन्यदपि द्विज ! । स्वस्थमापृच्छमानस्य तवाऽस्ति यदि कौतुकम्
अस्ति नाम्ना कुरुक्षेत्रं नगरं मोक्षदायकम् । सूर्यवंशोऽभवत्तत्र चन्द्रशर्मा महीपतिः ॥
सूर्योपरागसमये श्रद्धया परयाऽन्वितः । दानं सकालपुरुषं दातुं समुपचक्रमे ॥ ३७ ॥

समाहूय द्विजन्मानं वेदवेदाङ्गपारगम् । स्नातुं पुण्योदकैः पुण्यैर्ययौ सार्द्धं पुरोधसा॥
अथोच्चैः कालपुरुषो वाचमूचे हसन्निव ॥ ३८ ॥

कालपुरुष उवाच ।

अन्येनैव प्रगृह्णन्ति क्षेत्रे चाऽण्वपि किञ्चन । सूर्योपरागसमये कुरुक्षेत्राभिधे स्थले ॥
दानं च कालपुरुषं जिघृक्षसि कथं द्विज !। ज्ञात्वाऽपि निश्चितं सर्वमेतत्पातककारकम्
प्रवर्तसे कथं कर्तुं धनलोभान्धया धिया ॥ ४१ ॥

छाग उवाच ।

इत्थमाकर्ण्य तद्वाक्यं जगद्विस्मयकारकम् । किमनेन महादानभयेनेत्यवदद्द्विजः ॥४२
एवंविधमहादानपातकागाधवारिधिम् । जानामि तरितुं सम्यगुपायमहमेव हि ॥४३॥
ततः स्नात्वा महीपालः परिधाय च वाससी । शुचिः प्रसन्नहृदयः सितमाल्यानुलेपनः
अवलम्ब्य कराम्भोजं पार्श्ववर्तिपुरोधसः । समाययौ सेव्यमानः स तत्कालोचितैर्जनैः
समागत्य च भूपालः स प्रादात्कालपूरुषम् । यथोचितेनविधिना तस्मैभक्त्याद्विजन्मने
निर्भिद्य कालपुरुषहृदयं निर्दयोदयः । पापात्मा निर्ययौ कश्चिच्चाण्डालो रक्तलोचनः॥
किञ्च प्रापितकालस्य परनिन्दारसोत्सवे ।
निन्दा चाण्डालिका देहपार्श्वमागाद्द्विजन्मनः ॥ ४८ ॥
एतच्चाण्डालयुगलं निर्गत्यारुणलोचनम् । ततः सञ्चरितं चक्रे प्रसह्याऽङ्गं द्विजन्मनः॥
गीतानां नवमाध्यायं जपन्नेव हृदि स्थितः । कम्पमानं द्विजं किञ्चित्तूर्णींपश्यतिभूपतौ
अन्तर्निद्राणगोविन्दं कम्पमानमिवाऽम्बुधिम् ।
मरुदान्दोलनैर्विद्वान्द्विजन्मा पापसंश्रयम् ॥ ५१ ॥
ततो गीताक्षरोद्भूतैर्वैष्णवैः परिपीडितम् । पलायमानंचाण्डालयुगलं निष्फलोद्यमम्
तं निश्चकाम वेगेन द्विजातेः पार्श्ववर्ति यत् । शरीरे वर्त्तमानं च परनिन्दारसोत्सवे॥
इत्थं कलितवृत्तान्तः प्रत्यक्षं क्षितिवल्लभः । पर्यपृच्छद्द्विजन्मानं विस्मयस्मेरलोचनः॥

राजोवाच ।

कथमापदियं घोरा निस्तीर्णा महतीत्वया । कं मंत्रं जपताविप्र कस्वा संस्मरतागुरुम्

कः पुमान्का च सा योषित्कथमेतावुपस्थितौ । कथंचशान्तिमापन्नावित्युदीरयमेद्विज
द्विज उवाच ।
चाण्डालमूर्तिमासाद्य मूर्तकिल्बिषमुल्बणम् । योषिन्मूर्त्तिमयीनिन्दाद्वयमेतद्वचैम्यहम् ॥
गीताया नवमाध्यायमन्त्रमाला मया स्मृता । तन्माहात्म्यमिदंसर्वं त्वमेवहि महीपते'
छाग उवाच ।
गीताया नवमाध्यायं जपामि प्रत्यहं नृप ॥ निस्तीर्णाश्चापदस्तेन कुप्रतिग्रहसम्भवाः
अभ्यस्य नवमाध्यायं राजा तस्माद्द्विजन्मनः । तावुभावपिलेभातेपरांनिर्वृतिमुत्तमाम्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतानवमाध्यायमाहात्म्ये त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

# चतुरशीत्यधिकशततमोऽध्यायः

## गीतादशमाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।
सर्वज्ञ सर्वचैतन्य सर्वेश्वर गिरां गुरो ॥ धन्याऽस्मि शिवमान्येनदृश्यमानेन यत्त्वया
निरूपितमिदं पुण्यं नवमाध्यायवैभवम् । अनेकविस्मयस्वादुकथानकमयं मधु ॥ २ ॥
शृण्वन्त्या मम देवेश न तृप्तिर्जातु जायते । अकुण्ठाश्रवणोत्कण्ठा वर्द्धते वृषभध्वज'
असीमामहिमाम्भोधेर्गीतानां श्रुतिजीवितम् ।
तत्राऽपि दशमाध्यायं प्रधानं मुनयो जगुः ॥
तमुद्दिश्य महाध्यायमभिधेहि कथानकम् ॥ ४ ॥
शिव उवाच ।
शृणु सुश्रोणि निश्रेणीस्वर्गदुर्गस्यदुर्लभाम् । सीमामिवप्रभावाणांपावनींपरमांकथाम्
आसीत्काशीपुरे विप्रः पुण्यकीर्त्तिपरायणः ॥ ६ ॥

प्रशान्तचेता निर्मुक्तहिंसाकार्कश्यसाहसः । निवृत्तिनिरतो नित्यं जितेन्द्रियतया तथा
धीरधीरितिविख्यातो नन्दीव मयि भक्तिमान् ।
निस्तीर्णनिगमाम्भोधिः सर्वशास्त्रार्थकोविदः ॥ ८ ॥
तस्य ध्यानपरार्धीनचेतसः प्रतिगच्छतः । अन्तरात्मनि निर्मग्नमनसस्तत्त्वचक्षुषः ॥९॥
करावलम्बनं तस्य भावप्रीतया ददाम्यहम् । कदाचन चमत्कारकारकं विमना मुनिः
आचान्तःकिञ्चिन्नासाग्रेपरमानन्दमेदुराम् । दृशमासाद्यनिद्राणकरणोऽयमिवाऽऽस्थितः
उपधाय विशालाक्षि विशालां द्वारदेहलीम् । अशेतनिशिनिःशङ्कं तावलम्बेक्षणः क्षणम्
मामपृच्छद्भृङ्गिरिटिः प्रणम्य पादपङ्कजम् । अनेन विधिना केन विहितं तव दर्शनम्
तपस्तप्तं हुतं जप्तं किमनेन महात्मना । दत्ते प्रतिपदं देवो यस्य हस्तावलम्बनम् ॥१४
अयं न लभते गन्तुं कस्मादस्मात्पुराद्बहिः ।
यदृच्छया यदा काशीसीमामुल्लङ्घ्य गच्छति ॥ १५ ॥
न पश्यति तदा सर्वान्पार्श्वस्थानपि देहिनः ।
अत्र हेतुमहं ज्ञातुमिच्छामि स्वामिभाषितम् ॥ १६ ॥
अनुग्राह्योऽस्मि चेद्वक्तुं युक्तं चेत्तदुदीरय । इमं भृङ्गिरिटेः प्रश्नं समाकर्ण्याहमब्रुवान्
कदाचिदासं कैलासे पार्श्वे पुन्नागकानने । रणत्खेचरसुश्रोणिपूर्णस्तवककानने ॥
कलकण्ठकुलालापकल्लोलितदिगन्तरे । गरुत्मदादिदात्यूहसमूहस्वरसंकुले ॥ १९ ॥
भ्रमद्दारुघटीयन्त्रप्रोल्लसद्विद्रुदन्तुरे । प्रवृद्धसारणिप्रान्तकदलीकन्दलालये ॥ २० ॥
कस्तूरीहरिणोपेतकिन्नरस्वरमोहिते । रोमन्थमन्थरापाङ्गैर्मृगैः क्वाऽपि निषेविते ॥२१॥
हंसैः कीरेषु पाण्डित्यकुर्वाणैः संकुले शुकैः । निर्ह्रादिकणिर्नारन्ध्रसमीरणविलोडिते
माधवीपुष्पनिर्यासशीधुक्षीबमधुव्रते । उन्मीलत्त्विवल्लीपुष्पगुच्छसौरभनिर्भरे ॥ २३ ॥
प्रोत्फुल्लबकुलामोदमदमन्थरषट्पदे । सोमादुद्भूतपीयूषक्षालितक्षितिमण्डले ॥ २४ ॥
अध्यास्य वेदिकामेकामहं क्षणमवस्थितः । उद्दण्डशाखिसङ्घट्टस्फुटन्मन्थामुखोत्करैः
प्रकम्पिताचलच्छायो ववौ चण्डसमीरणः । पश्चादभून्महाघोषो निर्घोषितदरीतटः ॥
अवातरत्ततः कश्चित्पक्षी गगनगह्वरात् । शारदानीरदच्छायः कज्जलानामिवोच्चयः ॥

नभसामिव सङ्घातः पक्षच्छेदीव पर्वतः । अवष्टभ्य क्षितिं पद्भ्यां पक्षी मां प्रणनाम सः

आनीय पद्ममम्लानमसौ मत्पादयोरधात् ।

अथाऽसौ स्पष्टया वाचा पक्षी स्तोत्रमुदीरयत् ॥ २६ ॥

पक्ष्युवाच ।

जय देव चिदानन्द सुधासिन्धो जगत्पते ! । सदा सद्भावनासङ्गकल्लोलानन्तविग्रह ! ॥

अद्वैतवासनामत्या मलत्रयविवर्जित । जितेन्द्रियपराधीनसमाधिप्राप्यविग्रह ॥ ३१ ॥

निरुपाधेर्विनिर्मुक्तनिराकारनिरामय ! । निःसीम निरहंकार निरावरणनिर्गुण ! ॥३२

शरणागतसन्त्राणप्रवीणचरणाम्बुज ! । भीममालमहाव्यालज्वालादग्धमनोभव ! ॥

कुठारभिन्नदैत्येन्द्रगण्डूषितमहाविभो ! । त्रिपुरप्रमदाभालसिन्दूरोद्धूलिमार्जन ॥३४॥

कात्यायनीकुचाम्भोजवरकुङ्कुमचर्चित ! । नमः प्रमाणदूराय नमः प्रमतिरूपिणे ॥३५

नमश्चैतन्यनाथाय नमस्त्रैलोक्यरूपिणे । वन्दे तव पदाम्भोजं योगिप्रवरचुम्बितम् ॥

अपारभवपाथोधिपारावतरणाद्भुतम् । वाचस्पतिरपि स्तोत्रे भवतो न प्रगल्भते ॥ ३७

सहस्रवदनस्याऽपि फणीन्द्रस्य न चातुरी । त्वद्वर्णने महादेव कोऽहमल्पमतिः खगः॥

श्रीशिव उवाच ।

स्तोत्रमेतत्समाकर्ण्य कृतं तेन पतत्त्रिणा । तमवोचमहं कोऽसि कुतस्त्योऽसि विहङ्गम

हंसेन सदृशः कायो वर्णः काकेन सन्निभः ।

प्रयोजनं कमुद्दिश्य प्राप्तोऽसीह तदुच्यताम् ॥ ४० ॥

इति पक्षी मया पृष्टः प्रश्रयानतकन्धरः । जगाद श्लक्ष्णया वाचा पक्षी वाक्यविदाम्वरः

देवेश धूर्जटे विद्धि मां मरालं स्वयम्भुवः । कर्मणा येन मे कार्ष्ण्यं जातमाधुनिकं विभो!

तदाकर्णय सर्वज्ञ पृष्टं यदि तदुच्यते । मानसात्सरसः पृथ्वीं यातः प्राप्तोऽस्मिसङ्कटम्

सौराष्ट्रनगरादारात्सरसिस्फुटदम्बुजे । बालेन्दुःखण्डधवलान्मृणालकवलानहम् ॥४४

आदाय बलमाश्रित्य निरगां गगनं द्रुतम् । विहायसस्ततस्तस्मादकस्मादपतम्भुवि ॥

अथ मोहपरीतात्मा सर्वथा विकलेन्द्रियः । वेपमानवपुर्मोहात्स्पृष्टः शीतैः समीरणैः॥

प्रबुद्धः पतने हेतुमपश्यन्नात्मनस्तदा । अहो किमेतदापन्नमद्य पातः कथं मम ॥ ४७॥

कालिमा येन कायेऽस्मिन्पक्वकर्पूरपाण्डुरे ।
इत्यहं विस्मयाविष्टो यावत्कुर्वे विचारणम् ॥ ४८ ॥
तावदम्बुरुहाद्वाणीमश्रौषमहमीदृशीम् । उत्तिष्ठ हंस वक्ष्यामि कारणं पातकार्ष्ण्ययोः॥
अथोत्थाय समागत्य मया मध्ये सरोवरे । दृष्टा राजीविनी रम्या राजीवैः पञ्चभिर्युता
कारणं प्रष्टुमारेभे कार्ष्ण्यस्य पतनस्य च । अथ तत्र घनश्यामान्स्वर्णवर्णाम्बरावृतान्
चतुर्भुजान्गदाशङ्खचक्रपङ्केरुहायुधान् । किरीटहारकेयूरकुण्डलद्युतिचित्रितान् ॥५२॥
अद्राक्षमन्तरिक्षस्थान्पुरुषानयुतानि षट् । नत्वा प्रदक्षिणीकृत्य पञ्चपद्मां सरोजिनीम्
आत्मीयं पातमारभ्य पृष्टं तदखिलं मया ।

पद्मिन्युवाच ।

कलहंस ! गतोऽसि त्वं मां विलङ्घ्य विहायसा ॥ ५४ ॥
तेन पातकयोगेन पतितोऽसि महीतले । तेनैव कालिमा काये पक्षिसत्तम ! लक्ष्यते॥
भवन्तं पतितं वीक्ष्य कृपापूर्णेन चेतसा । मध्यमेनाऽमुनाऽब्जेन वदता जातसौरभम्
आघ्राय षट्पदाः षष्टिसहस्राणि दिवं ययुः । एते ये भवता दृष्टा नीलोत्पलसमत्विषः
सर्वे ते सप्तमेऽतीते जन्मन्यासन्मुनेः सुताः । अस्यैवसरसस्तीरे तेपुस्ते परमं तपः ॥
कदाचित्कामिनी काचिच्चम्पकस्तबकस्तनी । चलापाङ्गकलाकान्ततरङ्गितरसालिनी ॥
नासामुक्ताफलज्योत्स्नाचुम्बितस्मितदीधितिः ।
वीणां विन्यस्य कुचयोर्वनेऽस्मिन्मधुरं जगौ ॥ ६० ॥
गायन्त्याःस्वरमाकर्ण्य ब्राह्मणा हरिणा इव । तां समागत्य ते सर्वे सममेव व्यलोकयन्
मया दृष्टा ममैवेयमित्यूचुस्ते परस्परम् । मुष्टामुष्टि ततस्तेषां भ्रातॄणामभवद्रणः ॥६२
अन्योन्यमुष्टिनिष्पिष्टवक्षसस्त्यक्तजीविताः ।
ते भुक्त्वा निरयान्घोरान्बभूवुः सारसा भुवि ॥ ६३ ॥
तदा ते श्वापदाश्चक्रुर्दग्धा वन्येन वह्निना । ततो मातङ्गतामेत्य पथिपान्थानघातयन् ॥
वने विषोदकं पीत्वा ते ययुर्यममन्दिरम् । खरोष्ट्रकपिमार्जारजन्मान्यासाद्य च क्रमात्
ततो मधुव्रता जाता वर्तन्तेऽत्र सरोवरे । अद्य मे गन्धमाघ्राय प्रापुस्ते वैष्णवं पदम्

शृणु पक्षीन्द्र वक्ष्यामि येनमय्यस्ति वैभवम् । एतस्माज्जन्मनः पूर्वंतृतीयेजन्मनिक्षितौ
सरोजवदना नाम द्विजातेः कन्यकाऽभवम् । पातिव्रत्यैकनिरता गुरुशुश्रूषणे रता ॥
कदाचित्सारिकामेकां पाठयन्त्यविलम्बितम् ।
सारिका भव पापे त्वं पत्या शप्ताऽस्मि कुप्यता ॥ ६६ ॥
प्रेत्य सारित्वमासाद्य पातिव्रत्यप्रसादतः । मुनीनामेव सदने कन्या काचित्पुपोषमाम्
गीतानां दशमाध्यायं विभूतिरितिविश्रुतम् । प्रातः पठति विप्रोऽसावश्रौषं तमघापहम्
कालेन सारिकादेहमहं हित्वा विहङ्गम ! । दशमाध्यायमाहात्म्यादप्सराश्चाभवन्दिवि
पद्मावतीति विख्याता पद्माया दयिता सखी । कदाचनमया यान्त्याविमानेनविहायसा
एतत्सरोवरं रम्यं विलोक्य विमलाम्बुजम् । अवतीर्य जलक्रीडा यावदारभ्यते मया ॥
दुर्वासास्तावदायातो विवस्त्रा तेन वीक्षिता । तद्भयात्पद्मिनीरूपं धृतमेतन्मया स्वयम्
पद्भ्यां पद्मद्वयं चैव द्वयं हस्तद्वयेन च । मुखेन पञ्चमाम्भोजमितिपञ्चाम्बुजाऽस्म्यहम्
दृष्टा तेन मुनीन्द्रेण कोपज्वलितचक्षुषा । अनेनैव स्वरूपेण तिष्ठ पाप शतं समाः ॥७७
इतिशापं समुत्सृज्य सचैवाऽन्तर्दधेक्षणात् । विभूत्यध्यायमाहात्म्याद्वाणीमेनविलीयते
मद्विलङ्घनमात्रेण पतितोऽसि महीतले । अद्य शापनिवृत्तिर्मे तिष्ठतस्ते खगोत्तम ॥७८॥
निशामय मया गीयमानमध्यायमुत्तमम् । यस्याऽऽकर्णनमात्रेण त्वमद्येव विमोक्ष्यसे

पक्ष्युवाच ।

इत्यसौ दशमाध्यायं पपाठ श्लक्ष्णया गिरा ।
तमाकर्ण्य तया दत्तमादाय च सरोरुहम् ॥ ८१ ॥
मया समर्पितं तुभ्यं पद्मिन्या पद्ममुत्तमम् । इत्युक्त्वा स जहौ देहं तदद्भुतमिवाऽभवत्

भृङ्गिरिटिरुवाच ।

पुरातने भवे कोऽयं ब्रह्महंसोऽभवत्कथम् । तवाऽग्रतः कुतो हेतोरुत्ससर्ज कलेवरम्

श्रीशिव उवाच ।

इतिभृङ्गिरिटेर्वाक्यमाकर्ण्याऽहं तदाऽब्रवम् । द्विजवेश्मनि पूर्वस्मिञ्जन्मन्ययमजायत ॥
सुतपाइतिविख्यातो ब्रह्मचारी जितेन्द्रियः । वसन्गुरुकुले कुर्वन्वेदाध्ययनमन्वहम् ॥

गुरुशुश्रूषणं सम्यग्विदधाति च भक्तितः । शयानस्यगुरोःशय्यांनिद्रितःसपदाऽस्पृशत्
तेन पापेन तिर्यक्त्वमयं स्वर्गेऽपि लब्धवान् । पद्मयोनिमरालानां मध्ये जातस्ततो द्विजः
अस्मिञ्जन्मन्यमुष्येह पुराऽस्मल्लोकनावधि । गीतानांदशमाध्यायं नलिन्याकथितन्ततः
आकर्ण्य विहगो लेभे ब्रह्मज्ञानमनुत्तमम् । सोऽयं विप्रकुले जातो दशमाध्यायवैभवात्
जन्माभ्यासवशादस्य शिशोरपि मुखाम्बुजात् । गीतानांदशमाध्यायः समुल्लसतिसर्वदा
तदर्थपरिणामेन सर्वभूतेष्ववस्थितम् । शङ्खचक्रधरं देवमयं पश्यति सर्वदा ॥ ६१ ॥

यस्मिन्यस्मिन्यदैवाऽस्य दृष्टिः स्निग्धा शरीरिणी ।
स स मुक्तो भवेत्सर्वः सुरापो ब्रह्महाऽपि वा ॥ ६२ ॥

तद्विनाय मया विप्रः परमात्मस्वरूपिणा । इदं नगरमानीतो मुक्तिक्षेत्रं स्वभावतः ॥

अत्रत्यानां मनुष्याणां मुक्तिः करतले स्थिता ।
तेनाऽस्य दृष्टिपातेन विशेषोऽन्यो न जायते ॥ ६४ ॥

न ददामि बहिर्गन्तुमहमस्य पुरा कृतम् । दशमाध्यायमाहात्म्यात्तत्वज्ञानं सुदुर्लभम् ॥
लब्धमेनेन मुनिना जीवन्मुक्तिरियन्तथा । तेनाऽस्य चलतो हस्तं ददामि पथि गच्छतः
दशमाध्यायमहिमा भृङ्गिरिटे महानयम् । इति भृङ्गिरिटेरग्रे कथितं यत्कथानकम् ॥

तवेदमत्र कथितं सर्वपापप्रणाशनम् ।
नरो वाऽप्यथवा नारी योऽपि कोऽपि च वा पुनः ॥ ६८ ॥
अस्य श्रवणमात्रेण सर्वाश्रमफलं लभेत् ॥ ६९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतादशमाध्याय-
माहात्म्ये चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

---

# पञ्चाशीत्यधिकशततमोऽध्यायः

## विश्वरूपाभिधैकादशाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।

इतिहासोऽयमीशाने श्रेयसां साधनं परम् । आकर्ण्य करुणापूर्ण मम काङ्क्षा प्रवर्त्तते
एकादशस्य माहात्म्यमध्यायस्य कथाश्रयम् । व्यावर्णय विरूपाक्ष वक्तॄणां प्रथमं प्रभो ।

ईश्वर उवाच ।

आकर्णय कथां कान्ते ! गीतावर्णनसंश्रयाम् ।
विश्वरूपाभिधानस्य माहात्म्यमपि पावनम् ॥ ३ ॥
अध्यायस्य विशालाक्षि ! वक्तुं तावन्न शक्यते ।
सहस्राणि कथाः सन्ति तत्रैका कथ्यते मया ॥ ४ ॥

प्रणीतायास्तटे नद्या मेघङ्करमिति श्रुतम् । नगरं गरिमाधारं तुङ्गप्राकारगोपुरम् ॥५॥

विशालाश्रमशालासु स्वर्णस्तम्भविभूषितम् ।
श्रीमद्भिः सुखिभिः शान्तैः सदाचारैर्जितेन्द्रियैः ॥ ६ ॥

अधिष्ठितं जवैश्चारुशृङ्गाटकमनोहरम् । मणिस्तम्भस्फुरत्स्वर्णापर्णचत्वरशोभितम् ॥
पताकाकिङ्किणीक्वाणकदम्बककलस्वरम् । वेदाध्ययननिर्घोषवाचालितदिगन्तरम् ॥
तूर्यसङ्घोषणाकीर्णं विशालव्योममण्डलम् । पताकापल्लवोद्भूतवातनिर्जितविग्रहम् ॥
राजमार्गवरद्वारनारीमञ्जीरशिञ्जितैः । वल्लकीवेणुकैर्गीतैर्भाति वाजीन्द्रहेषितैः ॥१०॥

प्रेक्षमाणमिवाभीक्ष्णं दिक्पालानां पुरैः समम् ।
आस्ते जगत्पतिर्यत्र शार्ङ्गपाणिर्विराजितः ॥ ११ ॥

मूर्तिमत्परमं ब्रह्म जगल्लोचनजीवितम् । लक्ष्मीनयनराजीव पूजिताकारगौरवः ॥१२॥
त्रिविक्रमवपुर्मेघश्यामलः कोमलद्युतिः । श्रीवत्सवक्षाराजीववनमालाविभूषितः ॥१३॥
अनेकभूषणोपेतः सरत्नइव वारिधिः । चलत्सौदामिनीदामसान्द्रमेघसमद्युतिः ॥१४॥

तस्याऽऽस्ते मुकुटे साक्षाच्छार्ङ्गपाणिः परः पुमान् ।
तं दृष्ट्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ १५ ॥
यस्मिन्पुरे महातीर्थं विद्यते मेखलाभिधम् । यत्र स्नात्वा नरैर्नित्यं प्राप्यते वैष्णवम्पदम्
तत्र वीक्ष्य जगन्नाथं नरसिंहं कृपार्णवम् । सप्तजन्मार्जिताद्घोरान्मुच्यते दुष्कृतान्नरः
मेखलायां गणाधीशं विलोकयति यो नरः । स निस्तरति विघ्नानि दुस्तराण्यपि सर्वदा
ब्रह्मचर्यपरो दान्तो निर्ममो निरहङ्कृतिः ॥ १८ ॥
तस्मिन्मेघङ्करे कश्चिदभूद्ब्राह्मणसत्तमः । सुनन्दइतिविख्यातो वेदशास्त्रविशारदः॥१९
वशीकृतेन्द्रियग्रामो वासुदेवपरायणः । देवस्य शार्ङ्गिणः पार्श्वे गीताध्यायमिमं प्रिये!
एकादशं पठत्येष विश्वरूपप्रदर्शनम् । अध्यायस्य प्रभावेण ब्रह्मज्ञानमवाप सः ॥२१॥
परमानन्दसन्दोहस्वाद्यसम्वित्समाधिना । प्रत्यङ्मुखेन्द्रियतया निश्चलां स्थितिमीयुषा
सततं स्थीयते तेन जीवन्मुक्तेन योगिना । एकदा स महायोगी सिंहाराशिस्थिते गुरौ
गोदावरीतीर्थयात्रां विधातुमुपचक्रमे । प्रथमेऽह्नि समागत्य विरजं तीर्थमुत्तमम् ॥२४
नाभिमारभ्य तीर्थेषु स समभ्यर्च्य देवताम् ।
मज्जन्मज्जज्जगद्धात्रीं कमलां स व्यलोकयत् ॥ २५ ॥
तां सम्पूज्य महामायां सर्वकामफलप्रदाम् । तारातीर्थे ततःस्नात्वा कपिलासङ्गमेततः
अग्रतीर्थमसौ चक्रे विधाय पितृतर्पणम् । कुमारीशं शिवं नत्वा कपिलाद्वारमाययौ ॥
तत्र निर्मज्ज्य निर्धूतप्राग्जन्मान्तरदुष्कृतः । सम्पूज्य नत्वा श्रुत्वा च देवं वै मधुसूदनम्
उषित्वा तत्र तां रात्रिं प्रागात्प्रातः सह द्विजैः । नरसिंहवने तत्र तीर्थे रामस्य दीर्घिका
प्रह्लादपूजितः साक्षादास्ते यत्र नृकेसरी ॥ २८ ॥
तं दृष्ट्वा देवदेवेशं पूजयित्वा तु भक्तितः । तत्र तं दिवसं नीत्वा स ययावम्बिकापुरम् ॥
अनुग्रहेण भक्तानामम्बिका तत्र तिष्ठति । पूरयन्ती मनुष्याणां वाञ्छितान्यखिलान्यपि
पूजयित्वाऽम्बिकां भक्त्या पुष्पगन्धानुलेपनैः । उपहारैश्च विविधैः स्तोत्रैःप्रणमनैरपि
विप्रस्तस्मात्पुरा प्राप्तः कण्ठस्थानाभिधं पुरम् ।
यत्राऽऽस्ते परमाशक्तिर्महालक्ष्मीर्महाद्युतिः ॥ ३३ ॥

तामवेक्ष्य सुधाभानुभास्करद्युतिमण्डलाम् । संसारतापविच्छेदपद्मपीयूषवाहिनीम् ॥
योगिराजहृदम्भोजराजहंसनिषेविताम् । अनाहतमहानादमयीमद्वयरूपिणीम् ॥ ३५ ॥
महालक्ष्मीं भगवतीं वाञ्छितार्थप्रदायिनीम् । आराध्य भक्तिभावेनचेतसा स मुनीश्वरः
विवाहमण्डपं प्राप पुरं विप्रैः समन्वितः । पुरे तत्र प्रतिगृहं वासस्थानमयाचत ॥३७॥
न लेभे वसतिं स्थातुं गेहे कस्मिन्नपि द्विजः । दर्शितं ग्रामपालेनविशालंवासमन्दिरम्
प्रविश्य वसतिं चक्रे ब्राह्मणः सङ्गिभिःसह । ततः प्रभाते विमले सुनन्दोऽसौ द्विजोत्तमः
बहिरालोकयाञ्चक्रे वासगेहान्निजंवपुः । अध्वन्यानखिलान्यत्र जातान्काऽपि यदृच्छया
गम्यमानः समायान्तं ग्रामपालो ददर्श सः । तं बभाषे ग्रामपाल आयुष्मानसिसर्वशः

भागधेयवतां पुंसां पुण्यः पुण्यवतामसि ।
प्रभावो विद्यते वत्स कोऽपि लोकोत्तरस्त्वयि ॥ ४२ ॥

क्व प्रयाताः सहायास्ते कथं तत्सदनाद्बहिः । तत्पश्य मुनिशार्दूल कथयामिनवाऽग्रतः

किन्तु नाऽन्यं त्वया तुल्यं पश्यामीह तपस्विनम् ।
किं जानासि महामन्त्रं कां विद्यामवलम्बसे ॥ ४४ ॥
कस्य देवस्य कारुण्याच्छक्तिर्लोकोत्तरा त्वयि ।
तत्कारुण्यवशात्तिष्ठ ग्रामेऽस्मिन्ब्राह्मणोत्तम ! ॥ ४५ ॥

शुश्रूषामखिलामेव भगवंस्ते करोम्यहम् । इति सम्वासयामास तस्मिन्ग्रामे मुनीश्वरम्
परिचर्यां च तस्याऽसौ भक्त्याचक्रे दिवानिशम् । दिवसेषुप्रयातेषु सप्ताष्टसु समेयिवान्
प्रातरागत्य तस्याग्रे रुरोद भृशदुःखितः । अद्य मे भाग्यहीनस्य गुणवान्भक्तिमान्सुतः
जाज्वल्यमानदंष्ट्रेण भक्षितो निशि रक्षसा । इत्येवं रक्षकेणोक्तं तं पप्रच्छ स संयमी

क्वाऽऽस्ते स राक्षसः पुत्रो भक्षितस्ते कथं वद ॥ ४६ ॥

ग्रामपाल उवाच ।

वर्तते नगरे घोरः पुरुषादो निशाचरः ॥ ५० ॥

स खादति नरानेत्य नित्यं नगरगोचरान् । स सर्वैर्नागरैरत्र प्रार्थितः पुरुषैः पुरा ॥

रक्ष राक्षस नः सर्वान्ग्रासं ते कल्पयामहे ॥ ५१ ॥

पथिका निशि निद्रन्ति ये च तान्भुङ्क्ष्व राक्षस ! ।
एतस्मिन्सदने पान्थान्ग्रामपालप्रवेशितान् ॥ ५२ ॥
आहारं कल्पयाश्चक्रुरात्मीयप्राणगुप्तये । भवान्सुप्तो गृहेऽमुष्मिन्न धन्यैःसंयुतः परैः ॥
ते ग्रस्ताः किल चानेन त्वं मुक्तोऽसिद्विजोत्तम !। प्रभावंभवतोवेत्तिभवानेवद्विजोत्तम
मदीयतनयस्याऽद्य मित्रमेकमुपागतम् । अजानता मया सोऽपि तनयस्य प्रियः सखा
अन्यैः पान्थजनैः सार्द्धं तस्मिन्गेहे प्रवेशितः ।
श्रुत्वा तत्र प्रविष्टं तं निशीथे तनयो मम ॥ ५६ ॥
तमानेतुं गतः सोऽपि भक्षितस्तेन रक्षसा । दुःखितेन मया प्रोक्तः प्रातःसपिशिताशनः
ममाऽपि पुत्रो दुष्टात्मन्भवता निशि भक्षितः । भवज्जठरनिर्मग्नः सुतोऽसौ येन जीवति
अस्ति चैवमुपायस्ते ब्रूहि मे त्वं निशाचर ! ॥ ५९ ॥
राक्षस उवाच ।
अन्तःप्रविष्टं त्वत्पुत्रमज्ञात्वाऽहमभक्षयम् । अजानन्भक्षितःपान्थैःसहितोऽसौसुतस्तव
यथाजीवति मे कुक्षौ यथा भवति रक्षितः । तथा विहितमप्यस्ति दैवेन परमेष्ठिना ॥
गीतैकादशमाध्यायं यः पठत्यनिशं द्विजः । तत्प्रभावेण मे मुक्तिर्मृतानां पुनरुद्भवः ॥
ग्रामपाल उवाच ।
कथमेकादशाध्यायसामर्थ्यमिदमद्भुतम् । इति पृष्टो मया विप्र स बभाषे निशाचरः ॥
राक्षस उवाच ।
पुरागृध्रेणकेनाऽपिनभोमार्गेणगच्छता । अस्थिखण्डंस्वतुण्डाग्रात्पातितंक्वाऽपिवारिणि
तं जलाशयमागत्य कोऽपि ज्ञानीश्वरस्तदा । महातीर्थमिति ज्ञात्वा विदधे पितृतर्पणम्
तमूचिरे जनाः सर्वे तीर्थमेतत्कथं वद ॥ ६६ ॥
मुनिरुवाच ।
जपत्येकादशाध्यायंत्रिसन्ध्यंनियतेन्द्रियः । कृतमौनस्तुविप्रोऽसौचौरैर्व्यापादितःपथि
तस्याऽस्थिशकलं गृध्रवदनात्पतितं जले ॥ ६७ ॥
तेन तीर्थमिदं दिव्यं जातं पातकनाशनम् ॥ ६८ ॥

राक्षस उवाच ।

ततस्ते मानवाः सर्वे सस्नुस्तत्र जलाशये । निष्कल्मषतया चैवं प्रापुस्ते परमं पदम्
एकादशस्य सामर्थ्यादध्यायस्य भविष्यति । ममाऽपि मुक्तिःपान्थानांपुनरुत्थानमेवच
यो मया कश्चिदुद्गीर्णो ब्राह्मणोऽत्रैवतिष्ठति । स च एकादशाध्यायंजपतिस्मनिरन्तरम्
स तेनाध्यायमन्त्रेण सप्तवाराभिमन्त्रितम् । विधाय वारि विप्रेन्द्रः क्षिपेद्यदिममोपरि
ततो मे शापनिर्मुक्तिर्भविष्यति न संशयः ॥ ७३ ॥

ग्रामपाल उवाच ।

इति तेनाऽस्मि सन्दिष्टः समायातस्त्वदन्तिकम् ॥ ७४ ॥

विप्र उवाच ।

राक्षसः केन पापेन जातोऽसौ वद रक्षक!। यत्क्षपायां गृहेतस्मिन्नरान्खादतिनिद्रितान्

ग्रामपाल उवाच ।

अस्मिन्ग्रामे पुरा कश्चिदासीद्विप्रः कृषीवलः । एकदा शालिकेदाररक्षणे व्याकुलोद्विजः
नातिदूरे महागृध्रः पान्थमेकमभक्षयत् । तं विमोचयितुं दूराद्याभ्रक्रेऽपि तापसः ॥
भुक्त्वा पान्थं खगस्तावन्निरगादम्बराध्वना । ततः स तापसःकोपात्तम्बभाषेकृषीवलम्

तापस उवाच ।

धिक्त्वां हालिकदुर्बुद्धे कठोरमतिनिर्घृण !। कुक्षिम्भरं परत्राणविमुखं हतजीवितम् ॥
चोरैश्चदंष्ट्रिभिः सर्पैरग्निवह्निविपाम्बुभिः । गृध्रराक्षसभूतैश्च वेतालादिभिराहतान् ॥
जनानुपेक्षते शक्तः स तद्वधफलं लभेत् । न मोचयति यो विप्रं प्रभुश्चोरादिभिर्धृतम् ॥
स याति नरकं घोरं स पुनर्जायते वृकः । निहन्यमानं विपिने गृध्रव्याघ्रेणपीडितम्
मुञ्चमुञ्चेति यो वक्ति स यातिपरमांगतिम् । गवामर्थेहताव्याघ्रैर्व्याघ्रैर्दुष्टैश्चराजभिः
तेऽपि यान्ति परं विष्णोर्दुष्प्राप्यं योगिनामपि ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ८४ ॥

शरणागतसन्त्राणफलां नार्हन्ति षोडशीम् । दीनस्योपेक्षणंकृत्वा भीतस्यचशरीरिणः
पुण्यवानपि कालेन कुम्भीपाके स पच्यते । पश्यन्नपि भवान्पान्थं दुष्टगृध्रेण भक्षितम्

निवारणसमर्थोऽपिनचक्रे यन्निवारणम् । निष्कृपोऽसियतस्तस्माद्भविष्यसिनिशाचरः

ग्रामपाल उवाच ।

इमं शापं मुनेः श्रुत्वा कम्पमानकलेवरः । प्रणम्य हालिकोविप्रं बभाषे करुणम्वचः ॥

हालिक उवाच ।

अत्राऽहं क्षेत्ररक्षायां चिरं क्षिप्तेन चक्षुषा । न वेद्मि निकटं गृध्रहन्यमानमिमं नरम् ॥

तेन मेऽनुग्रहं कर्तुं कृपणस्य त्वमर्हसि ॥ ९० ॥

विप्र उवाच ।

यो वेत्त्येकादशाध्यायं जपत्यनुदिनं च यः । तेनाभिमन्त्रितं वारि यदाशिरसि तावके

पतिष्यति तदा शापात्तव मुक्तिर्भविष्यति ॥ ९२ ॥

ग्रामपाल उवाच ।

इत्युक्त्वा तापसो यातो हालिको राक्षसोऽभवत् ।

इति तद्राक्षसवचो निशम्याऽऽशु प्रधावतः ॥ ९३ ॥

उभयं कार्यमेवाऽद्य संसिद्धं कुरु तापस ! । तदागच्छ द्विजश्रेष्ठ तेनाध्यायेन मन्त्रय ॥

तीर्थोदकं स्वहस्तेन तस्य मूर्द्धनि निक्षिप ॥ ९४ ॥

महादेव उवाच ।

इतितत्प्रार्थितं तस्य श्रुत्वा च करुणाप्लुतः । तथेति सह पालेन मुनीरक्षान्तिकं ययौ

एकादशेन तेनाम्बु विश्वरूपेणमन्त्रितम् । निक्षिप्तं तस्य शिरसि तेन विप्रेण योगिना

गीताध्यायप्रभावेण शापमोक्षमवाप सः । विहाय राक्षसं देहं चतुर्बाहुस्ततोऽभवत् ॥

निर्गीर्णा ये जनास्तेन पान्थाआसन्सहस्रशः । चतुर्भुजा बभूवुस्ते शङ्खचक्रगदाधराः॥

ते विमानान्यारुरुहुस्तावदूचे स राक्षसम् ।

ग्रामपाल उवाच ।

मदीयस्तनयः कस्तं दर्शयस्व निशाचर ! ॥ ९९ ॥

महादेव उवाच ।

इत्युक्ते ग्रामपालेन दिव्यधीराह राक्षसः ॥ १०० ॥

राक्षस उवाच ।

एवं चतुर्भुजं विद्धि तमालश्यामलद्युतिम् ॥ १ ॥

माणिक्यमुकुटं दिव्यमणिकुण्डलमण्डितम् । हारहारिमहास्कन्धं स्वर्णकेयूरभूषितम्
राजीवलोचनं स्निग्धं हस्तेकृतसरोरुहम् । दिव्यं विमानमारूढं देवत्वंप्राप्तमात्मजम्

महादेव उवाच ।

इति तस्य वचः श्रुत्वा सुतं दृष्ट्वा च तादृशम् । स्वगेहं नेतुमारेभे तं जहास सुतस्ततः॥

सुत उवाच ।

कति वाराणि जातोऽसि त्वं पुत्रो मम रक्षक ! ।
पूर्वं पुत्रस्त्वदीयोऽस्मि ह्यधुना विबुधोऽस्म्यहम् ॥ १०५ ॥

यास्यामि वैष्णवं धाम ब्राह्मणस्यप्रसादतः । निशाचरोऽपि प्राप्तोऽयंपश्यदेहंचतुर्भुजम्
एकादशस्य माहात्म्याद्यातिस्वर्गसमंजनैः । विप्रादस्मात्तमध्यायमधीष्वत्वंजपानिशम्
भविष्यति न सन्देहस्तवाऽपि गतिरीदृशी । तात! तस्मात्सतां सङ्गोदुर्लभःसर्वथाजनैः

सोऽप्यत्र ते समुत्पन्नो ह्यात्मनः साधयेप्सितम् ।
किं धनैर्भोगदानैर्वा किं यज्ञैस्तपसा नु किम् ॥ १०६ ॥

किं पूर्तैर्वापरंश्रेयो विश्वरूपस्य पाठतः । तद्विष्णोः परमं रूपं तत्त्वंध्यायस्व विश्रुतम्
यत्पूर्णानन्दसन्दोहकृष्णब्रह्मास्यनिर्गतम् । कुरुक्षेत्रेऽर्जुने मित्रे तत्कैवल्यरसायनम् ॥
नृणां च भवभीतानामाधिव्याधिभयापहम् । अनेकजन्मदुःखघ्नंनान्यत्पश्यामितत्स्मर

शिव उवाच ।

इत्युक्त्वा सह तैःसर्वैर्ययौ विष्णोः परम्पदम् । तमध्यायंततो विप्राद्ग्रामपालःपपाठसः
तावुभौ तस्यमाहात्म्याज्जग्मतुर्वैष्णवंपदम् । इत्येकादशमाहात्म्यकथातुभ्यंनिरूपिता

यस्याः श्रवणमात्रेण महापातकसंक्षयः ॥ ११५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतेकादशाध्यायमाहात्म्ये सतीश्वरसम्वादे पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

# षडशीत्यधिकशततमोऽध्यायः

## राजपुत्रकथानकपुरस्सरं गीताद्वादशाध्यायमाहात्म्यवर्णनम्

महादेव उवाच ।

अस्ति कोल्हापुरं नाम नगरं दक्षिणापथे । सुखानांसदनंसाध्विसाधूनांसिद्धिसम्भवम्
पराशक्तेः परं पीठं सर्वदेवनिषेवितम् । पुराणेषु प्रसिद्धं यद्भुक्तिमुक्तिफलप्रदम् ॥ २ ॥
कोटिशस्तत्र तीर्थानि शिवलिङ्गानि कोटिशः । आस्तेरुद्रगयायत्रविशालंलोकविश्रुतम्
तुङ्गाचलमहावप्रगोपुरोल्लासितोरणम् । प्रासादशिखरै यत्र तुङ्गं च कनकध्वजम् ॥४॥
सोमकान्तिमहासौधवलभी पङ्क्तिशोभितम् ।जालरन्ध्रोद्गिरद्धूपधूमाऽऽमोदितदिवतटम्
चलत्पताकविस्तीर्णच्छायं देवालयान्वितम् ।
चतुरैः सुन्दरैः स्निग्धैः श्रीमद्भिः शुचिमानसैः ॥ ६ ॥
अधिष्ठितं सदाचारैः पुरुषैर्भूरिभूषणैः । कुरङ्गनयनाश्चन्द्रवदनाः कुटिलालकाः ॥ ७ ॥
उत्फुल्लचम्पकच्छायाः पीनतुङ्गपयोधराः । कृशमध्यानिम्ननाभिवलित्रयविराजिताः ॥
विशालजघनाश्चारुजङ्घायुग्मा वराङ्घ्रयः । वाचालमेखलादामनिक्वणन्मणिनूपुराः ॥
रणत्कङ्कणहस्ताब्जस्फुरत्करजरश्मयः । वसन्ति प्रमदा यत्र मादयन्त्यो मुनीनपि ॥
समस्तवस्तुसंयुक्तं सर्वभोगसमन्वितम् । मङ्गलैः सकलैर्युक्तं महालक्ष्मीसमन्वितम् ॥
तत्राऽगच्छत्पुमान्कश्चिद्युवा गौरः सुलोचनः ।
कम्बुकण्ठः पृथुस्कन्धो महावक्षा महाभुजः ॥ १२ ॥
समस्तलक्षणोपेतो गोचरासक्तमानसः । प्रविश्य नगरं पश्य शोभां सौधेषु सर्वतः ॥
उत्कण्ठितमना द्रष्टुं महालक्ष्मीं सुरेश्वरीम् । मणिकुण्डे कृतस्नानः सम्पन्नपितृतर्पणः
महालक्ष्मीं महामायां नत्वा तुष्टाव भक्तितः ॥ १४ ॥

राजपुत्र उवाच ।

जयत्यपारकरुणा शरण्या जगदम्बिका । कुर्वाणा जगतो जन्म पालनं क्षपणं दृशा ॥

यया शक्त्या कृतादिष्टः परमेष्ठीसृजत्यसौ। अवष्टभ्य च तांशक्तिं पालयत्यच्युतोजगत्
यया शक्त्या कृतावेशः संहरत्यखिलं हरः। तां भजे परमांशक्तिं सर्गस्थितिलयोर्जिताम्
योगिध्येयाङ्घ्रिकमलेकमलेकमलालये !। स्वभावानखिलान्स्त्वं गृह्णासीन्द्रियगोचरान्
त्वमेव कल्पनाजालं तत्कल्पं कुरुषे मनः। इच्छाज्ञानक्रियारूपा परसंवित्स्वरूपिणी॥
निष्फला निर्मला नित्या निराकारानिरञ्जना। निरन्तरा निरातङ्कानिरालम्बानिरालया
तवैवं महिमानं हि के वर्णयितुमीशते। वन्दे निर्भिन्नषट्चक्रद्वादशान्तविहारिणीम्॥
अनाहतध्वनिमयीं बिन्दुनादकलात्मिकाम्। मातस्त्वं पूर्णशीतांशुगलत्पीयूषवाहिनी॥

पुष्णासि वत्सले बालान्सनकादीन्दिगम्बरान्।
अनुस्यूता शिवा सम्विज्जाग्रत्स्वप्नसुषुप्तिषु॥ २३॥

तुरीयायां वर्त्तमाना दयामृततरङ्गिषु। ददासि प्राणिनां सर्वाः सततं ब्रह्मसम्पदः॥
संहृत्य तत्त्वसंघातं तुरीयातीतया त्वया। योगिनां विम्बतादात्म्यंदीयतेनिर्विकल्पया
परां नमामि पश्यन्ती मध्यमां वैखरीमपि। रूपाणि देवि! गृह्णासि जगत्सन्त्राणहेतवे

त्वं ब्राह्मी वैष्णवी च त्वं माहेशी च त्वमम्बिके!।
वाराहि! त्वं महालक्ष्मीर्नारसिंही त्वमैन्द्रिका॥ २७॥
त्वं कौमारी चण्डिका त्वं लक्ष्मीस्त्वं विश्वपावनी।
सावित्री त्वं जगन्माता शशिनी त्वं च रोहिणी॥ २८॥

त्वं स्वाहात्वंस्वधात्वंहित्वंसुधापरमेश्वरी। चण्डमुण्डभुजादण्डखण्डदोर्दण्डमण्डिते
रक्तबीजगलद्रक्तपानघूर्णितलोचने!। उन्मत्तमहिषग्रीवोन्मूलनप्रौढदोर्युगे!॥ ३०॥
शुम्भासुरमहादैत्यदारणायात्तविक्रमे!। अनन्तचरिते तुभ्यं नमस्त्रैलोक्यमातृके!॥३१॥

भक्तकल्पलते मह्यं प्रसीद परमेश्वरि!॥ ३२॥

शिव उवाच।

इति तेन स्तुतादेवी महालक्ष्मीस्ततःस्वयम्। निजरूपं समास्थाय पुरुषं प्रत्युवाच तम्

श्रीलक्ष्मीरुवाच।

राजपुत्र! प्रसन्नाऽहं वृणीष्व वरमुत्तमम्॥ ३४॥

राजपुत्र उवाच।

पिता मे धरणीपालो वाजिमेधं महाक्रतुम्। कुर्वाणो दैवयोगेन रोगाक्रान्तोदिवंययौ
तद्वपुस्तप्ततैलेन शोषयित्वा मया ततः ॥ ३७ ॥
स्थापितस्तत्र यागोऽसौ यथापूर्वमवर्तत ॥ ३६ ॥
अथ क्रान्तमहीचक्रो यूपे यागतुरङ्गमः। निशीथे बन्धनंछित्त्वा नीतःकेनाऽपिकुत्रचित्
अदृष्ट्वा तद्गतं क्वापि निवृत्तेषु जनेष्वहम्। आमन्त्र्य ऋत्विजः सर्वाञ्छरणंत्वामुपागतः
प्रसन्ना यदि देवि! त्वं तन्मे यागतुरंगमः। दृष्टो भवतु यागोऽसौ सम्पूर्णोजायते यथा
आनृण्यं मम तातस्य तेन राज्ञी भविष्यति। तथा कुरु जगद्धात्रि शरणागतवत्सले ॥

देव्युवाच।

मम द्वारे द्विजः सिद्धसमाधिरिति विश्रुतः। ममाऽऽज्ञयासतेसर्वंकार्यंनिष्पादयिष्यति

शिव उवाच।

इत्युक्तः श्रीमहालक्ष्म्या ततो राजकुमारकः। आजगाम मुनिः सिद्धसमाधिर्यत्रतिष्ठति
प्रणम्य तस्य पादाब्जं कृताञ्जलिरवस्थितः। तमुवाच ततोविप्रः प्रहितोऽसित्वमम्बया
त्वदीप्सितमिदं सर्वं साधयामि विलोकय ॥ ४३ ॥

शिव उवाच।

इत्युक्त्वात्रिदशान्सर्वानाचकर्षसमान्त्रिकः। ऐक्षतक्षितिपालस्यतनयोऽसौतदासुरान्
कृताञ्जलिपुटान्देवान्वेपमानकलेवरान्। अथ तानमरान्सर्वान्सम्बभाषे द्विजोत्तमः ॥

सिद्धसमाधिरुवाच।

अमुष्य राजपुत्रस्य वाजीयज्ञाय कल्पितः। नीतोऽस्ति देवराजेन क्षपायामपहृत्य सः
गीर्वाणा अश्वमेधाऽस्य समानयतमाचिरम्। अथ तस्य मुनेर्वाक्याद्देवैर्यज्ञतुरङ्गमः ॥
समर्पितस्ततस्तेन तेऽनुज्ञाता दिवौकसः। आकृष्टानमरान्दृष्ट्वा गतं लब्ध्वा तुरङ्गमम्
महीपतिसुतो नत्वा तं मुनिं वाक्यमब्रवीत् ॥ ४६ ॥

राजपुत्र उवाच।

आश्चर्यमिदमेतत्ते सामर्थ्यमृषिसत्तम !। कृतमेतत्त्वया विप्र ! त्रिदशाकर्षणं क्षणात् ॥

हस्तादाकृष्य दत्तो मे यज्ञीयोऽयं तुरङ्गमः । न किञ्चिदपरं यावद्दुष्करं यत्सुरैरपि ॥
प्रभविष्यति तत्कर्तुं भवानेव न चाऽपरः ॥ ५१ ॥
शृणु विप्र! महीपालः पितासीन्मे बृहद्रथः । प्रारब्धहयमेधोऽसौ दैवेन निधनं गतः ॥
अद्याऽपि तस्य देहोऽस्ति तप्ततैलेन शोषितः । तस्य सञ्जीवनं भूयः कर्त्तुमर्हसि सत्तम

श्रीशिव उवाच ।

इत्याकर्ण्य स्मितं कृत्वा स जगादमहामुनिः । यामस्तत्रपितायत्र तावकोयागमण्डपः
अथाऽऽगत्य समं तेन तत्र सिद्धसमाधिना । पयोऽभिमन्त्र्य विदधे तस्यप्रेतस्य मूर्द्धनि
ततः प्राप नृपः संज्ञामुत्तस्थे वै ददर्श च । स तं पप्रच्छ विप्रेन्द्रं कोऽसिधर्मेतिभूपतिः
ततो राजसुतः सर्वं भूपालाय न्यवेदयत् । स नत्वा ब्राह्मणं राजा तं पुनर्दत्तजीवितम्
बभाषे केन पुण्येन त्वयि शक्तिरलौकिकी । यथा मे जीवितं दत्तमाकृष्टाश्च दिवौकसः
यागश्चोद्धरितो विप्र येन मे तन्निरूपय ॥ ५८ ॥

श्रीशिव उवाच ।

इत्युक्तस्तेन विप्रोऽसौ जगाद श्लक्ष्णया गिरा ॥ ५९ ॥

सिद्धसमाधिरुवाच ।

गीतानां द्वादशाध्यायं जपाम्यहमतन्द्रितः । तेन शक्तिरियंराजन्ययाप्राप्तोऽसिर्जावितम्

श्रीशिव उवाच ।

एतदाकर्ण्य राजाऽसौ द्वादशाध्यायमुत्तमम् ।
पपाठ तस्माद्विप्रर्षेः सकाशाद्ब्राह्मणान्वितः ॥ ६१ ॥
तस्याऽध्यायस्यमाहात्म्यात्तेसर्वेसद्गतिंययुः । अन्येपठित्वाजीवाश्चमुक्तिमापुरहोपराम्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताद्वादशाध्यायमाहात्म्ये षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

# सप्ताशीत्यधिकशततमोऽध्यायः

## सहरिदीक्षितविप्रभार्यावृत्तं गीतात्रयोदशाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।

द्वादशाध्यायमाहात्म्यं भवता कथितं मम । ब्रूहि त्रयोदशाध्यायमाहात्म्यमतिसुन्दरम्

ईश्वर उवाच ।

शृणु त्रयोदशाध्यायमहिमाम्भोनिधिं शिवे । यदाकर्णनमात्रेण परां मुदमवाप्स्यसि॥

अस्ति दक्षिणदिग्भागे तुङ्गभद्रा महानदी । तत्तटे नगरं रम्यं नाम्ना हरिहरम्पुरम् ॥३ ॥

यत्राऽऽस्ते भगवान्देवि देवो हरिहरः स्वयम् । यस्य दर्शनमात्रेण परं कल्याणमाप्यते

तस्मिन्पुरे द्विजन्माऽऽसीद्धरिर्दीक्षितसञ्ज्ञकः । तपःस्वाध्यायनिरतःश्रोत्रियोवेदपारगः

दुराचारेति तस्यासीद्भार्या नाम्ना च कर्मणा ।

न सुष्वाप समं पत्या दुरालापा कदाचन ॥ ६ ॥

क्षणमप्यात्मसदने नचाऽऽस्तेस्वैरचारिणी । कण्ठदघ्नं द्विजद्वारैर्धयन्ती वारुणीरसम्

पतिसम्बन्धिनः सर्वांस्तर्जयन्ती पुनःपुनः । विटैः सह सदोन्मत्ता रममाणा निरन्तरम्

कदाचिद्व्याकुलं दृष्ट्वा पुरं पौरैरितस्ततः । सङ्केतगेहमकरोत्कान्तारे निर्जने स्वयम्

अथ तत्रैव सा धूर्ता रममाणा विटैः सह । निनाय सा बहून्कालान्निजयौवनगर्विता॥

अथ तस्मिन्पुरे रम्ये निवसन्त्या निरङ्कुशम् । वसन्तकालः समभूत्परश्चित्तभुवः सखा

आमूलपल्लवाकीर्णः सहकारविकारिणा । पिकानां पञ्चमालापैः पुनः सञ्जीवितः स्मरः

स्फुरच्चम्पकसौरभ्यहारकैर्मलयानिलैः । मन्दं मन्दं प्रसर्पद्भिरान्दोलितवनद्रुमः ॥१३॥

उत्फुल्लमल्लिकामोदमदिरापारणावताम् । अलीनां कलटङ्कारैः समन्ताद्रावशोभितः ॥

प्रसन्नचारुभिः स्मेरः सरोवरसुगन्धिभिः । मीलन्मरालनिवहैः सरोभिः प्रकटीकृतः ॥

घनच्छायासुखासीनहरिणार्भकधारिभिः । नीरन्ध्रपल्लवैर्नानाशाखिभिः शोभितावनिः

तस्मिन्वसन्तसमये मुदितासाभिसारिका । अपश्यज्जगदानन्ददायिनीं चन्द्रिकां निशि

चञ्चच्चकोरचञ्च्वग्रगलत्पीयूषसीकराम् । द्रवदिन्दुशिलानिर्यत्सुधानिर्झरनिर्भराम् ॥
विकासीकुसुमक्रोडसान्द्रीभूतकरोत्कराम् । उल्लासितपयोराशिकल्लोलालिङ्गिताम्बराम्
मनोभवमहासिंहकुलटाकण्ठकर्तरीम् । घनान्धकारसंदोहविदारणपटीयसीम् ॥ २० ॥
श्वेतीकृतसतीकारपरार्थहिमगर्भिणीम् । म्लानपङ्कजसङ्कोचाघूर्णामानन्ददायिनीम् ॥
चक्रवाकवधूवक्त्रकरुणाक्रोशमाश्रिणीम् । मुक्ताश्रेणीविशुद्धांशुप्रभासितदिगन्तराम्

अथ तस्यां प्रभूतायां पूरयन्त्यां दिशो दश ।
कामान्धाः कामिनो जाताः पथि सौधविहारिणः ॥ २३ ॥

अपश्यन्ती चिरान्रात्रौ निर्भिद्य भवनार्गलम् । ययौ सङ्केतभवनं निर्गत्य नगराद्बहिः
तत्र प्रियतमं कश्चित्काममोहितमानसा । अन्वेषयन्ती नाऽद्राक्षीत्कुञ्जे कुञ्जे तरौ तरौ
आकर्णयन्ती कान्तस्य मन्दालापान्पदे पदे । अभियाति ततःक्रीडन्यत्रसम्हारिनिस्वनः
चक्रवाकरवाञ्छ्रुत्वा कन्तालापभ्रमादसौ । सरोवराणिसर्वाणि पर्यटन्ती मुहुर्मुहुः ॥

कान्तभ्रान्त्या तरुतले प्रसुप्तान्हरिणोत्करान् ।
प्रबोधयन्ती सोच्छ्वासमागताऽस्मीति भाषिणी ॥ २८ ॥

आलिङ्गन्ती वनस्थाणुं जीवनेश्वरशङ्कया । तदाननभ्रमाद्भूयश्चुम्बन्तीविकचाम्बुजम्
तत्रतत्र कृतव्यर्थश्रमाऽदृष्टप्रिया स्वयम् । विललापवनेतस्मिन्मूर्च्छन्ती विविधोक्तिभिः

हा कान्त हा गुणाक्रांत मच्चैतन्यनायक ॥ ३० ॥

हेमनोहरसौभाग्यभाग्यलावण्यशेवधे !। हा पूर्णचन्द्रवदन हा सरोजायतेक्षण ॥३१ ॥
हाकान्त! तत्त्वसाहित्यविश्रामार्यसुरद्रुम । अहो कान्त नवार्कार्णकर्णकुण्डलदीधितिः
नयनानन्दनिष्यन्दी कुत्र ते मुखचन्द्रमा । यदि कोपेन कुत्राऽपि गुह्यवेषोऽत्रतिष्ठसि

प्रसादयामि त्वां कान्त ! दत्त्वा प्राणान्प्रियानपि ।
इत्युच्चैः सर्वतो दिक्षु विलपन्त्या वियोगतः ॥ ३४ ॥
तस्याः श्रुत्वा वचः कोऽपि सुप्तो व्याघ्रः प्रबुद्धवान् ।
कुर्वन्घुरघुरध्वानं पश्यन्प्रतिदिशं रुषा ॥ ३५ ॥

आस्फालयन्नखैर्भूमिंगर्जन्नाकाशगह्वरम् । पृष्ठनिर्भग्नलाङ्गूलं द्रुतमुत्थाय चाकरोत् ॥

गतो व्याघ्रः समुत्पत्य यत्राऽऽस्ते साऽभिसारिका ।
अथ साऽपि तमायान्तमालोक्य पतिशङ्कया ॥ ३७ ॥

निर्जगाम पुरःस्थातुं प्रेमनिर्भरमानसा । ततस्तस्य नखक्रीडाक्रूरतान्धीकृता सती ॥
जहौ प्रियवपुःशङ्कां श्रुत्वा गर्जितमूर्जितम् । व्याघ्रोऽपि पातयामास ततो नखशिखामुखैः

तमुवाचाऽथ क्रोशन्ती दीनसौहृदया गिरा ।
तथाविधापि सा नारी भ्रान्तिमुत्सृज्य सत्वरम् ॥ ४० ॥

व्याघ्रत्वं तु कुतोहेतोर्मां निहन्तुमिहागतः । इदं सर्वं समाख्याहि यतस्त्वं हन्तुमिच्छसि
इतितस्या वचः श्रुत्वा शार्दूलश्चण्डविक्रमः । क्षणं विहाय तद्ग्रासमुवाच प्रहसन्निव ॥
मलापहा नदी नाम्ना देशे तिष्ठति दक्षिणे । नगरीमुनिपर्णेति तस्या रोधसि वर्तते ॥

तत्राऽऽस्ते भगवान्साक्षात्पञ्चलिङ्गो महेश्वरः ।
तस्यां पुर्यामहं विप्रपुत्रो भूत्वा स्थितस्ततः ॥ ४४ ॥

अयाज्यान्याजयन्नश्नन्नेकोद्दिष्टे नदीतटे । वेदपाठफलं शश्वद्विक्रीणन्धनकाङ्क्षया ॥
भिक्षुकानपरांल्लोभात्तिरस्कुर्वन्दुरुक्तिभिः । अदेयद्रविणं गृह्णन्नदत्तमनिशं दिनम् ॥४६॥
छलयन्सकलाँल्लोकान्क्षणग्रहणकौतुकात् । ततः कतिपये काले जठरत्वमुपागतः ॥४७
वलीपलितवानन्धः प्रपतन्प्रस्खलद्गतिः । पतद्दन्तोऽभवं भूयः प्रतिग्रहपरायणः ॥४८॥
हस्ते गृहीतदर्भोऽहमगमं तीर्थसन्निधिम् । धनग्रहणलोभेन भ्रमन्पर्वसु पर्वसु ॥ ४९ ॥
ततोऽहं शिथिलाङ्गःसन्कश्चिद्भूनिर्जरालयम् । गतवान्याचितंभोक्तुं दष्टो मध्ये पदे शुना
अपतन्मूर्च्छितोभूत्वा ततः क्षितितलेक्षणात् । ततोऽहं गलितप्राणो व्याघ्रयोनिमुपागतः
अत्र तिष्ठामि कान्तारे पूर्वपापमनुस्मरन् । न भक्षयामि धर्मिष्ठान्मुनीन्साधुजनान्सतीः
किंतु पापान्दुराचारानसतीर्भक्षयाम्यहम् । अतोऽसतित्वं तत्त्वेन ममैव कवलायसे ॥
इत्युक्त्वा स्वैर्नखैःक्रूरैस्तां विभज्याऽङ्गखण्डशः । अथतांभक्षितांतेन पापदेहमुपाश्रिताम्
यमस्य किङ्करा निन्युःसद्यः संयमनीं पुरीम् । यमादेशेन तत्रापि पातयामासुराशुताम्
विण्मूत्ररक्तपूर्णेषु घोरकुण्डेष्वनेकधा । कल्पकोटिषु जातासु तस्मादादाय तां मुहुः॥
रौरवे स्थापयामासुर्मन्वन्तरशतावधि । ततोऽप्याकृष्य तां दीनांरुदतीं सर्वतोमुखीम्

मुक्तकेशां भग्नगात्रां चिक्षिपुर्दहनानने । एवं पापापरा घोरा भुक्त्वा नरकयातनाम् ॥
इह जाता महापापात्पुनः श्वपचयोनिषु । ततः श्वपचगेहेऽपि वर्द्धमाना दिने दिने ॥
पूर्वजन्मवशेनैव तथैवाऽऽसीद्यथा पुरा । ततः कतिपये काले पुनः स्वं भवनं ययौ ॥
यत्राऽऽस्ते जृम्भकादेवी शिवस्याऽन्तःपुरेश्वरी ।
तत्राऽपश्यद्द्विजन्मानं वासुदेवाभिधं शुचिम् ॥ ६१ ॥
गीतात्रयोदशाध्यायमुद्गिरन्तमनारतम् । ततस्तच्छ्रवणादेव मुक्ता श्वपचविग्रहात् ॥
दिव्यं देहं समासाद्य जगाम त्रिदशालयम् ॥ ६३ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतात्रयोदशाध्यायमाहात्म्ये सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## अष्टाशीत्यधिकशततमोऽध्यायः

### शौर्यवर्मविक्रमवेतालराज्ञोःकथापुरस्सरं गीताचतुर्दशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

अतःपरं प्रवक्ष्यामि भवानि भवमुक्तये । गीताचतुर्दशाध्यायमवधारय सुस्मिते ॥१ ॥
मेदिन्यां यत्किल स्थूलमस्ति काश्मीरमण्डलम् ।
राजधानी सरस्वत्या आस्ते चैव मनोहरा ॥ २ ॥
यामधिष्ठाय वाग्देवी ब्रह्मलोकं प्रयच्छति । हंसैस्समुह्यमानाऽपि सावित्र्याप्रहतैरपि ॥
सरस्वतीपदाम्भोजसेवामाश्रित्यकुङ्कुमैः । यत्र गौरवयन्त्याशा हंसाः पक्षपुटोद्भवैः ॥
निरन्तरं तया चैव नृणां संस्कृतभाषिणाम् । सुपर्वाणमयीभाषा निमेषेणोपलभ्यते ॥
प्रातर्गृहाङ्गणोद्भूतैर्यत्र कुङ्कुमपांसुलैः । सर्वतोऽरुणितच्छायं शशाङ्करविमण्डलम् ॥
तत्राऽऽसीत्तेजसांराशिःशौर्यवर्मानरेश्वरः । उद्यदुज्ज्वलबाणौघखण्डितारातिमण्डलः

अभूच्च सिंहलद्वीपे राजा सिंहपराक्रमः । नाम्ना विक्रमवेतालः कलानामपि शेवधिः ॥
उभौपरस्परं मैत्रीं वर्द्धयाञ्चक्रतुः क्रमात् । तत्तद्देशसमुत्पन्नैरपूर्वैः प्रचुरोत्करैः ॥ ६ ॥
एकदा प्रहितं प्रेम्णा प्रभूतं शौर्यवर्मणा । राजा विक्रमवेतालो विलोक्य शुनकीद्वयम्
मत्तमातङ्गतुरगमणिभूषणचामरम् । प्रेषयामास मित्राय प्रभूतं शौर्यवर्मणे ॥ ११ ॥
एकदा शिबिकारूढश्चारुचामरवीजितः । सुवर्णशृङ्खलारूढं वाद्यडिण्डिमडम्बरम् ॥
शुनीयुगलमादाय मृगयाकौतुकोत्सुकः । राजा जगाम बाह्यालीं समं राजकुमारकैः॥
पणबन्धविधानेन समुपेतं शशामिषम् । तत्र राजकुमाराणां महान्कोलाहलोऽभवत्॥
ततः समानवयसा केनचिद्राजसूनुना । बहुमूल्यं पणं कृत्वा राजा चिक्रीड कौतुकी॥

ततोऽवतार्य दोलाया विरुदावलिगर्विताम् ।
धावतः शशकस्योच्चैः पृष्ठे मुञ्चन्नृपःशुनीम् ॥ १६ ॥

मुमोच राजपुत्रोऽपि प्रेमपात्रं महाभुजः । विरराम शुनीमुच्चैः सङ्कीर्त्य विरुदावलीम्
अलक्ष्यमाणवेगेऽस्मिञ्छुनीयुगलकेभृशम् । धावत्युत्थितमेवासीत्पश्यतांसर्वभूभृताम्
पपात गर्ते महति शशकोऽतिश्रमादसौ । पतितोऽपि शुनीवश्यो नाऽभवच्छशशावकः
ततः शनैः समुत्थाय धावन्नाक्रम्य रोषतः । जगृहे राजशुन्याऽसौ शशकः फेनमुद्वमन्

ततः कथञ्चिदुत्प्लुत्य गच्छन्विस्खलयञ्छशः ।
राजपुत्रशुनक्याऽसौ गृहीतः कन्धरातटे ॥ २१ ॥
जितमस्माभिरत्यर्थमिति सञ्जल्पतां नृणाम् ।
कोलाहले शङ्कितायाः शुन्या निर्गतवान्मुखात् ॥ २२ ॥

ततो दंष्ट्राव्रणश्रेणीक्षरद्रुधिरधारकः । काऽपिमर्मरभूभागे निलीय स्थितवाञ्छशः॥२३॥
जिघ्रन्त्याराजशुन्याऽसौ भूभागंघनरोषया । दृष्टमात्रः परित्रस्तो हस्तमात्रं ततोऽगमत्
यत्र कर्पूरकदलीक्रोडव्याघ्रदरीतलः । चोलीकपोलफलकांश्चुम्बन्वाति समीरणः ॥
उद्भिन्नकेतकीकोशरजोमुकुलितेक्षणः । विस्रब्धाहरिणा यत्र च्छायां तां परितन्वतः ॥
नारिकेलफलैर्यत्र स्वयं निपतितैरधः । अपिचूतफलैस्तृप्ताः पक्वैः शाखामृगाअपि ॥
अपि केसरिणो यत्र खेलन्ति कलभैः समम् । फणिनः केकिबर्हेषु निर्विशङ्कं विशन्तिच

यत्राश्रमान्तरे विप्रो वत्सनामाजितेन्द्रियः। शान्तश्चतुर्दशाध्यायं जपन्नास्तेनिरन्तरम्
तत्र तच्छिष्यपादाब्जप्रक्षालनजलैः कृते। कर्दमे न्यपतद्गत्वा जीवशेषो मुहुःश्वसन् ॥
ततः कर्दमसंस्पर्शमात्रनिस्तीर्णसंसृतिः। दिव्यं विमानमारुह्य निर्ययौ शशको दिवम्
ततः शुन्यपि लिप्ताङ्गी स्तोकैःकर्दमबिन्दुभिः। क्षुत्पिपासार्तिरहिताशुनीरूपंविहायसा
ततो दिव्याङ्गना रम्यं गन्धर्वैरुपशोभितम्। दिव्यं विमानमारुह्य शुन्यपि त्रिदिवंययौ

ततो जहास मेधावी शिष्यो नाम्ना स्वकन्धरः।
विचार्य विस्मितः पूर्वजन्मवैरस्य कारणम् ॥ ३४ ॥

राजाऽपि पर्यपृच्छत्तं विस्मयस्मेरलोचनः। प्रणम्य परया भक्त्या विनयैकपयोनिधिः
कथां कथय मे विप्र!हीनयोनिनिषेवितौ। अज्ञौ यौ जग्मतुः स्वर्गं शुनीशशकशावकौ

शिष्य उवाच।

वत्सनामाऽऽद्विजन्माऽऽस्तेवनेमुष्मिञ्जितेन्द्रियः।चतुर्दशंतुह्यध्यायंगीतानांसर्वदाजपन्
शिष्योऽहं तस्य भूपाल! ब्रह्मविद्याविशारदः। गीताचतुर्दशाध्यायं जपामि प्रत्यहं नृप
मदीयचरणाम्भोजप्रक्षालनजले लुठन्। शशस्त्रिदिवमापन्नः शुनक्या सह भूपते! ॥३६॥

राजोवाच।

हेतुना केन कथय हसितं च द्विजोत्तम!। अतः किमपि साकूतं मन्यमानेन सादरम्

शिष्य उवाच।

महाराष्ट्रे तिनगरं नाम्ना प्रत्युदकं महत्। तत्रासीद्ब्राह्मणो नाम्ना केशवः कितवाग्रणीः
विलोभना भवत्तस्य जाया स्वैरविहारिणी। तेन सा हन्यतेक्रोधाद्वैरंसञ्चिन्त्यजन्मनः
ततः स्त्रीवधपापेन शशको जायते द्विजः। किल्बिषाच्छुनकी साऽपि जाता वञ्चनजन्मनः
पूर्वेणजन्मनाऽऽभ्यस्तंवैरंविस्मरतो नहि। आसेदिवद्भ्यांबहुधा योन्यन्तरमपि क्वचित्
इत्याकलय्य सकलंभूपालः श्रद्धयाऽन्वितः। गीतामभ्यस्य सकलामवाप परमां गतिम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताचतुर्दशाध्यायमाहात्म्ये अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

# एकोननवत्यधिकशततमोऽध्यायः

## गौड़ाधिपतिनरसिंहवृत्तपुरस्सरं गीतापञ्चदशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

प्रवक्ष्यामि विशालाक्षि तुहिनाचलकन्यके !। गीतापञ्चदशाध्यायमाहात्म्यमवधारय ॥

कृपालुर्नरसिंहोऽभून्नाम्ना गौडेषु भूपतिः ।
यस्याऽसिधारया सङ्ख्ये दैवसङ्घाश्च धिवकृताः ॥ २ ॥

यदीयमत्तमातङ्गदानधाराजलैरिला । निदाघेऽपि च सेहे तां रविसन्तापवेदनाम् ॥३॥

संक्रन्दनपरित्रस्ता यदीयशरणं गताः । रेजिरे करिणो मत्ताश्चलन्तः पर्वता इव ॥४॥

मत्तमातङ्गचीत्कारप्रतिस्वनमिवादरात् । यस्य गोपायतः शैला व्याहरन्ति कृपावतः॥

यदीय गावत्तुरगक्षुरसङ्घातजर्जरम् । नाभूच्चित्रं कथङ्कारं गतखण्डं धरातलम् ॥ ६ ॥

यस्मिन्वृत्रहणो मित्रे समुद्धरतिमेदिनीम् । पुनरुज्ज्वलयाञ्चक्रे महाभाष्यं फणीश्वरः

तस्याऽऽसीत्सैनिको धीमाञ्छस्त्रशास्त्रकलानिधिः ।
नाम्ना सरभभेरुण्डः प्रचण्डभुजमण्डलः ॥ ८ ॥

भाण्डारेण तुरङ्गैश्च भटैर्वीररसोद्भवैः । समानपत्रभूपालदुर्गैरत्यन्तदुर्गमैः ॥ ९ ॥

स कदाचित्स्वयंराज्यं कर्तुं पापे दधे मनः । निहत्य वसुधापालं बलात्साकं कुमारकैः

कर्तुं व्यवस्य दिवसैः स्वल्पैरित्थं चिकीर्षया । विषूचिकामयादाशु परासुः समजायत

कालेनाऽल्पीयसा प्रेत्य पापात्मा तेन कर्मणा ।
तेजस्वी तुरगो जातः सिन्धुदेशे कृशोदरि ! ॥ १२ ॥

मूलेन बहुना क्रीत्वा हयतत्त्वविदा ततः । बहुयत्नवतानीतः केनचिद्वैश्यसूनुना ॥१३

राजापिपौत्रनप्त्राद्यैस्तस्यैव मरणात्पदम् । कालेन वृद्धतां प्राप्तःस्वराज्यंचापिपालयन्

सवैश्यसूनुस्तं चाश्वंराज्ञे दातुंसमागतः । राज्ञो द्वारिस्थितस्तत्र प्रतीक्षंस्तत्समागमम्

ज्ञातपूर्वोऽपि वैश्योऽसौ प्रतीहारेण दर्शितः । किमर्थं ब्रूहि राज्ञेति पृष्टः स्पष्टमभाषत॥

देव त्रिजगतीरत्नमितिमत्वा तुरङ्गमः । मायाऽनीयत मूल्येन क्रीतोऽसौ साधुलक्षणः॥
ततोऽवलोक्य वक्त्राणि भूपालः पार्श्ववर्तिनाम् ।
समादिदेश वणिजमश्वोऽत्राऽऽनीयतामिति ॥ १८ ॥
शिरांसि धूनयन्नृणामश्वलक्षणवेदिनाम् । शूराणामपि चेतांसि मुहुरुत्साहयन्महान्॥
अखण्डमेदिनीवेगबहुसङ्क्रमणार्जितम् । लालाफेनच्छलेनासौवमच्छुभ्रतरं यशः॥२०॥
उच्चैःश्रवस्तुलां भेजे गुणसाम्येन तत्त्वतः । विवृण्वन्निति तेजस्वी ह्रियेवनतकन्धरः ॥
चामरैरिन्दुधवलैर्वीज्यमानो निरन्तरम् ।
दुग्धाम्भोनिधिलोलैस्तैःश्वासैरुच्चैःश्रवा इव ॥ २२ ॥
नीलातपत्रयुगलं ग्रदच्छायतुलश्रिया । बिभ्राणो वारिदालीढहिमाद्रिशिखरश्रियम् ॥
मेदिनीमण्डलस्पर्शसंक्रान्तमिव पावकम् । मुहुरुद्धारयन्धुन्वन्बन्धुरं कन्धरातटम् ॥
दारयन्वैरिणः सर्वान्व्याहरंश्च जयश्रियम् । हेषारवेण गुरुणा दिक्षु प्रख्यापयन्यशः ॥
सत्त्वस्य राशिरत्युच्चैर्गतीनामिवशेवधिः । रूपस्य निलयं साक्षाल्लक्षणानां पयोनिधिः
आनीतो वणिजा वाजी राज्ञा च समदृश्यत । बहुधा वर्णितोऽमात्यैरश्वलक्षणवेदिभिः
यथेष्टं वणिजोर्दाणं स्वर्णं दत्त्वा महीपतिः । जग्राह तुरगं वेगादसीमानन्दनिर्भरः ॥
ततोऽश्वपालमाहूयय्त्नतस्तं निरूप्य च । विसर्जितसभालोको गृहान्तरमगान्नृपः॥२६
अनेकधा समाकृष्टो महीपालं रणाङ्गणे । शस्त्रव्रणकिणश्रेणीभूषणं सत्त्वसन्निभम्॥
एकदा मृगयां खेलन्कुतूहलरसात्मना । तमारुह्य महीपालो वनं प्रति विवेश ह ॥३१॥
विसृज्य सैनिकान्पृष्ठे धावतः परितोऽखिलान् ।
आकृष्यमाणो हरिणैः पिपासाकुलितोऽभवत् ॥ ३२ ॥
ततउत्तीर्य तुरगाज्जलमन्वेषयन्नृपः । बद्ध्वाश्वं तरुशाखायामारुरोह शिलां नृपः ॥३३॥
गीतापञ्चदशाध्यायश्लोकार्द्धं लिखितं ततः । पातितं मरुता तत्र यत्र खण्डे व्यलोकयत्
पत्रं वाचयतो राज्ञः श्रुत्वा गीताक्षरावलीम् । ततो मुक्तिपदं लेभे तुरगस्त्वरयाऽपतत्
ततो ग्रन्थिं समाच्छिद्य पर्याणमवतार्यच । उत्थाप्यमानस्तुरगो राज्ञा नोत्थितवान्मृतः
ततः सरभभेरुण्डोनृपमाभाष्य सुस्वरम् । दिव्यं विमानमारुह्य जगाम त्रिदशालयम्॥

ततो गिरिं समारुह्य ददर्शाश्रममुत्तमम् । पुन्नागकदलीचूतनालिकेरसमन्वितम् ॥३८॥
द्राक्षेक्षुवाटिकापूगनागकेसरचम्पकम् । खेलत्करभसारङ्गंनृत्यत्केकिकुलं नृपः ॥ ३९ ॥
प्रणिपत्य द्विजन्मानमुटजाभ्यन्तरस्थितम् । पप्रच्छ परया भक्त्या मुक्तसंसारवासनात्
तुरगोनिरगात्स्वर्गं हेतुना केन मे वद । इत्याकर्ण्य वचो राज्ञो द्विजन्मा वाचमूचिवान्
त्रिकालदर्शी मन्त्रज्ञो विष्णुशर्मा महत्तरः ॥ ४२ ॥

द्विजन्मोवाच ।

आसीत्सेनापतिः पूर्वं भेरुण्डस्तवभूपते ॥ त्वां निहत्य समं पुत्रैः कर्तुं राज्यं समुद्यतः
तावद्विषूचिकारोगात्कालधर्ममवाप्तवान् । कालेन बहुना प्रेत्य तत्वात्तु पारगोऽभवत्
अथ पञ्चदशाध्यायश्लोकार्द्धं लिखितं क्वचित् ।
ततो वाचयतः श्रुत्वा निरगात्तुरगो दिवम् ॥ ४५ ॥
ततः समागतैस्तत्र परिवारजनैर्वृतः । प्रणिपत्य द्विजन्मानं हृष्टरोमा विनिर्गतः ॥४६॥
पत्रं तदेव लिखितं गीतापञ्चदशाक्षरम् । वाचयन्स महीपालो हर्षसम्फुल्ललोचनः ॥
अभिषिच्य निजं पुत्रं मन्त्रविन्मन्त्रिभिः समम् । सिंहासने सिंहबलं मुक्तिमाप विशुद्धधीः
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतापुरुषोत्तम-
योगापरपञ्चदशाध्यायमाहात्म्ये एकोननवत्यधिकशततमोऽध्यायः ॥१८९॥

---

## नवत्यधिकशततमोऽध्यायः

### सौराष्ट्रिकराज्ञःखड्गबाहोर्विप्रमुखात्षोडशाध्यायोपदेशेनोद्धारपुरस्सरं गीताषोडशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

अतः परं प्रवक्ष्यामि षोडशाध्यायगौरवम् । आकर्णयकुरङ्गाक्षि हर्षोत्कण्ठप्रवर्षिणि !

अस्ति सौराष्ट्रिकं नाम्ना पुरं गुर्जरमण्डले । तत्रासीत्खड्गबाहुश्च राजा चन्द्र इवाऽपरः
यदीयकुसुमामोदमालासुरभितोदरे । वारां निधौ हरिः स्वास्थ्यादशेत सह पद्मया ॥
यदीयकीर्त्तिकर्पूरकणा भान्ति नभोऽङ्गणे । कीर्णावेरिकृतश्वासमारुतैस्तारकाछलात्

यस्याऽसिधारा तीर्थेषु स्नाता वै रिपुभूभुजः ।
व्यावर्त्तन्ते दिवोऽद्यापि स्वर्गस्त्रीवाग्विमोहिताः ॥ ५ ॥

तस्याऽरिमर्दनो नाम मदहस्ती मदोद्धुरः । मदाम्बुधारासलिले गुञ्जद्भ्रमरमण्डलः ॥
कपोलफलकोत्तीर्णमदधाराजलाविलः । बभौ यो निर्झरोद्गारैरञ्जनाद्रिरिवोच्चकैः ॥७॥

यस्याङ्गेषु व्यराजन्त चामराश्चन्द्रिकोज्ज्वलाः ।
किरणाइव शीतांशोः पतिताः काननोदरे ॥ ८ ॥
सिन्दूरपांसुपटलीराजत्कुम्भस्थलो बभौ ।
यः सन्ध्यावारिदव्यामं वियत्खण्डमिव स्थितम् ॥ ६ ॥

सकदाचिन्मोचयित्वाश्रृङ्खलान्निगडानपि । भङ्क्त्वालौहं दृढं स्तम्भंप्रह्महसह्यनिशिनिर्गतः
आधोरणगणान्सर्वान्पार्ष्णिविस्फूर्जदङ्कुशान् । क्रोधादवगणय्यैव निजशालां बभञ्जसः

तीक्ष्णाङ्कुशमुखैर्विष्वग्घन्यमानोऽपि वैणवैः ।
दण्डैस्तु त्रासयामासुः सादिनो न मनागपि ॥ १२ ॥

ततो राजा समागत्य निशम्येदं कुतूहलम् । तत्र हस्तिकलाभिज्ञैः समं राजकुमारकैः॥
अदृश्यत समागत्य राज्ञा दन्तावलो बली । मोहयन्नुद्भटाटोपो हृताट्टालिकमालिकः ॥
ददृशुस्तं महाभीमं पौरा दूरतरं स्थिताः । गोपायन्तः शिशून्भीत्या निवृत्तान्यकुतूहलाः
रुद्धेषु तत्र मार्गेषु पलायनपरैर्जनैः । वासितेषु तदीयोग्रदानधाराम्बुसीकरैः ॥ १६ ॥

स्नात्वा तेनाऽध्वना यातः सरसः कश्चन द्विजः ।
गीतानां षोडशाध्यायश्लोकान्कतिपयाञ्जपन् ॥ १७ ॥

निषिद्ध्यमानो बहुधा पौरैराधोरणैरपि । अमन्यमानः करिणो भीतांश्चलितवांस्ततः॥
फूत्कारेणसञ्जातृप्यञ्जनानिवपरिमर्दयन् । स्पृशन्दानाम्बुजंतस्य स्वस्तिमान्निर्गतोद्विजः
ततो महानभूत्तत्र विस्मयो वागगोचरः । मानसे भूमिपालस्य पौराणामपि पश्यताम्

समाहूय ततो राजा फुल्लराजीवलोचनः । तमपृच्छद्द्विजं वाहादवतीर्य प्रणम्य च ॥

राजोवाच ।

अलौकिकमिदं विप्र ! त्वयाऽऽद्याऽऽचरितं महत् ।
कृतान्तकल्पादेतस्मात्कथं निर्यातवान्गजात् ॥ २२ ॥
कमर्चयसि गीर्वाणं कं मन्त्रं जपसि प्रभो ! ।
का च सिद्धिस्तवाऽस्तीति द्विजन्मन्समुदीरय ॥ २३ ॥

द्विज उवाच ।

गीतायाः षोडशाध्यायश्लोकान्कतिपयानहम् । जपामि प्रत्यहं भूप! तेनैताः सर्वसिद्धयः
ततो विहाय द्विरदं कौतूहलरसं नृपः । आजगाम द्विजन्मानमादाय निजमन्दिरम् ॥
शुभं मुहूर्तमन्वीक्ष्य तोषयित्वा द्विजोत्तमम् । सुवर्णैर्लक्षसङ्ख्याकैर्गीतामन्त्रमुपाददे॥
गीतायाःषोडशाध्यायश्लोकान्कतिपयानपि । समभ्यस्य ततोराजासत्कारेणसकौतुकः
अथैकदा विनिर्गत्य वाह्यालीं सह सैनिकैः । तमेवामोचयद्राजा मत्तमाधोरणाद्गजम्
विस्पष्टमितिवाक्यानि राज्यसौख्यममानयन् । तृणवज्जीवितं राजागजस्याग्रेऽविशत्ततः
आदायगण्डफलकं मदपङ्क्तिनिरङ्कुशम् । आयर्यौमन्त्रिविश्वासान्नृपः साहसिकाग्रणीः
राहोरिवमुखादिन्दुः कालास्यादिव धार्मिकः । साधुःखलस्य वदनान्नृपोनिरगमद्गजात्
आगत्य नगरं राजा त्वभिषिच्य कुमारकम् ।
गीतायाः षोडशाध्यायादवाप परमां गतिम् ॥ ३२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताषोडशाध्यायमाहात्म्ये नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

---

# एकनवत्यधिकशततमोऽध्यायः

## मालवभूपतिपुत्रभृत्यस्यमत्तगजमारणेनपुनर्गजप्राप्तिः सप्तदशाध्यायजपप्रभावान्मुक्तिवर्णनम्

ईश्वर उवाच ।

षोडशाध्यायसामर्थ्यं कथितं शृणु साम्प्रतम् ।
स्पष्टं सप्तदशाध्यायमहिमाम्भोनिधिं शिवे ! ॥ १ ॥

खड्गबाहोः सुतस्यैवभृत्यो दुःशासनोऽभवत् । तंगजं धर्तुमागत्य गजात्प्राप्तो यमक्षयम्
तद्वासनानिबद्धात्मा गजयोनिमवाप्य च । गीतासप्तदशाध्यायं श्रुत्वा प्राप्तः परं पदम्

देव्युवाच ।

दुःशासनो गजत्वं च प्राप्य मुक्तइति श्रुतम् । तदेव वद कल्याण विस्तरेण मम प्रभो!

ईश्वर उवाच ।

स्थितः कश्चन दुर्मेधा मण्डलीककुमारकैः । बहुमूल्यं पणं कृत्वा गजमारूढवांस्ततः ॥
गत्वा कतिपयान्येव पदानि जनवारितः । नाम्ना दुःशासनो मूढः प्रौढवाक्यमुदीरयन्

ततो निशम्य तद्वाक्यं क्रोधान्धः सिन्धुरोऽभवत् ।
न्यपतच्च स्खलत्पादः कम्पमानकुमारकैः ॥ ७ ॥

ततो निपतितं किञ्चिदुच्छ्वसन्तं गजोरुषा । ऊर्द्ध्वमुन्मूलयाञ्चक्रे कृतान्तकनिरङ्कुशः

गतासोरपि रोषेण तस्यास्थ्नां च गणं गजः ।
विकीर्णवान्पृथक्कृत्वा मत्तो दन्तावलस्ततः ॥ ६ ॥

ततः कालेन सम्प्रेत्य गजयोनिमवाप सः । महान्तं कालमनयत्सिंहलद्वीपभूपतेः ॥१०
मैत्री गरीयसी सार्द्धं खड्गबाहुमहीभुजा । ततोऽयं जलमार्गेण प्रापितो वारुणोमतः ॥

जयदेवेन खड्गबाहोः प्रीत्या नीतो महीभुजा ।
जातिं स्मरन्स्वकीयां स पश्यन्बन्धून्सहोदरान् ॥ १२ ॥

दुःखेन महतास्तोकान्दिवसानत्यवाहयत् । उवास खड्गबाहोश्च गृहे तूष्णीमनिर्दिशन्
स कदाचित्तुसन्तुष्टः समस्याश्लोकपूरणे । कस्मैचित्कवये प्रादात्तमुपायनहस्तिनम् ॥
तेन तेन कविना रोगोपद्रवभीरुणा । मालवक्षोणिपालस्य विक्रीतश्चैत्यकुञ्जरः ॥१५॥
कियत्यपि गते काले पाल्यमानोऽपि यत्नतः । मुमूर्षुरभवत्तत्र कुञ्जरो दुर्जरज्वरः ॥१६
न जिघ्रति पयः शीतं नादत्ते कवलं गजः । स्वपित्यपि न सौख्येन मुञ्चत्यश्रूणि केवलम्

तनो हस्तिपकाख्यातं वृत्तान्तमवनीपतिः ।
आकर्ण्य स समायातो यत्राऽऽस्ते ज्वरितो गजः ॥ १८ ॥

स चाऽवलोक्य भूपालं जगद्विस्मयकारिणीम् । वाचमूचे गजः सम्यग्विसृष्टज्वरवेदनः
राजन्नशेषशास्त्रज्ञ! राजनीतिपयोनिधे! । निर्जितारातिसङ्घात मुरारिचरणप्रिय ! ॥२०
किमौषधैरलं वैद्यैः किं ध्यानैः किं नु जापकैः । गीतासप्तदशाध्यायजापकं द्विजमानय
तेनाऽयंमामको रोगः शाम्यत्यत्र न संशयः । यथादिष्टं गजेनाऽसौ तथाचक्रे नराधिपः
ततो गजत्वमुत्सृज्यमुक्तो दुःशासनोऽभवत् । तेन विप्रेणाऽभिमन्त्र्यजले क्षिप्ते तदुत्तमे
अथ दिव्यं समारूढं विमानमवनीपतिः । तं दुःशासनमद्राक्षीत्पाकशासनतेजसम् ॥

राजोवाच ।

किञ्जातीयः किमात्मा त्वं किं वृत्तइति मे वद ।
केन वा कर्मणा जातो गजः कथमिहागतः ॥ २५ ॥
पृष्टो राज्ञा विमुक्तोऽसौ विमानस्थः स्थिराक्षरम् ।
वृत्तं यथा यदाचख्यौ निजं दुःशासनः क्रमात् ॥ २६ ॥

गीतासप्तदशाध्यायं जपन्मालवभूपतिः । नरचर्माऽभवन्मुक्तः कालेनाऽल्पीयसा ततः
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतासप्तदशा-
ध्यायमाहात्म्ये एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

# द्विनवत्यधिकशततमोऽध्यायः

## गीताष्टादशाध्यायेश्लोकपञ्चकजापकस्येन्द्रपदप्राप्तिपुरःसरमष्टादशाध्याय-माहात्म्यवर्णनम्

पार्वत्युवाच ।

उक्तसप्तादशाध्यायगौरवं भवता शिव ! स त्वमष्टादशाध्यायमहिमानमुदीरय ॥ १ ॥

ईश्वर उवाच ।

आकर्णयचिदानन्दनिष्पादि निगमोत्तरम् । पुण्यमष्टादशाध्यायमाहात्म्यं गिरिनन्दिनि
समस्तशास्त्रसर्वस्वं श्रोत्रप्राप्तं रसायनम् । संसारयातनाजालविदारणपरायणम् ॥३
परं रहस्यं सिद्धानामविद्योन्मूलनक्षमम् । चैतन्यं कैटभारातेरग्रगण्यं परं पदम् ॥४॥
विवेकवल्लरीमूलं कामक्रोधमलापहम् । पुरन्दरादिगीर्वाणचित्तविश्रामकारकम् ॥५॥
सनकादिमहायोगिमनोरञ्जनकारणम् । पाठमात्रपराभूतकालकिङ्करगर्जितम् ॥ ६ ॥
अष्टोत्तरशतव्याधिमूलोन्मूलनकारकम् । नातःपरतरं किञ्चिद्रहस्यं हंसगामिनि ! ॥७॥
उपतापत्रयहरं महापातकनाशनम् । यथाकालेष्वहं नित्यो यथा पशुषु कामधुक् ॥८॥

यथा व्यासो मुनीन्द्रेषु व्यासेषु ब्रह्मवित्तमः ।
यथा दिवौकसां शक्रो गुरुः शक्राद्यथा वरः ॥ ६ ॥

यथारसानांपीयूषमुत्तमं विश्वविश्रुतम् । यथागिरीणांकैलासो यथाचेन्द्रोदिवौकसाम्
तीर्थानां पुष्करं तीर्थं यथा पुष्पेषु पङ्कजम् । पतिव्रतासु नारीषु यथा लोकेष्वरुन्धती
यथा मखेष्वश्वमेधो यथोद्यानेषु नन्दनम् । यथा रुद्रेषु सर्वेषु वीरभद्रो ममाऽनुगः ॥
यथा दानेषु भूदानं यथासिन्धुषु गौतमी । यथा लोके हरिक्षेत्रं प्रशस्तं धर्मकर्मसु ॥
तथैवाष्टादशाध्यायमाहात्म्यं भुवनोत्तरम् । तत्राख्यानमिदं पुण्यं भक्त्याकर्णयपार्वति!
यदाकर्णनमात्रेण जन्तुः पापैः प्रमुच्यते । अस्ति मेरुगिरेः शृङ्गे पुरी रम्याऽमरावती॥
पुरा मम विनोदाय निर्मिता विश्वकर्मणा । निरन्तरं गुणयुता कोटिगीर्वाणसेविता ॥

तेजःपुञ्जवती साक्षाद्ब्रह्मविद्येव विश्रुता । चिन्तामणिशिलाबद्धाः प्रासादायत्रकामदाः
जयन्ति मेरुशिखरे चतुर्मुखपुरावधि । यत्र कल्पद्रुमच्छाया सुखासीनापुलोमजा ॥
श्रृणोति श्यामलागीभिर्गीतं गन्धर्वयोषिताम् ।
यत्राऽऽस्ते सबलारातिर्देवैश्च दलितायुषाम् ॥ १६ ॥
दैत्यानां रक्तकल्लोलैः स्वर्धुनीशोणतां गता । पुरातनसुधास्वादु स्मारंस्मारंदिवौकसः
धयन्ति यत्र क्षुत्क्षामाः कलांप्रत्यहमैन्दवीम् । तस्यांकैवल्यकल्पायामासीत्पूर्वंशतक्रतुः
शचीसमन्वितःश्रीमान्सर्वगीर्वाणसेवितः । स कदाचित्सुखासीनोविष्णुदूतैरधिष्ठितम्
सहस्रनेत्रमायान्तमपश्यत्पुरुषं परम् । ततस्तदीयतेजोभिरभिभूतः पुरन्दरः ॥ २३ ॥
मणिसिंहासनात्तूर्णं पतितः स्थानमण्डपे । सिंहासनात्प्रयातस्य ततस्तस्य हरेर्भटाः ॥
गीर्वाणगणसाम्राज्यपट्टबन्धं वितेनिरे । अथ तस्याऽभिषिक्तस्य महेन्द्रस्य पुलोमजा॥
वामाङ्कमारुरोहाऽऽशु दिव्यदुन्दुभिनिःस्वनैः ।
अथ त्रिदिवसंगीतगीर्वाणाः प्रमदान्विताः ॥ २६ ॥
सुरा नीराजयामासुर्दिव्यरत्नैः सुरस्त्रियः । ततो वै ऋषयो वेदैराशीर्वादांस्तदा ददुः
रम्भाद्या ननृतुस्तस्य पुरस्तादप्सरोगणाः । गन्धर्वाललितालापाजगुर्मङ्गलकौतुकम्
एवं नूतनमिन्द्रं तु जुष्टं बहुभिरुत्सवैः । विना शतक्रतुं दृष्ट्वा शक्रो विस्मयमाययौ ॥
न मया विहितामार्गे तडागा न विनिर्मिताः । न रोपितामहावृक्षाःपान्थविश्रान्तिकारकाः
न कदाचिदहो दृष्टो देवस्त्रिपुरभैरवः । निधिवासे स्थिता देवी पूजिता न मदालसा ॥
मेघङ्करस्थितः शार्ङ्गधरो नैव निरीक्षितः । न कृतं विरजे स्नानं नैव काशीं पुरीं गतः ॥
न देववाटिकावासी दृष्टो नरहरिः स्वयम् । एरण्डविष्णुर्हेरम्बो न जातु परिशीलितः
रेणुका नेक्षिता जातु मातापुरनिवासिनी । न भक्त्या पूजिता देवी दानापुरनिवासिनी
न भक्त्या त्रिपुरे दृष्टस्त्रिलिङ्गस्त्र्यम्बकः स्वयम् ।
न शार्दूलतडागस्थो वीक्षितः सोमनाथकः ॥ ३५ ॥
रेवापुरस्थितो देवो घुसृणेशो न वीक्षितः । नागदन्तपुरे ख्यातो नागनाथो न वीक्षितः
पर्णग्रामस्थितो दृष्टो न महानमृतेश्वरः । न तुङ्गभद्रतीरस्थो दृष्टो हरिहरः स्वयम् ॥३७

न वेङ्कटाद्रिनिलयः श्रीनिवासः सुलक्षितः । कावेरीकर्णिकातीरे श्रीरङ्गो नैव वीक्षितः

दीनास्त्वनाथाः क्रोशन्तः कारागारान्न मोचिताः ।

अन्नदानेन दौर्भिक्षे प्राणिनो नैव पूजिताः ॥ ३६ ॥

रात्रौ रात्रौ कृता क्वापि निर्जले नोदकप्रपा । न गौतम्यां कृतं स्नानं न दृष्टो हरिणेश्वरः

कृष्णवेण्यां च न कृतं स्नानं कन्यागते गुरौ । दत्तं नो भूखण्डमपि कवयो नैव पूजिताः

न तीर्थेषु कृतं सत्रं न ग्रामेषु कृता मखाः ॥ ४२ ॥

पुष्करिण्यो न विहिता मध्ये मार्गं बहूदकाः ।

न प्रासादाः कृताः क्वाऽपि ब्रह्मविष्णुपिनाकिनाम् ॥ ४३ ॥

न जातुचिद्भयाक्रान्ता रक्षिताः शरणागताः । कथमेकेन पुण्येन देवदत्तमिहार्जितम् ॥

इति चिन्ताकुलो भूत्वा हरिं प्रष्टुं पुरन्दरः । ययौ सरभसं खिन्नः क्षीराकूपारगह्वरम् ॥

तत्र प्रविश्य गोविन्दं कृतनिद्रं नवैः स्तवैः । अकस्मान्निजसाम्राज्यभ्रंशदुःखमुवाच ह

इन्द्र उवाच ।

रमाकान्त भवत्प्रीत्यै कृतं क्रतुशतं पुरा । तेन पुण्येन सम्प्राप्तं मया पौरन्दरं पदम् ॥

इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः । न तेन धर्मो विहितो न तेन क्रतवः कृताः

मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत ! ॥ ४६ ॥

महादेव उवाच ।

इत्येवं वदतस्तस्य श्रुत्वा वाचं रमापतिः । उन्मीलितस्मिताक्षोऽसावुवाच मधुरम्वचः

श्रीभगवानुवाच ।

किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः । वर्त्तमानः क्षितितले स माम्प्रीणितवान्पुरा

इन्द्र उवाच ।

भगवन्कर्मणा केन स त्वां प्रीणितवान्द्विजः । यत्प्रीत्या भगवान्प्रादात्तस्मै पौरन्दरं पदम्

श्रीभगवानुवाच ।

जपत्यष्टादशाध्याये गीतानां श्लोकपञ्चकम् । यत्पुण्येन च सम्प्राप्तं तव साम्राज्यमुत्तमम्

सर्वपुण्यशिरोरत्नभूतेन त्वं स्थिरो भव । इति विष्णोर्वचः श्रुत्वा ज्ञात्वोपायं पुरन्दरः ॥

विप्रवेषधरो भूत्वा गतो गोदावरीतटम् । तत्राऽपश्यत्पुरं पुण्यं कालिकाग्राममुत्तमम्
यत्रकालेश्वरो देवो वर्त्तते कालमर्दनः । तत्र गोदावरीतीरे स्थितं परमधार्मिकम् ॥
अपश्यत्करुणावन्तं ब्राह्मणं वेदपारगम् । नित्यमष्टादशाध्यायं जपन्तं दान्तचेतसम् ॥
ततस्तच्चरणद्वन्द्वे लुठित्वा परया मुदा । सत्वमष्टादशाध्यायमपठत्तेन शिक्षितम् ॥५८॥

अथ पुण्येन तेनाऽसौ विष्णोः सायुज्यमाययौ ।
हित्वा पुरन्दरादीनां देवानां पदमल्पकम् ॥ ५६ ॥

ज्ञात्वाऽतीव मुदा युक्तो वैकुण्ठमगमत्पुरम् । अतएव परं तत्त्वं मुनीनामिदमुत्तमम् ॥
दिव्यमष्टादशाध्यायमाहात्म्यं कथितं मया । यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
इत्येवं गीतामाहात्म्यं कथितंपापनाशनम् । पुण्यं पवित्रमायुष्यंस्वर्ग्यंस्वस्त्ययनंमहत्

यः शृणोति महाभागे ! श्रद्धया संयुतः पुमान् ।
सर्वयज्ञफलं प्राप्य विष्णोः सायुज्यमाप्नुयात् ॥ ६३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे सतीश्वरसम्वादे गीताष्टादशाध्यायमाहात्म्ये द्विनवत्यधिकशततमोऽध्यायः ॥ १६२ ॥

---

# त्रिनवत्यधिकशततमोऽध्यायः

## सतीश्वरसम्वादे सूतशौनकसम्वादमुखेनश्रीमद्भागवतमाहात्म्यवर्णनम्

पार्वत्युवाच ।

देवदेवमहादेव सर्वज्ञ सकलार्थद । कृपां मयि परां कृत्वा यत्पृच्छे तद्वदस्व मे ॥१ ॥
श्रुतं च गीतामाहात्म्यं बह्वाश्चर्यकथायुतम् । तेन मे भक्तिरुत्पन्नाश्रोतुंकृष्णकथांपराम्
पुराणेषु तु सर्वेषु श्रीमद्भागवतम्परम् । यत्र प्रतिपदं कृष्णो गीयते बहुधर्षिभिः ॥३ ॥

तन्माहात्म्यं यथा तत्त्वं सेतिहासं वदाऽधुना ॥ ४ ॥

ईश्वर उवाच ।

नैमिषे सूतमासीनमभिवाद्य महामतिम् । कथामृतरसस्वादकुशलः शौनकोऽब्रवीत्

शौनक उवाच ।

अज्ञानध्वान्तविध्वंसि कोटिजन्माऽघनाशनम् ।
श्रीमद्भागवताख्यानं सूताऽऽख्याहि रसायनम् ॥ ६ ॥

भक्तिज्ञानविरागाढ्यो विवेको वर्द्धतेकथम् । मायामोहनिरासश्चवैष्णवैःक्रियतेकथम्
इहघोरेकलौप्रायो जीवश्चाऽसुरतांगतः । क्लेशाक्रान्तस्य तस्याऽथशोधनेकिंरसायनम्
श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम् । कृष्णप्रीतिकरं यच्च साधनं तद्वदाऽधुना॥
चिन्तामणि लोकसुखं सुरेन्द्रास्पदसम्पदम् । प्रयच्छतिगुरुःप्रीतो वैकुण्ठंचातिदुर्लभम्

सूत उवाच ।

प्रीतोऽहं ते द्विजश्रेष्ठ कथयिष्ये यथाश्रुतम् । सारात्सारतरं यच्च संसारभयनाशनम्॥
भक्तिप्रवर्द्धकं यच्च कृष्णसंतुष्टिहेतुकम् । तन्मे कथयतः साधो ! सावधानतया शृणु॥
कालव्यालमुखालीढजगत्त्राणविधायकम् । श्रीमद्भागवतंशास्त्रं कलौकृष्णेनभाषितम्
एतस्मादपरं किंचिन्मनःशुद्धिकरं न हि । जन्मान्तरकृतैः पुण्यैर्लभ्यतेसाधुभिस्तुतत्

राज्ञः परीक्षितो मोक्षं ज्ञात्वा कमलसम्भवः ।
तोलयामास शास्त्राणि पुराणानि महान्ति च ॥ १५ ॥

श्रीमद्भागवतं तत्र गरीयो भुवि संगतम् । श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥
इति सश्चिन्त्य बहुशो मुनयः साधवोऽमलाः । मेनिरे भगवद्रूपं श्रीमद्भागवतं क्षितौ ॥
पठनाच्छ्रवणाद्यस्य नरो याति हरेःपदम् । वर्षेण श्रवणं तस्य बहुसौख्यप्रदायकम् ॥
मासेन भक्तिराभास्यं लभते द्विजसत्तम !। सप्ताहेनश्रुतं च(चै)तत्सर्वथा मुक्तिदायकम्
किं बहूक्तेन वै साधो श्रीमद्भागवतामृतम् । नित्यंसद्भिःप्रपातव्यं कृष्णलीलाप्रकाशकम्
सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः । ब्रह्मणः श्रुतपूर्वाय सप्ताहश्रवणे विधिः ॥

शौनक उवाच ।

पितुर्लब्ध्वा वरं ज्ञानं श्रीमद्भागवताभिधम् । नारदो लोकतत्त्वज्ञः सर्वदा ह्यटते महीम्

कुत्र तैः संगमोजातो नारदस्य महात्मभिः । श्रुतो देवर्षिणा यत्र सप्ताहश्रवणे विधिः

सूत उवाच ।

अत्र ते वर्णयिष्यामि भक्तियुक्तं कथानकम् । यत्पुरा ब्रह्मरातेन मह्यं प्रोक्तं दयालुना

एकदा तु विशालायामुपविष्टमधोमुखम् । नारदं सनकाद्यास्ते ददृशुर्दीनमानसम् ॥

तं दृष्ट्वा चिन्तयानं तु देवर्षिर्भ्रातरंस्वकम् । पप्रच्छुर्विस्मयाविष्टा मुनयस्तत्त्वचिन्तकाः

कुमाराऊचुः ।

किं त्वं चिन्तयसे ब्रह्मन्नतिदीनइवाऽऽतुरः । नेत्थं मुक्तसङ्गस्य नोचितं वद कारणम्

नारद उवाच ।

अहं पृथ्व्यां समायातो ज्ञात्वा सर्वोत्तमोत्तमाम् ।
तीर्थैर्नानाविधैर्युक्तां पुण्यदैः पुण्यरूपिणीम् ॥ २८ ॥

पुष्करे च प्रयागे च काश्यां गोदावरीतटे । हरिक्षेत्रे कुरुक्षेत्रे श्रीरङ्गे सेतुबन्धने ॥२६

एतेष्वन्येषु तीर्थेषु भ्रममाण इतस्ततः । नापश्यं कुत्रचिच्छर्म मनःसन्तोषकारकम् ॥

कलिना धर्ममित्रेण धरेयं बाधिताऽधुना । सत्यं शौचं दया दानं नास्तिकुत्रापि भूतले

उदरम्भरयो लोका वराकाः कूटसाक्षिणः । मन्दाः सुमन्दमतयो महापाखण्डसंश्रयाः

स्त्रीप्रधाना गृहस्थाश्चवर्णिनोव्रतवर्जिताः । वानप्रस्थाःपुरावासान्यासिनोभोगतत्पराः

कन्याविक्रयिणोलोभात्कृषिकर्मपरायणाः । भ्रष्टाचारादम्भिनश्चस्वेच्छाचारनिदर्शिनः

आश्रमाय वनैरुद्धास्तीर्थानि सरितो ह्रदाः । देवतायतनान्यत्र दुष्टैरुच्छेदितानि च ॥

योगी सिद्धोऽथवा ज्ञानी सत्क्रियोऽत्र न दृश्यते ।
कलिदावानलेनाऽऽद्य साधनं भस्मतां गतम् ॥ ३६ ॥

अट्टशूला जनपदाः शिवशूला द्विजातयः । कामिन्यः केशशूलिन्यो दृश्यन्ते भुवि सर्वतः

एकदाऽहमनुप्राप्तो यमुनायास्तटं शुभम् । दृष्टं वृन्दावनं तत्र यत्र लीला हरेरभूत् ॥

तत्र यच्चाद्भुतं दृष्टं श्रूयतां तन्मुनीश्वराः!। एका तु तरुणी तत्र निषण्णा खिन्नमानसा

द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ । शुश्रूषन्ती प्रबोधन्ती रुदती च तयोःपुरः

दशदिक्षु निरीक्षन्ती रक्षितारमिवात्मनः । वीज्यमाना बहुस्त्रीभिर्बोध्यमाना मुहुर्मुहुः

दृष्ट्वा दूराद्गतश्चाऽहं कौतुकेन तदन्तिकम् । मां दृष्ट्वोत्थाय सा बाला वचनंचेदमब्रवीत्

बालोवाच ।

भोः साधोऽत्रक्षणंतिष्ठ मम चिन्तामपाकुरु । पुंसां च दर्शनं भद्र! सर्वाघौघनिवारणम्

पुण्येन प्राक्तनेनैव दर्शनं तव जायते । अतो मे मानसंदुःखं छेत्तुमर्हसि मानद ॥ ४४ ॥

नारद उवाच ।

एवमुक्तस्तया चाऽहं कृपया स्निग्धमानसः । अपृच्छं तां वरारोहां कौतुकेन समाकुलः

का त्वमेतौ च कौ भद्रे काश्चेमाः पद्मलोचनाः ।

आख्याहि मत्पुरः सर्वं तव दुःखस्य कारणम् ॥ ४६ ॥

इतिपृष्टा मया सा तु बालादुःखितमानसा । प्रोवाचनिखिलंदुःखमात्मनोदुःखकारणम्

बालोवाच ।

अहं भक्तिरितिख्याता एतौ मे तनयौ वरौ । ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ॥

गङ्गाद्याः सरितश्चेमा मम सेवार्थमागताः । एताभिः सेवितानित्यं सत्कारेणापिनारद

न च श्रेयोलभेत्किञ्चित्क्षीणाहं सर्वतो मुने । मम पूर्वं तु वृत्तान्तं शृणु ब्राह्मणसत्तम

येनाऽहं दुःखिताजाता न लभेशर्मकुत्रचित् । उत्पन्ना द्रविडे चाहं कर्णाटे वृद्धिमागता

स्थिताकिञ्चिन्महाराष्ट्रे गुर्जरे जीर्णतांगता । तत्र घोरकलेर्योगात्पाखण्डैःखण्डिताङ्गका

दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह सङ्गता । वृन्दावनमिदं प्राप्ता दैवयोगेन नारद!॥

जाताऽहं तु पुनर्बाला नवीनेव सुरूपिणी । इमौ तु शयितावत्र सुतौ मे क्लिष्टमानसौ

अतिवृद्धौ परित्यज्य गन्तुं नाऽहं क्षमाऽधुना ।

अहं बाला कथं जाता सुतौ मे जरठौ कुतः ॥ ५५ ॥

त्रयाणामेकभावानां वैपरीत्यं कुतोऽभवत् । घटते जरठा माता बालकौ तनयाविति

अतःशोचामिचाऽऽत्मानंविस्मयाविष्टमानसा । वदित्वं वेत्सिधर्मज्ञ कृपालोदीनपालक

वद सर्वं यथातत्त्वं कारणं चाऽत्र यद्भवेत् । एवं पृष्टस्तया चाऽहं क्षणंचैव विमृश्यतु

अवोचम्भक्तिमाभाष्य क्लिष्टां कालेन भूयसा । ज्ञानेनाऽहं प्रपश्यामि वृत्तं सर्वंतवाऽनघे

मा विषादं कुरुप्राज्ञे हरिः शन्ते करिष्यति । सर्वसत्त्वहरो बाले युगोऽयं दारुणः कलिः

लुप्तोऽनेनसदाचारो योगमार्गस्तपांसि च । जनाश्चाद्यासुरायन्ते शाठ्यदुष्कृतकारिणः

सन्तो ह्यस्मिन्सुदुःखार्ता असन्तो हृष्टमानसाः ।

दृश्यते धीरचित्तस्तु पण्डितोऽपि न कोऽपि च ॥ ६२ ॥

अस्पृश्यानवलोक्येयं दुष्टभाराकुला धरा । अन्वब्दं क्रमतो जातोमङ्गलं हीयतेऽन्वहम्

न त्वां तव सुतौ चेमौ कोऽपि पश्यति भामिनि! ।

यूयं तु रागबहुलैस्त्यक्ता जर्जरतां गताः ॥ ६४ ॥

वृन्दावनस्य संयोगाद्बालात्वमभवः पुनः । धन्यं वृन्दावनं चेदं भक्तिर्यत्राऽभवन्नवा

अत्रेमौ ग्राहकाभावान्नवीनत्वं नचाऽऽगतौ । किञ्चिदात्मसुखेनेह प्रसुप्ताविति लक्ष्यते

भक्तिरुवाच ।

कथं परीक्षिता राज्ञा स्थापितोऽद्य शुचिःकलिः । दयापरेणहरिणाह्यधर्मः किमुपेक्षिता

एनं मे सशयं छिन्धि त्वद्वाचा सुखिताऽस्म्यहम् ।

तस्या वचः समाकर्ण्य भूयोऽहमवदं द्विजाः ! ॥ ६८ ॥

यदि पृष्टं त्वया बाले प्रेमतः श्रवणं कुरु । यदा मुकुन्दो भगवान्क्ष्मां त्यक्त्वास्वपदंगतः

कलिस्तद्दिनमारभ्य प्रवृत्तः सत्यबाधकः । दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ॥

न हतोऽस्य गुणद्रष्टासर्वसाधारणं त्विदम् । यत्फलंतपसा नैति न योगेन समाधिना

तत्फलं लभते धीमान्कलौ केशवकीर्तनात् । एतादृशं कलिं दृष्ट्वा सारात्सारफलप्रदम्

विष्णुरातः स्थापितवान्कालिजानां हिताय च ।

कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ॥ ७३ ॥

पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा । विप्रैर्भागवती वार्ता गेहे गेहे जने जने

कारिताधनलोभेन कथासारस्ततो गतः । अत्युग्रभूरिकर्माणो नास्तिकादाम्भिकाजना

तिष्ठन्ति सर्वतीर्थेषु तीर्थसारस्ततो गतः । कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ॥

समारभन्ते कमाणि कर्मसारस्ततो गतः । मनसश्चाजयाल्लोभाद्दम्भात्पाखण्डसंश्रयात्

शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् । पण्डितास्ते कलत्रेषु रमन्ते महिषाइव॥

पुत्रोत्पादनदक्षाश्च न दक्षा मुक्तिसाधने । न हि वैष्णवता कुत्र संप्रदायपुरःसरा ॥७६

देवनिन्दापराः सर्वे साधुनिन्दापरायणाः । अयं तु युगधर्मोऽस्ति दीयते कस्य दूषणम्

अतस्त्वं पुण्डरीकाक्षं स्मृत्वा सौख्यमवाप्स्यसि ।
एवं मयोक्तं वचनं श्रुत्वा सा विस्मयं गता ॥
उवाच वचनं भूयो मां प्रशस्य द्विजोत्तमाः ॥ ८१ ॥

भक्तिरुवाच ।

देवर्षे! त्वं तु धन्योऽसि मद्भाग्येन समागतः । साधूनां दर्शनं लोके सर्वसिद्धिप्रदायकम्
सुखोपायो यथा मे स्यात्तथादिश मुनेऽधुना । सर्वज्ञस्य तव ब्रह्मन्नासाध्यंकिमपीह वै

अजयदजितमायां यस्य मायाधवस्ते वचनरचनमेकं केवलं चाऽऽकलय्य ।
ध्रुवपदमुपयातो यत्कृपातो ध्रुवो वै तमहमरणभूतं ब्रह्मपुत्रं नताऽस्मि॥८४॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे भागवतमाहात्म्ये त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

# चतुर्नवत्यधिकशततमोऽध्यायः

## ज्ञानवैराग्यमहितांक्षीणांभक्तिम्प्रतिप्रबोधनवाक्यमुखेननारदद्वारासनकादि-दत्तवरेणभक्तिसंस्थापनवर्णनम्

सूत उवाज ।

एवं संप्रार्थितो विप्रास्तया भक्त्याऽतिदीनया । पुनश्चाकथयद्यद्वैतच्छृणुध्वं दयालवः

नारद उवाच ।

मा खिदस्वं वृथा बाले! समाधाय मनो हृदि ।
श्रीकृष्णचरणाम्भोजं स्मर सौख्यं लभिष्यसे ॥ २ ॥
द्रौपदी च परित्राता येन कौरवकश्मलात् ।

पालिता गोपसुन्दर्यः स कृष्णः क्वाऽपि नो गतः ॥ ३ ॥

त्वंतुभक्तिः प्रियातस्यसततंप्राणतोऽधिका । त्वयाहूतस्तु भगवान्याति नीचगृहेष्वपि
सत्यादित्रियुगेबोधो विरागोमुक्तिसाधकौ । कलौतु केवलाभक्तिर्ब्रह्मसायुज्यकारिणी
इति निश्चित्यचिद्रूपी स्वकाङ्गात्त्वां ससर्ज ह । परमानन्दचिन्मूर्तिः स्वप्रियांप्रीतमानसः

बध्वाऽञ्जलिं त्वया पृष्टः किंकरोमीति वै हरिः ।

त्वां तदाऽऽज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च ॥ ७ ॥

अङ्गीकृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा । मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकौसुतौ

भक्तानां पोषणं नित्यं वैकुण्ठस्था करोपि च ।

भूमौ च भक्तपोषायच्छायारूपं समाश्रिता ॥ ९ ॥

विमुक्तिज्ञानवैराग्यैः सहचैवाऽऽगताऽत्रहि । कृतादिद्वापरान्ते हि कालेमुक्तिर्मुदास्थिता
कलौ तु संक्षयं प्राप्ता पाषण्डामयपीडिता । त्वदाज्ञया गता शीघ्रं वैकुण्ठे पुनरेव सा

स्मृतमात्रा त्वयाऽत्रापि मुक्तिरायाति सत्वरम् ।

पुत्रीकृत्य त्वयेमौ च स्वपार्श्वे परिरक्षितौ ॥ १२ ॥

उपेक्षातःकलौमन्दवृद्धौजातौसुतौ तव । तथापि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम्

कलिना सदृशः कोऽपि युगो नास्ति वरानने! ।

तस्मिंस्त्वां स्थापयिष्यामि गेहे गेहे जने जने ॥ १४ ॥

अन्यधर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् । यदि प्रवर्त्तये न त्वां तदादासो हरेर्नहि

त्वदन्विताश्च ये जीवा भविष्यन्ति कलाविह ।

पापिनोऽपि गमिष्यन्ति निर्भया हरिमन्दिरम् ॥ १६ ॥

येषां चित्ते भवेद्भक्तिः सर्वदा प्रेमरूपिणी । न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्त्तयः
नप्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपिच । भक्तियुक्तमनस्कानां स्पर्शने दर्शने प्रभुः
न तपोभिर्न वेदैश्च न ज्ञानेनाऽपि कर्मणा । हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिका

नृणां जन्मसहस्रेण भक्तिः सुकृतिनां भवेत् ।

कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः ॥ २० ॥

भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये । दुर्वासादुःखमापन्नः पुरा भक्तिविनिन्दकः॥
अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः । अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥२२॥
एवमुक्तं मया सा तु स्वमाहात्म्यं निशम्य वै । सर्वाङ्गहर्षसंयुक्ता मां पुनर्वाक्यमब्रवीत्
अहो नारद धन्योऽसि प्रीतिस्तेमयिनिश्चला । न कदाचिद्विमुञ्चामिचित्तंतेमयिसंगतम्

कृपालुना त्वया साधो ! मद्बाधा ध्वंसिता क्षणात् ।
पुत्रयोश्चेतना नास्ति ममेमौ प्रतिबोधय ॥ २५ ॥

तस्यास्तद्वचनं श्रुत्वा कारुण्येनान्वितोह्यहम् । तयोःप्रबोधनंकर्तुं प्रवृत्तःपाणिनास्पृशन्
मुखं संमृज्य कर्णान्ते शब्दमुच्चैःसमुच्चरन् । ज्ञान!प्रबुध्यतां शीघ्रंवैराग्य!प्रतिबुध्यताम्
वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः । बोध्यमानौ तदा तेन कथं चिद्बोधमागतौ ॥
नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ । बकवत्पलितौ प्रायः शुष्ककाष्ठःसमाङ्गकौ
क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापमुपागतौ । तदा चिन्तापरोऽभूवंकिंविधेयंमयेतिच

अहो निद्रा कथं याति वृद्धत्वं चानयोः परम् ।
चिन्तयन्निति गोविन्दं स्मरन्नासं द्विजोत्तमाः ! ॥ ३१ ॥

व्योमवाणी तदैवाभून्माऋषे खिद्यतामिति । उद्यमःसफलस्ते तु भविष्यति न संशयः
एतदर्थं तु सत्कर्मसुरर्षे त्वं समाचर । तत्कर्म तेऽभिधास्यन्ति साधवः साधुभूषणाः
सत्कर्मणि कृते तस्मिन्स्वपनं वृद्धताऽनयोः । गमिष्यति क्षणाद्भक्तिःसर्वतःप्रसरिष्यति

इत्याकाशवचः स्पष्टं निशम्याऽपि मया द्विजाः ।
न ज्ञातं यन्नभोवाण्या गोप्यत्वेन निरूपितम् ॥ ३५ ॥

किं तत्कर्म च येनैतौ भवतोज्ञानसंयुतौ । क भविष्यन्ति ते सन्तःकथंवक्ष्यन्तिकर्मसत्
मयाऽत्र किं प्रकर्त्तव्यंयदुक्तंव्योमभाषया । अथतौ तत्रसंस्थाप्यनिर्गतोऽहंवहिर्द्विजाः
वृन्दारण्यादपृच्छं च यत्रतत्रद्विजोत्तमान् । वृत्तान्तंसर्वएवाऽथश्रुत्वाविस्मितमानसाः
न वोत्तरं प्रयच्छन्ति ह्यनभिज्ञा नभोगिरः । असाध्यं केचनप्रोचुरविज्ञेयमथाऽपरे ॥
मूकीबभूवुरन्ये तु चिन्तमानाः पुनःपुनः । वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः ॥४०॥
बोध्यमानं त्रिकं तत्तु नोदतिष्ठदहो विधिः । योगिना नारदेनाऽपि स्वयं न ज्ञायतेतुयत्

तत्कथं शक्यते कर्तुमितरैरिह मानुषैः । ततश्चिन्तातुरश्चाऽहं बदरीवनमागतः ॥ ४२ ॥
तपश्चरामि चाऽत्रैव तदर्थं कृतनिश्चयः । तावद्ददर्श पुरतः सनकाद्यान्मुनीश्वरान् ॥४३
कोटिसूर्यसमाभासानुवाच मुनिसत्तमान् । इदानीं भूरिभाग्येण भवतां दर्शनं ह्यभूत् ॥
तदुपायं महाभागा वदन्तु प्रीतमानसाः । भवन्तो योगिनां श्रेष्ठा बुद्धिमन्तोबहुश्रुताः॥
कुमारा एव पञ्चाब्दाः पूर्वेषामपि पूर्वजाः । सदा वैकुण्ठनिलया हरिकीर्त्तनतत्पराः ॥
लीलामृतकथोन्मत्ता हरिस्मरणतत्पराः । अतः कालसमादिष्टा जरा युष्मान्न बाधते॥
येषां भ्रूभङ्गमात्रेणद्वारपालौ हरेःपुरा । दैत्यौभूत्वा त्रिजन्मानि पुनस्तत्स्थानमास्थितौ
अशरीरगिरोक्तं यत्किं तत्साधनमुच्यताम् । अनुष्ठेयं यथा यत्र प्रब्रुवन्तु कृपालवः ॥
भक्तिज्ञानविरागाणां सुखमुत्पद्यते यथा । स्थापनीयः सर्वलोकेषु तथा साधूच्यतांबुधाः

कुमाराऊचुः ।

मा चिन्तां कुरु देवर्षे! स्वचित्तेहर्षमावह । उपायः सुखसाध्योऽत्रविद्यतेविश्वसौख्यदः

अहो नारद ! धन्योऽसि विरक्तानां शिरोमणिः ।
श्रीकृष्णप्रेमपात्राणामग्रणीर्विदताम्वरः ॥ ५२ ॥

त्वयि चित्रं न देवर्षे भक्तिसाधनतत्परे । उचितं कृष्णदासानां भक्तेः संचारणंभुवि॥
ऋषिभिर्बहुधा लोकउपायाः सिद्धये कृताः । श्रमसाध्याश्चतेसर्वे प्रायः स्वर्गफलप्रदाः
वैकुण्ठसाधकः पन्था गुप्तो लोकेषु वर्त्तते । तस्योपदेशकः साधुः प्रायोभाग्येन लभ्यते
यत्ते सत्कर्मनिर्दिष्टं व्योमवाचा मुनीश्वर! । तज्ज्ञेयमिह सर्वज्ञैर्ज्ञानयज्ञः पुरातनैः ॥
श्रीमद्भागवतालापो ज्ञानयज्ञः शुकोदितः । भक्तिज्ञानविरागाणां सुखदः प्रतिभाति नः
कलिदोषा इमे सर्वे श्रीमद्भागवतध्वनेः । प्रभीताः प्रपलायन्ते सिंहशब्दाद्वृका इव ॥
ज्ञानवैराग्यसंयुक्ता भक्तिः प्रेमरसापहा । प्रतिगेहं प्रतिजनं सुखक्रीडां करिष्यति ॥

सूत उवाच ।

कुमारोक्तं समाकर्ण्य नारदः प्रीतमानसः । पुनः प्रोवाच भगवांस्तदुत्कर्षं विभावयन्

नारद उवाच ।

वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् । नोदतिष्ठत्त्विकं तत्तु कलिदोषतिरस्कृतम् ॥

कथं भागवतालापात्तद्विबोधमिहैष्यति । छिन्दन्तु संशयं ह्येनं भवन्तोऽमोघदर्शनाः ॥
विलम्बो नाऽत्र कर्त्तव्यः शरणागतवत्सलाः । ततस्तेसनकाद्यास्तुविरक्ताह्यूर्ध्वरेतसः
सिद्धाः सनातना विप्रा नारदं प्रोचुरादरात् ॥ ६३ ॥

कुमाराऊचुः ।

वेदोपनिषदां साराज्जाता भागवती कथा । अत्युत्तमा ततो भाति पृथग्भूताफलोन्नतिः
आमूलाग्रं रसोऽस्त्येव रसालस्य यथा फले । पृथग्भूतस्तु पानेन यथा विश्वमनोहरः
यथा दुग्धे स्थितं सर्पिर्नच स्वादूपकल्प्यते । पृथग्भूतं तु तद्दिव्यं देवानांप्रीतिवर्द्धनम्
इक्षुष्विवादिमध्यान्तं शर्करा व्याप्यतिष्ठति । पृथग्भूता तु सा मिष्ठा तथाभागवतीकथा
श्रीमद्भागवतं नाम पुराणं रसमेव हि । भक्तिज्ञानविरागाणां सौख्यायैव प्रकाशितम्॥
कृष्णेन ब्रह्मणे नाभिकञ्जस्थाय हृदैव हि । तच्चतुःश्लोकमखिलं ब्रह्मैव प्रतिभासते ॥
तुभ्यं च ब्रह्मणा प्रोक्तं तच्चरित्रनिदर्शनम् । त्वयाऽपि व्यासदेवाय प्रोक्तं तत्तापहानये
यदीयस्मरणात्सद्यो निर्विण्णो बादरायणः । चकार महदाख्यातुमात्मारामममनोहरम्
अत्र ते विस्मयः केन येन पृच्छेः पुनः पुनः । श्रीमद्भागवतं शास्त्रं क्षमं कृष्णानुकर्षणे

सूत उवाच ।

एतन्निशम्य वचनं समुदाहृतं तु योगीश्वरैः सनकमुख्यतमैरभीष्टम् ।
भक्त्या विधृत्य चरणं च प्रणम्य मूर्ध्ना हृष्टोजगादजगदाधिनिवर्त्तकांस्तान्

नारद उवाच ।

सन्दर्शनं च भवतां विनिहन्त्यघौघं श्रेयस्तनोति भवदुःखदवार्दितानाम् ।
निःशेषशेषमुखगीतकथैकपानात्प्रेमप्रकाशनकृते शरणं गतो वः ॥ ६४ ॥
पुण्योदयेन बहुजन्मसमर्जितेन सत्संगमो यदि भवेत्कृतिनो जनस्य ।
अज्ञानहेतुकृतमोहमहान्धकारो नश्येत्तदा ह्युदयमेति महान्विवेकः ॥ ६५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-
माहात्म्ये चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

# पञ्चनवत्यधिकशततमोऽध्यायः

## कुमाराणामुपदेशमुखेननारदस्यभृग्वादिभिःकामदापुरेगमन, भागवतसप्ताहकरण, कुमारैःभक्तेःस्थानदानवर्णनम्

सूत उवाच ।

अथ देवऋषिस्तत्र कुमाराननुमान्य च । उवाच प्रणतो वाक्यं ज्ञानयज्ञकृतादरः ॥१॥

नारद उवाच ।

ज्ञानयज्ञंकरिष्यामि शुकशास्त्रकथोज्ज्वलम् । भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः

यत्र कार्यो मया यज्ञः स्थानं तत्कथ्यतांद्विजाः । चत्वारोयज्ञवाहाश्च यूयमेव वृता मया

कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवतीकथा । कोविधिस्तत्रकर्तव्यो ज्ञानयज्ञविशारदाः

कुमाराऊचुः ।

शृणु नारद वक्ष्यामस्तुभ्यंयत्रकथानृणाम् । शृण्वतांपापराशिघ्नी भवेत्पुण्यविवर्द्धिनी

गङ्गाद्वारसमीपे तु कामदाख्यं पुरं महत् । स्वर्णद्याश्चोत्तरे पुण्ये तटमानन्दनामकम् ॥

नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् । नानातरुलताकीर्णं स्वच्छकोमलवालुकम् ॥

रम्यमेकान्तदेशस्थं स्वर्णपङ्कजशोभितम् । यत्समीपस्थजीवानां क्षेत्रस्यैव प्रभावतः ॥

मिथः संश्लिग्धचित्तानां वैरं चेतसि न स्थितम् ।
ज्ञानयज्ञस्त्वया तत्र कर्तव्यो हि प्रयत्नतः ॥ ६ ॥

अपूर्वरसदात्री च कथा तत्र भविष्यति । वृन्दावनप्रतोलिस्थं जराजीर्णकलेवरम् ॥

सुतद्वयं पुरस्कृत्य भक्तिस्तत्राऽऽगमिष्यति । यत्र भागवतीवार्ता भक्तिस्तत्रसहात्मजा

कृष्णकीर्तिसुधां पीत्वा तरुणीव भविष्यति ॥ १२ ॥

सूत उवाच ।

एवमुक्त्वा कुमारास्ते नारदेन समन्ततः । गङ्गाद्वारे समाजग्मुर्ज्ञानयज्ञाय सत्वराः ॥

यदा प्राप्तास्तटं ते तु गङ्गया भार्गवर्षभ ! । तदा कोलाहलश्चासीद्भूर्लोकादिकसत्सु

श्रीमद्भागवतास्वादलम्पटास्साप्तलौकिकाः ।
धावं धावं समाजग्मुः प्राचीना वैष्णवाश्च ये ॥ १५ ॥
भृगुर्वसिष्ठः श्च्यवनश्च गौतमो मेधातिथिर्देवलदेवरातौ ।
रामस्तथा गाधिजशाकलौ च मृकण्डपुत्रात्रिजपिप्पलादाः ॥ १६ ॥
योगेश्वरौ व्यासपराशरौ च शुकादयो भागवतप्रधानाः ।
शिष्यैरुपेता बहुशास्त्रविज्ञाः कृष्णामृतास्वादकृतैकतानाः ।
सर्वेऽप्यमी मुनिगणास्सहपुत्रमित्रस्वस्त्रीभिरराययुरतिप्रणयेन युक्ताः ॥१७॥

वेदान्तानिच वेदाश्चमन्त्रास्तन्त्राणिसंहिताः । दशसप्तपुराणानिषट्छास्त्राणियथाययुः
गङ्गाद्याः सरितस्तत्र पुष्करादिसरांसि च । क्षेत्राणि च दिशःसर्वादण्डकादिवनानिच
हिमाद्योनगास्तत्रदेवगन्धर्वकिन्नराः । द्वीपाः समुद्रा दिक्पालाःपातालस्थास्तथाययुः
दीक्षायां नारदेनाऽथ दत्तमासनमुत्तमम् । कुमारा वन्दिताःसर्वे निषेदुः कृष्णतत्पराः

वैष्णवाः सुविरक्ताश्च न्यासिनो ब्रह्मचारिणः ।
मुख्या ह्यग्रे स्थितास्तेषां पुरतो नारदः स्थितः ॥ २२ ॥

वामभागे मुनिगणा दक्षिणे च दिवौकसः । वेदोपनिषदोऽन्यत्र तीर्थानिच भृगूद्वह!॥
जयशब्दो नमःशब्दः शङ्खशब्दस्तथैव च । बभूवाऽऽकाशसंस्पर्शी घोषयन्विदिशो दश
विमानानि समारुह्य प्रहृष्टा नाकवासिनः । कल्पवृक्षप्रसूनैश्च तां सभां समवाकिरन्

सूत उवाच ।

एवं तेषु निविष्टेषु भृग्वादिषु यथार्हतः । श्रीभागवतमाहात्म्यमूचिरे नारदाय ते ॥

कुमाराऊचुः ।

शृणु नारद! वक्ष्यामि महिमानं महाद्भुतम् । श्रीमद्भागवताख्यस्य शास्त्रस्यविधिपूर्वकम्
सदा नरैः सुकृतिभिः सेव्या भागवतीकथा । यस्याःश्रवणमात्रेण कृतार्थत्वंप्रयान्तिते
ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः
तावत्ससारचक्रऽस्मिन्भ्रमत्यज्ञानमोहितः । यावत्कर्णगतं नोस्याच्छुकशास्त्रंजनस्यच
किं श्रुतैर्बहुभिः शास्त्रैः पुराणैः संहितागमैः । यदि भागवतं पुम्भिर्नश्रुतं भक्तिभावनैः

कथाभागवतस्याऽपि नित्यं भवति यद्गृहे । तद्गृहं तीर्थरूपं हि नृणां पापविनाशनम्
अश्वमेधसहस्राणि राजसूयशतानि च । भगवत्याः कथायाश्च कलांनार्हन्ति षोडशीम्
तावत्पापानि तिष्ठन्ति देहेऽस्मिन्मुनिपुङ्गव! । यावन्न श्रूयते सम्यक्छ्रीमद्भागवतं नरैः
न गङ्गा न गया काशी प्रतिष्ठानं न पुष्करः । कथाया भागवत्याश्च समापुण्यफलेनत्र

श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।
पठस्व स्वमुखेनाऽपि यदीच्छसि भवक्षयम् ॥ ३६ ॥

वेदादिर्वेदमाता च पौरुषं सूक्तमेव च । त्रयीभागवतं चैव द्वादशाष्टाक्षरौ मनू ॥३७ ॥
द्वादशात्मा प्रयागश्चकालःसम्वत्सरात्मकः । ब्राह्मणाश्चाग्निहोत्रंचसुरभिर्द्वादशीतिथिः
तुलसी च वसन्तर्तुः पुरुषोत्तम एव च । एतेषां वस्तुतो नास्ति पृथग्भावो मुनीश्वर!
यश्च भागवतं शास्त्रं व्याकुर्यादन्वहंद्विज !। जन्मकोटिकृतं पापं तस्य नश्यति नारद
श्रुतं च पठितं ध्यातं श्रीमद्भागवतं नृभिः । ददातिमुक्तिं भक्तिंवातुलस्यान्योश्चसेवनम्
अन्तकाले तु सम्प्राप्ते भयंत्यक्त्वासुदूरतः । श्रीमद्भागवतंभक्त्याश्रृणुयात्रः समुक्तिभाक्
प्रौष्ठपद्यां च राकायां हेमसिंहसमन्वितम् । अलङ्कृत्य द्विजाग्र्याय श्रीमद्भागवतंददेत्

भक्तियुक्तो विमानश्च मिताशी च जितेन्द्रियः ।
श्रुत्वाऽऽदितः स कृष्णस्य सायुज्यं लोकमाप्नुयात् ॥३४ ॥
आजन्ममात्रमपि येन शठेन चित्तं सम्यङ्नियम्य भुवि कृष्णकथा न पीता
चाण्डालवच्च पशुवद्व्रत! तेन नीतं मिथ्या स्वजन्मजननीभृशमर्दिता च ॥
यैर्न श्रुतं भागवतं पुराणमाराधितो नो पुरुषः पुराणः ।
मुखे हुतं नैव धरामराणां तेषां वृथा जन्मगतं नराणाम् ॥ ४६ ॥
चित्तं न यस्य तु नरस्य हरेः कथायां सम्प्रीतये दुरितदुष्टमसत्प्रसङ्गात् ।
धिक्तं नरं पशुसमं भुविभारभूतमेवं वदन्ति मुनयः किल पूर्वसिद्धाः॥४७॥

दुर्लभैव कथा लोके श्रीमद्भागवतोद्भवा । कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥

तेन योगनिधे साधो! श्रोतव्या सात्त्वतीकथा ।
प्रत्यहं नियमो नास्ति दिनानां वस्तुतो द्विज ! ॥ ४९ ॥

सत्येन ब्रह्मचर्येण यतोऽस्य श्रवणं मतम् । ततः कलौ विशेषोहिविधिःसप्तदिनात्मकः
मनसश्चाजयाद्रोगात्पुंसां चैवाऽऽयुषः क्षयात् । कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतम्
मनसो निग्रहश्चैव नियमाचरणं तथा । कर्तु सप्तदिनं शक्यं ततो नियमकल्पना ॥
श्रद्धया श्रवणे नित्यमाद्यन्तावधि यत्फलम् । तत्फलं शुकदेवेन सप्ताहश्रवणे कृतम् ॥
यत्फलं नास्ति तपसा न योगेन समाधिना । अनायासेन तत्सर्वं सप्ताहश्रवणाल्लभेत्
यज्ञाद्व्रताच्च तपसो ध्यानाज्ज्ञानाच्चतीर्थतः । श्रीभागवतसप्ताहनियमो ह्युत्तमो मतः ॥

यदा कृष्णो भुवं त्यक्त्वा स्वपदं गन्तुमुद्यतः ।
तदाऽऽज्ञायोद्धवो धीमान्गोविन्दं वाक्यमब्रवीत् ॥ ५६ ॥

उद्धव उवाच ।

भगवन्भवता सर्वं देवकार्यं प्रसाधितम् । अधुना गन्तमिच्छुस्त्वं स्वं पदं तमसःपरम्
अतश्चिन्ता ममोत्पन्नात्वद्वियोगभिया विभो । तामपाकुरु देवेश त्वामहं शरणं गतः॥

आगतोऽयं कलिर्घोरस्सर्वेऽप्यत्र जनाः खलाः ।
भविष्यन्ति ततो नाथ! किं विधेयं तदाऽऽदिश ॥ ५९ ॥

इयं भारवती भूमिः शरणं कं प्रयास्यति । त्वदन्यो दृश्यते नाऽत्र त्राताम्या यदुनन्दन!
अतोऽस्मासु दयांकृत्वा तिष्ठात्रैवदयानिधे!। साधूनां रक्षणायैव त्वमाविरभवः प्रभो
निर्गुणोऽपि निराकारः सच्चिदानन्दविग्रहः । त्वद्वियोगेन ते भक्ताःकथंस्थास्यन्तिभूतले

निर्गुणोपासने कष्टमतोऽस्मद्धितमाचर ॥ ६२ ॥

सूत उवाच ।

इत्युद्धववचः श्रुत्वा चिन्तयित्वा क्षणं हरिः । ददौ भागवतं तस्मै कृपया परया युतः
निजं तेजः समाधाय श्रीमद्भागवते द्विज ! । दत्त्वोद्धवाय भगवान्स्वकीयं पदमाविशत्
तेनेयं वाङ्मयी मूर्त्तिर्वर्त्तते श्रीहरेरिह । सेवनात्सततंचास्याःपापं नश्येन्नृणां क्षणात्॥
सप्ताहश्रवणं तेनकथितं सर्वतोऽधिकम् । श्रोतावक्ता प्रच्छकश्च यान्तिमन्मयतां द्विज!
दुःखदारिद्र्यदौर्भाग्यपापप्रक्षलनाय च । कामक्रोधजयार्थं च कलौ भागवतं क्षमम् ॥
अन्यथा वैष्णवी माया देवानामपि दुर्जया । कथं निवर्तते पुंसां श्रीमद्भागवतं विना॥

सूत उवाच ।

इत्येवमुक्त्वा माहात्म्यं श्रीमद्भागवतस्य ते । कथां भागवतीं दिव्यां प्रवक्तुमुपचक्रमुः ॥
वेदोपनिषदांसारे श्रीमद्भागवते द्विजैः । आरभ्यमाणे तत्रैव भक्तिराविरभूत्क्षणात् ॥

प्रेमान्विता चारुतनुर्मुदान्वितौ सुतौ गृहीत्वा तरुणौ स्वदोर्भ्याम् ।
श्रीकृष्ण गोविन्द हरे मुरारे नाथेति नामानि मुहुर्वदन्ती ॥ ७१ ॥
तामागतां भागवतार्थभूषां सुचारुवेषां ददृशुःसदस्याः ।
व्यतर्कयंश्चापि कथं कुतोऽसौ कास्तीतिसर्वेऽपि सुविस्मिताक्षाः ॥ ७२ ॥
ततः कुमारा जगदुःकृतार्था कथार्थतो निष्पतिताऽधुनेयम् ।
एवं गिरः सा ससुता निशम्य जगाद नम्राब्जभुवः कुमारान् ॥ ७३ ॥

भक्तिरुवाच ।

भवद्भिरद्यैव कृताऽस्मि पुष्टा कलौ प्रनष्टाऽपि कथारसेन ।
तिष्ठामि कुत्राऽहमभीष्टमाभ्यां सहास्पदं मह्यमुपादिशध्वम् ॥ ७४ ॥

सूत उवाच ।

तद्वाक्यमाकर्ण्य विधेः कुमारा विचार्य सम्यक्प्रणिधाय चित्ते ।
ऊचुश्च भक्तिं भवरोगहर्त्रीं प्रेमैकदात्रीं हरिभक्तिभाजाम् ॥ ७५ ॥

कुमाराऊचुः ।

भक्तेषु गोविन्दपरायणेषु साधुष्वथो दीनदयापरेषु ।
मनो नियम्योत्पथसम्प्रवृत्तं कृत्वैकतानं हरिपादपद्मे ॥ ७६ ॥
ततो हि दोषाः कलिजा इमे त्वां द्रष्टुं न शक्ताः प्रभवोऽपि लोके ।
कलौ त्वमेकैव जगद्धिताय भविष्यसे नारद ! संप्रणीता ॥ ७७ ॥
सकलभुवनमध्ये निर्धनाश्चातिधन्या निवसति हृदि येषां श्रीहरेर्भक्तिरेका ।
हरिरपि निजलोकं सत्वरं सन्विहाय प्रविशति हृदि येषां प्रेमसूत्रापिनद्धः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-माहात्म्ये पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५ ॥

# षण्णवत्यधिकशततमोऽध्यायः

## श्रीमद्भागवतमाहात्म्येगोकर्णवृत्तान्तवर्णनपुरःसरमात्मदेवस्यधुन्धुकारिपुत्रद्वारापीडनंगोकर्णमान्वनेनवनंगत्वाऽऽत्मदेवस्यमुक्तिप्राप्तिवर्णनम्

सूत उवाच ।

अथ वैष्णवचित्तेषु दृष्ट्वा भक्तिमलौकिकीम् । निजलोकं परित्यज्य भुवमभ्यगमद्धरिः
वनमाली घनश्यामः पीतवासाः किरीटधृत् । काञ्चीकलापपर्यस्तोलसन्मकरकुण्डलः
त्रिभङ्गललितश्चारुकौस्तुभेन विराजितः । कोटिमन्मथलावण्यो हरिचन्दनचर्चितः ।।
परमानन्दचिन्मूर्तिर्मधुरो मुरलीधरः । आविवेश स्वभक्तानां हृदयान्यमलानि च ॥४॥
वैकुण्ठवासिनो ये च वैष्णवाः शान्तमानसाः ।
गूढरूपाः समायाताः श्रोतुकामा हरेः कथाः ॥५॥
तदा जयजयेत्युच्चैः शब्दोऽभूत्कम्बुशब्दयुक् । येनाऽमङ्गलमत्युग्रं कलिजं प्रलयं गतम्
तत्रस्थानां जनानां च दृष्ट्वा गेहात्मविस्मृतिम् ।
नारदोऽध्यात्मतत्त्वज्ञः कुमारान्प्रत्युवाच ह ॥ ७ ॥

नारद उवाच ।

अलौकिकोऽयं महिमा मुनीश्वराः सप्ताहजन्योऽद्य विलोकितो मया ॥८॥
मूढाः शठा ये पशुपक्षिणोऽपि तेऽतिप्रयान्त्येव गतिं पराख्याम् ।
अतो नृलोके न तु शास्त्रमन्यच्चित्तस्य शुद्ध्यै विहितं पवित्रम् ॥ ९ ॥
अघौघविध्वंसि कृतार्थतावहं कलौ युगे दोषनिधौ कुमाराः ।
के के न शुध्यन्ति वदन्तु मह्यं सप्ताहयज्ञेन कथामयेन ॥ १० ॥
कृपालुभिर्लोकहितो भवद्भिः प्रकाशितः कोऽपि नवीनमार्गः ।

कुमारा ऊचुः ।

ये मानवाः पापकृतः सुदुष्टाः सदा दुराचाररताः समत्सराः ।

क्रोधाग्निदग्धाः कुटिलाश्च कामिनः सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१२ ॥

सत्येन हीनाः पितृमातृदूषकास्तृष्णाकुलाश्चाश्रमवर्णबाह्याः ।

ये दाम्भिका जीवविहिंसकाश्च सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥ १३ ॥

पञ्चोग्रपापाश्छलकारिणश्च क्रूराः पिशाचा इव निर्दयाश्च ।

ब्रह्मस्वपुष्टा व्यभिचारिणश्च सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१४॥

कायेन वाचा मनसाऽपि पातकं नित्यं प्रकुर्वन्ति शठा हठेन ये ।

नीचाः कृतघ्ना मलिना दुराशयाः सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१५ ॥

सूत उवाच ।

अथैवं तुष्टचित्तेऽथ नारदे देवपूजिते । प्रसन्नास्ते कुमाराश्च पुनरूचुश्च नारदम् ॥१६॥

कुमाराऊचुः ।

अत्र ते कीर्तयिष्याम इतिहासं पुरातनम् । यस्य श्रवणमात्रेण पापहानिः प्रजायते ॥

तुङ्गभद्रातटे पूर्वं पत्तने कोहलाभिधे । वर्णाश्रमाचारयुते धनधान्यसमाकुले ॥ १८ ॥

आत्मदेवइतिख्यातस्तत्राऽऽसीद्द्विजसत्तमः । वेदविद्याविधिप्राज्ञो नित्यकर्मपरायणः

तत्प्रिया धुन्धुली नाम नित्यं स्वीयहिते रता ।

स्ववाक्यस्थापना चाऽपि सुन्दरी सुकुलोद्भवा ॥ २० ॥

पूर्वकर्मविपाकेन प्रायशो बहुजल्पिनी । शूरा च गृहकृत्येषु क्रूरा च कलहप्रिया ॥२१॥

एवं निवसतोस्तत्र दम्पत्योर्निरपत्ययोः । व्यतिक्रान्तं वयश्चापि पञ्चाशद्वर्षसम्मितम् ॥

अथ तौ दुःखितौ जातौ निरपत्यौ गृहे स्थितौ ।

सन्तानोत्पत्तये ताभ्यां दत्तं चाऽपि धनादिकम् ॥ २३ ॥

गोभूहिरण्यवासांसि दत्तान्यपि बहूनि च । न पुत्रो नापि दुहिता जायते पूर्वकर्मणा॥

सचैकदा तु निर्विण्ण आत्मदेवो द्विजोत्तमः । गृहंत्यक्त्वा गतोऽरण्यमानपत्येनदुःखितः

यत्र तत्र भ्रमन्भ्रान्तोदुःखाकुलितमानसः । क्षुत्क्षामस्तृट्परीतश्च दैवात्प्राप्तोजलाशयम

जलं पीत्वा ततस्तस्मिंस्तडागे स द्विजोत्तमः ।

वृक्षच्छायां समाश्रित्य निषण्णस्तत्र नारद ! ॥ २७ ॥

अथ तत्र तदैवागात्कश्चित्सिद्धो भ्रमन्महीम् ।
जलं पीत्वा तडागे तु सोऽपि तत्रैव चाऽऽगतः ॥ २८ ॥

तंदृष्ट्वा न्यासिनं शान्तमात्मदेव उदारधीः । सत्कृत्योत्थाय तत्पादौ जग्राहस्वगुरोरिव
उपविष्टौततस्तौ द्वौ कृतप्रश्नौ परस्परम् । सुस्निग्धमानसौ भूत्वा गुरुशिष्याविवाश्रमे
अथ तं स यतिर्दृष्ट्वा श्वसन्तं दुःखितान्तरम् । पप्रच्छ करुणासिन्धुरात्मदेवं पुरःस्थितम्

सिद्ध उवाच ।

का ते चिन्ता द्विजश्रेष्ठ! दुःखाय हृदि वर्तते । तां समाचक्ष्व धर्मज्ञ! परितापप्रदायिनीम्

तच्छ्रुत्वा वचनं तस्य सिद्धस्य सुमहात्मनः ।
आत्मदेव उवाचाऽथ स्वस्य दुःखस्य कारणम् ॥ ३३ ॥

आत्मदेव उवाच ।

किं ब्रवीमि मुने दुःखं सञ्चितं पूर्वकर्मणाम् । मदीयाः पूर्वजास्तोयं कवोष्णमुपभुञ्जते
मद्दत्तंनैव गृह्णन्ति पितरो देवताबलिम् । तेनदुःखेन निर्विण्णः प्राणांस्त्यक्तुमिहाऽऽगतः

धिग्जीवितं प्रजाहीनं गृहं चैव धनं कुलम् ।
पाल्यते या मया धेनुः सा वन्ध्यात्वमेति ह ॥ ३६ ॥
यो मया रोपितो वृक्षःसोऽपि वन्ध्यत्वमागतः ।
निर्भाग्यस्याऽनपत्यस्य किमतो जीवितेन मे ॥ ३७ ॥

कुमारा ऊचुः ।

इत्युक्त्वा स रुरोदोच्चैस्तत्पुरो दुःखपीडितः । यदा तदा यतेश्चित्तेकरुणाऽभूद्गरीयसी

ललाटाक्षरमालां च दृष्ट्वा ज्ञात्वा स योगवान् ।
आत्मदेवं द्विजं प्राज्ञः पुनरूचे सविस्तरम् ॥ ३९ ॥

सिद्ध उवाच ।

शृणु विप्र! मया तेऽद्य प्रारब्धमवलोकितम् । सप्तजन्मावधिप्राप्तिः पुत्रस्य न च दृश्यते
मुञ्चाऽऽग्रहं प्रजाहेतोर्बलिष्ठा कर्मणो गतिः । विवेकं तु समासाद्य सुखीभव महामते!
एवमुक्तं समाकर्ण्य सिद्धस्य द्विजसत्तमः । प्रजाशाबद्धचित्तस्तु सिद्धंप्राहाऽतिदुःखितः

विप्र उवाच ।

विवेकेन भवेत्किं मे पुत्रंदेहि बलादपि । नो चेत्त्यजाम्यहं प्राणांस्त्वदग्रे शोकमूर्च्छितः
इति विप्राग्रहं दृष्ट्वा प्राब्रवीत्स तपोधनः । सन्ततेः सगरोदुःखमवापाङ्गः प्रजापतिः ॥
चित्रकेतुर्गतः कष्टं विधिलेखविमार्जनात् । अतस्त्वमपि धर्मज्ञ! यदि पुत्रं लभेरपि ॥
सुतेन न सुखीभूया दैवं हि बलवत्तरम् । इत्युक्त्वा द्विजवर्याय स सिद्धः साधुसम्मतः
ददावेकं फलं तस्मै प्राग्रहेण सुतार्थिने । इदं फलं मया तुभ्यं दत्तं पुत्राप्तये द्विज! ॥
भार्यायै देहि पुत्रस्ते भविष्यति न संशयः । सत्यं शौचं दयादानमेकभक्तं तु भोजनम्
वर्षावधि स्त्रिया कार्यं तेनशुद्धो भवेत्सुतः । एवमुक्त्वा ययौ योगी विप्रस्वगृहमागतः

दत्त्वा पत्न्यै फलं तत्तु सिद्धोक्तमवदच्च ह ।

अथ सा धुन्धुली क्रूरा स्वचावयस्थापनोत्सुका ॥ ५० ॥

स्वसख्यै प्राह तत्सर्वं पत्योक्तं सिद्धभाषितम् । यद्यहं भक्षये चेदंफलं सिद्धेनचार्पितम्
गर्भो मम भवेत्तर्हि कथं चाऽहं सहाम्यहम् । स्वल्पं भक्ष्यमशक्तिश्च गमने गृहकर्मणि
तिर्यक्चेदागतो गर्भो तदा मे मरणं भवेत् । प्रसूतौ दारुणं दुःखं सुकुमारी कथं सहे

मन्दायां मयि सर्वस्वं ननान्दा संहरेत्सदा ।

चिन्ता मे समनुप्राप्ता किं करोमि शुचिस्मिते ! ॥ ५४ ॥

सा तद्वचनमाकर्ण्य स्नेहभङ्गभयाद्द्विज ! । एवमेवेति तां प्राह प्रीत्या प्रहसितानना ॥
एवं कुतर्कयोगेन तत्फलं नैव भक्षितम् । पत्या पृष्टे फलं भुक्तं भुक्तं चेति तयेरितम् ॥
एकदा भगिनी तस्याः स्वेच्छया तद्गृहं गता । तदग्रे कथितंसर्वं चिन्तेयं महती हि मे
दुर्बला तेनदुःखेन ह्यनुजे करवाणि किम् । साब्रवीन्ममगर्भोऽस्ति तुभ्यंदास्ये प्रसूतितः
तावत्कालं सगर्भेव गुप्तातिष्ठ गृहेसुखम् । तं बालं पोषयिष्यामि त्वद्गृहे चैवनित्यशः

फलं धेनोः प्रयच्छाऽद्य परीक्षार्थं शुभानने! ।

इत्युक्त्वा सा ययौ गेहमात्मनो हृष्टमानसा ॥ ६० ॥

धुन्धुल्याऽपि यथोद्दिष्टं तद्भगिन्या तथा कृतम् ।

अथ प्रसूय सा बालं धुन्धुल्यै चार्पयद्द्रुतम् ॥ ६१ ॥

तया च कथितं भर्त्रे प्रसूतः सुखमर्भकः । लोकस्यसुखमुत्पन्नमात्मदेवप्रजोदयात् ॥
दत्त्वा दानं द्विजाग्रेभ्यो जातकर्म चकारच । गीतवादित्रनिर्घोषो गृहे तस्याऽतिमङ्गलम्
बभूवहर्षमापन्न आत्मदेवो महामतिः । अथ सा प्राह भर्तारं दुग्धं मे स्तनयोर्नहि॥६४

पालयिष्ये कथं बालं सद्यः सूतं प्रभोऽधुना ।
मत्स्वसुश्च प्रसूता या मृतो बालः पुराऽभवत् ॥ ६५ ॥

तामानीय गृहे रक्षसाऽर्भकं पोषयिष्यति । इतिश्रुत्वा वचस्तस्य धुन्धुल्या द्विजसत्तमः

तथैव कृतवान्भ्रान्तस्त्वात्मदेवो मुदाऽन्वितः ।
धुन्धुकारीति नामाऽस्य कृतं मात्रा यथार्थतः ॥ ६७ ॥
स्तन्येन पोषमाप्नोति नित्यं मातृष्वसुः सुतः ।
त्रिमासे निर्गते चाऽथ सा धेनुः सुपुवेऽर्भकम् ॥ ६८ ॥

सर्वाङ्गसुन्दरं दिव्यं निर्मलं कनकप्रभम् । दृष्ट्वा प्रसन्नस्तं विप्रः संस्कारान्स्वयमादधे
तं दिदृक्षवआयाता जनाः सर्वेऽतिविस्मिताः । आत्मदेवस्यविप्रस्य महाभाग्योदयेनच
धेन्वा बालः प्रसूतश्च देवरूपोऽतिकौतुकम् । न ज्ञातं तद्रहस्यं तु केनापि विधियोगतः

गोकर्णं तं सुतं दृष्ट्वा गोकर्णेत्येव चाभ्यधात् ।
कियत्कालेन सम्प्राप्तौ तारुण्यं तावुभावपि ॥ ७२ ॥

गोकर्णःपण्डितोज्ञानीधुन्धुकारीमहाखलः । स्नानशौचक्रियाहीनोऽक्ष्यभक्ष्याक्रुधाप्लुतः
चौरःसर्वजनद्वेषी दुष्टचाण्डालसङ्गतः । क्रीडतो ह्यर्भकान्धृत्वा बलात्कूपे निपातयेत्
एवं वेश्याप्रसङ्गेनाऽनयद्द्रव्यं क्षयं पितुः । पिताकृपणवत्तस्य शुचा निःस्वो रुरोद ह
अनपत्यसुखी नित्यं कुपुत्रो दुःखदायकः । सिद्धेनोक्तं वचः सत्यमनुभूतं मयाऽधुना

क्व गच्छामि क्व तिष्ठामि को मे दुःखं निवारयेत् ।
प्राणांस्त्यक्ष्ये जले वह्नौ भृगोर्वापि पते ह्यहम् ॥ ७७ ॥

इत्येवं चिन्तयानं तमधोमुखमुपागतः । गोकर्णो जनकं ज्ञानी बोधयामास तत्त्वतः ॥

गोकर्ण उवाच ।

असारस्तात! संसारो दुःखमोहप्रदो नृणाम् ।

कः सुतः किंधनं कस्य का जाया कः पतिः पितः ! ॥ ७९ ॥
मोहेन बद्धो दीनात्मा लोकः क्लिश्यति नान्यथा ।
नचेन्द्रस्य सुखं किञ्चिन्न सुखं चक्रवर्तिनः ॥ ८० ॥
विरक्तस्य सुखं तात ! मुनेरैकान्तशीलिनः । मुञ्चाऽज्ञानं प्रजारूपं मोहं नरककारणम्
निर्द्वन्द्वो निरभीमानो व्रज त्यक्त्वाऽखिलं वनम् ।
ततस्तद्वाक्यमाकर्ण्य गोकर्णं स द्विजोऽब्रवीन् ॥ ८२ ॥

द्विज उवाच ।

यत्कर्त्तव्यं वने साधोतन्ममाऽऽचक्ष्व विस्तरात् । मोहपाशनिबद्धंहि शठंकृपणमानसम्
संसारगर्ते पतितं मामुद्धर दयानिधे ! । पितुरित्थं वचः श्रुत्वा गोकर्णो ज्ञानपण्डितः
उवाच दीनं निर्विण्णं पितरं हृष्टमानसः ।

गोकर्ण उवाच ।

मांसास्थिरक्तनिकरैस्वशरीरकेऽस्मिन्स्वन्वंत्यजाऽऽशुममतां वनितासुतादौ
पश्याऽनिशं जगदिदं क्षणभङ्गनिष्टं ज्ञानैः विरागरसिको भव भक्तिनिष्ठः ॥
धर्मं भजस्व सततं त्यज लोकधर्मान्संसेव्य साधुपुरुषाञ्जहि कामतृष्णाम्
अन्यस्यदोषगुणचिन्तनमाशुमुक्त्वा विष्णोःकथारसमथोनितरांपिब त्वम्

कुमाराऊचुः ।

एवं सुतोक्तविदितानुभवो निरीहस्त्यक्त्वा गृहं स्थिरमतिर्गतषड्विकारः ।
नित्यं हरिप्रियजनानुगतो महात्मा दुष्प्रापमाप च पदं स हरेर्वनस्थः ॥८७

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-
माहात्म्ये षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

———

# सप्तनवत्यधिकशततमोऽध्यायः

## धुन्धुकारिवृत्तान्तेतस्यवेश्याभिर्धनलोभेनवधकरणं पिशाचत्वप्राप्तिश्च धुन्धुकारिदशाखेदखिन्नस्यगोकर्णस्यब्राह्मणानांपुरोज्ञापनंसूर्याज्ञयाभागवत-सप्ताहकरणेतस्यपिशाचत्वनिरासोगोलोकप्राप्तिश्च

कुमारा ऊचु ।

पितर्येवं वनं प्राप्तो पश्चादागत्य नारद !। जननीं तर्जयामास धुन्धुकारी महाखलः ॥१

क्वचित्तं तिष्ठतिब्रूहि मातरं प्रति नारद!। सर्वथा त्वां हनिष्यामि नचेद्ब्रूया निधानकम्

सा तस्य वचनात्त्रस्ता रात्रौ दुःखितमानसा ।
निपत्य कूपे तु मृता लोकैर्ज्ञात्वा बहिष्कृता ॥ ३ ॥

गोकर्णस्तां तु निर्हृत्यद्विजैस्तज्ज्ञातिबान्धवैः । तीर्थयात्रांययौप्राज्ञः समदुःखसुखोमुने

धुन्धुकारी गृहे तिष्ठन्स्वके पण्यवधूवृतः । अत्युग्रकर्माचारेण तत्पोषणविमूढधीः ॥५

भूषणान्यभिलिप्सन्त्यस्तमूचुर्वारयोषितः । भोभोः प्रिय वयंसर्वास्त्वया नाथेनसंगताः

स्थिता नैवाऽत्र कोऽप्यन्यो धनदोऽस्त्येति मानद !।
तस्मात्सूक्ष्माणि वस्त्राणि भूषणानि धुमन्ति च ॥ ७ ॥
देहि नो चेद्व्रजिष्यामस्त्वत्सकाशान्नरान्तरम् ।
इति श्रुत्वा वचस्तासां चिन्तयित्वा क्षणं स च ॥ ८ ॥
निर्गतः स्वगृहाद्रात्रौ कामान्धो मृत्युमस्मरन् ।
मुषित्वा कस्यचिद्गेहाद्वस्त्राण्याभरणानि च ॥ ९ ॥

ददौताभ्योमुदायुक्तः प्रीत्यैतासां स नारद!। तानिदृष्ट्वा ह्यमूल्यानि वस्त्राण्याभरणानिच

ताःस्त्रियश्चिन्तयामासुश्चौर्येणैतानि चामुना । आहृतानीति निश्चित्यपरस्परममन्त्रयन्

चौर्यं करोत्यसौ नित्यमेनंराजा ग्रहीष्यति । वित्तंहृत्वा पुनश्चैवमारयिष्यतिनिश्चितम्

अतो रहसि चास्माभिर्हत्वाऽमुंचौर्यकारिणम् । वित्तं च बहु संगृह्य किमन्यत्रनगम्यते

इतिताःक्रूरहृदयाःसुप्तं कण्ठग्रहं तदा । पाशैः सुतीक्ष्णैर्बद्ध्वा च व्यापादयितुमुद्यताः
यदा च न मृतश्चाऽसौ भृशं कण्ठग्रहेण वै । तदाङ्गाराणि बहुशोमुखे चास्यविचिक्षिपुः
अग्निज्वालातिदुःखेन व्याकुलोनिधनं गतः । तद्देहंचिक्षिपुर्गर्ते प्रायः साहसिकाःस्त्रियः
न ज्ञातं तच्चरित्रं तु केनापि मुनिसत्तम ! । लोकैः पृष्टा वदन्तिस्म दूरे यातः पतिर्हिनः
आगमिष्यति दीर्घेणकालेन धनकर्षितः । अतःस्त्रीणांन विश्वासः कर्त्तव्यो विदुषांवरैः

विश्वस्तं सर्वथा घ्नन्ति प्रार्थयन्त्यो नवं नवम् ।
सुधामयं वचो यासां कामिनां रसवर्द्धनम् ॥ १९ ॥

हृदयंक्षुरधाराभं प्रियःको नाम योषिताम् । अथ ता बहुलं वित्तं गृहीत्वा वारयोषितः
ग्रामान्तरं ययुः शीघ्रं भयाद्राज्ञोऽतिविह्वलाः । धुन्धुकारी बभूवाऽथ महाप्रेतःकुकर्मकृत्
वात्या रूपधरोनित्यं धावन्दुर्मृत्युतो दिशः । शीतातपपरिक्लिष्टो निराहारःपिपासितः
न च लेभे सुखं क्काऽपिहा हेति प्रवदन्मुहुः । कियत्कालान्तरे त्वेनं मृतं चैवावबुध्यत्र

गोकर्णस्तीर्थयात्रायां गयाश्राद्धमथाऽकरोत् ।
समाप्य तीर्थयात्रां तु स्वं पुरं समुपेयिवान् ॥ २४ ॥

सभाजितःसपौरैस्तुप्रीत्या स्वजनबान्धवैः । उवासस्वगृहे चैवदिनानि कतिचिद्द्विजः
रात्रौप्रसुप्तं गोकर्णंज्ञात्वा वेश्माङ्गणे स तु । धुन्धुकारी महादुष्टो रौद्रं रूपं व्यदर्शयत्
क्षणं नागःक्षणं चोष्ट्रःक्षणं स महिषोऽभवत् । क्षणमग्निः क्षणंसर्पः क्षणेन पुरुषोऽभवत्
वैपरीत्यमिदं दृष्ट्वागोकर्णो धैर्यसंयुतः । चिन्तयामास मेधावी किमेतदिति विस्मितः
अयं दुर्गतिमापन्नः कोऽप्यस्ति पुरुषाधमः । इतिनिश्चित्य मनसा तमुवाच दयान्वितः

गोकर्ण उवाच ।

कस्त्वमुग्रतरो रात्रौ भीषयन्मामुपागतः ।
प्रेतो वाऽथ पिशाचो वा कुतः प्राप्तो दशामिमाम् ॥ ३० ॥

तद्ब्रूहि त्वंमहाभाग! किं कार्यन्तेमयाऽधुना । घोररूपो यतो रात्रौ मत्समीपमुपागतः
इति श्रुत्वा वचो भ्रातुर्धुन्धुकारी महाखलः । प्रेतभावमनुप्राप्तो रुरोद भृशमातुरः॥३२
वक्तुं नैव क्षमो वाचःप्रेतत्वेन विमोहितः । सञ्ज्ञया निर्दिदेशाऽथ जलंपातुं पिपासितः

अथाऽसौ सुमहाभागो गोकर्णः साधुसम्मतः ।
स्वकाञ्जलौ जलं कृत्वा प्राक्षिपत्तमुदीरयन् ॥ ३४ ॥
तत्क्षिप्तं तज्जलं भ्रात्रा गोकर्णेन महात्मना । उपस्थितंच तृप्त्यर्थं प्रेतस्यधुन्धुकारिणः
अथोवाचागतज्ञानः प्रदत्तेनाम्बुनाऽमुना । पुण्यात्मनात्मनोभ्रात्रा गोकर्णेन च नारद

प्रेत उवाच ।

अहंभ्राता त्वदीयोऽस्मि धुन्धुकारीतिनामतः । आत्मनः कर्मदोषेण प्रेतत्वंसमुपागतः
मम माता मृता दुःखाद्बहुशस्त्वर्जितामया । द्रव्यहेतोस्ततः पश्चाद्वारस्त्रीपोषणोत्सुकः
निषिद्धं कृतवान्कर्म चौर्यादिधनलोभतः । एकदा प्रार्थितस्ताभिर्भूषणान्यम्बराण्यहम्
धनिकस्य गृहाद्रात्रौ मुषित्वा तान्युपानयम् । ततस्ताधनलोभेन पाशैर्बद्ध्वा गलेबलात्
मां तु व्यापादयामासुर्वह्निक्षेपेण मानद ! । गृहीत्वा मद्धनं भूरि ताःसर्वा भूपतेर्भयात्
पलायिताःपुरादस्मात्स्वार्थोन्मूलितसौहृदाः । अतःप्रेतत्वमापन्नो भ्रातरद्यत्वयाऽम्बुना
सिक्तः सञ्ज्ञामहंप्राप्तः पुण्येनाऽतिकृपालुना । वाताहारेण जीवामि दैवादिष्टफलोदयः
अपश्यं त्वामहं सुप्तं भ्रातरं स्वगृहाङ्गणे । ततस्ते ह्यनभिज्ञस्य धर्षणाय कृतोद्यमः ॥४४

अभवं सहसा साधो ! ज्ञातश्चाऽहं त्वयाऽधुना ।
दीनबन्धो दयासिन्धो ! भ्रातर्मामाशु मोचय ॥ ४५ ॥
प्रेतभावादमुष्मात्त्वं कृतार्थोऽसिनसंशयः । इतिश्रुत्वावचो भ्रातुर्गोकर्णोज्ञानवान्सुधीः
भ्रातरं प्राह खिन्नात्मा दुःखितं धुन्धुकारिणम् ॥ ४७ ॥

गोकर्ण उवाच ।

तुभ्यं दत्तो मया पिण्डो गयायां त्वामहं मृतम् ।
श्रुत्वा लोकमुखाद्भ्रातस्त्वं कथं प्रेततां गतः ॥ ४८ ॥
गयापिण्डप्रदानेन दुर्गतोऽपि शुभांगतिम् । प्राप्नोति नाऽत्रसंदेहस्त्वं कथं न दिवंगतः
भ्रातुरित्थं वचः श्रुत्वा गोकर्णस्य महात्मनः ।
धुन्धुकारी दुःखितात्मा प्रोवाच पुरतः स्थितः ॥ ५० ॥
गयाश्राद्धशतेनापि न मे मुक्तिर्भविष्यति । उपायोऽन्यश्चिन्तनीयो ममोद्धारायवैत्वया

इति तद्वाक्यमाकर्ण्य गोकर्णो विस्मयंगतः । प्राह श्राद्धैर्नमुक्तिश्चेत्तर्ह्यसाध्यागतिस्तव
इदानीं त्वं निजस्थानमातिष्ठ प्रेत! निर्भयः । विचार्याऽहं करिष्यामिमुक्त्युपायं परन्तव
इतिवाक्यं समाकर्ण्य धुन्धुकारी ततो गतः । निजंस्थानं श्मशानस्थंकलिद्रुममतःपरम्
शेषांरात्रिं स गोकर्णश्चिन्तयन्नेवनारद । तस्यमुक्तिस्थितस्तत्र तदुपायं न चाध्यगात्॥
प्रातस्ततःसगोकर्णः स्वज्ञातिकुलबान्धवान् । धर्मशास्त्रविदो विप्रान्रात्रिवृत्तंन्यवेदयत्

ते विचार्य च तद्वृत्तं शास्त्रेषु बहुशो द्विजाः ।
यदा न ज्ञातवन्तस्तद्वृत्तं सूर्यंतदाऽस्तुवन् ॥ ५७ ॥

द्विजाऊचुः ।

नमस्ते भास्करादित्य तमोहन्तर्गभस्तिमन् !। लोकसाक्षिञ्जगद्धाम सुरासुरनमस्कृत!॥
द्वादशात्मन्हरिहय! भास्वँल्लोकप्रबोधक !। त्वं गतिः सर्वलोकानांसततंधर्मशीलिनाम्

त्वं ब्रह्मा त्वं हरिः शूली सृष्टिस्थितिविनाशकृत् !।
त्वामृते नास्ति लोकेऽस्मिञ्छरणं प्राणिनां विभो !॥ ६० ॥

शर्वस्त्वं क्षितिरूपोऽसिभवोऽसिजलरूपधृत् । त्वमग्निरूपोरुद्रोऽसिवायुरस्युग्ररूपधृत्
भीमोऽस्याकाशदेहस्त्वं यज्वा पशुपतिः स्वयम् । महादेवःसोममूर्तिरीशानःसूर्यएवहि
तवाऽष्टौ मूर्त्तयो दिव्या इज्यन्तेवेदवादिभिः । सर्वकामसमृद्ध्यर्थंग्रामलोकत्रयस्य च

मत्स्यस्त्वं वेदधृक्चाऽसि कूर्मश्चाऽद्रिधरो वरः ।
धराधरो वराहोऽसि लोकधृक्त्वं त्रिविक्रमः ॥ ६४ ॥
ब्रह्मध्रुग्घ्नो भार्गवस्त्वं लोकध्रुग्घ्नोऽसि राघवः ।
भूभारहन्ता कृष्णोऽसि बुद्धोऽस्यसुरमोहकृत् ॥ ६५ ॥

कल्क्यसि म्लेच्छहन्तात्वंधर्मग्लानौयुगेयुगे । देवासुरमनुष्याणांपशुपक्ष्यम्बुचारिणाम्
नानाविधानां जीवानांत्वंस्रष्टाब्रह्मरूपधृत् । इन्द्रोऽसि धर्मराजोऽसिवरुणस्त्वंधनेश्वरः
लोकपालस्वरूपेण वर्त्तसे गोगणेश्वर !। त्रयीमूर्त्तिस्त्रिकालेज्यस्त्रिधामात्रिगुणात्मकः
त्वमेव पूज्यसे लोकैस्त्रिधा भिन्नो दिवाकरः । पद्मप्रबोधनकरस्त्वमेवाऽसि जगत्पते !
इत्युदीर्य द्विजश्रेष्ठायावत्तस्थुर्मुनीश्वर !। तावदाकाशगः प्राह स्फुटं तेषां तुशृण्वताम्

श्रीसूर्य उवाच ।

श्रूयतां भो द्विजश्रेष्ठा यदर्थं वर्णितोऽस्म्यहम् । भवद्भिर्धुन्धुलीसूनोर्महापातकशान्तये॥
आत्मदेवस्य पुण्येन गोकर्णो रौहिणोह्ययम् । श्रीभागवतसप्ताहंकृत्वोद्धर्ता भविष्यति
यद्भवद्भिः कृतं स्तोत्रं मम वैभववर्णनम् । तेन स्तुत्वा नरो विप्रा देवयानं लभिष्यते॥

पुत्रार्थी च धनार्थी च धर्मार्थी मोक्षकामुकः ।

वाञ्छाचिन्तामणिस्तोत्रंपठित्वात्यन्तमाप्नुयात् ॥ ७४ ॥

इत्युक्त्वाभास्करोदेवोविरराम दिविस्थितः । तेद्विजाःसाध्वितिप्रोचुर्गोकर्णहृष्टमानसाः
ततः समाजे विप्राणां तुङ्गभद्रातटे शुभे । कौतुकं सुमहद्द्रष्टुं तत्राऽगान्नागरी प्रजा॥
गोकर्णो ज्ञाततत्त्वार्थोवक्ताऽध्यासनमास्थितः । नारायणादिकान्नत्वासप्ताहंसमवर्त्तयत्
श्रीहरेस्तु वचः शास्त्रं तीर्थं पादाब्जसम्भवम् । यदिसत्यंतदाप्नोतुधुन्धुलीतनयोगतिम्
इतिसंकल्प्य मनसा श्रीमद्भागवताभिधम् । जन्माद्यस्ययतश्चेति श्रीमहान्तमुपावदत् ॥
तत्र प्रेतः समागत्य स्थानं पश्यन्नितस्ततः । सप्तग्रन्थियुतं वंशं प्रविष्टो वातरूपधृत् ॥

शृण्वत्सु वैष्णवाग्र्येषु ब्राह्मणेष्वथ नारद ! ।

शुश्राव धुन्धुलीपुत्रो ग्रन्थिच्छिद्रस्थितोऽन्वहम् ॥ ८१ ॥

यदा कथाविरामोऽभूत्प्रथमेऽहनि नारद ! । तदैका कीचकग्रन्थिःपुस्फोटात्यद्भुतंह्यभूत्
द्वितीयादिष्वहःस्वेवमेकैकग्रन्थिभेदनम् । बभूव सप्तमे भिन्ने स सद्यः प्रेततां जहौ ॥
दिव्यरूपधरोभूत्वा तुलसीदाममण्डितः । पीतवासा घनश्यामः प्रबभौ भूषणान्वितः॥

गोकर्णं भ्रातरं नत्वा प्रोवाचाऽखिलतत्त्वदृक् ।

त्वयाऽहं मोचितो बन्धो ! कृपया प्रेतकश्मलात् ॥ ८५ ॥

धन्या भागवतीवार्ता प्रेतत्वोन्मूलिनी श्रुता । सप्ताहोऽपितथाधन्योविष्णुलोकगतिप्रदः
यत्प्रभावाद्विमुक्तोऽहं प्रेतभावाद्भृशातुरः । आर्द्रं शुष्कंलघुस्थूलंवाङ्मनःकर्मभिःकृतम्
पातकं भस्मसात्कुर्यात्सप्ताहोऽग्निरिवेन्धनम् । अस्मिन्वैभारतेवर्षेदेवानामप्यभीप्सिते
शृण्वतांभगवच्छास्त्रंगतिरत्युत्तमाभवेत् । स्नाय्वस्थिमज्जामांसासृक्सङ्घातंदेहमुच्यते
शुचि भागवतास्वादादशुचि त्वन्यथा मतम् । कर्मकश्मलसंदुष्टो देहो नरकभाजनम्

अतो दोषनिवृत्त्यर्थमेतदेव हि साधनम् । बुद्बुदा इव तोयेषु मशका इव जन्तुषु ॥९१
जायन्ते मरणायैव भगवच्छास्त्रवर्जिताः । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥

क्षीयन्ते चाऽस्य कर्माणि श्रुते भागवते द्विजाः ।
एवं ब्रुवति वै तस्मिन्विमानवरमागतम् ॥ ९३ ॥

वैकुण्ठात्तदधिष्ठायगतोऽसौविष्णुमन्दिरम् । विष्णुलोकंगतेनस्मिन्सर्वेविस्मितमानसाः

बभूवुश्चाऽपि पप्रच्छुर्गोकर्णं ते द्विजोत्तमाः ॥ ९४ ॥

द्विज उवाच ।

श्रुतं भागवतं सर्वैरस्माभिरिह संगतैः । किं कारणं महाभागत्वद्भ्रातैकोगतो हरिम्

गोकर्ण उवाच ।

श्रूयताममिधास्यामि कारणं भ्रातृसद्गतौ । यच्छ्रुत्वा यूयमेवाऽपि गोलोकंचगमिष्यथ
सप्ताहश्रावणं कार्यमुपवासपरायणैः । कृष्णैकतानमनिभिर्गोलोकगतिदायकम् ॥ ९७॥
पुनः शृणुध्वं सप्ताहं श्रीमद्भागवतं द्विजाः । एकाग्रचित्ताः सततं कृष्णप्रेमामृतप्रदम् ॥

इति श्रुत्वा वचस्तस्य गोकर्णस्य द्विजोत्तमाः ।
पुनः श्रोतुं भागवतं सप्ताहं समुपावसन् ॥ ९९ ॥

कृष्णैकतानमनयो नियमेन च नारद !। पुनस्ते शुश्रुवुः सर्वे श्रीमद्भागवतं द्विजाः ॥
कथावसाने भगवान्कृष्णः कमललोचनः । आविरासीन्मुनिश्रेष्ठशङ्खचक्रगदाब्जधृत् ॥
किरीटकुण्डलधरो वनमालाविभूषितः । पीतवासा घनश्यामः कटकाङ्गदभूषितः ॥
तं दृष्ट्वा ते द्विजाः सर्वे विष्वक्सेनादिभिर्युतम् । पार्षदप्रवरैर्हृष्टाःप्रणेमुर्भुविसंगताः ॥
जयशब्दो नमःशब्दस्तदासीत्सर्वतो मुने !। अथ शङ्खध्वनिं चक्रे हरिः संहर्षयन्द्विजान्
तदाऽनेके विमानास्तु वैकुण्ठात्समुपागताः । द्विजानां पश्यतां तत्र पार्षदप्रवरैर्युताः ॥
गोकर्णं तु समालिङ्ग्यददौसारूप्यमात्मनः । श्रोतॄनन्यान्घनश्यामान्पीतकौशेयवाससः
किरीटिनः कुण्डलिनो हारिणो वनमालिनः । चकार तत्क्षणात्तत्र महदाश्चर्यमप्यभूत्

तस्मिन्ग्रामे स्थिता ये तु आचाण्डालजना मुने ! ।
समारुह्य विमानांस्तान्ययुः कृष्णाज्ञया दिवम् ॥ १०८ ॥

गोकर्णसहितः कृष्णो गोपगोपीजनप्रियः । गोलोकं समनुप्राप्तः सर्वलोकोपरिस्थितम्

यत्र वृन्दावनं रम्यं शतशृङ्गसमावृतम् ॥ १०६ ॥

तद्बाह्येपरितोवृतंविजयया ह्यत्यद्भुतं राजतेऽ-

रण्यंयत्रतुमण्डपानिसुबहून्यच्छोदवाप्यो ह्रदाः ।

गावः कामदुघाः सुरद्रुमततिच्छायाश्रिता गोपकैः-

क्रीडातत्परमानसैः परिवृतो नन्दात्मजः क्रीडति ॥ ११० ॥

मध्ये त्वस्य सुकाननस्य रचितो वृन्दावनेशेच्छया-

रम्यं रत्नसमूहभर्मखचितं प्राकारमुद्भासयन् ।

न्यग्रोधः सुमहांस्ततः प्रतिदिशं गोपीजनाध्यासितं-

वत्सालङ्कृतमद्भुताकृतिमहच्छ्रीगोकुलं राजते ॥ १११ ॥

तन्मध्ये भवनं हरेरधिकृतं प्रोद्भासते भास्वरं-

यस्मिन्नन्दगृहेश्वरीसमुदितास्ते राधया राधिताः ।

यद्भाग्यं महदप्युमापतिमुखैश्चिन्त्यं सदाभ्यन्तरै-

स्तत्सूनोर्मधुराकृतेरधिचकास्त्यण्डौघभास्यांशुभिः ॥ ११२ ॥

वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैर्जपयज्ञकर्मभिः ।

योगैश्च संयान्ति नरा न तां गतिं सप्ताहगाथाश्रवणेन यान्ति याम् ॥११३॥

इतिहासमिमं पुण्यं यः पठेच्छृणुयादपि । सोऽपि गोलोकमभ्येति किं श्रीभागवतम्पुनः

इतिहासमिमं पुण्यं शाण्डिल्योऽपि मुनीश्वरः । पठते चित्रकूटस्थोब्रह्मानन्दपरिप्लुतः

आख्यानमेतत्परमं पवित्रं श्रुतं सकृद्वै विदहेदघौघम् ।

श्राद्धे प्रयुक्तं पितृतृप्तिमावहेन्नित्यं सुपाठादपुनर्भवश्च ॥ ११६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-
माहात्म्ये सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

# अष्टनवत्यधिकशततमोऽध्यायः

## सनत्कुमाराद्युक्तश्रीमद्भागवतसप्ताहश्रवणविधिवर्णनम्

कुमारा ऊचुः ।

अथ ते सम्प्रवक्ष्यामः सप्ताहश्रवणे विधिम् । येन भागवतं सिद्ध्येत्पुंसां कृष्णार्पितात्मनाम्
दैवज्ञं शास्त्रकुशलं समाहूय धनांशुकैः । समभ्यर्च्य मुहूर्तं तु प्राक्पृच्छेद्भक्तिमान्नरः ॥
स वदेच्च मुहूर्तं तु तत्राऽऽरम्भः प्रशस्यते । नभो नभस्येपोर्जाश्चसहःशुचिसमन्विताः

मासाः श्रेष्ठाः कथारम्भे पूर्णा चापि तिथिः शुभा ।
भौमार्किवर्जिता वारा भानि ध्रुवमृदूनि च ॥ ४ ॥

शुभेयोगे शुभेलग्ने प्रारम्भः शस्यते सदा । नित्यायां च कथायांतु पुराणानांमुनीश्वर
द्वादशीं वर्जयेत्प्राज्ञः सूत सूतकसम्भवात् । श्रीमद्भागवतस्याऽपि सप्ताहेनैत्यकेऽपि च
न निषेधोऽस्ति देवर्षे प्राहुरेवं पुराविदः । श्रीभागवतसप्ताहो महायज्ञः स्मृतो बुधैः ॥
अतो निमन्त्रणं कार्यं वैष्णवानां समन्ततः । सतांसमाजोभवितासप्ताहं वैष्णवोत्तमाः
आगन्तव्यमतश्चाऽत्र वैष्णवैः श्रवणार्थिभिः । समागतानां तेषांतुनिवासंपरिकल्पयेत्

तीर्थे वाऽपि वने वाऽपि ग्रामे वाऽपि प्रयत्नतः ।
संशोधितायां भूम्यां तु मण्डपं परिकल्पयेत् ॥ १० ॥

कदलीस्तम्भसंयुक्तं चतुर्दिक्षुध्वजान्वितम् । उच्चमासनमप्युक्तं वक्तुस्तस्याऽग्रतो मुने!
आपार्श्वद्वयमुक्तानि श्रोतॄणामासनानिच । उदङ्मुखो भवेद्वक्तासमाजेऽस्मिन्विदांवर:
वेदशास्त्रार्थतत्त्वज्ञो वैष्णवो ब्राह्मणोत्तमः । दृष्टान्तकुशलोधीरोवक्ताकार्योऽतिनिःस्पृहः
सर्वसन्देहहर्त्ताऽपिकार्योवक्तासदैवहि । वक्तुःपार्श्वेसहायार्थंस्थाप्योऽन्यःपण्डितःसुधीः
श्रोतॄणां संशयच्छेत्ता लोकबोधविधायकः । कथा विघ्नविघातार्थंगणेशंप्राक्प्रपूजयेत्

ततो दुर्गां हरं विष्णुं ब्रह्माणं भास्करं द्विजान् ।
सम्पूज्य विधिवद्भक्त्या तर्पयेद्देवताः पितॄन् ॥ १६ ॥

मुख्यः श्रोता ततः पश्चात्पूजयेत्पुस्तकेहरिम् । ततः प्रदक्षिणीकृत्य द्रव्यैर्वस्त्रफलानि च

धृत्वाऽञ्जलौ पुस्तकस्थं हरिं सम्प्रार्थयेन्मुने ! ।

त्वं भागवत!लोकेऽस्मिन्स्वयं कृष्णो व्यवस्थितः ॥ १८ ॥

समाश्रितो मया नाथ! मुक्त्यर्थं भवसागरे । मनोरथो मदीयोऽयं सर्वथा सफलस्त्वया
निर्विघ्नेन प्रकर्तव्यो दासोऽहं तव केशव !। इत्युच्चार्य मुने द्रव्यं पुस्तकाग्रे समर्पयेत् ॥
वक्तारं प्रार्थयेच्चाऽपि नमस्कुर्वन्कृताञ्जलिः । शुकरूप द्विजश्रेष्ठ सर्वशास्त्रविशारद!॥२१
श्रीभागवतव्याख्यानादज्ञानं मे विनाशय । इति सम्प्रार्थ्य वक्तारं वरयेत्पञ्चवाडवान्
द्वादशाक्षरमन्त्रस्य जपार्थं मुनिसत्तम !। गीतवाद्यविधिज्ञांश्च सम्पूज्यार्थांशुकादिभिः
स्थापयेत्कीर्तनार्थं तु कथान्ते विधिवन्मुने । यस्तु जायाधनागारपुत्रचिन्तांव्युदस्यच
शृणुयादेकचित्तस्तु स समग्रं फलं लभेत् । सूर्योदयं समारभ्य सार्द्धं त्रिप्रहरान्तकम्
पठित्वाऽर्थः प्रकर्त्तव्यो वाक्यमध्यायमेव वा । मध्याह्ने घटिकायुग्मं विरमेदपि नारद!
कथावसाने कर्त्तव्यं कीर्तनं केशवस्य च । उपवासः प्रकर्त्तव्यः श्रोतृभिस्तत्फलेप्सुभिः
तदशक्तो हविष्यान्नं सकृत्स्वल्पं समाहरेत् । जलेनाऽपि फलेनाऽपि दुग्धेनचघृतेन वा
केवलेनैव कर्त्तव्यं निर्विघ्नं धारणं तनोः । सप्ताहव्रतिनां पुंसां नियमाञ्छृणु नारद ॥

विष्णुदीक्षाविहीनानां नाऽधिकारोऽत्र कीर्तितः ।

ब्रह्मचर्यमधः सुप्तिः पत्रावल्यां च भोजनम् ॥

समाचरेन्नित्यमेव सप्ताहे मुनिसत्तम ! ॥ ३१ ॥

द्विदलं मधुतैलं च परान्नं चेक्षुजं रसम् । भावदुष्टं क्रियादुष्टं जह्यात्पर्युषितं व्रती ॥
पलाण्डुं लशुनं हिङ्गुं मूलकं गृञ्जनं तथा । नालिकांचैवकूष्माण्डं नरोनाद्यात्कथाव्रती
कामं क्रोधं मदं लोभं दम्भं मात्सर्यमेव च । मोहं द्वेषं तथाहिंसां नैवकुर्यात्कथाव्रती
वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा । स्त्रीराजमहतां चापि निन्दां जह्यात्कथाव्रती
सत्यं शौचं दयां मौनमार्जवं विनयं तथा । मनःप्रसन्नतांचाऽपि बुधः कुर्यात्कथाव्रती
श्रीकामस्तनयार्थी च जयकामश्च मोक्षधीः ।शृणुयाद्वैभागवतंनिष्कामः श्रीहरिं लभेत्
सप्तमे दिवसे कुर्याल्लङ्घनं तत्समाप्तिके । वक्तुश्च पूजा कर्त्तव्या गोभूस्वर्णाम्बरादिभिः॥

प्रसादतुलसीं मालां श्रोतृभ्यः प्रतिदापयेत् । उत्सवश्च तथा कार्यो गीतवाद्यविशारदैः

गीतार्थं शृणुयाच्चाऽऽपि परेऽहनि विचक्षणः ।
प्रतिश्लोकं च जुहुयाद्गायत्र्या वा यथाविधि ॥ ४० ॥

पायसं मधुसर्पिश्च तिलांस्तण्डुलकान्यवान् । शर्करां च प्रियालश्च द्राक्षांवातामखर्जुरो
अम्भोजानि च कर्पूरं चन्दनागुरुणी पुरम् । लवङ्गं बिल्वपत्राणिसहस्रं च पृथक्पृथक्
विघ्नस्य च विघातार्थं न्यूनाधिक्यनिवृत्तये । आत्मनः पूततार्थं च पठेन्नामसहस्रकम्
द्वादशाष्टादशाथाऽपि श्रद्धयाह्यधिकांस्तथा । पायसेनाशयेद्विप्रान्स्वर्णं धेनुश्च दक्षिणा
व्रतसिद्धयर्थमप्यत्र प्रौष्ठपद्यामथापि वा । स्वर्णसिंहं विनिर्माय तस्य पृष्ठे निधाय च
श्रीमद्भागवतं वक्त्रे लेखयित्वा समर्पयेत् । एवं कृते विधाने तु सर्वपापनिवारणम् ॥
भवेच्छ्रोतुः सुफलदं श्रीमद्भागवतं श्रुतम् । धर्मकामार्थमोक्षाणां साधनं भक्तिदायकम्
न कार्यं विद्यते लोके यदनेन न सिध्यति । ततो भागवतं लोके पुराणेभ्योऽधिकंमतम्
दोषाष्टादशनिर्मुक्तो वाचकः परिकीर्तितः । द्वात्रिंशदपराधैर्हि मुक्तः श्रोता मतो बुधैः॥

श्रीमद्भागवतं नाम पुराणं कामदं नृणाम् ।
तथापि श्रवणं चाऽस्य निष्कामस्यैव भक्तिदम् ॥ ५० ॥

श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः-
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं-
पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ५१ ॥

इति ते कथितंसर्वं कृतंचाऽपि तवेप्सितम् । ज्ञानवैराग्यभक्तीनां तारुण्यंलोकमोक्षदम्

सूत उवाच ।

इत्युक्त्वा ते कुमारास्तु कृष्णाङ्घ्रिसुधयाप्लुताः । विरेमुर्भगवद्भक्ता दीनोद्धरणतत्पराः
तद्वाक्यं तु समाकर्ण्य नारदो भगवत्प्रियः । प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः॥

नारद उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः । यद्भागवतसमाहात्म्निकटे दर्शितो हरिः

श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः । वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यस्य लभ्यते

सूत उवाच ।

एवं ब्रुवति वै तस्मिन्नारदे वैष्णवोत्तमे । पर्यटंस्तं समायातस्तत्र योगेश्वरः शुकः ॥

हिरण्यवर्षाकृतिरम्बुजाक्षो व्यासात्मजो ज्ञानपयोधिचन्द्रः ।
कथावसाने निजलाभतुष्टो हृदाऽनिशं भागवतं पठंश्च ॥ ५८ ॥
दृष्ट्वा सदस्यास्तमथोरुतेजसं सद्यः समुत्थाय वरासनं ददुः ।
सचोपविष्टः सुखमासने यदा तदाविरासीद्धरिरब्जलोचनः ॥ ५९ ॥
भवो भवान्या कमलासनः सुतैस्तत्राऽऽगतः कीर्तनदर्शनाय च ।
सुरेशमुख्यास्त्रिदशा विमानकैः समागतास्तैरभवद्वृतं नभः ॥ ६० ॥
प्रह्लादस्तालधारी तरलगतितया ह्युद्धवः कांस्यधारी-
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ।
इन्द्रो मार्दङ्गिकोऽभूज्जयजयसुवचः प्रावदंस्ते कुमाराः-
सद्भावस्य प्रवक्ता निरतिशयगुणो व्यासपुत्रो बभूव ॥ ६१ ॥
ननर्त्त मध्ये त्रिकमेव तत्र ज्ञानादिकानां नवरूपयुक्तम् ।
अलौकिकं कीर्त्तनकं समीक्ष्य प्रसन्नचेता हरिरित्युवाच ॥ ६२ ॥
मत्तो वरं भागवता वृणीध्वं प्रीतात्कथाकीर्तनतो भृशं वः ।
श्रुत्वाऽथ तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ६३ ॥

कुमारा ऊचुः ।

सप्ताहयज्ञेन कृतेन भक्त्या सद्यः प्रसन्नो भविता मुरारे ! ।
कलौ युगे घोरतरे नराणां स्वल्पायुषां विघ्नशताकुलानाम् ॥ ६४ ॥
एवं वरं विश्वविधानपालनप्रणाशहेतोर्भवतोऽखिलात्मनः ।
वृणीमहेऽन्यो न मनोरथो विभो! भवत्पदाम्भोजनिषेविणां हि नः ॥ ६५ ॥

एवमस्त्वितिचैवोक्त्वा तत्रैवाऽन्तर्दधे हरिः । नारदः सुप्रसन्नात्मा कुमारानभ्यवादयत्
ततस्ते सनकाद्याश्च भृग्वाद्याश्च शुकादयः । प्रययुःस्वाश्रमान्हृष्टाःपीत्वातच्चकथामृतम्

भक्तिः सुताभ्यां सहिता नारदेन प्रवर्तिता । भूमण्डले समस्तेऽस्मिंस्तदाप्रभृति शौनक

शिव उवाच ।

आख्यानं महदाकर्ण्य प्रीतात्मा शौनकः प्रिये । पर्यपृच्छत्पुनः सूतं सर्वसन्देहभञ्जनम्

शौनक उवाच ।

शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः । सुरर्षये कदा ब्राह्मैरेतदाख्याहि मानद ! ॥

सूत उवाच ।

श्रीकृष्णनिर्गमात्त्रिंशद्वर्षावधिगते कलौ । भाद्रशुक्लनवम्यां वै कथारम्भं शुकोऽकरोत्

परीक्षिच्छ्रवणान्ते तु गते वर्षशतद्वये । शुचिशुक्लनवम्यां तु गोकर्णोऽकथयत्कथाम् ॥

तस्मादपि कलौ याते त्रिशते सषडब्दके । ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणस्सुताः ॥

[1]कलौ सहस्रमब्दानामधुना प्रगतं द्विज !। परीक्षितो जन्मकालात्समाप्तिं नीयतां मखः

१ '७४तमश्लोकादारभ्याध्यायसमाप्तिपर्यन्तं श्लोकाः पुण्यपत्तनपुस्तके न सन्ति । एतत्स्थाने अधोलिखिताः श्लोकास्सन्ति ।

(इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयानघे । कलौ भागवती वार्ता भवरोगविनाशिनी

कृष्णप्रियं सकलकल्मषनाशनं च मुक्त्येकहेतुमिह भक्तिविलासकारि ।
सन्तः कथानकमिदं पिबतादरेण लोके हितार्थपरिशीलनसेवया किम् ॥ २॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर भगवत्कथासुमत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ३ ॥

असारेसंसारेविषयविषसंगाकुलधियःक्षणार्थंमोक्षार्थंपिबतशुकगाथातुलसुधाम्
किमर्थंव्यर्थंभोव्रजतकुपथेकुत्सितपथेपरीक्षित्साक्षीयच्छ्रवणगतमुक्त्युक्तिकथने॥

रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा । कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥५

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुञ्जं विलोक्य
जगतिशुककथातोनिर्मलंनास्तिकिञ्चित्पिबपरसुखहेतोर्द्वादशस्कन्धसारम्॥
एनां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्नहि भुवने किमप्यसाध्यम् ॥)

ईश्वर उवाच ।

इतिश्रुत्वा वचस्तस्य शौनको मुनिसत्तमः । पूर्णं चकार तं यज्ञं सहस्रपरिवत्सरम् ॥
ब्राह्मं पाद्मं वैष्णवं च कौर्म्मं मात्स्यं च वामनम् ।
वाराहं ब्रह्मवैवर्त्तं नारदीयं भविष्यकम् ॥ ७६ ॥
आग्नेयमर्द्धं वै सूताच्छुश्रुवुर्लोमहर्षणात् । एतानि तु पुराणानि द्वापरान्ते श्रुतानि हि॥
शौनकाद्यैर्मुनिवरैर्यज्ञारम्भात्पुरैव हि । यदा तु तीर्थयात्रायां बलदेवः समागतः ॥७८॥
नैमिषं मिश्रिकं नाम समाहूतो मुनीश्वरैः । तत्र सूतं समासीनं दृष्ट्वा त्वध्यासनोपरि॥
चुक्षुभे भगवान्रामः पर्वणीव महोदधिः । आषाढशुक्लद्वादश्यां पारणाहनि पार्वति ! ॥
पूर्वार्द्धयामवेलायां भावित्वात्कृष्णमायया । मुग्धोदर्भकरो रामः प्राहरल्लोमहर्षणम् ॥
ततो मुनिगणाः सर्वे हाहाकारपरायणाः । बभूवुर्नगजेऽत्यर्थं शोकदुःखाकुलान्तराः ॥
ऊचुश्च रामं लोकेशं विनयेन क्षमापराः ॥ ८२ ॥

ऋषयऊचुः ।

राम राम महाबाहो! भवता लोककारिणा । अजानतेवाचरिताहिंसाब्रह्मवधाधिका ॥
व्यासशिष्यो ह्ययं साक्षात्पुराणर्षिर्महातपाः । अस्मै ह्यध्यासनंदत्तमस्माभिर्यज्ञकर्मणि
अष्टादशपुराणानां वाचकाय कृतक्षणैः । कथायां जगदीशस्य दीर्घमायुश्च मानद ! ॥
तद्भवाँल्लोकरक्षार्थं धर्मसेतुप्रवर्तकः । आविर्भूतो जगन्नाथो निग्रहानुग्रहक्षमः ॥ ८६ ॥
इत्युक्त्वा मुनयस्ते तु बलदेवाग्रतः प्रिये ! । तूष्णींबभूवुःसहसा स्मरन्तो नियतेर्बलम्
ततः प्रोवाच भगवान्रामः शत्रुनिषूदनः । विप्रान्सम्प्रीणयंस्तांस्तु लोकवेदपथानुगः ॥

श्रीराम उवाच ।

विप्राः शृणुत भद्रं वः कोपं त्यक्त्वा सुदूरतः । यदहंवेद्मि भवतामभीष्टं कार्यसिद्धिदम्
अस्य पुत्रो महाज्ञानी भविष्यतिवरान्मम । भवतामीप्सितं सर्वं शास्त्रमवै कथयिष्यति
यदर्थमहमाहूतस्तच्च कार्य्यं समुच्यताम् ॥ ६० ॥

ईश्वर उवाच।

इतिश्रुत्वा वचस्ते तु रामस्य सुमहात्मनः । बल्वकस्य वधार्थाय प्रेरयामासुरीश्वरम्

ततः स बल्वलं हत्वा प्रसाद्य मुनिपुङ्गवान् । प्रणिपत्याभ्यनुज्ञातस्तीर्थयात्रामुपागतः ॥
तीर्थयात्रां गते रामे शौनकाद्या मुनीश्वराः । लौमहर्षणिमाहूय सत्कृत्य नगनन्दिनि ॥
तत्पदे स्थापयामासुः शेषसंकीर्तनायवै । आग्नेयोत्तरमाहात्म्यं श्रीमद्भागवतान्तकम्
पुराणं सप्तकं सार्द्धं शुश्रुवुर्हृष्टमानसाः । दशसप्तपुराणानि कृत्वा सत्यवतीसुतः ॥
नाप्तवान्मनसस्तोषंभारतेनाऽपि भामिनि ! । ज्ञात्वाऽस्य हृदयं खिन्नं नारदो देवदर्शनः
समाजगाम भगवान्व्यासस्याश्रममुत्तमम् । तं दृष्ट्वा वासवीसूनुः सत्कृत्यासनपूर्वकम्
नारदं पूजयामास विधिदृष्टेन कर्मणा । अथ तं नारदः प्राह किंभवान्क्लिष्टमानसः
ध्यायते तत्समाचक्ष्व सर्वं सन्देहकारणम् । इतिपृष्टः स मुनिना पराशरसुतोऽब्रवीत्
ब्रह्मन्किंकारणं चेतो मोहे जाने न तत्त्वहम् । भवान्विज्ञानकुशलो ज्ञात्वा तत्प्रब्रवीतुमे
एवं विज्ञापितस्तेन नारदोऽध्यात्मकोविदः । उवाच परमं तत्त्वं यदुक्तं विधिनात्मने॥

नारद उवाच ।

शृणु पाराशरे मत्तः कारणं येन वै तव । असम्पन्नं मनो भाति शास्त्रयोनेरपि प्रभोः॥
त्वयाऽवतीर्य लोकेऽस्मिन्वेदा व्यस्ता विभागशः ।
कृतानि च पुराणानि सेतिहासानि चानघ ! ॥ १०३ ॥
यत्रसर्वस्त्रयीधर्मो वर्णाश्रमनिवासिनाम् । निर्दिष्टो वीक्ष्यकालेन नृणामल्पायुषांकलौ
यत्राधिकारः सर्वेषां दृश्यते श्रवणादिषु । स्त्रीशूद्रद्विजबन्धूनां साधुसङ्गमशालिना ॥
धर्मादयो यथाशश्वद्वर्णितास्तेषु वै त्वया । प्राधान्येन तथा नैव वर्णितो महिमा हरेः
सर्वधर्मक्रियाशून्ये कलौ दोषनिधौ मुने । न गतिः पापकर्तॄणां विनाकृष्णकथामृतम्
एष एव गुणोह्यस्मिन्घोरे कलियुगे नराः । यत्कृष्णकीर्तनेनैव मुच्यन्ते कर्मबन्धनात्
यज्ञो दानं तपः कर्म ज्ञानं ध्यानं कृतादिषु । सिद्धिदं च तथा ब्रह्मन्नामकीर्त्तनकं कलौ
अतो वै कलिजातानामुद्धारार्थं नृणां भवान् । श्रीमद्भागवतं नाम पुराणं वर्णयत्वलम्
येन प्रवर्तितेनाङ्ग! भवतो मानसंध्रुवम् । तोषमेष्यति लोकाश्च प्राप्स्यन्ति कृतकृत्यताम्

ईश्वर उवाच ।

एवमादिश्य स मुनिर्व्यासायामिततेजसे । ययौ यादृच्छिकः शश्वद्गायन्हरिगुणान्प्रिये

नारदे तु गते पश्चाद्व्यासः सर्वार्थदर्शनः । चकार संहितामेतांश्रीमद्भागवतीं पराम् ॥
पैलादींश्चतुरो वेदानध्याप्य विधिपूर्वकम् । पुराणसंहिताःसर्वाः सूताय प्रत्यपादयत्
श्रीमद्भागवतं नाम पुराणंब्रह्मसम्मितम् । शुकमध्यापयामास विरतं लोकवेदतः ॥११५
सा संहिता भागवती लोमहर्षणसूनुना । श्रुता कथयतो राज्ञे औत्तरेयाय वै शुकात् ॥
शौनकादिऋषिभ्यस्तु तेन प्रोक्ता यथार्थतः । वरीवर्त्ति पुराणानामुपरीयं नगात्मजे ॥
अस्यांसंलग्नचित्तानां नृणामन्यत्र नो रतिः । जायते मानसे कृष्णोनन्दसूनुश्चकास्तिच
यत्त पृष्टं त्वया भद्रे लोकनिस्तारहेतवे । श्रीभागवतमाहात्म्यं मह्यं संकीर्त्तयेति ह ॥
तत्सर्वंच मया तुभ्यं निर्दिष्टं गणपाम्बिके ! । नानेतिहाससहितं भक्तिमुक्तिप्रदायकम्

यः शृणोति नरो भक्त्या माहात्म्यं पठतेऽपि च ।
अनुमोदनेन वासोऽपि लभते परमां गतिम् ॥ १२१ ॥
द्विजोऽधीत्याऽऽप्नुयाद्वेदान्क्षत्त्रियस्तु लभेज्जयम् ।
धनं वैश्यस्तथा शूद्रः श्रुत्वैव लभते गतिम् ॥ १२२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादेश्रीमद्भागवतमाहात्म्येऽष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

---

# एकोनद्विशततमोऽध्यायः

## कालिन्दीमाहात्म्यइन्द्रयागविधिवर्णनम्

ऋषयऊचुः ।

कालिन्द्याश्चैव माहात्म्यं वद सूत ! सविस्तरम् ।
यस्मै प्रकाशितं येन तदाख्यानसमन्वितम् ॥ १ ॥

सूत उवाच ।

एकदा पाण्डुतनयः शुश्रूषुः सौभरेः शुभम् । ज्ञानं तत्स्थानमभ्येत्य नत्वा तमितिपृष्टवान्

युधिष्ठिर उवाच ।

ब्रह्मन्मार्तण्डतनयातीरतीर्थेषु यच्छुभम् । तीर्थं तद्वद वैकुण्ठजन्मभूमि पुरात्परम् ॥३॥

सौभरिरुवाच ।

एकदा तु मुनिश्रेष्ठौ दिवि नारदपर्वतौ । गच्छन्तौ खाण्डववनं पश्यतः सुमनोहरम्
तत्रावतीर्णौ नभस उपविष्टौ तटे शुभे । कालिन्द्याः क्षणविश्रान्तौ स्नातुं विविशतुर्जले
शिविरौशीनरोराजा मृगयां तौ चरन्वने । दृष्ट्वा तन्निर्गमापेक्षी निषसाद सरित्तटे ॥६॥

तौ मुनी विधिवत्स्नात्वा परिधायाऽम्बराणि च ।
वन्दितौ शिरसा राज्ञा तेनोपविशतां तटे ॥ ७ ॥

तत्राऽऽलोक्य सुवर्णस्य शिविर्यूपान्सहस्रशः । नारदं गर्वसहितः पर्वतं च जगाद सः

शिविरुवाच ।

कथ्यतां मुनिशार्दूलौ कस्येमा यागयष्टयः । केनाऽत्र विहितो यज्ञः सुरेणाऽथ नरेणवा

मुक्त्वा काश्यादितीर्थानि यज्ञैरीजेऽत्र कः पुमान् ।
को विशेषोऽत्र तीर्थेभ्यस्तेभ्यो विज्ञानसन्निधिः ॥ १० ॥

नारद उवाच ।

पुरा हिरण्यकशिपुर्जित्वा शक्रादिदेवताः । त्रैलोक्यराज्यमासाद्य सोऽखर्वं गर्वमादधे
प्रह्लादस्तस्य तनयो नारायणपरायणः । तस्मै सोऽद्रुह्यताऽभीक्ष्णं पापात्मा नष्टमङ्गलः

तद्द्रोहाद्विष्णुना सद्यो नृसिंहतनुधारिणा ।
हत्वा दैत्यपतिं स्वर्गराज्यं स्वःपतयेऽर्पितम् ॥ १३ ॥

स्वपदंप्राप्यदेवेशो बृहस्पतिमथाऽवदत् । मूर्ध्नाऽभिवन्द्यतत्पादौनारायणगुणान्स्मरन्

इन्द्र उवाच ।

गुरो नृसिंहरूपेण हरिणा लोकधारिणा । दत्तं मे देवताराज्यं यष्टुमिच्छामि तं मखैः
स्थानंपवित्रंकथय ब्राह्मणांश्चैव मे गुरो ।। नविधेयो विलम्बोऽत्र त्वया नो हितकारिणा

बृहस्पतिरुवाच ।

अस्ति ते खाण्डववनं रम्यं परमपावनम् । केतक्यशोकबकुलमधुमत्तमधुव्रतम् ॥ १७॥

तत्राऽस्तियमुनापुण्याधन्या त्रैलोक्यपावनी। ददाति स्मरणे स्वर्गं मरणे ब्रह्मणःपदम्
तत्तीरे यज देवेश! केशवंबहुभिर्मखैः। यदीच्छसि स्वकीयानां कल्याणं त्वं निरन्तरम्

नारद उवाच।

गुरोर्वचनमाकर्ण्य तूर्णमारुह्य वाहनम्। शिवप्रदमिमं शक्रः स्वकीयवनमागतम् ॥२०
गुरुणा सह देवैश्च यज्ञोपकरणैस्तथा। अत्राऽऽगत्य विलोक्यैतद्वनं लेभे मुदं पराम्

गुरुणा नोदितः शक्रःसप्तर्षीन्ब्रह्मणः सुतान्।
वसिष्ठादीन्द्विजान्वृत्वा यजतिस्म जगत्पतिम् ॥ २२ ॥

तस्य प्रसन्नो भगवान्ब्रह्म शाभ्यां सहागतः। क्रतौ शतक्रतोर्यत्र महानभवदुत्सवः ॥
देवत्रयी सतां वीक्ष्य शक्रो वक्रमतिस्तदा। उत्थायासनतस्तूर्णमवन्दे मुनिभिः सह॥
वाहनेभ्योऽवरुह्याशुतदन्तेप्रविश्यते। आसनेषु सुहैमेषु बभुर्वेदीष्विवाग्नयः ॥ २५ ॥
सितरक्ताङ्गयोः शम्भुब्रह्मणोर्हरिराबभौ। नीलच्छविःपीतवासास्तडित्वानिव शृङ्गयोः
शक्रः प्रक्षाल्य तत्पादान्मूर्ध्ना तज्जलमादधे। अब्रवीच्च मुदा युक्तो वचनं मधुराक्षरम्

इन्द्र उवाच।

विहितोऽयं मया देव! यज्ञोऽद्य सफलोऽभवत्।
यदि मे दर्शनं प्राप्ता दुर्लक्ष्या अपि योगिभिः ॥ २८ ॥

एकेनैव त्वयाविष्णो कृतामूर्तिस्त्रयीमयी। गुणैस्तथापिनानात्वं स्फटिकस्येव तेमृषा
यथादारुषुगूढोऽग्निर्घर्षणेनविना विभो!। नाविर्भवति भूतानां हृत्सु भक्त्या तथाभवान्
एकस्य त्वयि भक्तिःस्यात्सर्वभूतोपकारिणी। बभूवुः सुखिनो देवाः प्रह्लादकृतयातया
वयं विषयिणो देव!त्वन्मायावृतचेतसः। न जानीमः स्वरूपं ते यथावत्पादसेवकाः ॥
भोब्रह्मन्भो महादेव युवामपि जगद्गुरू। एतस्यैव गुरुत्वेन यतोनातः पृथग्युवाम् ॥
यत्किञ्चिदुच्यते वाचा मनसा च विचिन्त्यते। अस्यैवमाया तत्सर्वे तद्द्वयीदूरवर्त्तिनः

प्रपञ्चजातं यदिदं विलोक्यते न सत्यमित्येव विचिन्त्यते नराः।
भजन्ति विष्णोश्चरणं तरन्ति ते यदम्बुमूर्ध्ना हर! धार्यते त्वया ॥ ३५ ॥
विधेऽस्य भूयादनुजन्मपादयो रतिर्मदीया कमलावयोर्भृशम्।

यदीक्षणक्षोभितया तया जगत्समस्तमेतन्महदादि जायते ॥ ३६ ॥
भवादृशो नास्ति कृपापरोऽपरो विपक्षपक्षे वितनोषि यत्सुखम् ।
स्वलोकशोकापनये कृपालुता यदुच्यते ते नृहरे! तदज्ञता ॥ ३७ ॥

नारद उवाच ।

इत्यभिष्टूय देवेशं केशवं प्रणतोऽग्रतः । तस्थौ तद्वाक्यशुश्रूषादत्तचित्तो महीपते!॥३८
एवमाकर्ण्य मुनयस्तुतिं तस्य रमापतेः । कृतामिन्द्रेण सदसि साधुसाध्विति चाब्रुवन्
शतमन्यो वर्षशतं ये कुर्वन्ति महत्तपः । न तेषामीदृशी भक्तिर्यादृशी तव माधवे ॥४०
न योगः सुलभोऽष्टाङ्गः ख्यातिर्येनाऽधिगम्यते ।
समत्वेन च तत्त्यागस्तद्भक्तिः शरणं नृणाम् ॥ ४१ ॥
स्वधर्मार्जितवित्तैर्यद्यथाविधि विधीयते । कर्म तस्याऽर्पणं विष्णौ भक्तिरेषाशिवप्रदा
न निन्देद्देवतामन्यां विष्णुबुद्ध्या च यो नमेत् ।
न त्यजेद्वेदवाक्यानि स भक्तोऽस्य हरेः प्रियः ॥४३ ॥
ये शृण्वन्ति हरेर्गुणानहरहः कुर्वन्ति ये कीर्तनं
ये चाऽस्य स्मरणं पदोश्च भजनं येऽमुं यजन्तस्तथा ।
यद्दास्येन नमन्ति चैनममुना कुर्वन्ति ये मित्रतां-
ये च स्वं च निवेदयन्ति न हि ते वाञ्छन्ति मुक्त्यादिकम् ॥ ४४ ॥
इन्द्र! भक्त्या त्वमप्येनमाराध्य जगद्गुरुम् ।
न कामय किमप्यस्मत्कृतकृत्यो भविष्यसि ॥ ४५ ॥

नारद उवाच ।

इति मुनिभिरुदीरितां तु वाचं त्रिभुवनपारपदप्रदां निशम्य ।
हरिरखिलगुरुः कृतस्वभक्तिं मधुरमुवाच वचो हरिं समाजे ॥४६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्य-
इन्द्रयागविधिर्नामैकोनद्विशततमोऽध्यायः ॥ १९९ ॥

---

# द्विशततमोऽध्यायः

## इन्द्रप्रस्थेभगवत्प्रेरणयानानातीर्थस्थापनंशिवशर्मपुत्रस्यविष्णुशर्मणःकथा-विष्णुशर्मणास्वपित्रेपूर्वजन्मवृत्तकथनंकालिन्दीकूलस्थित-तीर्थेऽस्मिन्भिल्लसिंहयोर्वैकुण्ठप्राप्तिवर्णनञ्च

श्रीभगवानुवाच ।

न तच्चित्रं सुराधीश! मुनयो ज्ञानवत्तराः। मदीयां यदि वै भक्तिं गुर्वीं कुर्वन्तिसत्कृताम्
एते ज्ञानोपदेष्टारस्त्रिलोकतलवासिनाम् । प्रवर्तयन्त्यमी नष्टं वेदमार्गं यतः सदा ॥२॥
भक्त्याभवानपि स्वर्गभोगासक्तोऽपिमां यतः । प्रपन्नोऽसि किमाश्चर्यं यतस्तवगुरुर्गुरुः
यजस्व सुरशार्दूल ! मखैर्मा(र्मां) बहुदक्षिणः ।
निष्कामस्त्वं समीपस्थं तूर्णं प्राप्स्यसि मत्पदम् ॥ ४ ॥
प्रतियागं प्रयच्छ त्वं रत्नप्रस्थान्यनेकशः । आख्यया स्थानमेतत्ते इन्द्रप्रस्थं भविष्यति
विधे ! त्वमत्र रचय प्रयागं तीर्थपुङ्गवम् । सरस्वतीं समानीय गङ्गां च जनपावनीम्
काशींच शिवकाञ्चींच त्वमत्र स्थापयेश्वर !। गोकर्णंच समं गौर्या निवासं कुरुसर्वदा
भोभो ब्रह्मसुता यूयं ज्ञानविज्ञानकोविदाः । निजयोगबलेनाऽत्र कुरुध्वं तीर्थसप्तकम्
निगमोद्बोधकं तीर्थं त्वं गुरो ! प्रतिपादय ।
विनाऽध्ययनमप्यत्र स्नानाद्बोधोऽस्तु छन्दसाम् ॥ ६ ॥
स्मृतिश्च जायतां पूर्वजन्मनस्तु परात्मनः । अहमारोपयाम्यत्र द्वारकां सुमनोहराम् ॥
समुद्रेण समं यत्र गोमत्या सङ्गमोऽभवत् । कोशलं च करोम्यत्रमध्येऽरण्यं च वासव!
ययोरवतरिष्यामि वपुर्भ्यां रामकृष्णयोः । बदर्याश्रममप्यत्र नरनारायणास्पदम् ॥१२
विदधामि सदा यत्र वसामि सुरनायक !। हरिद्वारंपुष्करं च तीर्थद्वयमनुत्तमम् ॥१३॥
तदपि स्थापयाम्यत्र तवैव हितकाम्यया । नैमिषे यानि तीर्थानि यानि कालञ्जरेगिरौ
सरस्वतीतटे यानि स्थापयाम्यहमत्र वै ॥ १५ ॥

नारद उवाच ।

शिवंशिवतरं वाक्यं हरेः श्रुत्वा कृतं च तत् । दृष्ट्वा तदुक्तमपि ते चक्रुर्ब्रह्मशिवादयः ॥

सर्वतीर्थमयेऽमुष्मिन्स्थाने स त्रिदशाधिपः । स्वर्णयूपैर्बहुमखैरीजे भूयो रमापतिम् ॥
रत्नप्रस्थानिविप्रेभ्यः कृष्णस्य पुरतो ददौ । नारायणः समस्तात्मा ममायमितितुष्यतु
इन्द्रप्रस्थमिदं तीर्थं ततः प्रभृति कथ्यते । सर्वतीर्थमये यत्र मृतो भूयो न जायते ॥१६
इन्द्रदत्तानि ते लब्ध्वा रत्नप्रस्थानि भूसुराः । तस्मैददुरवितथामाशिषं तत्र संसदि ॥
इन्द्राय तव गोविन्दोदानेनाऽनेन तुष्यतु । तावकी भक्तिरप्यस्मिन्भूयादव्यभिचारिणी
कर्मभूमाविह विभो! पुरा यज्ञशतं कृतम् । तेन पुण्येन लब्धं ते सकामेन सुरास्पदम् ॥

अधुना पूजितो विष्णुर्निष्कामेन त्वया मखैः ।
स्वपदाद्विच्युतो भूमौ भविष्यति द्विजाग्रणीः ॥ २३ ॥

तत्राऽपिनिजधर्मेण विष्णुमाराधयन्भवान् । स्मरिष्यति निजं कर्म कृतमत्र मखादिकम्
तत्स्मृतेर्गृहमुत्सृज्य भवांस्तीर्थानि पर्यटन् । जनकेन समं शक्र!तीर्थेऽस्मिन्संप्रपत्स्यते
चतुर्थाश्रममादाय त्यक्ष्यत्यत्र कलेवरम् । ततो विमानमारुह्य गणानीतं रविप्रभम् ॥

भवान्दिव्याङ्गवान्भूत्वा प्राप्स्यति श्रीहरेः पदम् ॥ २६ ॥

नारद उवाच ।

एवमाकर्ण्य विप्राणामाशिषं त्रिदशाधिपः । भविष्यपिशुनां चोक्तिं शिवेमुदमगात्तराम्
समाप्य विधिवद्यज्ञानत्र सौवर्णयष्टिकान् । माधवप्रमुखान्देवान्पूजितान्स व्यसर्जयत्
ऋत्विजो ब्रह्मणःपुत्रानभ्यर्च्य च धनादिभिः । बृहस्पतिं पुरस्कृत्ययययौशक्रस्त्रिविष्टपम्
तत्र राज्यं विधायेन्द्रो हरिभक्तियुतः शिवे !। अवातरद्भुवि क्षीणे पुण्ये हास्तिनपत्तने ॥
शिवशर्मा द्विजः कश्चिद्वेदवेदाङ्गपारगः । तस्य भार्या गुणवती नाम्नाऽन्वर्थवती भृशम्
तस्यां जातः सुवेलायामिन्द्रः श्रीपतिसेवकः । ज्योतिर्विदः समाहूतालग्नंदृष्ट्वाबभाषिरे

ज्योतिर्विदऊचुः ।

शिवशर्मन्नयं बालस्तव भावी हरिप्रियः । उद्धरिष्यति ते वंशं ब्रूमः सत्यं न वै मृषा ॥
त्रयोदशाब्ददेहो यः साङ्गं वेदचतुष्टयम् । अधीत्य ज्ञानसम्पन्नो विवाहं तु करिष्यति
पुनरुत्पाद्य सत्पुत्रं वानप्रस्थो भविष्यति । तीर्थेषु पर्यटन्धीरः संन्यासं धारयिष्यति
इन्द्रस्य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्ति हरिप्रस्थं मरणं तत्र यास्यति

नारद उवाच ।

गणकोदितमाकर्ण्य शिवशर्मा शिवं वचः । चकार विष्णुशर्माणं नाम्ना निजसुतं तदा

तान्विसृज्य च वित्तेन चिन्तयामास बुद्धिमान् ।
धन्योऽहं यस्य मे पुत्रो विष्णुभक्तो भविष्यति ॥ ३८ ॥
साधयिष्यति पुत्रोऽयमाश्रमांश्चतुरो मम ।
मरिष्यति च सत्तीर्थे मदन्यः कोऽस्ति भाग्यवान् ॥ ३९ ॥

एवं विचिन्त्य मनसा जातकर्माद्यकारयत् । शिशोर्द्विजातिप्रवरैः शिवशर्मा शुभेऽहनि
अथ सप्तस्वतीतेषु वर्षेषु द्विजसत्तमः । सुतोपनयनं चक्रे चैत्रमास्यष्टमेऽब्दके ॥ ४१ ॥
आद्वादशाब्दादध्याप्यवेदानन्वगतःसुतम् । शिवशर्मा शिवे! राजन्युयोज सह भार्यया॥
विष्णुशर्मास्वभार्यायांपुत्रमुत्पाद्यबुद्धिमान् । चकार तीर्थयात्रायांमनोनिर्विषयंस्वकम्
अभ्येत्य पितरं प्राह नत्वा तच्चरणद्वयम् । विष्णुशर्मा महाप्राज्ञो मुनिवाक्यमनुस्मरन्

विष्णुशर्मोवाच ।

अनुजानीहि मां तात विष्णुमाराधयाम्यहम् । तृतीयाश्रममासाद्यसत्संगतिविधायकम्
दारागारधनापत्यसुहृदः क्षणभङ्गुराः । बुद्बुदा इव तोयेषु सुधीस्तेषु न सज्जते ॥

स्वाध्यायेन च सन्तत्या मया तीर्णमृणद्वयम् ।
तीर्थेषु कामरहितो यष्टुमिच्छामि केशवम् ॥ ४७ ॥

संन्यस्तगुणरागोऽहंपश्चात्तीर्थोत्तमेक्वचित् । स्थातुमिच्छाम्यहंतावद्यावत्प्राणश्रमस्तिमे
इत्युक्तस्तेन पुत्रेण स पिता बुद्धिमत्तरः । स्मृत्वा ज्योतिर्विदांवाक्यमाहसंसारनिस्पृहः

शिवशर्मोवाच ।

चतुर्थाश्रमकालोऽयं ममाऽपिनिरहङ्कृतेः । विषयान्विषवत्त्यक्त्वासेविष्ये केशवामृतम्
गृहे मम मनः पुत्र! रमते नाऽद्य वार्द्धके । आनीतस्य वनाद्बद्ध्वा गजस्येव नृपालये

तवाऽनुजः सुशर्माऽऽयं कुटुम्बं धारयिष्यति ।
आवाभ्यामुज्झितं विद्याश्रीकुलाभ्यां यथा नरम् ॥ ५२ ॥

प्रव्रजन्तं तु मामेव तव माता पतिव्रता । अनुयास्यति मार्तण्डं यथा कान्तिर्दिनात्यये

तस्मादावामविज्ञातौ तया तात तवाऽम्बया । गच्छावश्चिन्तयन्तौ श्रीहरेःपादसरोरुहम्

नारद उवाच ।

इत्यालोच्य मुमुक्षू तौ निशीथे तमसावृते । सुप्तं कुटुम्बमुत्सृज्य गृहान्निर्याय जग्मतुः
सहैव पर्यटन्तौ तौ सुतीर्थे निरहङ्कृती । शिवेऽत्र शिवदे तीर्थे शक्रप्रस्थे समीयतुः ॥

अत्राऽऽगतः स्वविहितान्पूर्वजन्मनि यूपकान् ।
विष्णुशर्मा समालोक्य सस्मार हरिसङ्गमम् ॥ ५७ ॥

ऊचे च पितरं धीमाञ्छक्रआसमहं पुरा । मयाऽत्र विहिता यज्ञा माधवप्रीणनेच्छया
अत्रैव मे प्रसन्नोऽभूत्केशवो भक्तवत्सलः । सन्तोषिता मणिप्रस्थैर्द्विजाः सम्तर्पयश्च मे

तेनैव वैष्णवी भक्तिर्दत्ता मोक्षो भवेऽत्र च ।
विष्ण्वादिभिः समस्तैस्तु तीर्थान्यत्र कृतानि वै ॥ ६० ॥

सर्वतीर्थमयं तीर्थमिन्द्रप्रस्थमिदं कृतम् । अत्रैव मे मृतिश्चोक्ता तैरेव मुनिपुङ्गवैः ॥६१
ततो हरिपदप्राप्तिरेतत्सर्वं स्मराम्यहम् । इमे गङ्गासरस्वत्यौ निजलोकाद्विरिञ्चिना ॥
समानीते तयोर्योगे प्रयागोऽयं निगद्यते । एषा काशी शिवपुरी प्रयागात्पूर्वदेशके ॥
द्विपञ्चाशद्धनुर्मात्रे मृतो यस्यां न जायते । काश्याः पश्चिमके भागे धनुषामेकविंशतिः
शिवकाञ्ची शिवेनैषा स्थापिता मृतमुक्तिदा । गोकर्णाख्यमिदं क्षेत्रं शम्भोःपरमवल्लभम्
धनुर्द्वयप्रमाणे तु भूमिभागे व्यवस्थिताम् । इयं द्वारवती पुण्या तीर्थराजस्य पश्चिमे ॥
धनुषां सप्ततिर्यत्र मृतो भावी चतुर्भुजः । अतोऽसौ पूर्वदिग्भागे कोशला जनवत्सला
अष्टादशधनुर्मात्रे दृश्यते पुण्यदर्शना । एतन्मधुवनं तात स्थापितं विष्णुना स्वयम् ॥
कोशला पश्चिमे भागे दशचापप्रमाणतः । अत उत्तरतस्तात! नरनारायणास्पदम् ॥६९
एतदेकादशधनुर्भूमिदेशे च तिष्ठति । एतत्तीर्थं हरिद्वारमतो दक्षिणतः स्थितम् ॥ ७०॥
त्रिंशद्धनुर्महीदेशे दृश्यते देवदुर्लभम् । एतत्तु पुष्करं नाम तीर्थं तीर्थशिरोमणिः ॥७१॥
द्वादशेष्वासमात्रे भूभागे भोस्तात! तिष्ठति । प्रयागादिकगव्यूतिः सप्तर्षीणांमहात्मनाम्
पूर्वस्यां दिशितीर्थानिसप्ततत्तीर्थसप्तकम् । तीर्थसप्तककाश्योऽस्तुसन्तितीर्थान्यनेकशः
पदे पदे येषु मृतो जायते स चतुर्भुजः । प्रयागादेकगव्यूतिमात्रे पश्चिमभूतले ॥७४ ॥

निगमोद्बोधकं नाम तीर्थं गुरुकृतं पुरा । तीर्थसप्तकनिगमोद्बोधयोरन्तरं महत् ॥
इन्द्रप्रस्थमिदं क्षेत्रं स्थापितं दैवतैः पुरा ।
पूर्वपश्चिमयोस्तात ! एकयोजनविस्तृतम् ॥ ७६ ॥
कालिन्द्या दक्षिणे यावद्योजनानांचतुष्टयम् । इन्द्रप्रस्थस्यमर्यादा कथितैषा महर्षिभिः॥
देवत्रय्यां च यो ह्यत्र त्यजत्यङ्गं भवत्यजः ॥ ७८ ॥

नारद उवाच ।

पुत्रस्यैतद्वचः श्रुत्वा शिवशर्मा शिवे! द्विजः । प्रत्याह संदिहानस्तंस्वपुत्रंसत्यवादिनम्

शिवशर्मोवाच ।

कथमेतद्विजानीयांत्वंपुराऽऽसीःसुरेश्वरः । त्वमत्रकृतवान्यज्ञान्मणिभिस्तोषिताद्विजाः
त्वदुक्तज्ञानवान्पुत्र यथाऽहं स्यां तथा कुरु । इन्द्रप्रस्थस्य मर्यादा कुतएषा त्वयाश्रुता
यतः प्रभृति ते जाता मतिस्त्वं नाऽत्यजोगृहम् । मत्तएव त्वयाधीतंसाङ्गंवेदचतुष्टयम्
पूर्वजन्मकृते कृत्ये ज्ञानमासीत्कुतस्तव ॥ ८२ ॥

विष्णुशर्मोवाच ।

ऋषिभिर्मे वरो दत्तः पूर्वजन्मस्मृतिप्रदः । तेभ्यएवाऽस्य तीर्थस्य श्रुताह्येषास्मृतिर्मया
निगमोद्बोधके तीर्थे स्नानमत्र पितः! कुरु । दुर्लभं प्राप्स्यसे ज्ञानं पूर्वजन्मस्मृतिप्रदम्
ममाऽपि पूर्वजनुषः प्रवृत्तिं त्वं स्मरिष्यसि । एतत्तीर्थजलस्पर्शात्तात ! सत्यं वदामिते

नारद उवाच ।

शिवशर्मणि विप्रेन्द्रे श्रुत्वैतत्स्नातुमुद्यते । निगमोद्बोधके तीर्थे स्मृतये पूर्वजन्मनः ॥
सिंहेनानुगतः कश्चिद्भिल्लो धावन्समागतः । अतित्रासपरीताङ्गो निःश्वसञ्भ्रमविह्वलः
हिंसात्मको वर्त्मघाती वणिजां लुण्ठतः(कः?) सदा ।
कृष्णाङ्गः पिङ्गकेशश्च खर्वो मार्जारलोचनः ॥ ८८ ॥
कुन्तहस्तो भीममूर्तिर्देही पाप्मेव भूपते !। ततः पश्चात्कियद्दूरे सिंहमालोक्यतावुभौ
पितापुत्रौ समीपस्थंद्रुममारुह्यतस्थतुः । वदन्ताविति हाकृष्ण! मोचयाऽतोऽपमृत्युतः
स किरातस्तु राजेन्द्र! ग्रहीतुं वेगवत्तरम् । वीक्ष्य सिंहं द्रुमं भीतः समारोढुं प्रचक्रमे॥

आरोहणं प्रकुर्वन्तं सिंहो जग्राह वेगवान् । पादयोरथ भूपृष्ठे पातयित्वा रुरोह तम्
अधःस्थितकिरातोऽपि कुन्तनोदरमस्य वै । ददार रुधिरौघाक्तनिसृतान्त्रकदम्बकम् ॥
जातव्यथो विधायाऽथ नादं परमदारुणम् । सिंहः पिपेष भिल्लस्य शिरःसद्यो ममार च
तयोःपञ्चत्वमापन्ने भूतसङ्घेऽत्र भूपते !। विमानद्वयमुत्तीर्णं गणाभ्यां सह सत्पदात्
नवीनघनवर्णाभ्यां स्फटिकोपलनिर्मितम् । चारुकुण्डलकर्णाभ्यां मणिप्रकरमण्डितम्
शङ्खचक्रगदापद्म हस्ताभ्यां चारुचित्रभृत् । दधद्भ्यां पीतवस्त्राणि हेमभित्तिविभूषितम्
प्रफुल्लाम्बुजनेत्राभ्यां पद्मरागगवाक्षभृत् । धीरनिर्ह्रादमञ्जीरपद्भ्यां रणितकिङ्किणि ॥
प्रकोष्ठे वलयश्रेणीं बिभ्रद्भ्यां चारुवेदिकम् । मुक्ताहारैर्मनोहारिवक्षोभ्यांसवितानवत्
कुटिलालकवक्त्राभ्यामुन्नतध्वजराजितम् । भ्रूयुगाक्षिप्तपञ्चेषु धनुर्भ्यामुच्चतोरणम् ॥
नासाल्लञ्जितकीराभ्यां निर्व्यूहशतशोभितम् । नवविद्रुमसच्छायतलाभ्यां दर्पणामलम्

दिव्याङ्गौ भिल्लपञ्चास्यौ त्यक्त्वाऽङ्गं प्राकृतं स्थितौ ।
पुरैव प्राणनिर्याणे तीर्थस्याऽस्य प्रभावतः ॥ १०८ ॥

तयोः समीपमागत्य विमाने तौ हरेर्गणौ । ऊचतुस्तौ वयोरूपमेवाकृतिधरौ ततः ॥
भोः किरात!नरश्रेष्ठ भोःपञ्चास्यमृगाधिप !। आवांजानीतमायातौवैकुण्ठाच्छ्रीहरेर्गणौ
नेष्यामस्तत्पदं सत्यं युवां तत्र नचोर्मयः । स्वं स्वंविमानमारुह्यागम्यतामाशुमाचिरम्

स्वं स्वं विमानमारूढौ तौ किरातमृगाधिपौ ।
ऊचतुर्विस्मयाविष्टौ लक्ष्मीपतिगणौ प्रति ॥ १०९ ॥

भोभोस्त्रिदशशार्दूलौ श्रूयतां वाक्यमावयोः । युवयोर्दर्शनाज्जातं ज्ञानं नौ पारमार्थिकम्
अत्र जन्मनि नावाभ्यां कृतं सुकृतमल्पकम् । स्मृतिर्नो जायते पूर्वकर्मणाम्वांप्रसादतः
मांसाहारौ प्राणिहिंसारतौ क्रूरान्तरैन्द्रियौ । पापाचारकुलेजातौ दर्शनेन भयप्रदौ ॥
आवामेतादृशौ लोके ह्यभूतामिति पापिनौ । केन पुण्येन युवयोर्जातं दर्शनमावयोः ॥

सारूप्यं च कुतः पुण्याद्यायावः श्रीहरेःपदम् ॥ ११० ॥

गणावूचतुः ।

तीर्थेऽत्र मरणान्नूनं सुराचार्यकृते पुरा । युवयोर्दर्शनं जातं नौ च सारूप्यमद्भुतम् ॥

लक्ष्मीपतिपदप्राप्तिर्भविष्यति च वां चिरम् । तावत्पापानि गर्जन्ति ब्रह्महत्यादिकान्यपि ॥
जातं न दर्शनं यावत्तीर्थस्याऽस्य बृहस्पतेः ।
यथा तमांसि नश्यन्ति भास्करस्योदयादिह ॥ ११३ ॥
तथा पापानि निगमोद्बोधकस्य विलोकनात् । इन्द्रप्रस्थाख्यमेतद्धि क्षेत्रमिन्द्रस्य पावनम् ॥
तेनाऽत्र पूजितो विष्णुः क्रतुभिर्बहुदक्षिणैः । तुष्टेन विष्णुना तस्मै वरो दत्तो निशाम्यताम् ॥
भोः शक्र! तावके क्षेत्रे सर्वतीर्थमये जनाः । तनुं त्यक्ष्यन्ति ये ते वै मत्तन्वा हिंसका अपि ॥

नारद उवाच ।

इत्युक्त्वा तौ गणश्रेष्ठौ नीत्वा तौ जग्मतुः पदम् । हरेर्यत्र गतो भूयो विश्वाब्धौ न निमज्जति ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये भिल्लसिंहवैकुण्ठारोहणं नाम द्विशततमोऽध्यायः ॥२०० ॥

---

# एकाधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थमाहात्म्यपूर्वकं शिवशर्म्मणः पूर्वजन्मनि वैश्यकुले वृत्तवर्णनम्

नारद उवाच ।

अथाऽवरुह्य तौ वृक्षात्पितापुत्रौ सुविस्मितौ । दृष्ट्वा हरिपदप्राप्तिमभूतां पापिनोरपि ॥
शिवशर्माऽथ विप्रेन्द्रः श्रुत्वा तीर्थस्तुतिं तदा । गणोक्तां विष्णुशर्माणमुवाच सुतमात्मनः ॥

शिवशर्मोवाच ।

यत्पदं न सुलभं द्विजन्मनां साधितेन तपसाऽपि लीलया ।
प्रापतुः शबरदंष्ट्रिणौ च तत्तीर्थराजमहिमा विलोक्यताम् ॥ ३ ॥
जन्मनःप्रभृति तावदामृतेः पापिनावपि च यत्प्रभावतः ।
जग्मतुः सुत! हरेः सरूपतामस्य तीर्थवृषभस्य का स्तुतिः ॥ ४॥

शुद्धसत्त्वमपि रूपमैश्वरं काऽम्बुजन्मजनिदेवदुर्लभम् ।
तामसौ क मृगनाथभिल्लकौ किंतु तीर्थमिदमद्भुतक्रियम् ॥ ५ ॥
तात भोः ! पतति वेधसः पदाज्जन्तुरन्तमधिगम्य कर्मणाम् ।
अत्र देवगुरुनिर्मिते मृतिं प्राप्य माधवपदान्न विच्युतिः ॥ ६ ॥

नारद उवाच ।

एवं प्रत्यक्षमालोक्य माहात्म्यं स द्विजोत्तमः । तीर्थस्याऽस्यगुरोराजन्स्नानंतत्रप्रचक्रमे
मुखदन्तपदानां स कृत्वा शुद्धिं च चेतसः । पञ्चकच्छः शिखाबन्धोपग्रहीमाधवंस्मरन्
अश्वक्रान्तेतिश्लोकस्य पाठेन तटमृत्तिकाम् । स्पृशंस्तयैव विदधत्तिलकंजलमाविशत्
तत्र प्रवाहाभिमुखो निमज्जन्पुनरुत्थितः । पुनर्मग्नो हरिं स्मृत्वा गङ्गां च जनपावनीम्
अयोध्याद्याः पुरीः सप्त पुनरुत्थाय संस्मरन् । पुनर्ममज्ज सलिले गोविन्दार्पितमानसः
कृत्वा यथाविधिस्नानं धौतवस्त्रे च पर्यधात् । बहिरागत्य तिलकं चक्रे च द्विजसत्तमः
करपादशिखासूत्रैर्दर्भांश्च विदधद्वशी । सन्ध्यां चकार विधिवत्तर्पणं त्रिविधं तथा ॥
सूर्याय कुसुमैर्दत्त्वा सजलैरर्घमादृतः । शिरोबद्धाञ्जलिपुटो नमश्चक्रे द्विजोत्तमाः ॥१४
आवाहनादिनैवेद्यपर्यन्तमथ विप्रराट् । जगत्पूज्यपदाब्जस्य विष्णोः पूजामचीकरत् ॥
कृतक्रियः सूपविष्टस्तादृशं सुतमात्मनः । जगाद संस्मरन्पूर्वजन्मकर्माणि कृत्स्नशः ॥

शिवशर्मोवाच ।

विष्णुशर्मन्नतेमिथ्यावाक्यंतात यतःस्मृतिः । अत्र स्नानेन मे जातापूर्वेषांजन्मकर्मणाम्
आकर्णय महाभाग ! कथयामि तवाऽग्रतः । पुराहमन्वयेजातो विशां धनिकधर्मिणाम्
पिता मे शरभो नाम्ना कान्यकुब्जेपुरेऽवसत् । वाणिज्येनार्जयन्वित्तं भूरिधर्मधनाश्रितः
व्यतीतस्तु महान्कालस्तस्य नाऽभवदात्मजः । जराग्रहीतदेहस्य तच्चिन्तातुरचेतसः ॥
अचिन्तयदहोरात्रमिति वैश्यवरस्तदा । विना सुतेन मे व्यर्थं धनं भूर्यपि संचितम् ॥
ऋते सुतमृणी लोके पितॄणां धनवानपि । सजलोऽपि विनावर्षं चातकानां यथाघनः
पुमाञ्जयतिसन्तत्या विश्वं धर्मधुरीणया । शक्त्यात्रिविधया राजा विपक्षमिव दुर्जयम्
प्रीणाति सन्ततिः शुद्धा सुमनः पितृमानवान् ।

मित्रप्रत्यर्थ्युदासीनान्सूनृता वाग्यथेरिता ॥ २४ ॥
उदयस्थेन पुत्रेण वर्द्धते स्वयशः पितुः । निर्मलं द्विजराजेन नीरंनीरनिधेरिव ॥२५ ॥
तस्माद्यतेत्सुतोत्पत्त्यै शरीरेण धनेन वा । तमृते हि द्वयं व्यर्थ जनानां तडिदायुषाम्
एवंचिन्तयतस्तस्य गृहे मुनिवरस्तदा । देवलोऽतिन्द्रियज्ञानो वरन्दातुं समाययौ॥२७
आगतं तं समालोक्य प्रत्युत्थायाऽऽसनात्पिता ।
दत्त्वाऽर्घमथ पाद्यं च ववन्दे शिरसा मुनिम् ॥ २८ ॥
उपवेश्याऽऽसने दत्ते स्वहस्तेन पिता मम । पप्रच्छ च मुनिश्रेष्ठं देवलं देवदर्शनम् ॥
स्वागतंतु मुनिश्रेष्ठ! शमस्ति भवतांकुले । तपःस्वाध्यायनियमा निष्प्रत्यूहा भवन्तिच
कालेचाऽतिथयः कच्चिदायान्ति भवदाश्रमे । कच्चिदाश्रमवृक्षावःफलन्ति मनसेप्सितम्
व्याघ्रादयोन नकुर्वन्ति कच्चिद्वैरं मृगादिभिः । त्वदीयाश्रममभ्येत्य भ्रातरो भ्रातृभिर्यथा
तवाऽटनं भुवि मुदे गृहिणामन्यथा कथम् । तेषां गृहाब्धिमग्नानां दर्शनं क्व भवादृशः॥
हरिपादरजोवृद्धेः कामं कामो न कुत्रचित । मुने! तव तथाप्याशु हेतुमागमने वद॥३४

शिवशर्मोवाच ।

इत्युक्तस्तेन स मुनिर्देवलो देवपूजितः । अब्रवीत्तन्मनोभावं ज्ञातुकामो विशाम्पतिम् ॥

देवल उवाच ।

वैश्यवर्य!त्वया भूरि धनंधर्मेण सञ्चितम् । करोषि येन धर्मज्ञ! नित्यनैमित्तिकीः क्रियाः
आदरं राजसदसि धनेन लभते नरः । सुभटः शत्रुसंग्रामे विक्रमेण यथा जयम् ॥३७॥
गृहस्थस्तु धनं प्राप्य परांपुष्टिं व्रजत्यलम् । शरत्परिणतं सस्यमनड्वानिव विट्पते! ॥
धनिनं न विमुञ्चन्ति बन्धवोऽन्ये च ये जनाः । मधुमत्सुमनोयुक्तं पादपं मधुपाइव ॥
धनाभावेन गृहिणां कृशत्वमुपजायते । सर्वतो ग्रीष्मसमये त्वम्भसां सरसामिव॥४०
तद्धनं वर्तते भूरि गृहे तव विशांपते !। कुतः कृशत्वमङ्गानां गोप्यं चेन्न वदाऽद्य मे॥४१

वैश्य उवाच ।

हितोपदेशा निरता भवन्तः पितरो यथा । गोपनीयं भवद्भ्यः किं मादृशैः पुत्रतां गतैः
त्वत्प्रसादान्मुनिश्रेष्ठ!सर्वतोऽस्ति शिवं मम । वार्द्धकेऽपि सुताभावो दुःखमेकमिदं मम

तस्मात्कृशत्वमङ्गानां विद्धि मे मुनिपुङ्गव !। बिभेम्यहं पितृऋणाद्यतोऽधः पतनं नृणाम्
तमुपायं कुरु मुने! येन स्यां सुतवानहम् । किञ्चित्कर्तुमशक्यं न भूतलेऽत्र भावदृशैः॥

शिवशर्मो उवाच ।

इत्याकर्ण्यवचस्तस्य वैश्यवर्यस्य देवलः । मनःक्षणं स्थिरं कृत्वा दध्यौ मीलितलोचनः
सन्ततेर्मत्पितुर्दृष्ट्वा प्रतिबन्धस्य कारणम् । देवलोऽतीन्द्रियज्ञानीत्वभाषेकारयन्स्मृतिम्

देवल उवाच ।

एकदा तु पुरा वैश्य तवेयं धर्मचारिणी । यं चकार स्वचित्ते तं कथयामि मनोरथम्
गुर्विणी यद्यहं गौरि भवेयं शम्भुवल्लभे! । तदा त्वां तोषयिष्यामि षड्रसान्वितभोजनैः
धूपदीपकमालाभिस्ताम्बूलैर्नृत्यवाद्यकैः । तन्त्रीमुखोद्गतैर्गीतैर्नानाविधविलेपनैः ॥५०॥
एवं प्रतिश्रुत्य पुरः सखीनां दयिता तव । प्रतीक्षमाणा तं कालं तस्थौ तद्भक्तिसंयुता

तस्मिन्नेवाऽभवद्गर्भो मासेऽस्या योषितस्तव ।
ऊचुरेनां ततः सख्यः सर्वाः सस्नेहचेतसः ॥ ५२ ॥
यस्त्वया वाञ्छितो गर्भो गौर्या सम्प्रतिपादितः ।
अतः प्रतिश्रुतं देव्याः पूजनं सुभगे ! कुरु ॥ ५३ ॥

नो चेद्विकाराद्भवति विघ्नन्तु तदनुष्ठितात् । तोषितारोषिताश्चाऽत्रदेव्यो हि वरशापदाः
सखीभिरिति ते भार्या कथितेयं मुदान्विता । त्वामुवाच महाभागा विनयेन पतिव्रता

नाथ ! पूजयितुं गौरीं वाञ्छाम्यखिलकामदाम् ।
यत्प्रसादादहं जाता वाञ्छितार्थवती प्रभो ! ॥५६ ॥

वैश्यवर्य!त्वमेवैतच्छ्रुत्वाऽस्या वचनं शुभम् । अमन्यत गर्भवतीमेनां निजगृहेश्वरीम् ॥
मोदमानश्च नितरां तेन सद्यो भवानपि । भृत्यानाज्ञापयामास पूजावस्तूपपादने ॥५८
तैरानाय्यसमस्तानि वस्तूनि भवता ततः । अस्यैदत्तानि मधवन्द्राक्षागन्धादिकान्यपि

ततो निजसखीः सर्वा आहूयेयमिदं जगौ ।
सख्यः समस्तासामग्री समानीताऽम्बिकार्चने ॥ ६० ॥

नीत्वा पूजोपकरणं यूयं याताऽम्बिकालयम् । सन्तोषयत तां देवीं पूजया विधिदृष्टया

गुर्विणीतिकुलेऽस्माकं न निर्याति गृहाद्बहिः ।
अतोऽहं नाऽऽगमिष्यामि यूयं यात तदर्चने ॥ ६२ ॥

इत्याज्ञप्तास्तु ताः सख्यो नीत्वोपकरणं ययुः । अम्बिकालयमुन्मत्तभ्रमद्भ्रमरकेतनम्
कोकिलाकुलसंकेलिसहकारकुलाकुलम् । हंससारसचक्राह्वमण्डितं स्वच्छसारसम् ॥
महादेवगुणालापिशुकसारिसमावृतम् । हारयोग्यलतासेके तत्परोमासखीधरम् ॥६५॥
उमापतेरुमापादन्यासपूतमहीतलम् । स्फटिकोपलसंबद्धजलाधारसुरद्रुमम् ॥ ६६ ॥
पार्वतीपतिसंनास्यगायद्गन्धर्वनादितम् । मन्दानिलमनाग्धूतचूतचम्पककोरकम् ॥६७॥
नृत्यन्मयूरनिर्ह्रादप्रतिनादितलतागृहम् । तल्लीलाचलविद्योतमानं रत्नलसत्प्रभम् ॥६८॥

तत्र गत्वा गिरिसुतां प्रणेमुस्ताः सभर्तृकाम् ।
प्रदक्षिणीकृत्य ततो भक्त्या तां च बभाषिरे ॥ ६९ ॥

जगदम्ब ! नमस्तुभ्यं शम्भो देहि शिवप्रिये !। त्वत्पूजार्थं समानीतो बलिरेष प्रगृह्यताम्
वैश्यस्तुशरभो नाम्ना तस्यास्तिललिताङ्गना । तयाऽभिलषितोगर्भस्तत्प्राप्तौनवपूजनम्
त्वत्प्रसादादभूत्तस्याः सगर्भः शम्भुवल्लभे !। त्वत्पूजनाय प्रहितो बलिरस्माभिरेषकः॥
तस्याःकुले गर्भवती न निरेतिबहिर्गृहात् । अतः सा नाऽऽगता देवि!प्रसीदेनं गृहाण वै

इत्युक्त्वा तां तदा वैश्य ! त्वत्स्त्रीसख्यस्तु तं बलिम् ।
समर्पयित्वा विधिवदानर्चुश्चन्दनादिभिः ॥ ७४ ॥
प्रतिवाक्यमलब्ध्वा ता गौर्याः प्रत्याययुर्गृहम् ।
निजसख्यै समाचख्युर्विषण्णां तां शिवप्रियाम् ॥ ७५ ॥

तासामाकर्ण्य वचनमिति वैश्य!तवाऽबला । उन्मनाश्चिन्तयामास कुतो गौरीनपिप्रिये
साजानातियथाभक्तिस्तत्पूजा याकृतामया । नादृशानांकिमज्ञातंबाह्यं चाभ्यन्तरंनृणाम्
न गताऽहं ततस्तत्र तज्जानात्यपि कारणम् । मया दत्तेन बलिना कुतः सा न तुतोष वै
नाऽहमन्यत्प्रजानामि तदतोषे हि कारणम् । ऋतेमद्गतेस्तत्र नूनं रम्ये तदालये ॥७६॥
यदतीतं नतच्छक्यमन्यथाकर्तुमद्य वै । गर्भान्मुक्तागमिष्यामि तत्पूजायै तदालये ॥
नमस्तस्यै महादेवभार्यायै सा करोतुशम् । इत्युक्त्वा दधतीगर्भं तस्थौ वैश्य!तवाऽङ्गना

शिवशर्मोवाच ।

विष्णुशर्मन्निदं पूर्ववृत्तमाज्ञाय मत्पिता । पप्रच्छ मुनिशार्दूलं देवलं ज्ञानवत्तरम् ॥८२

वैश्य उवाच ।

मुने! यथा प्रतिश्रुता पूजा ते ऽनुपया तया । तथैवाऽकारि पार्वत्या विषादेकारणं वद

यतोऽसौ न गता तत्र तज्जानाति शिवा स्वतः ।

सखीभ्यश्चोक्तमस्यास्तद्विषण्णा सा कुतोऽभवत् ॥ ८४ ॥

देवल उवाच ।

वैश्यवर्य! शृणुष्वेदं कारणं कथयामि ते । यतस्तस्या विषादोऽभूत्पार्वत्या गर्भनाशकः

निवृत्तासु सखीष्वस्याः सम्पूज्य स्कन्दमातरम् ।

विजया पार्वतीम्प्राह कौतूहलसमन्विता ॥ ८६ ॥

विजयोवाच ।

गिरिजे! श्रद्धयातुभ्यं दत्तोऽमूभिरयं बलिः । मानुषीभिः कुतःप्रीतानाऽभवस्त्वंवरानने!

धूपदीपकनैवेद्यैः पूजिता तोषहेतवे । प्रत्युताकारणं देवि त्वं विषादं कुतो गता ॥८८

देवल उवाच ।

इत्याकर्ण्य वचःसख्या देवी देववरार्चिता । अब्रवीद्विजयां वैश्य विषादे कारणंसखीम्

राजोवाच ।

विजये! सखि! जानामि वैश्यभार्यांगृहाद्बहिः । निर्गन्तुमक्षमां गर्भधारणं स्वविवेकतः

समागतास्तु तत्सख्यो मत्पूजायैतदीरिताः । मादृशो न च गृह्णन्ति परहस्तकृतंबलिम्

तत्पतिश्चेत्समायास्यदभविष्यत्तदा शिवम् ।

तस्यास्तु मदवज्ञातो गर्भपातो भविष्यति ॥ ९२ ॥

यद्व्रतं पूजनं यच्च कर्तुं न क्षमतेऽङ्गना । तत्कारयति नाथेन न भङ्गःस्यात्तयोःसखि!॥

अथवा विप्रमुख्येन पृष्ट्वा पतिमनन्यधीः । यतः स्वयमनागत्य तत्कृतं मे तयाऽर्चनम् ॥

न कारितं च भर्त्राऽतोभवितादोहदोऽफलः । यद्युभौ तौ समागत्य दम्पतीश्रद्धयापुनः

मां पूजयिष्यतः पुत्रो भविष्यति तदा तयोः ॥ ९५ ॥

देवल उवाच ।

स शापो नत्वया वैश्य नचैव तव भार्यया । श्रुतः सखीभिरस्या नो प्रसादश्च तयाऽर्पितः
नयोरज्ञानतो वैश्य! युवयोर्नाऽभवत्सुतः । अजानतोः प्रतिविधिं परत्राऽत्रसुखप्रदम् ॥
एतत्ते कथितं वैश्य! सन्तानाभावकारणम् । वसिष्ठेन यथापूर्वं दिलीपस्य महीपतेः॥

तच्छ्रुत्वा स यथा राजा नन्दिनीं समतोषयत् ।
सस्त्रीकस्त्वं तथा वैश्य ! गौरीं तोषय कामदाम् ॥ ९९ ॥
सा यथाऽऽराधिता राज्ञे दिलीपाय ददौ सुतम् ।
आराधय तथा गौरीं त्वं सा तुभ्यं च दास्यति ॥ १०० ॥

वैश्य उवाच।

दिलीप इति भूपः कः का चसा नन्दिनी मुने !। यामाराध्य सुतं लेभे स भूयोभूपसत्तमः
महेशादिसुरान्मुक्त्वा त्रिवर्गफलदायिनः । आराधिता कुतः सैव सुतार्थं तेन भूभुजा
एतत्सर्वं समाख्याहि मुने! यत्पृष्टवानहम् । श्रुत्वा ततो गिरिसुतां सेविष्ये सहभार्यया

शिवशर्मो उवाच ।

गदितमिति निशम्य विष्णुशर्मन्विनययुतेन पिशा मदीयपित्रा ।
मुनिरिति गदितं दिलीपवृत्तं जगति पवित्रतरं विचक्रमे सः ॥ १०४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी माहात्म्य एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

# द्व्यधिकद्विशततमोऽध्यायः

## दिलीपवृत्तान्तवर्णनम्

देवल उवाच ।

शृणुष्वभोमहाप्राज्ञ! दिलीपस्यमहीपतेः । कथां दिव्यांविचित्रांचशृण्वतांपापनाशिनीम्

वैवस्वतमनोर्वंशे दिलीपो भूभुजांवरः । आसीत्प्राचीनबर्हिस्तु स्वायम्भुवमनोरिव ॥२
स तु धर्मभृतां श्रेष्ठो धर्मेण प्रतिपालयन् । महीं महीपतिर्लोकान्गुणैराढ्यैररञ्जयत् ॥३
मगधाधिपतेः पुत्रीमहिषी तस्यभूपतेः । सुदक्षिणाख्ययाख्याता शचीवाऽऽसीद्दिवस्पतेः

गते महति काले तु महिष्यां नाऽभवत्सुतः ।
दध्याविति निजस्वान्ते स सम्राट्कोशलाधिपः ॥ ५ ॥

रत्नाकरसुमेर्वादिनगरत्नैर्विराजितम् । धृतं भूवलयं दोर्घोर्भूपार्यै नाऽप्रजस्य मे ॥ ६ ॥
वर्गत्रयी यथाकालंसेविता न विरोधिना । तथापि मेऽनपत्यस्य न सौख्यं विद्यतेहृदि
यज्ञैराराधितो विष्णुरिन्द्राद्याश्चसुरोत्तमाः । दीर्घिकारामकूपाश्च कारिताःसर्वतोभुवि
गोभूहिरण्यवासोभिः षड्रसान्वितभोजनैः । विप्राअतिथयश्चैव भक्त्यासन्तोपितामया
वृत्त्यर्थं पृथिवीपालानुद्धृत्य युधि धर्मतः । धनेन महता कोशो मयां हि बहुलीकृतः॥
उन्मार्गगामिनो मत्तानिजधर्मविलङ्घिनः । विमुखाःपितृदेवेभ्योदण्ड्यास्तेदण्डितामया
पञ्चपर्वसु वैष्णव्यां रवौ पित्र्ये च कर्मणि । दशम्येकादशीतिथ्योर्न स्त्रीसेवा कृतामया

ऋतुकालावधौ स्नातां स्वस्त्रियं नाऽहमत्यजम् ।
अनृतावपि तद्योग्ये काले चेत्प्रार्थितस्तया ॥ १३ ॥

तदातस्यां सकामिन्यां सकामं रमितंमया । एवं धर्मार्थकामामे यथाकालंनिषेविताः
महिष्यां केन दोषेण जायते मे न सन्ततिः । अतीतानागतज्ञानो वसिष्ठो गुरुरेव नः ॥

कथयिष्यति तं दोषं यन्मे पुत्रो न जायते ॥ १५ ॥

देवल उवाच ।

इत्यालोच्य स भूपालो गमिष्यन्नाश्रमं गुरोः ।
मन्त्रिष्वारोपयामास कोशलामृद्धिकोशलाम् ॥ १६ ॥

अथप्रजासृजं देवं पूजयित्वाऽऽश्रमं गुरोः । प्रतस्थाते पुत्रकामौ दम्पती तौ शुभेऽहनि
कतिचिद्वासरैर्मार्गमुल्लङ्घ्यैकरथे स्थितौ । तौदम्पती गुरोः सायमाश्रमं प्रापतुःशुभम्
वैश्वदेवान्तसम्प्राप्तातिथिसत्कारकृन्मुनिम् । हुताशनहुतद्रव्यप्रसरद्धूममालया ॥१९॥
पवित्रयन्तमात्मस्थान्मुनीनागन्तुकानपि । मृगैर्दूर्वाप्रतानौघप्रदपूर्णोरमन्थरम् ॥२०॥

अभ्यागच्छद्भिरभितो मण्डपं स मृगीगणैः । वासवृक्षमिलत्पक्षिकुलकोलाहलाकुलम्
परस्परविनिर्मुक्तवैरव्याघ्रमृगादिकम् । जपध्यानपरर्षीणां क्षणश्रान्तश्रुतिध्वनिम् ॥२२
अनध्ययनकालोत्थक्रीडासक्तकुमारकम् । तस्मिन्वसिष्ठमद्राष्टां दम्पती तौ कृतक्रियम्
वृस्यां निसण्णमव्यग्रमरुन्धत्योपसेवितम् । स ववन्दे गुरोःपादौमहिषी साच तत्स्त्रियः
आशिषागुरुरप्येनं युयोजाऽरुन्धतीचताम् । अतिथिंतमथाऽभ्यर्च्य मधुपर्कादिभिर्गुरुः
अर्हणैरर्हतां श्रेष्ठो वसिष्ठइति पृष्टवान् ॥ २५ ॥

वसिष्ठ उवाच ।

भोभो! भूमिभृतां श्रेष्ठ राज्ये कुशलमस्तिते । कुले च कच्चिल्लोके च निजधर्मानुवर्त्तिनि
धर्मेण पालिता कच्चित्त्वया वीर! वसुन्धरा । सम्वर्द्धयतिते कोशं धर्मधीरिवसास्त्विकी
तव जानपदा राजन्पौराश्च स्थितिमात्मनः ।
सागवन्तो विमुञ्चन्ति कच्चिन्नाम्बुधयो यथा ॥ २८ ॥
स्नेहेन साहचर्येण सहवासतया प्रभो ! । लक्ष्मीनारायणायेते कच्चित्ते पुरदम्पती ॥
काम्यव्रतानि राजेन्द्र! प्रजानां नगरे तव । फलन्ति वाञ्छितं कच्चिद्धरिचन्दनवद्दिवि॥

देवल उवाच ।

पृष्ट्वैवं स मुनिश्रेष्ठो वसिष्ठो मुनिपुङ्गवः । योगप्रभावोपनतैर्नृपं भोज्यैरभोजयत् ॥
अरुन्धती च तां राज्ञीं बह्वादरसमन्विता । नानाव्यञ्जनपक्वान्नैरभोजयदुदारधीः ॥३२॥
कृतभोजनमासीनंस्वस्थः स्वस्थंमुनिर्नृपम् । पुनःपप्रच्छ संगृह्य पाणिनापाणिमानतम्

वसिष्ठ उवाच ।

सप्ताङ्गसंयुतं राज्यं निजधर्मरतप्रजम् । प्रीतबन्धुजनामात्यं शस्त्रास्त्रविधिवद्भटम् ॥
वश्यमित्रं हृतामित्रं कृष्णार्चापरमानसम् ।
यस्याऽस्ति नृपते राज्यं स्वर्गराज्येन तस्य किम् ॥ ३५ ॥
इक्ष्वाकुवंशराजानः पुत्रानुत्पाद्यधार्मिकाः । राज्यंच तेपु विन्यस्यप्रपन्नास्तपसिप्रभो!
त्वं युवाऽदृष्टपुत्रास्यो नाऽधिकारी तपोविधौ ।
किमर्थमागतो ह्यत्र राज्यं त्यक्त्वा तथाविधम् ॥ ३७ ॥

राजोवाच ।

ब्रह्मन्नाऽहं तपः कर्तुमागतस्तावकाश्रमे । स्वर्गकामनया त्यक्त्वा राज्यमत्र तथाविधम्
ब्रह्मन्सत्यमिदं चोक्तं भवता यत्तपोवनम् । राज्यमारोप्य पुत्रेषु प्राप्त इक्ष्वाकुवंशजाः॥
न तैस्त्यक्तं महीराज्यमिदं स्वर्गगतैरपि । तन्मूर्तिरस्यां विमनास्तिष्ठति ह्येव सन्ततिः
यथाबाल्यं गतं तात! यौवनं च समागतम् ।
यास्यत्यदोऽपि च तथा जराऽप्येष्यति निश्चितम् ॥ ४१ ॥
जरसोऽनन्तरं मृत्युः पुरुषस्य न संशयः । मृत्युं गते मयि ब्रह्मन्विना तनयसम्भवम्
कस्येदं जगतीराज्यं भविष्यति गुरो वद । तस्मादपत्यहीनस्य राज्येऽति मम तिष्ठतिः
ममत्वं विद्यते नाऽत्र पुरस्तात्तदभावतः । वर्गत्रयस्य वै सम्यक्संवेत्ता त्वं गुरो! मम
केन दोषेण मे पुत्रोजायते न तपोनिधे!। ध्यानेन दोषमालोक्य तं गुरोकथयाऽऽशु मे
तस्य प्रतिक्रियां कुर्यां श्रुत्वा सन्तानलब्धये ॥ ४५ ॥

देवल उवाच ।

इत्याकर्ण्य वसिष्ठस्तु वचस्तस्य महीपतेः । उवाचसन्ततिस्तम्भहेतुं वीक्ष्य समाधिना

वसिष्ठ उवाच ।

त्वंपुरा राजशार्दूल!संसेव्यसुरनायकम् । स्नातामिमांवधूं स्मृत्वा चलितोनिजमन्दिरम्
गच्छतस्त्वरयातात सन्तानोत्कण्ठितस्यते । आसीत्सुरतरोर्मूले कामधेनुःस्थितापथि॥
उत्पादितात्वयातस्याः पूज्याङ्घ्रिरजसोऽतिरुट् । प्रदक्षिणनमस्कारसदाचारमकुर्वता
साऽशपत्त्वामतिक्रोधात्पुत्रो नोत्पत्स्यते तव । ममसन्तानशुश्रूषां यावत्त्वंनकरिष्यसि
गच्छंस्त्वमृतुदानाय त्वरयासुतकामुकः । उन्मनानाऽश्रृणोः शापं न यन्ताक्षनिनादतः
तस्याः सुतासुतां धेनुं नन्दिनीं ससुतां मम ।
आराधयाऽनया वध्वा सार्द्धं सा दास्यते सुतम् ॥ ५२ ॥

देवल ऊचुः ।

इत्युक्तवति तत्रर्षौ वसिष्ठे सा तु नन्दिनी । तपोवनात्समायाता वत्सस्नेहस्नुतस्तनी
तां दृष्ट्वा हृष्टहृदयो वसिष्ठो मुनिपुङ्गवः । उवाच भूपतिं भूयो दर्शयित्वा च नन्दिनीम् ॥

वसिष्ठ उवाच ।

राजन्समागताह्येषा स्मृतमात्रशुभाह्वया । अतोविद्धिसमीपस्थां कार्यसिद्धिमिहात्मनः
आराधितानुगत्वेयं त्वयाऽरण्ये तथाऽऽश्रमे । बध्वाप्रसादात्तेपुत्रंदास्यतेनाऽऽत्रसंशयः
यथा नाभिभवेदेनां जन्तुः कश्चिद्वनोद्भवः । तथा चारय राजेन्द्र ! वने हिंस्रो धनुर्द्धरः

देवल उवाच ।

तथेति लघुवादिने नृपतये स्नुषायै च स क्षपाशयनहेतवे सदुटजं ददौ तापसः
स तत्र सहभार्यया समधिशय्य दर्भास्तृतां महीमगमयन्निशां नियतमानसो विट्पते

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

---

## त्र्यधिकद्विशततमोऽध्यायः

### देवलवंश्यसम्वादे राज्ञा दिलीपेनस्वमहिष्यासहवसिष्ठधेनोर्नन्दिन्याश्चारणादि-सेवाकरणंनन्दिनीकृतपरीक्षणंमायासिंहस्यदिलीपेनसम्वादो-नन्दिन्यावरदानञ्च

देवल उवाच ।

अथोषसि नराधीशः पूजितां कुसुमादिभिः ।
महिष्या नन्दिनीं धेनुं नीत्वाऽरण्यं जगाम सः ॥ १ ॥
गच्छन्तीमनु तां देवीं छायेव नृपतिर्ययौ । खादन्तीमनुशष्पादि सोऽपिमूलाद्यभक्षयत्॥
तरुच्छायामुपासीनामनु सोऽप्युपविष्टवान् । पिबन्तीमनुपानीयं राजाऽपिसलिलंपपौ
स च राजा मृदुग्रासैर्दंशापनयनेन च । कण्डूयनैः कामधेनुं गुरोरेवमसेवत ॥ ४ ॥
अथ प्रत्याश्रमं सायं न्यवर्त्तत महीपतेः । अङ्गं पवित्रयन्ती सा खुरोद्धूतै रजः कणैः॥

ऊधोभारेण गुरुणा गच्छन्ती मन्थरं बभौ । महीपालमहाकार्यभाराक्रान्तेव नन्दिनी॥
तां मुनेराश्रमाभ्याशे राज्ञी प्रत्युज्जगाम ह । चन्दनाक्षतनैवेद्यधूपादीनुपनीय च ॥ ७ ॥
तां पूजयित्वा विधिवत्प्रणम्य च पुनःपुनः । कृत्वा प्रदक्षिणं राज्ञी तस्थौप्राञ्जलिरग्रतः

सा गृहीत्वा च तां पूजां विहितां श्रद्धया तया ।
राज्ञा निश्चलमास्थाय ययौ ताभ्यां सहाश्रमम् ॥ ६ ॥

आराधयति तामेवं दिलीपे तु दृढव्रते । एकाधिकाव्यतीयायदिनानां वैश्य विंशतिः ॥
अथभूमिपतेस्तस्य भावजिज्ञासयातुसा । विवेशनिर्भयग्रस्वान्ता सशष्पांहिमवद्गुहाम्
पश्यता हिमवत्सानु शोभामथ महीभृता । अलक्षितागमः सिंहो बलाज्जग्राह नन्दिनीम्
सा चक्रन्द भृशंधेनुर्दुःखितेव दयास्वना । चित्तेधनुर्भृतस्तस्य जनयन्ती दयोदयम् ॥
तदाक्रन्दितमाकर्ण्य तस्याः स जगतीपतिः । हिमवत्सानुसंलग्नां निजदृष्टिं न्यवर्त्तयत्

उपर्युपरि तां धेनुं स्रवदश्रुमुखीं नृपः ।
तीक्ष्णदंष्ट्रनखं सिंहं दृष्ट्वा स व्यथितोऽभवत् ॥ १५ ॥

गृहीतां तेन सिंहेन तामालक्ष्य धनुर्द्धरः । निषङ्गाद्बाणमुद्धर्तुं प्राहिणोद्दक्षिणं भुजम्
बाणमुद्धृत्य तूणीरान्निहन्तुं तं मृगाधिपम् । गुणेनापूर्णमायोज्य चकर्ष वसुधाधिपः॥

जडीभूतसमस्ताङ्गस्तत्सिंहालोकनेन सः ।
नाऽशकद्बाणमुत्स्रष्टुं राजाऽसीद्विस्मितस्ततः ॥ १८ ॥

तादृशं नृपमालक्ष्य जगाद स मृगाधिपः । नरवाचा भृशं भूयो विस्मयं प्रापयन्निदम्

सिंह उवाच ।

दिलीपं त्वामहं राजञ्जानामिरविवंशजम् । त्वंचजानीहिमांशम्भोर्गणंकुम्भोदराभिधम्
देवदारुरयं यस्ते वर्त्तते दृष्टिगोचरे । पार्वत्या पुत्रवद्वीर! पालितः स्निग्धचित्तया॥२१
एकदाऽमुष्यवन्येन गजेनाघर्षता कटम् । उदपाटि महाराज ! वल्कलं मृदुलं भृशम् ॥
एनं तादृशमालक्ष्य मृडानीकरुणान्विता । मामत्र स्थापयामास सिंहंकृत्वाऽस्य रक्षणे

मामाह चेतिसा देवी कुम्भोदर! निशम्यताम् ।
योऽत्र जन्तुः समागच्छेत्तं खादेस्त्वं वसन्निह ॥ २४ ॥

ततःप्रभृति राजेन्द्र! तदाज्ञां पालयन्नहम् । पालितां त्रिदशैः सर्वैः कन्दरेऽत्र वसाम्यहम्
जडीभावे स्वदेहस्य त्वया कार्यो न विस्मयः । महती शाम्भवी मायावर्त्ततेऽत्रहिमाचले
अन्यस्मिन्निव सिंहे त्वं प्रहर्तुं न मयि क्षमः । यतो मत्पृष्ठमारुह्य वृषमारोहति प्रभुः ॥
निवर्त्तस्व निजं देहं रक्ष सर्वार्थसाधनम् । दैवेनासादिता वीर! गौरियं भक्षणाय मे ॥

देवल उवाच ।

इत्याकर्ण्य वचस्तस्य वागसम्बोधनान्वितम् । प्रत्युवाचदिलीपस्तं स जडीभूतविग्रहः

राजोवाच ।

सर्गस्थितिविसर्गाणां कारणं जगतः शिवम् । अम्बिकांजगदम्बांचनमामिमृगराज तौ
त्वं च तत्सेवकत्वेन मान्योमममृगाधिप !। ब्रवीमियदहंवाक्यंश्रुत्वाशाधिकरोमिकिम्
वसिष्ठो ब्रह्मणःपुत्रो गुरुर्नो विदितस्तव । तस्येयं नन्दिनीनाम धेनुः सर्वार्थसाधिका॥
सन्तानोत्पत्तये तेन दत्ताऽऽराधयितुं मम । येयमाराधितासम्यग्दिनानि कतिचिन्मया
लघुतर्णकमातेयं धृता ते गिरिकन्दरे । शम्भुभृत्याद्बलात्त्वत्तोऽशक्ता मोचयितुं मया
अहं तस्य मुनेरग्रे गच्छाम्येनामृते कथम् । कामधेनोस्तु दौहित्रीजगत्सेव्या यशस्विनी

अनया सदृशी नाऽन्या गौर्यया तोषयामि तम् ।
तस्माद्विमुच्य गामेनाम्मया कुरु निजाशनम् ॥ ३६ ॥

ददामि देहमात्मीयमपकीर्तिमलीमसम् । एवं न धर्महानिः स्याद्धेनुस्तव तु भोजनम् ॥

गवार्थे त्यजतः प्राणान्ममाऽपि गतिरुत्तमा ॥ ३७ ॥

देवल उवाच ।

एवमाकर्ण्य सिंहेन कृते मौने विशांपते !। तदग्रेऽवाङ्मुखो राजा न्यपतद्धर्मकोविदः॥
तस्य प्रतीक्षमाणस्य सिंहपातं सुदुःसहम् । पपातोपरि पुष्पाणां वृष्टिर्मुक्ता सुरेश्वरैः
पुत्रोत्तिष्ठेति वचनं श्रुत्वा राजा स उत्थितः । जननीमिवतांधेनुं ददर्श न मृगाधिपम्

तं विस्मितमुवाचेदं नन्दिनी नृपसत्तमम् ॥ ४१ ॥

नन्दिन्युवाच ।

मायया सिंहरूपिण्या त्वं मयाऽसि परीक्षितः ।

मुनिप्रभावान्मां राजन्ग्रहीतुं न क्षमोऽन्तकः ॥ ४२ ॥

मनसाऽपि कुतोऽन्येषां मद्ग्रहेशक्तिरङ्गिनाम् । स्वशरीरस्य दानेन त्वं मां रक्षितुमुद्यतः

अतस्तेऽहं प्रसन्नाऽस्मि वृणीष्व वरमीप्सितम् ॥ ४३ ॥

राजोवाच ।

न गुप्तं देहिनामन्तर्वर्तिवृत्तं भवादृशाम् । अतो जननि! जानासि वाञ्छितं ममदेहितन्

मगधेश सुतायांमेवंशकर्तारमात्मजम् । प्रयच्छकिञ्चित्स्वच्छानांनासाध्यंहिभवादृशाम्

इत्युक्त्वाऽञ्जलिमाधाय तत्पुरस्तस्थिवान्नृपः । तूष्णीं तदुत्तरापेक्षी तत्पुरो बद्धलोचनः

देवल उवाच ।

निशम्येति वचस्तस्य भूपतेरिदमब्रवीत् । नन्दिनीपितृदेवर्षिनरभूतार्थसाधिका ॥ ४७॥

नन्दिन्युवाच ।

पुत्र! पत्रपुटे दुग्ध्वा पयो ममपिबेप्सितम् । आश्रमे गुरुणाज्ञप्तः पुनःपास्यसि शेषितम्

भविता वंशकर्ता ते सुतः शस्त्रास्त्रतत्त्ववित् ॥ ४८ ॥

देवल उवाच ।

इत्युक्तःसौरभेय्या तामुवाच विनयेन सः ॥ ४९ ॥

दिलीप उवाच ।

मातस्तवैव पास्यामि शेषं सर्वक्रियाविधेः । तृप्तोऽहं मातरासाद्य मिष्टंतेवचनामृतम्

नान्यदिच्छामि सारङ्गः कादम्बिन्या यथा जलम् । तत्रशुश्रूषणान्मातरभवंसकलोद्भवः

समस्तजनपूज्याया विद्याया इव मूढधीः । तव मातामहीदत्तः शापोऽप्यासीद्वरो मम

तमृते पुत्रलाभो मे कुतस्तव च दर्शनम् । वरायैव तथाप्यम्ब! समाराध्याभवादृशः ॥

नहि कश्चिद्विपाकाङ्क्षी महादेवात्त्रिवर्गदात् ॥ ५३ ॥

देवल उवाच ।

श्रुत्वेतितद्वचः सा गौः प्रसन्नासाधुसाध्विति । आभाष्यहिमवद्गर्भाद्ययौतेनसहाश्रमम्

पूर्वेद्युरिव तत्राऽपि पूजिता राजभार्यया । प्रसन्नासावभौधेनुःकार्यसिद्धिरिवाऽङ्गभाक्

मुखं प्रसन्नमालक्ष्य मृगाक्षी सा क्षितीशितुः । अज्ञासीत्तंनिजंकार्यंसिद्धंयत्तस्तुयत्कृते

अथ तौ दम्पती धेन्वा विधिवद्विहितार्चया । तया सह गुरोरग्रे कृतकृत्यस्य जग्मतुः॥
निरीक्ष्य तौ मुनिवरः प्रसन्नमुखपङ्कजौ । अतीन्द्रियज्ञाननिधिः प्रोवाचेदं प्रहर्षयन् ॥

वसिष्ठ उवाच ।

राजञ्जानामि गौरेषा प्रसन्ना वामभूत्किल । अपूर्वा युवयोरद्य मुखकान्तिर्हि लक्ष्यते॥
सुरभिः सुरशाखीचविश्रुतौकामपूरिणौ । तदपत्यंसमाराध्यसिद्धोऽर्थःस्यात्किमद्भुतम्

यो ददाति निखिलं मनोरथं कीर्तितेयमनघाऽपि दूरतः ।
श्रद्धया निकटएव सेविता किं पुनःसुरतरङ्गिणीव सा ॥ ६१ ॥
ज्ञानतो विदितमद्भुतं मया त्वत्कृतं यदनया परीक्षणम् ।
भूपते! त्वमपि धर्ममात्मनो रक्षसिस्म च यथा तथा च तत् ॥६२ ॥
त्वय्यसौ मम मनोऽनुकूलता भावमात्मनि विबुध्यते तथा ।
तुष्यतिस्म कमला यथा हरेः पार्वतीव गिरिशस्य सज्जने ॥ ६३ ॥
रात्रिरत्र सह भार्ययाऽनया धेनुपूजनपरेण नीयताम् ।
भूप! भव्य भवता गमिष्यते श्वः समाप्तविधिना निजां पुरीम् ॥ ६४ ॥

देवल उवाच ।

वैश्यैवं धेनुमाराध्य सभार्यः प्राप्तवाञ्छितः । प्रातर्युक्तरथःप्राप्य गुरोराज्ञामगाद्गृहम्
कतिचिद्वासरैस्तस्य दिलीपस्याऽभवद्रघुः । यस्य नाम्नारघोर्वंशःपृथिव्यांविश्रुतोऽभवत्
यः पठिष्यति भूपस्य दिलीपस्य कथामिमाम् । धनंधान्यंसुतंवैश्य!लप्स्यतेसपुमानिह

शरभवरसुताप्तये स्वबुद्ध्या सममनया परितोषयाऽऽशु गौरीम् ।
त्वमपि कुलधरं गुणान्वितं सा सुतमनघं खलु दास्यते च तुभ्यम् ॥६८ ॥

शिवशर्मोवाच ।

मुनिरितिचरितं दिलीपराज्ञो ललिततरं शरभाय पुण्यमुक्त्वा ।
अभिमतगतिमात्मनः प्रपेदे विधिमुपदिश्य च पूजनेऽम्बिकायाः ॥ ६९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये दिलीपपुत्रप्राप्तिर्नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३॥

## चतुरधिकद्विशततमोऽध्यायः

### शरभवश्यद्वारास्वस्त्रियादेवलवचनात्पुनर्भगवतीपूजाकरणंप्रसन्नयातयासपत्नी-कायवैश्यायेन्द्रप्रस्थतीर्थस्नानकरणात्पुत्रप्राप्तिःकथनं शरभकृतगृह-त्यागो राक्षसशरभसम्वादवर्णनम्

शिवशर्मोवाच ।

विष्णुशर्मंस्ततो वैश्यः शरभःसहभार्यया । नीत्वा पूजोपकरणंययौ श्रीचण्डिकालयम्
तत्रतौ विधिवत्स्नात्वा सुमनोधूपदीपकैः । आनर्चतुर्भक्तियुक्तौ चण्डिकां पुत्रकाम्यया
श्रद्धयापूजिता ताभ्यां दिनैःसप्तभिरम्बिका । उवाचवाचा प्रत्यक्षं भूत्वाविशदमानसा

पार्वत्युवाच ।

भोभोवैश्य! प्रसन्नाऽस्मि भक्त्या सुदृढया तव । ददामि पुत्रंते साधोयदर्थे यत्नवानसि

गच्छ त्वं मा विलम्बस्व वनमैन्द्रं च खाण्डवम् ।
तत्र तीर्थं महापुण्यमिन्द्रप्रस्थाख्यमुत्तमम् ॥ ५ ॥

निगमोद्बोधकं तत्र तीर्थं निखिलकामदम् । बृहस्पतिकृतं तत्र स्नाहि त्वं सुतवाञ्छया
भविष्यतिसुतस्नात तवस्नानेन तत्रहि । तत्रस्नात्वामयाऽप्यङ्ग! लब्धःस्कन्दः सुरारिहा

शिवशर्मोवाच ।

इत्याकर्ण्य वचो देव्याः पिता मम सह स्त्रिया ।
अत्राऽऽजगाम सत्तीर्थे सस्नौ च सुतवाञ्छया ॥ ८ ॥

उपस्करवतीर्धेनूर्द्विजेभ्यः प्रददौ शतम् । देवान्पितॄंश्च सन्तर्प्य यथाविध्यत्र बुद्धिमान्
सप्तरात्रमुषित्वा तु दम्पती यतमानसौ । जग्मतुः स्वगृहानिष्टलाभोत्फुल्लमुखाम्बुजौ ॥
तस्मिन्नेवाऽभवद्गर्भो मासि मातुर्ममाऽन्वहम् । व्यतीते नवमेमासि जातोऽहं दशमेशुभे
विष्णुशर्मन्यदुक्तं ते पुरावृत्तमिदं मया । दशाब्दद्वयमेवैतच्छ्रुतं सर्वं पितुर्मुखात् ॥१२॥

एकदा क्षममालोक्य गृहकर्मणि माम्पिता । गृहंसमर्पयामास सविश्वाद्वैराग्यमाप्नुवन्
मां चोवाच स धर्मात्मा गोविन्दासक्तमानसः ।
विनिन्दन्विषयासक्तिं विष्णुभक्तिं स्तुवन्मुहुः ॥ १४ ॥
पितोवाच ।
सुमते! वार्द्धकंप्राप्तंपलिताश्चिकुरा मम । गोविन्दचरणाम्भोजं सेविष्ये साधुसेवितम्
तत्सेवया भवेत्स्वच्छं मनो यस्य च सुस्थिरम् ।
सपुमानात्मसन्तुष्टो न किञ्चिदभिवाञ्छति ॥ १६ ॥
निष्कामः सुखदुःखाभ्यां भुञ्जन्सुकृतदुष्कृते । प्राकृते तत्समाप्तौ च त्यजन्देहंभवत्यजः
तावद्द्रव्यगुणसुखं यावत्प्राप्तं न चिन्मुखम् । तत्प्राप्तौ तद्भवेत्तुच्छंसुधायाइवतक्रकम्
हरेर्मायाबलवती या मोहयति देहिनम् । हिताहितं न जानाति सयथा मदिरामदः ॥
प्रवृत्तिं च निवृत्तिं च विद्ययाऽविद्यया च सः ।
करोति स्वेच्छया काले बाललीलो हि स प्रभुः ॥ २० ॥
वेदोदितं यदा कर्म क्रियते फलमिच्छता । प्रवृत्तिः सा परा तात तेषामर्पणमीश्वरे ॥
यथानिर्दग्धबीजानि न प्ररोहन्ति यत्नतः । तथाकर्माणि विश्वेशेनिष्कामेनार्पितानि तु
कर्मणां च लयो मोक्षः सुखदुःखप्रदायिनाम् ।
तदुत्पत्तिस्तु बन्धः स्यादित्यसौ शास्त्रनिर्णयः ॥ २३ ॥
अतोऽहं कर्म वेदोक्तं कुर्वन्नाभिलषन्फलम् । पर्यटिष्यामि तीर्थेषु हृदि भक्तिं दधद्धरेः
एवम्प्रारब्धकर्माणि भुञ्जन्नन्यान्यनजयन् । हनिष्यामि जगद्रोगं पीत्वासत्सङ्गमौषधम्
शिवशर्मोवाच ।
एवमाकर्ण्य वचनं तस्याऽहं पितुरात्मनः । अवदं विष्णुशर्मंस्त्वं तन्निशामय तत्त्वतः
अयं जनो दुराराध्यः कथयिष्यति नौयशः । दुष्टः कुटुम्बादुद्विज्य निःसृत्यगतइत्ययम्
इयं विष्णुपदी तात भुवनत्रयपावनी । स्मृता हरत्यघंदूरात्कस्मादेनांविमुञ्चसि ॥
पापकारी जनस्तात! म्रियतेमगधेतुयः । सोऽप्यस्थिपातादङ्गायां स्वर्यातित्यजमाशुभम्
पुत्राःषष्टिसहस्राणि सगरस्यमहात्मनः । कपिलक्रोधनिर्दग्धा गता यत्स्पर्शनाद्दिवम्

तामिमां त्रिदिवश्रेणीं मुक्तेरपि विधायिनीम् ।
मुमुक्षुसेवितां तात ! मुक्त्वा माऽन्यत्र गम्यताम् ॥ ३१ ॥

मावजानीहि सामीप्ये गङ्गां त्रिदशमानिताम् । यदिच्छसि महाभाग ! सेवितैषा प्रदास्यति
तिर्यञ्चोऽपि विना ज्ञानाज्जले चेत्स्युर्गतासवः । भवेयुस्तर्हि ते ब्रह्म सा कथं त्यज्यते त्वया

शिवशर्मोवाच ।

निशम्यैतद्वचस्तातस्ततो मम ऋतप्रियः । उवास सदने सर्वविषयेभ्यः पराङ्मुखः ॥
त्रिषु कालेषु गङ्गायां प्रत्यहं स्नानमाचरन् । पुराणं स्याद्गृहे यत्र तत्र याति स नित्यशः
एकदाकर्णयन्धीरो यमुनातीर्थगौरवम् । तत्र शुश्राव माहात्म्यमस्य तीर्थस्य पुत्र सः ॥
अविमुक्तहरिद्वारप्रयागेभ्यश्च पुष्करात् । अयोध्याद्वारिकाकाञ्चीमथुराभ्यस्तथाऽन्यतः
सर्वतीर्थमयस्याऽस्य पुण्यं शतगुणाधिकम् । कथितं तेन विदुषा सुतेनाऽऽकर्ण्य मत्पिता
त्यक्त्वा गृहमगादत्र तीर्थे सर्वैरलक्षितः । आवामिव महाभागो गोविन्दपदसेवकः ॥

अत्राऽऽगत्य महाभागो मत्पिता मोक्षवाञ्छया ।
निगमोद्बोधके तीर्थे त्रिकालं स्नानमाचरन् ॥ ४० ॥

उवास कतिचिन्मासानत्र तीर्थोत्तमे हि सः । कुर्वन्निजक्रियां धीमान्निःस्पृहोऽप्यजवेश्मनि
एकदा सहसा तस्य ज्वरोऽभूदतिदारुणः । महत्या पीडया तस्य मुमोह गतचेतनः ॥
मुहूर्तं स पितामुह्यस्तदवस्थो व्यतिष्ठत । पश्चात्समागतप्राणो व्यचिन्तयदिदं तदा ॥
अहो मे कष्टमापन्नं दूरे पुत्रः स धार्मिकः । यो मां ज्वरवितप्ताङ्गमाश्वासयति बुद्धिमान्
अगम्यागमनं पापं कृतं यन्मे सुदारुणम् । प्रायश्चित्तं न तस्याऽपि कृतं कामेन निर्भवेत्

आगमिष्यति पुत्रो मे तस्मै दास्यामि वस्विति ।
यन्मया गोपितं गेहे न दृष्टं च मयाऽपि तत् ॥ ४६ ॥

शिवशर्मोवाच ।

इति चिन्तयतस्तस्य पान्थो वर्षेण पीडितः । शीतार्तः कम्पितवपुरुटजं प्राविशत्तदा ॥
सतं सम्विष्टमालोक्य भूयो गत्वा तदन्तिके । मुनिरेष इति ज्ञात्वा ववन्दे शिरसाऽध्वगः

ऊचे च कस्मात्सुप्तोऽसि मुने ! सन्ध्या समागता ।

रविरस्तं प्रयात्येष न सुप्तेः काल एष ते ॥ ४९ ॥
इत्युक्तमात्र वचसि पथिकेन पिता मम । शरभोज्वरतप्ताङ्गस्तमाह कथमप्यहो ॥५०॥
शरभ उवाच ।
श्रूयतां वचनं पान्थयद्वदामि पुरस्तव । श्रुत्वा मद्भाग्ययातेन त्वया साधो! विधीयताम्
वैश्योऽहंशरभोनाम्ना कान्यकुब्जेगृहंमम । अत्राऽऽगतोनिषिद्धोऽपिजायामित्रसुतैरहम्
अस्य तीर्थस्य माहात्म्यं श्रुत्वा सूनुमुखेरितम् ।
मासास्तुकतिचित्साधो ! व्यतीता मयि चाऽऽगते ॥ ५३ ॥
दिनत्रयमतिक्रान्तं ज्वरितस्य ममाऽधुना । प्राणामे विगता आसन्नद्य भूयःसमागताः
कियानप्यायुषः शेषः साधो!मे खलु तिष्ठति । शमनस्य गृहं दृष्ट्वा यदहं पुनरागतः ॥
भाग्योदयेन केनापि ममाऽत्रत्वं समागतः । नय मां मद्गृहं मित्र द्रव्यं बहु ददामि ते
दास्याम्यपि गृहं गत्वा कृपां कुरु कृपानिधे !। इह भूभागउत्खायगृह्यतांमामकं धनम्
शिवशर्मोवाच ।
इत्याकर्ण्य स दुर्बुद्धिर्ग्राम्यो विषयलम्पटः । उवाच धनलुब्धस्तं त्वदुक्तंसाधयाम्यहम्
इत्युक्त्वाधनमुत्खायतस्माद्भूभागतस्तदा । अग्रतःस्थापयामास शरभस्याऽऽहचाध्वगः
अध्वग उवाच ।
धनमेतद्विशां नाथ! तव भूभागतोमया । निष्कासितं प्रयच्छाऽऽशु शिबिकानयनायमे
यामारोप्य ज्वरार्तं त्वां नयामि तव केतनम् ॥ ६१ ॥

शिवशर्मोवाच ।
इत्युक्तस्तेन स तदा ददौ स्वर्णपलत्रयम् । सोऽपि नीत्वा पितुर्द्रव्यं ययौलवणपत्तनम्
उषित्वा रात्रिमेकां तु शिबिकां सपरिच्छदाम् ।
सवाहामानयत्पुत्र ! दत्त्वा स्वर्णपलद्वयम् ॥ ६३ ॥
पलद्वयं गृहीतं तत्तेनैवाऽधर्मबुद्धिना । आरोप्य शिबिकां तं तु शरभं वैश्यसत्तमम् ॥
पान्थः स चलितो वाहांस्त्वरयन्कान्यकुब्जकम् ।
अस्य तीर्थवरस्याऽथ कमण्डलुजलं धृतम् ॥ ६५ ॥

पाययन्नल्पमल्पं तं तृषार्तं सोऽध्वगो ययौ । अथ ते सरसस्तीरउत्तीर्णाभोक्तुमध्वनि

स्नात्वा भुक्त्वा पुनस्तस्मात्स्थानाच्चेलुस्त्वरान्विताः ।

कियन्तीं भूमिमुल्लङ्घ्य तृषार्तास्ते कमण्डलोः ॥ ६७ ॥

जलं पीत्वातृषार्ततं शरभं चाप्यपाययत् । अथ कश्चिन्महाभीमो विकटोनामराक्षसः

विचरन्निर्जनेऽरण्ये गच्छतस्तानवैक्षत । तान्दृष्ट्वा स क्षुधाक्रान्तो वेगवान्विवृताननः

अभिदुद्राव चरणाघातेनाकम्पयन्महीम् । आगत्य तरसा पार्श्वे तान्वाहान्पथिकंचतम्

स केशषु समादाय भ्रामयामास खेचरः । गतासून्भ्रामणेनैव भूतले तानपोथयत् ॥

चखाद पिशितं तेषां पपौ कोशाच्चशोणितम् । कुत्रयास्यतिरोगार्तोनरोऽयंपुरतो मम

एनं तु भक्षयिष्यामिपश्चादम्बुपिबाम्यहम् । इतिकृत्वामतिंवारितीर्थस्यास्यकमण्डलोः

मुखे चिक्षेप स तदा रजनीचरपुङ्गवः । क्षिप्तमात्रे जले तस्य पूर्वजन्मभवा स्मृतिः ॥

जाता स तु वधात्तस्य शरभस्य न्यवर्तत । पूर्वजन्मकृतं पापं तदपिस्मृतिमागमत् ॥

येन राक्षसभावस्तु भूतोविप्रोद्भवादपि । स्मृत्वा पादमुपेत्याऽऽशुसमीपेशरभस्य तु ॥

उवाच ज्ञानमापन्नो राक्षसः पितरं मम ॥ ७६ ॥

राक्षस उवाच ।

भोभोमनुष्यशार्दूल! कस्त्वं केच जनाअमी । भक्षिता ये मया घोररूपेणाऽधमरक्षसा

कस्य तीर्थवरस्येदं जलं यस्य प्रभावतः । पापिनोऽपि स्मृतिर्जाता पूर्वजन्मभवा मम

वैश्य उवाच ।

वैश्योऽहं राक्षसश्रेष्ठ! कान्यकुब्जे गृहं मम । तीर्थानि पर्यटन्निन्द्रप्रस्थेऽहं समुपागतः॥

तत्राहमभवं दुःखी ज्वरेण विधियोगतः । ततो मे बुद्धिरुत्पन्ना गन्तुं गृहमसत्पथ ! ॥

तत्र कश्चित्समायातः पान्थोवर्षेणपीडितः । प्रार्थितः स मयाऽऽनीयशिबिकांमांगृहंनय

स चाऽयं शिबिकां पान्थः समुपानीय सत्वरः ।

मामारोप्य च तां धीरश्चलितो मद्गृहं प्रति ॥ ८२ ॥

स पान्थस्तेचशिबिकावाहाःसम्प्रतिभक्षिताः।त्वयाजलमिदंयस्यतीर्थस्याऽपिचतच्छृणु

इन्द्रस्य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्तिहरिप्रस्थं तीर्थंतीर्थोत्तमोत्तमम्

सुराचार्यस्य तत्राऽस्ति तीर्थं सर्वार्थसाधकम् ।
निगमोद्बोधकं जाता स्मृतिस्ते यज्जलाशनात् ॥ ८५ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया । पृच्छामित्वामहंकिंचित्तद्वदाऽऽशुनिशाचर!
पूर्वजन्मकृतं कर्म स्मरसि त्वमिहाऽधुना । वद किं ते कृतं पापं येनजातोऽसिराक्षसः

राक्षस उवाच ।

पुराहमभवं विप्रः पुण्ये वेदविदां कुले । दुराचारो ह्यधर्मात्मा शृणु सर्वं वदामि ते ॥
क्रीडता हि मया नित्यं धनेन सह तद्विदैः । हारितं द्रविणं भूरि स्वकीयं पितुरेव च॥
पित्रा निवेद्य भूपाय मामकं कर्म तज्जनैः । पुरान्निःसारितोनिःस्वोगतोऽहं ग्राममन्तिके
तत्रासीन्मे सखानाम देवको ब्राह्मणोत्तमः । तेनाहं रक्षितो गेहे कुर्वता चिरमादरम्
वस्तुं तत्र सुखेनाऽहं तद्भार्यां रूपशालिनीम् । कामातुरोऽहमभजंबलान्मित्रेगतेक्वचित्
सा मृता तत्क्षणात्साध्वी भक्षयित्वा महाविषम् ।
तां दृष्ट्वा तमसायुक्ते निशीथेऽहं पलायितः ॥ ९३ ॥
पलायमानस्तरसा धृतोऽहं राजकिङ्करैः । चौरोऽयमिति खड्गेन चिच्छिदुस्तेशिरो मम
मृतं मां यातनादेहमावेश्य यमकिङ्कराः । रौरवे निरये घोरे चिक्षिपुर्यमशासनात् ॥
षष्टिवर्षसहस्राणि तत्राऽहं तीव्रयातनाम् । भुक्त्वा तेनैव पापेन राक्षसत्वमुपागतः ॥
शतवर्षाण्यतीतानि राक्षसत्वे विशांपते !। वदामितमुपायमे येनास्मान्मुक्तिमाप्नुयाम्
पुण्यं तदार्पिते साधो वदामिशृणुसादरम् । येन तीर्थवरस्येदं जलं मम मुखे गतम् ॥
तत्रैव जन्मनि मया कृत्वा हरिदिने व्रतम् । संसर्गान्निच्छया वैश्य! रात्रौ जागरणंकृतम्
द्वादश्यामथ संस्नात्वा भोक्तुमयिसमुद्यते । मद्गृहे कश्चिदायातोवैष्णवोविष्णुरूपधृत्
कुपितोऽहं तमालोक्य दुर्वचोऽवदमग्रतः । क्व गच्छसि दुराचार दाम्भिकस्त्रीजनान्तरे
इत्युक्तः स मया धीरस्तुल्यो मानापमानयोः ।
तूष्णीमेव निकेतान्मे निर्गत्य चलितो यदा ॥ १०२ ॥
तदाभिमुखमायान्ती पत्नी मम पतिव्रता । पतित्वा पादयोस्तस्य तं साधुं गृहमानयत्
मयाऽपमानितस्याऽपि न क्रोधोऽभून्महात्मनः ।

तयाऽऽदृतस्याप्यानन्दो यतः सोऽरिसुहृत्समः ॥ १०४ ॥
तमर्चयित्वा विधिवद्विप्रैरे चोपवेश्य सा । भोज्यं भोजय जीवेश जयताद्भुवनत्रयम् ॥
इत्युक्तोऽहं तयासाध्व्यान्यगदंतंमहाशयम् । म्लानवक्त्रःप्रसन्नास्यमुत्तिष्ठशमयक्षुधाम्
इत्युक्त्वा तस्य चरणौ नोदितस्तनुमध्यया । प्रक्षालयं पुनस्तं तु निवेश्यासन उत्तमे
अददां पात्रमन्नेन पूर्णं तस्मै विवेकिने । जलं च तत्करे साध्व्याप्रेरितोऽहं तया मुहुः
उपभुज्य स धर्मात्मा स्वैरं विगतविक्रियः । हरेरामहरेकृष्णजपन्निति जगाम ह ॥
कृतं पुण्यमिदं वैश्य! नोदितेन मया स्त्रिया । पूर्वजन्मनि येनेदं प्रापितं तीर्थवारि मे ॥

शिवशर्मोवाच ।

विष्णुशर्मन्निदं वाक्यमुक्त्वा तिष्ठति राक्षसे । पथिकाःसत्रतेवाहाःप्राहुः खे दिव्यदेहिनः

पथिकत्राहाऊचुः ।

भोभोविशांपते साधोप्राप्ताअप्यपमृत्युताम् । त्वत्प्रसादादिदंवारिपीत्वादेवत्वमागताः
त्वत्सङ्गे धनलोभेन विट्पते चलिता यतः । विगता न धनाकाङ्क्षा मरणावसरेऽप्यतः
तीर्थराजजलस्याऽस्य तिष्ठतो जठरे हिनः । मरणे ह्यनुभावात्तु मैत्री प्राप्ता धनेशितुः ॥
नमामस्त्वां वयं यामो धनेशनगरीं प्रभो !। विमानैस्तद्गणानीतैर्नानामणिविभूषितैः ॥
प्रयाहि माविलम्बस्व तीर्थे निगमबोधके । त्वमनेन समं साधो तारयैनमपि द्रुतम् ॥

शिवशर्मोवाच ।

इत्युक्त्वाते गतास्तात दिश्युदीच्यांसमन्ततः । विमानकिङ्कणीनादैर्नादयन्तोऽथरोदसी
अथ वैश्यो मम पिता तमाह रजनीचरम् ॥ ११८ ॥

शरभ उवाच ।

उत्तिष्ठ नयमामाशु तीर्थे निगमबोधके । ज्वरार्त्तेन मया पद्भ्यां तत्र गन्तुं न शक्यते॥
यो मां नयति तत्तीर्थं त्वदन्यो नास्ति कश्चन ॥ ११९ ॥

शिवशर्मोवाच ।

तथेति तमथाऽऽश्वास्य वैश्यं स रजनीचरः । स्कन्धमारोप्य वेगेन तत्तीर्थपावनंययौ
ऊषतुस्तावुभौ तत्र विट्पतिः स च राक्षसः । कुर्वन्तौ स्नानमात्रं तु सर्वतीर्थोत्तमोत्तमे

अथाऽहं पितुराकर्ण्य महतीं गुरुवेदनाम्। तं प्रति प्रेरितो मात्रा चलितो निजसद्मतः ॥
अत्राऽऽगत्य मया दृष्टः स महाज्वरपीडितः। मूर्ध्ना च वन्दितस्तेन दत्ताशीरभ्यभाषि च

शरभ उवाच।

किमर्थमिह भोस्तात! दूरमार्गे समागतः। दिनानि कतिचित्तिष्ठन्कुर्वन्नत्र निजक्रियाम्
विकटो नाम मे मित्रं राक्षसः समुपैति वै। उत्तिष्ठ वपुषाऽमुष्य दण्डवत्पत पादयोः॥
न भेतव्यं त्वयाऽमुष्मात्त्यक्तहिंसादिकर्मणः। अधुना तीर्थमासाद्य सन्निधौ मम तिष्ठति

शिवशर्मोवाच।

इत्युक्तोऽहं तदा पित्रा शरभेण महात्मना। उत्थाय पतितस्तस्य पादयोर्दण्डवद्भुवि॥
दोर्भ्यामुत्थाप्य मां सोऽथ गाढमालिङ्गय राक्षसः।
स्वागतं मित्रपुत्रेति जगादाऽऽशिषमीरयन् ॥ १२८ ॥

राक्षस उवाच।

भाग्यवानसि भोस्तात! यस्त्वमत्र समागतः। पितुर्धर्मात्मनः श्रुत्वा ज्वरपीडां सुदारुणाम्
पितुरानृण्यमाप्नोषि तीर्थे कृत्वा तिलोदकम्।
स्नात्वा कुरु क्रियाः स्वीयाः पूर्वजन्म स्मरिष्यसि ॥ १३० ॥

शिवशर्मोवाच।

एवमुक्तस्तदा तेन स्नातुं तीर्थे वराम्भसि। प्रविष्टोऽहं स्मरंस्तात! पूर्वजन्म शुभाशुभम्
स्नात्वा विधिवदत्रैव पितुरन्तिकमागतः। अपृच्छं रक्षसो वृत्तं कुतोऽयं धर्मधीरिति ॥
पित्रोक्तं रक्षसो वृत्तं वाहानां पथिकस्य च। श्रुत्वाऽहं तीर्थराजस्य स्तुतिमस्य चकार वै
पिता मे रोगनिर्मुक्तो भविष्यति यदा तदा। यास्यामि गृहमित्यत्र दशोषितमहानि मे
दशाहाभ्यन्तरे तात तातस्य मरणं मम। अभूदर्धजले ह्यस्य तीर्थराजस्य पश्यतः ॥
अथो गरुडमारुह्य वक्षसा धारयञ्छ्रियम्। आजगाम स्वयं विष्णुर्नवीनघनविग्रहः ॥
पीतवासाश्चतुर्बाहुः पङ्कजारुणलोचनः। ब्रह्मेन्द्रादिभिरादित्यैः सनाथैरन्धकारिणा॥
सेव्यमानो गुणग्रामान्गायद्भिः किन्नरैः सह। हाहाहूहूप्रभृतिभिः स्तूयमानश्च सर्वतः॥
दत्त्वा स्वकीयसारूप्यमारोप्य गरुडं तदा। पितरं मम ब्रह्माद्यैर्वृतो वैकुण्ठमारुहत् ॥

पितुः सारूप्यमालोक्य विष्णोरहमचिन्तयम् ।
इतिचित्ते तदालोक्य जाततत्त्वोदये तदा ॥ १४० ॥
न हि वर्णयितुं शक्यो ह्यस्यतीर्थशिरोमणेः । महिमा यज्जलार्द्रस्यान्मृतोजन्तुश्चतुर्भुजः
न मया सर्वथा त्याज्यं तीर्थराजमिदं ननु । अञ्जसा दृढमाहात्म्यं धनरोगादितृष्णया
पितुरत्रोटजे तावत्स्थातव्यं हि मया मम । यावत्तु कर्मणां भुक्तिःप्रारब्धानां महीतले ॥
एवं तु चिन्तयित्वा च पितुः कृत्वा तु सत्क्रियाम् ।
रक्षसा तेन सहितः स्थितोऽहं मोक्षवाञ्छया १४४ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये शरभवैश्यस्येन्द्रप्रस्थमाहात्म्येन विष्णुसारूप्यवर्णनं नाम चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

## पञ्चाधिकद्विशततमोऽध्यायः

### शरभमित्रस्यराक्षसस्यइन्द्रप्रस्थेसमुद्धारवर्णनम्

शिवशर्मोवाच ।

एकदाऽत्र महातीर्थे पङ्के मग्नां पयस्विनीम् । दृष्ट्वा स राक्षसश्रेष्ठस्तामुद्धर्तुं विवेश ह॥
गोरक्षणे महान्धर्मो रक्षितुः स्वर्गतिर्भवेत् । चिन्तयन्निति मध्येतु सगृहीतोऽम्बुहस्तिना
नीतस्तु वारिणोऽधस्ताज्जलपूर्णोदरस्तदा । तत्याज जीवितं सद्यस्तेन पीडितविग्रहः
दिव्यरूपं समास्थाय विमानमपि ढौकितम् । गणेन प्रहितेनाऽथ देवैरिन्द्रपुरोगमैः ॥
गच्छन्निति मया पृष्टः स निशाचरपुङ्गवः । मुक्तिदेऽत्र महातीर्थे मृत्युं प्राप्य सुदुर्लभे ॥
कथं देवपदप्राप्तिर्जाता तव महामते !। इत्युक्तो मामुवाचेदं वाञ्छाऽऽसीदत्र मेऽनघ!॥
तस्मिन्गते पुण्यजने स्वर्गं पुण्यवतां पदम् । एकाकिनामयाविष्णुःसद्गतिःप्रार्थितस्तदा

गच्छंस्तिष्ठन्स्वपञ्जाग्रत्स्नानं कुर्वंश्च नित्यशः ।
तमेव पुण्डरीकाक्षमहं दध्यावनन्यधीः ॥ ८ ॥

हरे! तव पदाम्भोजमहं शरणमागतः । ब्रह्मत्वे च महेशत्वे नेन्द्रत्वे मम मानसम् ॥ ९॥
प्रार्थयन्नित्यहं तात! तमेव पुरुषोत्तमम् । उषितोऽत्र महातीर्थे कृत्वा निर्विषयं मनः ॥

विष्णुशर्मोवाच ।

वसतोऽत्र महातीर्थे मरणं चेत्तवाऽभवत् । कथं जन्म पुनः प्राप्तं त्वयेति मम संशयः
मर्यादां यस्य तीर्थस्यत्यजन्त्याऽपिधनलोभतः । राक्षसान्मरणंप्राप्ताःपथिकस्तेचवाहकाः
यस्य तीर्थवरस्याऽस्य जलपानाद्दिवंगताः । तथैव राक्षसोऽप्यस्मिन्नपमृत्युमवाप्यसः
नक्रतः स्वेच्छया स्वर्गं जगाम तव पश्यतः । न नूनं तत्र मरणं जातं यज्जन्म दृश्यते

नारद उवाच ।

शिवे! निशम्य पुत्रस्य शिवशर्मा शुभं वचः । उवाच पूर्ववृत्तान्तं कारणं निजजन्मनः ॥

शिवशर्मोवाच ।

विष्णुशर्मञ्छृणुष्वेदं कारणं मम जन्मनः । कथयामि तवाग्रेऽहं श्रुत्वा निःसंशयो भव
एकदा विष्णुपूजायां मयि ध्यानं समास्थिते ।
दुर्वासाः प्रकृतिक्रोधी ममाऽऽश्रममुपागतः ॥ १७ ॥

तमागतमविज्ञाय विष्णुध्यानपरायणः । तस्थिवांस्तदवस्थोऽहं चिरं तन्नाम संस्मरन्
स मुहूर्तं मुनिः स्थित्वा ममाग्रे क्रोधमूर्च्छितः । आत्मनात्मानमाहेदमुच्चैरारक्तलोचनः

दुर्वासा उवाच ।

अहो! अत्रेरहं पुत्रोऽनसूयागर्भसम्भवः । शिवांशो मानुषेणाऽलमवज्ञातोऽमुनाऽभवम् ॥
त्रिलोकी राज्यतः शक्रोमयायेन प्रपातितः । तं मामपि मनुष्योऽयमवजानाति दुर्मतिः
योबिभेतिन कःसोऽस्ति मत्तःकालानलादिव । मुक्त्वादेवत्रयीं लोकेयतःसोऽहंत्तमामम
यामसौ ध्यायते मूढो देवतां ध्यानमास्थितः ।
न कथं बोधयत्येनं सेति मूर्ध्नि स्थितो मम ॥ २३ ॥

नूनं नारायणं देवं ध्यायत्येष जगद्गुरुम् । यद्ध्यानामृततृप्तो हि न बाह्यज्ञानवानयम्

हरिं वा ब्रह्म वा शम्भुमन्यं वा ध्यायतामयम् ।
मयाऽयं सर्वथा दण्डयो मदवज्ञाकरो ह्ययम् ॥ २५ ॥

शिवशर्मोवाच ।

एवंविचिन्त्य स मुनिःसुमतिं मामबोधयत् । शशाप च विबुद्धंमामिति क्रोधारुणेक्षणः
मामवज्ञाय यश्चित्ते ध्यानकाले मनोरथः । कुतस्तेन भवे ह्यस्मिन्भविष्यति हि सर्वथा
इत्युक्त्वा स यदा तात ! चलितो मुनिरत्रिजः । तदा मया चरणयोर्गृहीतो भयभीरुणा

इत्युक्तश्च मुनिश्रेष्ठ ! क्षम्यतां रुड्विमुच्यताम् ।
मादृशा न विजानन्ति सम्यक्कर्म भवादृशाम् ॥ २६ ॥

शापं त्वं दत्तवान्घोरं साम्प्रतं मे निरेनसः । प्रसीद मम नम्रस्य शापान्ते कुर्वनुग्रहम्
इत्युक्तःकोपमुत्सृज्यदुर्वासाः शीतलोऽभवत् । किमेतद्योचितं तात! स यतश्चन्द्रशेखरः
उवाचेतिसमांधीमांस्तं भूत्वाब्राह्मणोत्तमः । अत्रैवमरणं प्राप्य न भूयो जन्म लप्स्यसे
इति मामनुगृह्याऽथ स जगाम दिगम्बरः । उषित्वा तद्दिनं तात ! मया सत्कारपूजितः
नमुनेर्भाषितं मिथ्या चिन्तयित्वाऽहमित्यपि । जगामस्वगृहं चित्तेपश्चात्तापं वहन्निति
अहो मे ध्यायतो नित्यं सतीर्थाश्रमिणस्तथा । दर्शनं दुर्लभं जातं श्रीपतेरिह जन्मनि
चातकस्येव मेघस्य शुचौ सन्तापकारिणि । कुतोऽयमागतो मह्यं वैकुण्ठगतिरोधकः॥
जनस्यप्रस्थितस्येव जलदोऽकालवारिमुक् । नदोषोऽस्ति मुनेर्नूनं तस्यैवेच्छाहरेःखलु
सुदर्शनं हि दत्त्वाऽपि मम जन्मान्तरं कृतम् । मया संसारभीतेन ग्राह्यं पादाम्बुजं हरेः
निदाघातपतप्तेन पथिकेनैव पादपः । किं धनापत्ययोषिद्भिरनित्यैश्चाऽन्यबन्धुभिः ॥
गोविन्दपरमानन्दरामेति मम जल्पतः । उदासीनवदासीनः कुटुम्बेषु हरिं भजन् ॥४०॥
प्रारब्धमेव भोक्ष्यामि कर्माण्यन्यान्यतर्जयन् । चिन्तयन्नित्यहं तात! कियद्दिवासरैरहम्
प्राप्तवान्स्वगृहं स्नात्वा हरिपादोदकान्तरे । पितुर्मरणमाख्यातं मात्रेबन्धुभ्य एव च ॥

श्रुत्वा तेऽपि शुचं चक्रुर्नाविन्दन्निममस्थिरम् ।
सत्यलोकादिलोकेषु निःस्पृहोऽहं गृहे वसन् ॥ ४३ ॥

मरणं प्राप्तवान्कूले गङ्गाया मुनिसेविते । मुनेर्दुर्वाससः शापाज्जातोऽहं वैष्णवे कुले॥

मरणं चाऽत्र सत्तीर्थे लब्ध्वा प्राप्स्ये हरेः पदम् ॥ ४५ ॥

नारद उवाच ।

एवं सुराचार्यविनिर्मिते तदा तीर्थेमहाभागपुराकृतानि तौ ।

द्विजोत्तमौ प्रोच्यमिथः सुतस्थतुर्विचिन्तयन्तौ हरिपादपल्लवम् ॥ ४६ ॥

विचिन्तयन्तौ हरिमब्जलोचनं चतुर्भुजं नीरदनीलविग्रहम् ।

निजायुधालङ्करणावभासितं स्मृत्वाऽत्र सारूप्यमवापतुर्हरेः ॥ ४७ ॥

यस्य क्षेत्रमिदं पुण्यमिन्द्रप्रस्थाख्यमुत्तमम् ।

तस्योपाख्यानमाख्यातं फलमस्य शिवे ! शृणु ॥ ४८ ॥

गङ्गास्नानेन यत्पुण्यं कन्यादानोद्भवं च यत् । श्रवणादस्य तत्पुण्यं श्रद्धया लभते नरः पुत्रे जाते तु गोदानात्सिंहगे च बृहस्पतौ । गोदावरीजले स्नानाद्यत्फलं भुवि जायते तत्फलं श्रवणादस्य जायतेनाऽत्रसंशयः । अतस्तीर्थोत्तमादन्यत्तीर्थंनास्त्यखिलार्थदम्

यस्मिन्मरणतो नूनं तिर्यञ्चोऽपि चतुर्भुजाः ॥ ५१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये निगमबोधोपाख्यानं नाम पञ्चाधिकद्विशततमोऽध्यायः ॥२०५ ॥

---

# षडधिकद्विशततमोऽध्यायः

## काम्पिल्यनगरस्थब्राह्मणेननगरवधूनांसमुद्धारः

सौभरिरुवाच ।

धर्मराज! शिबिः श्रीमानाकर्ण्य तद्वचो मुनेः । नारदस्याऽब्रवीत्प्रीतमनाइति तमुत्तमम्

शिबिरुवाच ।

मुनेतीर्थवरस्याऽस्य निगमोद्बोधकस्यते । माहात्म्यं वर्णितं सम्यक्छ्रुतं पापहरंमया

इन्द्रप्रस्थेऽत्र शतशः सन्ति तीर्थानि वै मुने ! ।

अन्यस्याऽपि समाचक्ष्व माहात्म्यं यदि विद्यते ॥ ३ ॥

नारद उवाच ।

इन्द्रप्रस्थान्तरावर्तिन्येषा या द्वारकानृप !। अस्यां पुरा हि यद्वृत्तं तत्ते वच्मिशृणुष्वमे

काम्पिल्येऽथ द्विजः कश्चित्पुष्पेषुर्मूर्तिमानिव ।

सर्वासां योषितां चित्तहारी हास्यादिविभ्रमैः ॥ ५ ॥

सङ्गीतविद्याकुशलः कोकिलामधुरध्वनिः । एकदा स करे वीणां धारयन्वादयन्मुहुः॥

कण्ठेन कोकिलालापमधुरेण नराधिप ! । गायन्बभ्राम नगरे प्रतिरथ्यं महामतिः॥७॥

तस्यगीतध्वनिंश्रुत्वा मूर्छनातानसंयुतम् । त्यक्त्वास्वगृहकार्याणि तमीयुःपौरयोषितः

मोहितास्तस्य रूपेण कामवेगंनसेहिरे । जातास्खलितवीर्यास्ता गीतं श्रुत्वा समक्षतः

ब्रह्मणो मानसं येन लोभितंभारतीम्प्रति । शिवस्याऽर्द्धशरीरं च पार्वत्यै येन दापितम्

ताभ्यामन्यो जनो लोके वशी वा ज्ञानवानपि ।

यः स्मरन्तं क्षमो जेतुं स्त्रियः प्रकृतिचञ्चलाः ॥ ११ ॥

ताः स्मरावेशमासोढुंनसाध्व्योऽपिविषेहिरे । वक्तव्यमिति किंराजँल्लोकेकामोहिदुर्जयः

अथ तास्तत्र तत्रेयुर्यत्र यत्र व्रजत्यसौ । प्रगायन्कण्ठवीणाभ्यां प्रगायन्स्वरमोहितः ॥

तासां पतिसुतभ्रातृपितरोऽथ नराधिप ! ।

आगत्य भर्त्सयित्वा ता निन्युः स्वान्स्वान्गृहान्प्रति ॥१४ ॥

तमन्विष्य पुनस्तास्तु जग्मुः सर्वास्तदन्तिके । यदा तदा पौरजना वृत्तं तत्प्राहुरीश्वरे

राजाऽपि तं समाहूयपप्रच्छ रहसिद्विजम् । केन मन्त्रेण भो विप्र मोहितास्ताःपुरस्त्रियः

तन्ममाऽऽचक्ष्व विप्रेन्द्र ! दास्यामि बहु ते धनम् ।

नो चन्निष्कासयामि त्वां निजराज्यान्न संशयः ॥ १७ ॥

नारद उवाच ।

श्रुत्वेति नृपतेर्वाक्यं नृपतिं स द्विजोत्तमः । उवाच सत्यं तस्याऽग्रे वचोरूपगुणार्णवः

द्विज उवाच ।

न मन्त्रो नौषधं राजन्विद्यते मयि भिक्षुके । किन्तुते नगरे सर्वा योषितोह्यजितेन्द्रियाः

रूपं मम समालोक्य श्रुत्वा गीतध्वनिं तथा। स्मरवेगं सहन्ते न राजंस्तव पुरे स्त्रियः
किं करोमि महाराज! कोऽपराधोऽस्ति मे विभो!। पुराकृतमिवोल्लङ्घ्यशासनंनमहीपते

नारद उवाच।

उशीनरशिबे! राजन्नेवं कथयति द्विजे। सर्वे पौराः समेत्याऽथ प्रावदन्निति भूपतिम्॥

पौराऊचुः।

राजन्ननेन विप्रेण मोहिताः पौरयोषितः। गृहेषु नहि तिष्ठन्ति ह्यस्माभिरपवारिताः॥
यद्ययं मोहनः स्त्रीणां नगरे वत्स्यति प्रभो!। तदा देशान्तराण्येव यास्यामोवयमद्य वै
गतोऽस्माकं वृषो दैवो हव्यकव्यक्रियात्मकः॥ २४॥
तमनुप्रस्थितात्क्षेत्राद्गौरियं पापिनामिव। विना तं शरणं यातं त्यक्तश्रीभिर्नरेश्वर!॥
अथैनमनुयास्यन्ति वासिताभिर्वृषं यथा। शून्यालये कथं लक्ष्मीर्यत्ततोऽप्यवतिष्ठति॥
धर्मोऽर्थश्च गृहं चैतत्त्रयं स्त्रीवशगं यतः। कान्ताधर्मधनाधीना तयोर्नाशेन तिष्ठति॥

नारद उवाच।

एवं वदत्सु पौरेषु स्त्रियस्तेषां समागताः। राजान्तिक उपाविष्टाइत्यूचुस्ताःपरस्परम्

पौरस्त्रियऊचुः।

कामं वामाकृतिं विप्रमेनं प्राप्य मनांसि नः। उल्लसन्ति दिवाधीशंकमलानीव वारिणि
सकुचन्ति विना तेन कुमुदानि यथेन्दुना। आगच्छन्त मिलित्वैनंधारयामो नृपाग्रतः
अवध्योऽयं वयं चाऽस्य किं करिष्यति भूपतिः॥ ३०॥

नारद उवाच।

इत्युक्त्वातास्त्वरावत्यो जगृहुस्तं द्विजोत्तमम्। पश्यतांनिजभर्तॄणांराज्ञश्चैवपुरस्तदा
ऊचुश्चैनं मनोनाथ! गृहानागच्छ हृच्छयम्।
शमयाऽऽशु विनाऽद्य त्वां स्थातुं नैव च शक्नुमः॥ ३२॥
इत्याकर्ण्य वचस्तासां स विप्रः प्रत्युवाच ह॥ ३३॥

विप्र उवाच।

भवतीनामहं पुत्रो भवत्यो मातरो मम। गृहान्किमर्थमुत्सृज्य भवत्यः पर्यटन्ति हि॥

आराधयत नाथान्स्वान्यतो लोकद्वयं ध्रुवम् । आराधितेषु पतिषुविष्णुः सर्वसुरेश्वरः
प्रसन्नो भवति त्वत्र प्रसन्ने किमुदुर्लभम् । यास्त्रीस्वपतिमुत्सृज्य सेवतेऽन्यंसुखेच्छया
सापवादमवाप्नोति याति घोरां च दुर्गतिम् । उषित्वा तत्रकल्पान्तेयावत्सापतिवञ्चना
पुनस्तस्माद्विनिर्गत्य स्थावरत्वं प्रपद्यते । तस्मादपि पशुत्वं सा लभते बहुजन्मसु ॥

ततो मुक्ता मनुष्यत्वे व्यङ्गा भवति तत्र सा ।
एवं पापगतिं ज्ञात्वा निवर्तध्वमतो जनात् ॥ ३६ ॥

नो वा याम्यथ देहान्ते नरकं भृशदारुणम् । यदिच्छन्ति भवन्त्योमेसुखंतन्नेह लप्स्यथ

पापमेव हि युष्माकं यतोऽधःपतनं नृणाम् ॥ ४० ॥

नारद उवाच ।

श्रुत्वैवं वचनं तस्य दृष्ट्वा भर्तृसुखानि च । लज्जया नत्रमुख्यस्ता लता वातहता इव ॥
तासां तु पुरनारीणां स्मराग्निर्भृशदारुणः । शशाम तस्य शीतेन वटोर्वचनवारिणा ॥
उत्थाय चेलुः सर्वास्ता विनिन्दन्त्य इतिस्मरम् । ब्रह्मशक्रादिदेवानामपिमोहकरं नृप!

स्त्रियऊचुः ।

धिगिमं पापकर्माणं शीलदारुकुठारकम् । कामं वामदृशां प्रीत्यै धन्योयेन हतः स्मरः

किं वदेम जगत्पूज्यां रुक्मिणीं जठरे यया ।
धृतः प्रद्युम्ननाम्नाऽसौ राहुः स्त्रीशीलचन्द्रभुक् ॥ ४५ ॥

स देवाधम आयाति यदि नो दृष्टिगोचरम् । भूयो ध्यानकृतेशानदृगग्नौ तं क्षिपामहे॥
येनाऽयंजनितःपापो ह्यात्मारामेण विष्णुना । कृतःषोडशसाहस्रस्त्रीप्रियःका हि नःकथा
एवं विनिन्द्य तं कामं तुष्टुवुस्तं द्विजोत्तमम् । शीलंस्वस्यचतासांच रक्षितंयेन भूपते!
धन्या साऽमुष्य जननी ययाऽयं ब्राह्मणोत्तमः । स्मरजिन्निर्मितोलोकेपरधर्मस्यरक्षकः

धिगस्तु नो राजलोकैर्हसिताः स्मरनिर्जिताः ।
याभिर्वाक्यमनोभ्यां च जनितं पापमुल्बणम् ॥ ५० ॥

नारद उवाच ।

एवंविचिन्तयन्त्यस्ताएकमत्ययुताःस्त्रियः । जग्मुःस्वंस्वंगृहंसर्वाद्विजवाक्येनबोधिताः

अथ राजाऽपि काम्पिल्यस्तं द्विजंवस्त्रभूषणैः । सम्पूज्यप्रेषयामाससद्गृहेसंयतेन्द्रियम्
अथागच्छति काले तु कारूषाधिपतिर्बली । काम्पिल्याधिपतिं सैन्यैर्नगरं रुरुधे तदा
तयोर्युद्धमभूद्घोरं तेन युद्धे स घातितः । नगरं लुठितं सर्वं हताः शूराश्च सर्वशः ॥५४॥
ताःस्त्रियः कालकूटं तु खादित्वा मरणंगताः । प्रायश्चित्तंतु न कृतं ताभिःपापस्यतस्यतु
येनपापेन ताःसर्वा भीषणाख्यस्यरक्षसः । राक्षस्यो नगरे जाता महाकाया भयानकाः
तत्र ता निहिताः सर्वाः पुरनार्यो हनूमता । यज्ञांश्चरिष्यतो जिष्णोस्तिष्ठता रथकेतने
पुनस्ता एव राक्षस्यो बभूवुर्मारवेऽध्वनि । क्षुधार्ताश्च तृषार्ताश्च दर्शनेन भयप्रदाः ॥
एवं तेन तु पापेन वाङ्मनोविहितेन तु । ताभिर्जन्मद्वयं प्राप्तं राक्षसीयोनिमिश्रितम् ॥
पापेन नाशितं तासां सनृपं नगरद्वयम् । अतएव न कर्त्तव्यं परकान्तनिषेवणम् ॥६०

नारीभिः पापभीताभिर्वाङ्मनोभ्यामपि प्रभो ! ।
रोगी जडो दरिद्रो वा मित्राभ्यां वर्जितोऽपि वा ॥
न त्याज्यः स्वपतिः स्त्रीभिरिच्छन्तीभिस्तु सद्गतिम् ॥ ६१ ॥
कथितमिदं मया मनोवचोभ्यां जनितमघं च यदन्यकान्तभक्त्या ।
फलमपि च यदेव लब्धमाभिस्तदपि शिवे ! बहुविस्तरेण तुभ्यम् ॥६२॥
इन्द्रप्रस्थगता हि चेयमनघा या द्वारका दृश्यते-
तास्तस्या जलबिन्दुदेहपतनात्पौरस्त्रियो रेमिरे ॥
स्वर्गे चित्तवचोऽन्यकान्तभजनाज्जातं विमुच्योल्बणं-
क्रव्यादत्वमवाप्य देववनिताभावं सुराह्लाददम् ॥ ६३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये द्वारकावर्णनं नाम षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

# सप्ताधिकद्विशततमोऽध्यायः

## सौभरियुधिष्ठिरसम्वादे नारदशिविवार्त्ताप्रसङ्गेन विमलब्राह्मणकथानकवर्णनम्

सौभरिरुवाच ।

धर्मात्मजनिशम्यैतद्वचस्तस्यमहात्मनः । नारदस्यशिबीराजाप्रोवाचेदंविनीतवत् ॥१॥

शिबिरुवाच ।

तिष्ठन्त्योमरुमार्गे ता राक्षस्यो मुनिपुङ्गव ।। एतस्याद्वारिकायाम्तु लेभिरे सलिलंकुतः

नारद उवाच ।

शृणु राजन्कथां दिव्यां पूतां पापप्रणाशिनीम् ।
विमलाख्यस्य विप्रस्य हिमवद्द्रोणिवासिनः ॥ ३ ॥

एकस्तु हिमवद्द्रोण्यां विमलो नाम भूसुरः । देवर्षिपितृवह्नीनां पूजकोऽतिथिपूजकः॥
हरिपादार्चनरतो वेदवेदाङ्गधर्मवित् । वासुदेवगुणग्रामपुराणश्रुतिमानसः ॥ ५ ॥
वार्द्धके तस्य पुत्रोऽभूत्प्रसादाच्चक्रपाणिनः । चकार हरिदत्तेति नाम्ना तं जनकस्तदा॥
विधिवद्विदधेचाऽस्य क्षौरकर्मादिकंचतत् । गुरोः सकाशाज्जग्राह च्छन्दांसिहरिदत्तकः
अधीत्य विधिवद्वेदान्दत्त्वा च गुरुदक्षिणाम् । प्रवव्राज विरक्तः सन्समूलं चाश्रमद्वयम्
ज्ञात्वा तत्कर्म तन्माता व्यलपत्पुत्रवत्सला । स्नापयन्ती कुचद्वन्द्वं पुत्रविश्लेषजाश्रुभिः

मातोवाच ।

मामनाथां परित्यज्य तात! यातोऽसि कुत्र वै । पितरं च जराग्रस्तं षट्पदोब्लवजाविव
वार्द्धके त्वं मया प्राप्तः श्रीपतेः पादसेवया । मां विहायाऽभजस्त्वंवै चरणंतस्य मुक्तये
अहं मूढा ध्रुवं तात! ध्रुवमाराध्य यद्धरिम् । अध्रुवं वाञ्छितवती भवन्तं सुखलब्धये॥
त्वंसुधीर्वत्स! सर्वार्थं यद्विष्णुंभजसेस्वयम् । अध्रुवंजगदेतद्वैमत्वाऽऽसीस्त्वमपिध्रुवम्
किंकरोमिक्वगच्छामि मायाज्ञानंछिनत्तिमे । सुफलोत्पादकं शस्त्रीरम्भामूलमिवोल्बणा
धन्यो दशरथो राजा यो मृतो रामशोकतः ।

धिङ्मां पुत्रस्य विश्लेषाद्धारयन्तीं स्वजीवितम् ॥ १७ ॥
आगच्छ दर्शनं देहि तात ! मां परितारय । वद वेदमयीं वाणीं पितुरग्रे गुणार्णव ! ॥

नारद उवाच ।

एवं विलप्य तन्माता राजन्सा पतिता भुवि । दलनाद्राहुदन्तानां लेखा चान्द्रमसी यथा
अथाऽऽजगाम विप्रर्षिर्विमलो नृपसत्तमः ।
दृष्ट्वा तां पतितां भूमौ किं किमित्यभ्यभाषत ॥ १८ ॥
कस्मादियं कीर्णकेशा व्यस्तवस्त्रविभूषणा । पतिता भुवि कल्याणं हरिदत्तस्य विद्यते
तस्या वयस्यास्ताः सर्वाः प्रोचुस्तं विमलं नृप ! ॥ १९ ॥

वयस्या ऊचुः।

अधीत्य वेदांस्ते पुत्रो दत्वा च गुरुदक्षिणाम् । नारायणपरो भूत्वा प्राव्रजद्धरिदत्तकः
तस्य विश्लेषशोकेन पतितेयं धरातले ॥ २१ ॥

नारद उवाच ।

इत्याकर्ण्य वचस्तासां विमलो बुद्धिमत्तरः । प्राबोधयन्निजां भार्यामिति वागमृतेन सः

विमल उवाच ।

उत्तिष्ठ जाये ! शृणु वाक्यमीरितं मया किमर्थं पतिता विषीदसि ।
धन्यः सुतस्ते य इमं विनश्वरं विज्ञाय भेजे हरिपादपल्लवम् ॥ २३ ॥
धन्या त्वमप्यस्य जनिप्रदायिनी यस्याः सुतस्ते हरिपादभागभूत् ।
संतारयिष्यत्यपि मामसंशयं कुलं कुलोत्थानपि पूरुषाञ्छुभे! ॥ २४ ॥
क्व विश्वमेतच्च पतच्च चञ्चलं क्व सेवनं शाश्वतलोकदं हरेः ।
मत्वेति भेजुर्भरतादयो नृपा यथा हरिं साध्वि ! तथैव ते सुतः ॥२५॥
दाराधनागारशरीरबान्धवा एते भवन्ति प्रतिजन्मदुःखदाः ।
तावन्न यावद्धरिपादपल्लवं भजेत धीरोऽखिलकामवर्जितः ॥ २६ ॥

नारद उवाच ।

एवं प्रबोधिता तेन धीरेण धरणीतलात् । उत्थाय निजभर्तारमब्रवीद्दीनया गिरा ॥२७

भार्योवाच ।

सर्वं जानाम्यहं कान्त! यत्त्वया साधुभाषितम् । कुलधुर्यंनपश्यामियतस्त्प्यामिवैभृशम्
पुत्रे सति महत्तीर्थे किं वा केशवसेवया । गृहणवाऽऽवयोर्मृत्युश्चेत्स्याल्लोकद्वयं तदा॥
सत्पुत्रोत्पादने यत्नः कर्त्तव्यः खलु मानवैः । तारयन्ति पितृन्पुत्रा यतः संसारवारिधेः
स्रष्टारं सर्वजन्तूनां धातारं पुत्रकाम्यया । भज वाञ्छसि चेत्पुत्रं कुलधुर्यं महामते ! ॥

नारद उवाच ।

इत्याकर्ण्य वचस्तस्याः प्रत्याह विमलो द्विजः । ब्रह्मक्षेत्रं प्रयागं हि याम्यहं पुत्रकाम्यया

इत्युक्त्वा चलितः सोऽथ हरिद्वारमगाद्द्विजः ।
स्नात्वा तत्राऽपि विधिवदिन्द्रप्रस्थमथाऽगमत् ॥ ३३ ॥

कतिभिर्वासरैर्वीर सायंकालेऽखिलार्थदे । स्नात्वाभुक्त्वा निशायां स सुष्वापयमुनातटे
निशीथे स्वपतस्तस्य विमलस्याऽन्तिके विधिः । हंसमारुह्य देवेशस्तीर्थैः सर्वैरनुद्रुतः ॥
आगत्योत्थापयामास विमलं पुत्रवाञ्छकम् । उवाच च सुरश्रेष्ठो वचनं मधुराक्षरम् ॥

ब्रह्मोवाच ।

जाने समीहितं विप्र! त्वदीये मनसि स्थितम् । न तत्पूरयितुं कल्पो यतस्तत्कारणं शृणु
एकदा मेरुशिखरे मिलिताः सर्वदेवताः । तुष्टुवुर्मद्वमुखा माधवं कार्यसिद्धये ॥३८॥

स्तुतोऽस्मदादिविबुधैः कृपया भगवान्हरिः ।
प्रसन्नोऽभूत्तदा विष्णुर्वृणुध्वमिति चाऽब्रवीत् ॥ ३९ ॥
इत्युक्तास्तेन ते देवा यथाभिलषितं वरम् ।
श्रीपतेः प्राप्य ते जग्मुः सर्वे स्वं स्वं निकेतनम् ॥ ४० ॥

मयोक्तमिति देवेश! देहि मे वरमुत्तमम् । प्रयागं नाम मे क्षेत्रं भवत्वखिलकामदम् ॥
ततः शतगुणं भूयाद्द्वितीयं क्षेत्रकं मम । इन्द्रप्रस्थगतं सम्यग्वृत्तं त्वत्तो मयाऽनघ !॥
इत्याकर्ण्य वचो मह्यं भगवानाह मां तदा । तथाऽस्त्विति पुनर्वाचमुवाच श्रूयतां वचः

भगवानुवाच ।

इन्द्रस्य खाण्डवारण्य इन्द्रप्रस्थाभिधं शुभम् । क्षेत्रंकलिन्दजातीरे मत्तुल्यास्तत्र येमृताः

विरिञ्चे! रचितातत्र स्वकीयाद्वारकापुरी। मया शतगुणाम्भोधिनीरस्थायाः पुरागुणैः
तामुल्लङ्घ्य नरो यस्तु तीर्थमन्यन्निषेवते। न तीर्थफलमाप्नोति स पुमान्न मृषोदितम्
सर्वतीर्थोदितं पुण्यं शक्रतीर्थे लभेन्नरः। द्वारका च पुरी माया तीर्थमन्यच्च रक्षति॥
यो निमज्ज्याऽन्यतीर्थेषु कृत्वा च विविधां क्रियाम्।
अत्रैष्यति फलं तेभ्यः फलं प्राप्स्यति स ध्रुवम्॥ ४८॥
इत्युक्त्वाऽन्तर्दधे विष्णुरहमप्यगमंस्वकम्। लोकं द्विजेन्द्र वैकुण्ठादधो भागेऽव्यवस्थितम्
प्रयागान्मामकात्क्षेत्रात्काशी शतगुणा स्मृता।
काश्याः शतगुणे?(णं) तीर्थं निगमोद्बोधकं तथा॥ ५०॥
तीर्थमतत्क्षेतत्तु त्रयं तुल्यफलं स्मृतम्। एतत्त्रयमनुलङ्घ्य यो गच्छति सितासितम्॥
तस्याऽहं वाञ्छितं विप्र! ददामि खलुनान्यथा। केचिदाहुः सप्तपुरी सप्तपुण्या महर्षयः
अयोध्याद्याः शतं ताभ्य इन्द्रप्रस्थं प्रचक्षते। त्वमत्राऽऽगत्यविप्रेन्द्र सर्वकामफलप्रदे॥
तीर्थे श्रीद्वारकाख्ये हि कुरु स्नानं सुतेच्छया। यावन्ति सर्वतीर्थानि ब्रह्माण्डकलशोदरे
तेभ्योऽपरिमितं पुण्यं शतनामनि कीर्तिते। सुतं ते कुलधौरेयं तीर्थमेतत्प्रदास्यति॥
स्नानाच्च तव गोविन्दः प्रसन्नात्मा भविष्यति॥ ५५॥

नारद उवाच।

इत्युक्त्वा देवदेवेशो ब्रह्मा तत्र तिरोदधे। विमलोऽपि तदा स्नात्वा देवार्दीनप्यतर्पयत्
इत्युवाच स धर्मात्मा द्वारके कृष्णवल्लभे!। सुतं वंशकरं देहि मह्यं भक्ताय ते नमः॥
इत्युक्ते तेन विप्रेण देववागभवत्तदा॥ ५८॥

देववागुवाच।

पुत्रस्ते धर्मतत्त्वज्ञो वंशकर्त्ता भविष्यति। प्रसादादस्य तीर्थस्य सर्वतीर्थशिरोमणेः॥
याहि गेहं विलम्बो मा सुकृतं तेन मज्जनम्॥ ५९॥

नारद उवाच।

इत्याकर्ण्य स तां वाणीं विश्वस्तः पुत्रजन्मनि। चचाल जलमादाय द्वारकायाः कमण्डलौ
मार्गे तस्य सखा विप्रो मलयाचलकेतनः। मिलितश्चलितो गेहं कृत्वा तीर्थानि सर्वतः

तस्मै स्ववृत्तमाख्यातं ब्रह्मसम्वादकात्मकम् ।
यद्भूतं द्वारकातीर्थे श्रुत्वा सोऽपि विसिष्मये ॥ ६२ ॥
उवाच सच धर्मात्मा सखे! मम वचः शृणु । यावन्ति भारतेक्षेत्रे तीर्थानि विहितानिमे
तावन्ति कर्तुमिच्छामित्वदुक्तं तीर्थमुत्तमम् । नीत्वामांदर्शयसखे! तत्तीर्थं सर्वकामदम्
सखायस्ते वरा भूमावुपकुर्वन्ति ये सर्वान् । न तैर्ननुसमो लोके पिता माताऽथवासुतः
निर्द्धनंपुरुषं लोके सर्वेमुञ्चन्ति बान्धवाः । नमुञ्चन्ति सखायस्तु तस्य दुःखेन दुःखिताः
संसारार्णवनिर्मग्नान्सर्वानुद्धरते सखा । उपदिश्य हरेर्भक्तिमार्गं जन्मेन्धनानलम् ॥६७
अतस्त्वं मे सखाश्रेष्ठ ! उपकारं विधेहि मे । दर्शयैतद्वरश्रेष्ठं तीर्थाख्यं द्वारकां द्विजः॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
द्वारकावर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

## अष्टाधिकद्विशततमोऽध्यायः

### विमलब्राह्मस्यस्वमित्रब्राह्मणेनसहइन्द्रप्रस्थस्थद्वारकातीर्थयात्राकरणंविमलमित्र-ब्राह्मणेनप्रतिनिवृत्त्यराक्षसयोनिमापन्नानांनगरवधूनांद्वारकास्थजलेन-स्वकमण्डलरक्षितेनसमुद्धारकरणम्

नारद उवाच ।

विमलस्तंद्विजंनीत्वा द्वारकायामिहाऽऽगतः । पुनस्तौसस्नतुर्धीरौ श्रीपतेर्भक्तिकाम्यया
भूयः खे मेघगम्भीरा वागासीदिति भूपते ! ॥ १ ॥

आकाशवागुवाच ।

शृणुतं द्विजशार्दूलौ! हरेस्तीर्थमिदं शुभम् । एतत्तीर्थप्रसादाद्वां विष्णुभक्तिर्भविष्यति॥
यया जहाति लोकोऽयमविद्यामोहमुल्बणम् ॥ २ ॥

नारद उवाच ।

निशम्येति द्विजश्रेष्ठौ तां वाचमशरीरिणीम् । प्रसादोऽयं हरेरासीदित्यूचाते परस्परम्
स्नात्वा तौ विधिवत्तत्र लब्ध्वा भक्तिं हरेः पराम् ।
चेलतुः प्रणिपत्येदं भाषमाणौ मिथस्तदा ॥ ४ ॥

द्विजावूचतुः ।

यथावयोर्हि संयोगः पथि जातोऽविचारितः । यथा गृहकलत्रादिसंयोगो भुवि जायते
साम्प्रतं विरहोभावीयथानौ मार्गवर्तिनोः । तथादारसुतादीनां कालव्यालास्यवर्तिनाम्
धन्यःस पुरुषोलोके यो दारसुतसङ्गमम् । विज्ञाय क्षणिकं नित्यं संश्रयेच्छ्रीपतिंभजेत्

नारद उवाच ।

स्मरणं करणीयम्मेदासोऽहंत्वत्पदाश्रयः । सन्देशःप्रेषणीयो मामित्युक्त्वा स्वगृहंगतौ
शृणुराजन्यथा तेन मित्रेण विमलस्य तु । मोक्षणं राक्षसीनां तु विहितं पथिगच्छता
व्रजन्स ब्राह्मणःप्राप्तस्तं देशं जलवर्जितम् । यत्र ताःपापविप्लुष्टा राक्षस्यःक्षुत्तृषाकुलाः
अथ ताःपथिगच्छन्तं दूराद्दृष्ट्वाद्विजोत्तमम् । सुजलामत्रहस्तं तंमिथस्त्विति वभाषिरे

राक्षस्यऊचुः ।

आयातिपथिकः कश्चिज्जलपात्रं करेदधत् । अस्माकंक्षुत्तृषोः शान्तिर्भनागपिभविष्यति
एनं सम्भक्षयिष्यामः पास्यामोऽस्य करे स्थितम् ।
पात्रं जलं वयं तृष्णाक्षुधार्ताः शतवर्षतः ॥ १३ ॥

नारद उवाच ।

काचिदाहेत्यहं पूर्वमस्योष्णं कालखण्डकम् ।
भक्षयित्वा ततो रक्तं पीत्वा यास्यामि जीवितम् ॥ १४ ॥
अन्या प्राह कियद्द्रव्यं विद्यतेऽस्यगजानने । मम व्याघ्राननायास्तु पानायाऽपिनदृश्यते
अन्या वै रथचक्राख्या श्रूयतां वचनं मम । करिष्येकुण्डलमहं केनाऽन्त्रैरस्य मेखलाम्
अन्याऽवदद्दं दन्तैरेकतः श्यामलीकृतैः । रमे षोडशभिर्द्यूतशालायां तद्विशारद ! ॥१७
इत्युक्त्वा ता मिथः सर्वास्तंद्विजंप्रतिदुद्रुवुः । विवृतास्या ललज्जिह्वाःप्रद्योतैकमहाभुजाः

आयान्तीस्ताः समालोक्य ब्राह्मणो भयविह्वलः ।
आत्मानमभितश्चक्रे रक्षां वेदोदितां नृप ! ॥ १६ ॥
ता आगत्य स्थितादूरं राक्षस्यो भीमविक्रमाः । तेजसातस्यमन्त्रैश्च प्रत्यादिष्टानराधिप!
ऊचुश्च को भवानत्र कुतःप्राप्तोऽसिनद्वद । त्वद्दर्शनान्मनोऽस्माकं प्रसादमधिगच्छति
त्वत्पादस्पर्शनात्किं नो न विप्र! भवितफलम् । अतोमूर्द्धसुनोदेहिस्वकीयं पादपङ्कजम्

नारद उवाच ।

इत्याकर्ण्य वचस्तासां जगाद हरिदत्तजः ॥ २३ ॥

द्विज उवाच ।

कृत्वा पवित्रतीर्थानि ब्राह्मणोऽहं समागतः । साम्प्रतं पुष्करंयामिभवतीभिःकिमिष्यते
यतस्तत्प्रार्थ्यतां दातुं शक्तो दास्यामि चेत्तदा ॥ २४ ॥

राक्षस्यऊचुः ।

येषु तीर्थेषु विप्रेन्द्र! त्वया स्नातंवदस्व नः । तानिसर्वाणिपुण्यानिमोचयाऽतःकुजन्मनः
अस्मानतितरां तृष्णाक्षुद्भ्यां दारुणदुःखितान् (: ?) ॥ २५ ॥

ब्राह्मण उवाच ।

अवन्तीमाश्रमात्पूर्वमहं हरिपुरीमितः । गतोऽहं द्वारकां तस्मात्स्नात्वा सोमोद्भवाजले
ततः प्राप्तः प्रभासाख्यं तीर्थं नीरधितीरगम् । तस्मात्सेतुनिबन्धेऽहं स्नातःपरमपावने॥
तस्मादहं महापुण्यां किष्किन्धां समुपागतः । हतो यत्र तु रामेण वालीकपिगणेश्वरः
तस्मान्मठं सरस्वत्या नर्मदातीरसंस्थितम् । समागतोऽहं यत्राऽस्तिभारतीसर्वसेविता
ततोऽहमविशंवेणीं तांनत्वादक्षिणापथे । शिवकाञ्चीविष्णुकाञ्च्यौ दृष्टे तत्रमयापुरौ
ययोर्मरणतो जन्तुःशिवो विष्णुश्चजायते । ततोऽहमुत्कलं प्राप्तो यत्राऽस्तिहरिरीश्वरः
चतुर्वर्गप्रदः साक्षाद्भक्तानामपि काङ्क्षितम् । तमर्चयित्वा विधिवद्भक्षयित्वा निवेदितम्
प्रसादभूतं तस्यैव गङ्गासागरसङ्गमम् । तत्र देवानृषीन्पितॄंस्तर्पयित्वा यथाविधि ॥
यत्रगङ्गाशतमुखी जाता तत्राऽहमागमम् । ततोगयामुपागत्य पिण्डान्दत्त्वायथाविधि
पितृभ्यस्तुलसीपुष्पचन्दनोदकपूजिताम् । कोशलां शरयूवारिकर्णधारनभस्वता ॥३५

पवित्रिताखिलजनां स्पर्शनेनाऽहमागमम् । तत्राऽस्तिगोप्रताराख्यं तीर्थं त्रिदशदुर्लभम्
तत्र स्नानादिकं कर्म निशाचर्यः ! कृतं मया । ततः काशीमहं प्राप्तो राजधानीमुमापतेः
नत्वा विश्वेश्वरंदेवं बिन्दुमाधवमेव च । स्नानं मणिकर्णिकायां ज्ञानवाप्यां चभक्तितः
त्रिरात्रमुषितस्तत्र प्रयागं पुनरागमम् । पौषशुक्लचतुर्दश्यां साक्षाद्यत्र प्रजापतिः ॥३९॥
एकस्मिन्माघमासे तु स्नानं कृत्वाऽरुणोदये । पुनस्तस्मात्समायाते नैमिषं गोमतीतटे

यत्र तीर्थानि सर्वाणि वसन्ति च स्वमायया ।
ततोऽहं मथुरां प्राप्तो यत्र विश्रान्तिसंज्ञकम् ॥ ४१ ॥

तीर्थं तत्सन्निधौ पुण्यमसिकुण्डाख्यमुत्तमम् । कृष्णगङ्गाध्रुवाक्रूरकेशिकालीयतीर्थभृत्
यमुनाऽस्ति महापुण्यायत्र सर्वार्थदायिनी । उभयोःकूलयोस्तस्या वनानिद्वादशश्रिया

राजमानानि खेचर्यः समस्तार्थकराणि च ।
सन्ति तेषु नरः स्नात्वा पीत्वा भूयो न जायते ॥ ४४ ॥

ततोऽहमागमं पुण्यं हस्तिनापुरमुत्तमम् । यत्र श्रीपतिपादाब्जजाता गङ्गा सरिद्वरा ॥
ततो नारायणस्थानं हिमवद्भूमिसंस्थितम् । आगत्य माधवं दृष्ट्वा केदारमहमागमम्
तत्र सम्पूज्य विश्वेशं पीत्वाऽहं सोदकं पुनः । हरिद्वारं महापुण्यमागमं जाह्नवीतटे ॥

तत्र स्नात्वा पितृन्देवानृषीन्सन्तर्प्य चाऽप्यहम् ।
समागतः कुरुक्षेत्रे यत्र प्राची सरस्वती ॥ ४८ ॥

तत्राऽप्यहं क्रियाः सर्वाः कृतवान्नियतेन्द्रियः । अर्चयित्वाचपादाब्जंश्रीपतेःपुष्करम्प्रति
चलितो मार्गमध्येतु विमलोनाममेसखा । मिलितो मां व्रजन्गेहमिन्द्रप्रस्थात्तु तीर्थतः
नीतोऽहं तेन राक्षस्यः ! पुनस्तत्र द्विजन्मना । तीर्थोत्तमे परावृत्य शक्रप्रस्थेऽखिलार्थदे

तत्राऽस्ति द्वारका पुण्या निर्मिता विष्णुना स्वयम् ।
तत्राऽवलोकितः साक्षाद्विष्णुर्वाक्यान्न रूपतः ॥ ५२ ॥

तत्राऽहं सचसंस्नातौ विष्णुभक्तिप्रलब्धये । दत्ता सा विष्णुना मह्यंतस्मैचकृष्णमूर्तिना
श्रुत्वा(ता)तत्र हरेर्वाणीन रूपंवे विलोकितम् । भक्तिर्लब्धाततःस्थानाद्यमहंपुष्करम्प्रति
तस्य तीर्थाधिपस्येदं द्वारकाख्यस्यवैजलम् । कमण्डलुगतं पुण्यं निशाचर्यो ददाम्यहम्

भवतीभिरहं पृष्टो यत्तदाख्यातमेव मे । दृष्ट्वा वो दुर्दशामेतां कृपा मे जायते हृदि ॥
उच्यतां किं करोम्यद्यभवतीनांवशोह्यहम् । ज्ञानं भवतुयुष्माकमितिताःसिषिचेऽम्भसा
नास्तज्जलाभिमर्शात्तु सर्वेषांजन्मकर्मणाम् । संस्मृत्यतत्यजुश्चैव राक्षसं देहमुल्बणम्
आसाद्य दैवतादेहं विमानशतमागतम् । आरुह्याऽप्सरसो भूत्वा ताः प्रणेमुर्द्विजन्मने ॥
ऊचुश्च भो द्विजश्रेष्ठ! द्वारकाजलसंगमात् । राक्षसत्वाद्वयं मुक्ता गच्छामस्त्रिदशालयम्
इन्द्रप्रस्थान्तरावर्तिन्येषा या द्वारका द्विज !। नातः परतरं लोकेऽन्यत्तीर्थमखिलार्थदम्

नारद उवाच ।

इत्युक्त्वा ताः समारूढा विमानेषु महीपते !। जग्मुः प्राचीं दिशंतेनदत्ताज्ञावैद्विजन्मना
यमुनातीरवर्तिन्या द्वारकाया महीपते !। शृण्वन्माहात्म्यमेतस्या नरः पापैः प्रमुच्यते॥
वेदज्ञानां ब्राह्मणानां शतस्येच्छासुभोजनात् । यत्फलं श्रवणादेतन्महिम्नस्तत्प्रजायते॥

गोविन्दाराधने सम्यग्यथा वै सौख्यमिन्द्रिये ।
माहात्म्यश्रवणादस्या द्वारकायास्तथा नृप ! ॥ ६५ ॥

सूर्येन्दुग्रहणे दानात्सुवर्णपलविंशतेः । यत्फलं शृण्वतैतस्य माहात्म्यं तदवाप्यते ॥
विमलस्य सुतप्राप्तिं श्रुत्वा सुत! इहाऽऽप्यते । तत्सख्युर्भक्तिलाभंच लभ्यतेभक्तिरुत्तमा
राक्षसीनां विमोक्षं यः शृणोति श्रद्धयान्वितः । स यातिताद्वश्रेष्ठंविमानेन सुरालयम्

नृपवर! महिमा ते वर्णितो द्वारकायास्त्रिभुवनजनसेव्ये शक्रतीर्थे स्थितायाः
किमपरमतिपुण्यं वर्णयामि त्वदग्रे कथय नहि विधेयः श्रेयसि स्वे विलम्बः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये द्वारकाख्यानं नामाष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

---

# नवाधिकद्विशततमोऽध्यायः

अयोध्यामाहात्म्यप्रसङ्गे राजचौरनापितेनविप्रमुकुन्दस्यतस्यगृहेचौर्यमाचरता-
वधकरणम् तन्मातृवधूबान्धवैर्विलापकरणं तेभ्योवेदायनतपस्विना-
दृश्यजगतोमिथ्यात्वम्प्रतिपाद्यतत्त्वज्ञानप्रदानम्

युधिष्ठिर उवाच ।

सौभरे!कस्य तीर्थस्य माहात्म्यं नारदोमुनिः । वर्णयामासशिवये शक्रतीर्थगतस्य च॥
अतस्तु मम शुश्रूषा जायते मुनिपुङ्गव !। शिविनारदसम्वादं ब्रूहि पुण्यं नताय मे ॥२॥

सौभरिरुवाच ।

धर्मराज! शिवी राजा श्रुत्वा नारदवर्णितम् । द्वारकायास्तुमाहात्यंतमेवाऽपृच्छदादरात्

शिविरुवाच ।

ब्रह्माङ्गज सुरश्रेष्ट ! श्रुतं माहात्म्यमुत्तमम् । इन्द्रप्रस्थतटस्थाया द्वारकाया मयाऽद्भुतम्
अयोध्यायां यदि मुने ! किञ्चिदस्ति पवित्रकम् ।
चरितं मम तद्ब्रूहि पिपासोस्त्वद्वचोऽमृतम् ॥ ५ ॥

नारद उवाच ।

अस्त्यत्र चरितं पुण्यं महापातकनाशनम् । नापितस्याऽत्रयुक्तस्यमुकुन्दस्यद्विजस्यच॥
ब्रह्महा नापितोराजन्नपमृत्युं गतो द्विजः । प्रसादात्कोशलायास्तु द्वावपि स्वर्गतिं गतौ
चन्द्रभागानदीतीरे पुरी सा च निवेशिता । तत्राऽस्तिनापितःपापश्चण्डकोनाम गर्हितः
चौर्येण परवित्तानामपहर्ता स पापकृत् । घातकः शस्त्रपाशाद्यैः पान्थानामवलुण्ठकः ॥
द्यूतमद्यरतो नित्यं परस्त्रीलम्पटेन्द्रियः । भित्त्वा देवालये भित्तिमिष्टिकाश्चावविक्रयी ॥
स तस्योद्भासिताभ्यासे ब्राह्मणोवसतिश्रिया । संयुक्तो ब्रह्मकर्मज्ञो मुकुन्दो नामतोनृप!
स एकदा समालिङ्ग्य तरुणीमात्मयोषितम् ।

सुष्वाप सुरतायासश्लथाङ्गो निशि निर्भयम् ॥ १२ ॥

स चण्डको निशीथेऽथ प्रविवेशतदालयम् । मुकुन्दस्य समाहर्तुंहर्म्ये भूषादिवस्तु यत्

उपकार्या बहिःस्थं यत्तद्गृहीत्वाऽगमद्गृहम् ।

स्वकीयं च पुनस्तस्य ब्राह्मणस्याऽविशद्गृहम् ॥ १४ ॥

कपाटोत्पाटनार्थी तु रत्नेनमहताऽभवत् । लोहयन्त्रावरुद्धश्च स नोद्घाटयितुं क्षमः ॥

आरुरोह तदा तस्य ब्राह्मणस्याऽविशद्गृहम् । प्रविश्यतद्गृहंक्रूरःकृपाणंपाणिनादधत्

अट्टालिकां स पापिष्ठो नापितस्तस्करक्रियः । तत्राऽपश्यत्प्रसुप्तौतौदम्पतीरतिविह्वलौ

जगाम च तयोः पार्श्वे हेमभूषाजिघृक्षया । शय्याया एकदेशस्थं गृहीत्वा भूषणं बहु॥

हर्तु तदङ्गतो हस्तं प्रससार स नापितः । तस्करस्पर्शतो विप्रो जजागार भयातुरः ॥

न किञ्चिदूचे संमील्य नेत्रे तत्रैव संस्थितः । यदा स तस्करःपापो गृहीत्वादेहभूषणम्

चलितः स तदा तेन दोर्भ्यामात्तो द्विजेन हि । पश्चादागत्यवित्तस्यसहमानेन संक्षयम्

तेनाऽपि नृपचौरेण कृपाणेन हतो द्विजः । विदीर्णोदरमध्यस्तु तातमातरितीरयन् ॥

वदन्तः किंकिमित्येतत्पार्श्वं तस्याऽऽययुर्जनाः ।

ददृशुस्तं निःसृतान्त्रं रुधिरालिप्तविग्रहम् ॥ २३ ॥

पप्रच्छुश्च मुकुन्देदं कर्म केनेदृशं कृतम् । सोऽपि कृच्छ्रेणमहता प्रोवाचेदंस्वबान्धवान्

मुकुन्द उवाच ।

ममैव परिपाकोऽयं पूर्वोपार्जितकर्मणाम् । न कश्चित्सुखदुःखस्यदाताकस्याऽपिदेहिनः

धर्मोऽधर्मश्च तावेव तेषां मूलं पुरा कृतौ ॥ २५ ॥

नारद उवाच ।

इत्युक्त्वा स तु भूयस्या पीडयागाढपीडितः । तत्याज भूपते!प्राणान्पश्यतां सुहृदां तदा

विललाप तदा तस्य माताद्विजसतीनृप !। निधायतच्छिरःस्वाङ्केकुण्डलाभ्यामलङ्कृतम्

मातोवाच ।

हा हताऽस्मित्वया वत्स!दशामन्त्यांचगच्छता । दिनश्रीरिवसूर्येणपश्चिमाचललम्बिना

यदङ्गं चन्दनालेपयोग्यं तव महामते ! । मां मज्जयातिशोकाब्धौ तदिदं धूलिधूसरम् ॥

ताम्बूलचर्वणेऽभ्यासो यस्त्वया विहितस्त्वसौ । स एवरुधिरोद्गारमिश्रेणक्रियतेध्रुवम्
नव ये लोचने पूर्वं जिग्यतुः कमलश्रियम् । ते एव साम्प्रतं जाते तिमिरौघावृते इव ॥
उत्तिष्ठोत्तिष्ठ वत्स!त्वं शिष्यानध्यापयात्मनः । यथावद्वैश्वदेवान्ते पूजयाऽतिथिमागतम्

द्वारि स्थिता वयस्यास्ते त्वाह्वयन्ति प्रयाहि तान् ।
दातव्यं यद्ददस्वैभ्यो ग्रहीतव्यं गृहाण तत् ॥ ३३ ॥

हाहा देहि प्रतिवचः पतामि तव पादयोः । नोचेदहं विमोक्ष्यामि प्राणांस्तव समीपतः

नारद उवाच ।

इत्युक्त्वा मूर्च्छितातस्य मुकुन्दस्यप्रसूस्तदा । भार्यातस्यशिरःस्वाङ्केविधायव्यलपच्चसा

भार्योवाच ।

नाथ! भो गुणपाथोधे मदीयं वचनं शृणु । रुष्टोऽसि चेत्समं मात्राकुतोवद ममाऽग्रतः
न कदाचित्त्वया साधो मौनर्माद्वक्कृतंपुरा । केनाऽपि लघुनाभ्रात्रा ह्यपमानः कृतस्तव

शुकोऽयं पञ्जरस्थस्ते नान्नमत्ति त्वया विना ।
भोजयैनंसुसिद्धान्नंकलवाचंचसारिकाम् ॥ ३८ ॥

रामरामहरेकृष्णविष्णोनामावलीमिति । पाठयोत्तिष्ठ निपुणौ द्वावेतौ सारिकाशुकौ॥
अपराद्धं मया किं ते यत्त्वं मांनाभिभाषसे । यत्त्वया मे धनं दत्तं तन्मया साधुरक्षितम्
अर्पितं यत्त्वया नाथ निजतेजो ममोदरे । सूतिकालमहं तस्य नाऽपेक्षे त्वामनुव्रजे ॥

नारद उवाच ।

एवं विलप्य सा तस्य मुकुन्दस्य प्रिया तदा । न रुरोद स्वभर्तारमनुगन्तुमनाः सती
अथ तस्य मुकुन्दस्य गुरुर्वेदायनाभिधः । संन्यासी पर्यटन्पृथ्वीं तस्य वेश्म ययौ नृप
मुकुन्दः क्व गतो माता भार्यातस्य च धीमतः । न दृश्यते तदा तेन पृष्टेत्याचष्टचेटिका

चेटिकोवाच ।

स्वामिन्केनाऽपिचौरेण मम स्वामी हतो निशि । स्नुषायाभूषणंनीतंदुकूलानिच सर्वशः
स मृतः पतितो भूमौ हर्म्यस्योपरितिष्ठति । तस्य माता वधूश्चैव भ्रातरश्च तदन्तिके॥

विलपन्ति महाशोकसागरे पतिता गुरो ! ॥ ४६ ॥

नारद उवाच ।

इत्याकर्ण्य परिव्राट् स वचनं चेटिकोदितम् । आरुह्य हर्म्यमद्राक्षीदात्मान्तेवासिनंमृतम्
तदन्तिके समालोक्य बन्धूनाक्रन्दतो भृशम् । उद्धरिष्यन्निदंधीरःशोकाब्धेस्तानुवाचह

वेदायन उवाच ।

देहमुद्दिश्य वाऽऽत्मानं शोकोऽयंक्रियतेत्वया । मातः कथयसत्यंमेनोभयोर्युज्यतेहिसः
देहोऽयं भूतसंघातः प्रारब्धैः समुपार्जितः । तेषु क्षीणेषु भूतानां पृथक्त्वमुपजायते ॥
यदेकीभवनं तेषां कर्मभिर्जन्म तन्नृणाम् । तन्नाशे तत्पृथक्त्वं च तदेव मरणं स्मृतम्
ऐक्यं पृथक्त्वं भूतानां कर्माधीने यतो बुधैः । अतो देहेन कर्तव्यः शोकः परवशे जडे
अनाद्यविद्यया जीवे दृष्टे मरणजन्मनी । देहस्याऽऽत्मन्यहंबुद्ध्या मन्यते नहि तत्र ते
तन्निवृत्तौ सनद्ब्रह्म यच्छुद्धं रूपवर्जितम् । स्वप्रकाशं जगद्धेतु हेत्वतीतं गुणोर्जितम्
नित्यं विज्ञानमानन्दस्वभासाभासयज्जगत् । न जिह्वालेढितच्चक्षुर्नपश्यति शृणोति न॥

श्रुतिर्जिघ्रति न घ्राणं नत्वक्स्पृशति कर्हिचित् ।
अतीतमिन्द्रियेभ्यस्तत्स्वप्रकाशकमात्मदृक् ॥ ५६ ॥

अविषयं मनो दूरं बुद्धेरपि न गोचरम् । तस्याऽवताररूपाणि शुद्धसत्त्वानि देवताः ॥
सेवन्ते तन्न जानन्ति रूपं यत्सदसत्परम् । एवं स्वरूपमात्मायस्तं समुद्दिश्यकःकुधीः

क्रोधं कुर्याद्यतस्तस्य नोत्पत्तिर्नैव संक्षयः ॥ ५९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

# दशाधिकद्विशततमोऽध्यायः

## पटसम्पुटितमुकुन्दास्थ्नांश्वद्वारेन्द्रप्रस्थस्थितकोशलपुर्यांपातनंततस्तत्रसुरालयं-
## गन्तुंमज्जस्यमुकुन्दस्यमृत्योरनन्तरंस्वगुरवेंवातायनाय-
## गतिवर्णनं तस्यस्वर्गतिप्राप्तिश्च

नारद उवाच ।

एवं प्रबोध्य तान्सर्वान्वचोभिः पारमार्थिकैः ।
स हंसः कारयामास क्रियास्तस्याऽऽत्मसंभवाः ॥ १ ॥

अन्तर्वत्नी मुकुन्दस्य निर्बन्धं कुर्वती वधूः । अनुगन्तुं स्वभर्तारं विदुषा तेन वारिता ॥
तस्याऽस्थीनि समादाय तेन संन्यासिनासमम् । तद्भ्राताप्रययौगङ्गाजलेपातयितुंनृप
विप्रसंन्यासिनौ तौ हि कतिभिर्वासरैर्नृप ॥ सार्थलोकवशात्प्राप्ताविन्द्रप्रस्थेऽत्रसत्पदे
इन्द्रप्रस्थान्तरावर्तिन्येषा या कोशलानृप ॥ अत्र सुप्तौ निशायां तौ यमुनातीरभूतले॥
आत्मनोरुभयोर्मध्ये न्यस्याऽस्थिपटसम्पुटम् । मार्गखेदपरिक्रान्तौदशांसौषुप्तिकींगतौ
निशीथेऽथ प्रसुप्तेषु सार्थलोकेषु कश्चन । एकः श्वा तत्र सम्प्राप्तः पक्वान्नादिजिहीर्षया
बभ्राम सर्वशिबिरे जिघ्रन्पाकस्थलीं मुहुः । भाजनानि लिहन्मूर्ध्निकश्चदण्डाहतिसहन्
केनचित्ताडितो मूर्ध्नि निःशब्दंविद्रुतस्ततः । प्रतिकर्तुमशक्तस्तुस्त्रीजितःस्वस्त्रियायथा
यत्रावकण्डितः स श्वादण्डग्रावेष्टकादिभिः । पुनर्विवेश तत्रैव सोऽन्नपात्रलिलिप्सया
भोगेच्छया यथा वेश्याः स्नेहवान्निर्द्धनो जनः । भ्रमन्नेवंसन्त्राऽत्रापियत्रसुप्तौहितावुभौ
सारमेयस्तयोर्मध्याज्जह्रे स पटसम्पुटम् । नीत्वा स कियतीं भूमिं दन्तैस्तत्पटसम्पुटम्

विदार्याऽस्थीनि तत्स्थानि निर्मांसान्यवलोक्य सः ।
एतस्याः कोशलायास्तु जलमध्ये समाक्षिपत् ॥ १३ ॥

क्षिप्तमात्रेषु तेनाऽस्थिष्वेतदम्बुनि भूपते ॥ दिव्यं विमानमास्थाय मुकुन्दोऽत्रसमागतः

दृष्ट्वा गुर्वनुजौ सुप्तौ शनैः प्राबोधयत्तदा । उवाच च नमस्कृत्य गुरुं दिव्याकृतिर्नृप !॥

मुकुन्द उवाच ।

वेदायन गुरो तुभ्यंनम आशीस्तवाऽनुज !। प्रसादाद्वां ममाऽर्थीनिर्तीर्थेऽत्रपातितानिवै

अपमृत्युमहं गत्वा निरयं प्राप्य तत्फलम् । एतत्तीर्थप्रसादेन दैवी लब्धा मया गतिः

त्वां गुरुं तीर्थभूतं तु नमस्कर्तुमिहाऽऽगतः । अहं गच्छन्विमानेनदिव्येनत्रिदशालयम्

नमस्कृतो भवानेतत्तीर्थं चाऽयं सहोदरः । दृष्टो मामनुजानीहि यामि स्वर्गं सुखोदयम्

नारद उवाच ।

श्रुत्वैवं वचनं तस्य मुकुन्दस्य गुरुस्तदा । वेदायनो विमानस्थं तमूचे गतविस्मयः ॥

वेदायन उवाच ।

मुकुन्दाऽऽख्याहि मे सत्यं लब्ध्वा यन्मरणं भवान् ।
कस्मिँल्लोके गतस्तात ! यतो यात्यधुना दिवम् ॥२१ ॥

किं वृत्तं तत्र ते ताततस्य लोकस्यकोऽधिपः । कीदृशीचप्रजाकीदृग्धर्मस्तत्राऽखिलंवद

मुकुन्द उवाच ।

कथयामि गुरो तुभ्यं यद्वृत्तं मरणादनु । तीर्थस्याऽस्य प्रसादेन स्मृतिर्मे जायतेऽधुना

यदाऽऽहं तेन निहतश्चण्डकेन दुरात्मना । नापितेन तदाऽऽजग्मुर्यमभृत्याः सुदारुणाः

पिङ्गाक्षा रक्तकेशाश्च श्यामदेहनखाधराः । वामनादीर्घचरणा ह्रस्वनासाश्च दन्तुराः ॥

नीयतां नीयतामेष धर्मराजस्य शासनात् । पुरीं संयमनीमेवमूचिरे ते परस्परम् ॥

इत्युक्त्वा यातनादेहे मां निवेश्य महारुषा । निबध्यदारुणैः पाशैर्जघ्नुर्लोहस्य मुद्गरैः॥

तैरहं नीयमानस्तु मार्गेह्युत्तप्तवालुके । अरुदं भृशदुःखार्तस्ताडितोऽहं पुनश्च तैः ॥

प्रोचुश्च ते भ्रुवं कृत्वा निर्भर्त्स्यैति च मां बहु ॥ २८ ॥

यमदूताऊचुः ।

त्वया लुप्तो गुरुर्यस्माद्ददता ब्रह्म निश्चलम् । किं करोषि यमस्याऽग्रेद्रष्टव्यंदारुणंमुखम्

तस्य पापस्य भोक्तव्यं दारुणस्यफलं त्वया । तेनैव पाप्मनापापिन्नपमृत्युं गतोभवान्

इत्युक्त्वा मां मुहूर्तेन बहुयोजनसंस्थिताम् । पुरीं संयमनीं निन्युर्यत्र राजा स्वयंयमः

प्रणम्य धर्मराजं ते स्थापयित्वा तु मां पुरः ।
आनीतोऽयं द्विजः पाप इति मां ते न्यवेदयन् ॥ ३२ ॥
दृष्ट्वा मां धर्मराजोऽथ प्रोवाच स्वसभासदः ॥ ३३ ॥

यम उवाच ।

भोःसभ्यामामकींवाचंशृण्वन्तुसुसमाहिताः । यदाऽहंब्रह्मणाह्यस्मिन्नधिकारेनिवेशितः
तदा मामित्युवाचाऽसौ ब्रह्मा लोकपितामहः ॥ ३४ ॥

ब्रह्मोवाच ।

अधर्मिणां नराणां त्वं शास्ता संयमनीपतिः । यथापराधमाधत्स्व दण्डंचण्डकरात्मज
पित्रोरपोषको यस्तु समर्थो गुरुध्रुक्तु यः । एतौ महापातकिनौ निपात्यौनिरयेषु ते
सर्वेषु यावद्वर्षाणां प्रत्येकमयुतं भवेत् । एतयोर्न त्वया कार्या दया जातु ककुप्पते ॥

यम उवाच ।

इत्यहं ब्रह्मणोवाक्यात्स्वगुरुद्रुहिमानवे । न करोमि क्रियां सभ्यास्तथा पित्रोरपोषके
ब्राह्मणोऽयं गुरुद्रोहीतद्द्रोहादपमृत्युताम् । प्राप्तो मच्छासनाद्भृत्यैरानीतोदर्शनाक्षमः
भो भृत्याःप्रथमंघोरेरौरवेवत्सरायुते । पात्यतां न पुनस्तस्मान्निःसार्यान्यत्रपात्यताम्
तावन्तमेव कालं वै पापोऽयं गुरुलोपकः । नरकेष्विति सर्वेषु यथाकालं स्थितं द्रुतम्

मुकुन्द उवाच ।

वेदायनगुरोस्स्वामिन्भृत्यास्तेयमशासनात् । नीत्वामांरौरवेघोरेपाशैर्बद्ध्वान्यपातयन्
तत्राऽहं तां व्यथां गुर्वीं लब्धवानतिदारुणाम् ।
यथैकोऽपि क्षणस्तात नीतो मे युगवत्तदा ॥ ४३ ॥
त्रिंशद्दिनानि तन्नीतं दुःखं मे तत्र तिष्ठता । एकत्रिंशत्तमे ह्यस्मिन्दिनेऽहं निर्गतस्तदा ॥
पतितेष्वस्थिखण्डेषु तीर्थेऽस्मिन्नुत्तमोत्तमे । गुरुलोपोद्भवं पापं सद्यो नष्टं ममाऽभवत्
तीर्थस्याऽस्य प्रसादेनलब्धाचस्वर्गतिर्मया । सुखं स्वर्गेनिवत्स्यामि यावदिन्द्राश्चतुर्दश
यमस्य नगरे तस्मिन्याः प्रजा निवसन्तिवै । पापिनांभयदायिन्योधर्मिणांतामनोहराः
सिंहास्या गजकोलास्या महादंष्ट्रोन्नतोदरीः ।

बिडालास्याः पिङ्गकेश्यो भामिन्यो दीर्घपत्कराः ॥ ४८ ॥
तीर्थस्याऽस्य प्रसादेन निष्पापोऽहंयदाऽभवम् । तदामयाप्रजाद्दृष्टाद्दिव्यरूपा यमालये
सर्वास्ताः सत्यवादिन्यो विनयाचारसश्रिताः ।
दिव्याभरणधारिण्यो दिव्याम्बरविभूषिताः ॥ ५० ॥
इत्येतत्कथितं तात यत्पृष्टोऽहं त्वयाऽनघ !। अनुजानीहि मां गन्तुममरेशपुरीं प्रति ॥

नारद उवाच ।

इत्याकर्ण्य स संन्यासी स्वशिष्योक्तंवचस्तदा । भूयःपप्रच्छधर्मात्मामुकुन्दंतंद्विजंनृप

वेदायन उवाच ।

बाल्यावधि गुरुस्नेहं मत्तोऽधीतं त्वयाऽखिलम् । शब्दशास्त्रसमेतश्चवेदस्तु सपदक्रमः
विहिता मम शुश्रूषा भावेन भवतोत्तमा । त्वयि सन्ति सतांसाधोगुणाः शमदमादयः
गुरुलोपकृतं पापं कथं ते समजायत । एतदाख्याहि मे तात यथा जानामि तत्त्वतः ॥

मुकुन्द उवाच ।

जन्मोपवीतकन्यानां दातारो निगमस्य च । यज्ञोपवीतदातुश्च नाज्ञाभङ्गः कृतो मया
श्वश्रूश्वशुरयोः सेवा भृत्येनेव कृता मया । तवाऽपि शास्त्रदातुश्च नाज्ञाभङ्गः कृतो मया
पुरोधा यः कुलाचार्यो वेदवेदाङ्गपारगः । तस्याऽपराद्धं किञ्चिन्मे तत्र त्वं श्रोतुमर्हसि
यद्यस्माकं कुले पुत्रो जायते धर्मकोविदः । तदा पुरोधसे धेनुमेकांवातस्यदक्षिणाम्
दत्त्वा संछिद्यतेनालमितिवंशस्यनःस्थितिः । पुरा ममैवपुत्रे तु जातमात्रे शुभेऽहनि ॥
कुलक्रिया मया तात! न कृता मूढबुद्धिना । तस्याश्चाकरणेनैव गुरुलोपकरोऽभवम् ॥
निवेदितमिदं सर्वं गुरुलोपाद्यथा मम । पापमासीदनुज्ञां मे देहि यामि सुरालयम् ॥

वेदायन उवाच ।

इन्द्रप्रस्थान्तरावर्तिन्येषा या कोशला शुभा । स्मृतिरस्याः प्रसादेन दृश्यते पूर्वजन्मनः॥
केनपुण्येनतीर्थेऽस्मिन्नस्थीनिपतितानिते।मुकुन्दाऽऽख्याहिचैतस्यस्मृतिरस्तितवाऽनघ

मुकुन्द उवाच ।

एकस्तु ब्राह्मणःकश्चित्सायं मद्गृहमागतः । तस्मैस्थानं मयादत्तं भोजनंचयथाविधि

सोऽपिभुक्त्वा यथा कामं सुष्वापशयने शुभे। निशीथेतस्यसर्वाङ्गेज्वरोऽभूदतिदारुणः
तेन पीडितसर्वाङ्गो निद्रांलेभे न स द्विजः। प्रभात एव तत्याज प्राणान्मृत्यावुपस्थिते
तस्य दाहादिकर्माणि विहितानि मया गुरो!।
तदस्थीनि च गङ्गायां पातितानि विधानतः॥ ६८॥
तेनपुण्येन मेऽस्थीनि पतितानि शिवप्रदे। तीर्थेऽस्मिन्कोशलेनाम्नि ब्रह्मदेवविनिर्मिते

नारद उवाच।

स्वचरितमितिराजन्स द्विजः प्रोच्य सद्यः सुरसुभगशरीरो द्यां ययौयानगत्या
इदमकथि मया ते तस्करात्प्राप्यमृत्युं व्यलभत दिवमेतत्तीर्थराजप्रसादात्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये मुकुन्दोपाख्यानं नाम दशाधिकद्विशततमोऽध्यायः॥ २१०॥

---

## एकादशाधिकद्विशततमोऽध्यायः

पौराणामनुरोधेनराज्ञामुकुन्दहत्यापराधेचण्डनापितस्यशिरःकर्त्तनायचन्द्रभागा-मर्यादाबहिःमचिवायाऽऽज्ञाकरणंपापिनोऽस्यसर्पगतिवर्णनं कस्यचिद्-ब्राह्मणस्यस्वपित्रोरस्थ्नांमञ्जूषायांसर्पस्यप्रवेशःपश्चादयो-ध्यायांतीर्थयात्रिभिःस्वयष्टिकाप्रहारेणसर्पमारणं-तीर्थमरणात्पापस्यास्यस्वर्गतिवर्णनम्

नारद उवाच।

शिबे! तव पुरः सर्वं मुकुन्दाख्यानमुत्तमम्। कथितं चण्डकस्यापि नापितस्य शृणुष्वमे
यस्मिन्दिने मुकुन्दस्तु ब्राह्मणस्तेनघातितः। चण्डकेन तदा राजंस्तंवृत्तंनागरैः श्रुतम्
श्रुत्वा तैस्तन्नृपस्याऽग्रे निवेदितमितिस्फुटम्॥ ३॥

नागराऊचुः ।

चण्डकेन हतो राजन्मुकुन्दो ब्राह्मणोत्तमः । नीतं च तद्धनंभूरि यद्युक्तं तद्विधीयताम्
त्वमस्माकं प्रजानां हि रक्षकः शासकोऽसताम् ॥ ४ ॥

नारद उवाच ।

इत्याकर्ण्य स भूपालो मन्त्रिणंपार्श्ववर्तिनम् । उवाच कोपरक्ताक्षःकिमेभिःकथ्यतेशृणु
शीघ्रमानय तं पापं नोचेत्त्वांघातयाम्यहम् । उत्तिष्ठोत्तिष्ठ पापिष्ठ साधूनांशंविधीयताम्
पीड्यन्ते विषये यस्य प्रजादस्युभिरुल्बणैः । स नृपो नरकं याति तेभ्यस्ताश्चेन्नरक्षति

नारद उवाच ।

निशम्येति वचो राज्ञः सचिवः स शिवे नृप !। वेगेन हयमारुह्य पदातिशतसंयुतः ॥
ययौ गृहे मुकुन्दस्य तस्य बन्धूनपृच्छत । मुकुन्दः केन निहतः सत्यं ब्रूत ममाऽग्रतः ॥
तं पापं निहनिष्यामि शासनाद्भूपतेरहम् ॥ ६ ॥

नारद उवाच ।

श्रुत्वेति मन्त्रिणो वाक्यं प्रत्यूचुर्विप्रबान्धवाः ॥ १० ॥

विप्रबान्धवाऊचुः ।

चण्डकेन हतो मन्त्रिन्मुकुन्दो नापितेन हि । इदंपलायमानस्य तस्योर्णापं पपात वै
दृष्टः स्वचक्षुषा वध्वा मुकुन्दस्यैव सोऽघकृत् । किं कुर्मस्तेनपापेनमज्जिताःशोकसागरे

नारद उवाच ।

इत्याकर्ण्य वचस्तेषां बन्धूनां ब्राह्मणस्य हि । स मन्त्री तस्य पापस्यनापितस्यगृहंययौ
अश्वादुत्तीर्य तरसा तद्गृहं स्वयमाविशत् । कतिभिः पत्तिभिः सार्द्धंशयानंच ददर्श ह
पत्तयस्तु तदाज्ञप्ताःकेशेष्वाकृष्यतत्क्षणात् । तल्पादुत्थापयामासुस्तंपापंनापिताधमम्
किंकिमित्येव संजल्पन्नेत्रे उन्मीलयत्यसौ । यावत्स नापितः पापस्तावत्तं ददृशे पुरः
संस्मरंस्तं निजं कर्म रात्रौ यत्कृतवानघम् ।
अधोमुखः क्षणं तस्थौ पश्यन्मूर्ध्नि स्थितं यमम् ॥ १७ ॥
ग्राहयित्वा च सचिवस्तं पापंचस्वपत्तिभिः । निनायनृपतेःपार्श्वमितिचोवाचभूपतिम्

आनीतो ब्रह्महा राजन्नयं चण्डकनापितः । यदाज्ञापयसि स्वामिंस्तरसा तत्करोम्यहम्

राजोवाच ।

धर्मज्ञ सचिवश्रेष्ठ ! शृणु त्वं वचनं मम । इयं सरिद्वराऽऽयुष्मंश्चन्द्रभागाऽत्रनिर्मला
त्यजन्ति येऽत्र वै प्राणाँल्लभन्ते ते सुरास्पदम् । अतएवनहन्तव्यःपापात्माह्यत्र नापितः
पञ्चकोशान्तरे ह्यस्या मर्यादा या बहिर्जहि । नरकान्दारुणान्होप ब्रह्महा यातु माचिरम्

नारद उवाच ।

इत्युक्तस्तेन वै राज्ञा स राजन्मन्त्रिसत्तमः । श्वपचान्प्रेरयामास हन्तुं तं भूपशासनात्
श्वपचास्ते तमुन्नीय चन्द्रभागापरे तटे । योजनद्वयभूभागं चिच्छिदुस्तस्य मस्तकम् ॥
स पापो मारवेदेशे सर्पोऽभूत्कालविग्रहः । धवकोटरमध्यस्थो विषज्वालाकराननः ॥
स शुष्को धववृक्षस्तु तस्य फूत्कारवह्निना । तथा तपनतापेन सरसोऽपि यथा ह्रदः॥
गमनात्तस्य पापस्य सर्वतो वृक्षमूपरम् । उच्छिद्य तृणजातादिजातं पश्वहितं तदा ॥
तत्र जातु समायातः सार्थो दक्षिणदेशतः । नारायणाश्रमं गच्छन्बदर्याख्यं शिवे नृप

तत्रैको ब्राह्मणः कश्चित्सार्थे संमीलितः पथि ।
निश्छिद्रां काष्ठमञ्जूषां पितृमात्रस्थिसंयुताम् ॥ २६ ॥

स्कन्धेन धारयन्याति तानि पातयितुं नृप !। गङ्गाम्भसि महाभाग!पापिनामपि कामदे

सोऽप्यागतस्तत्र वने यत्राऽस्ति स भुजङ्गमः ।
विविक्ते क्षिप्य मञ्जूषां शलाकालोहनिर्मिताम् ॥ ३१ ॥
अथाऽऽगत्य भुजङ्गोऽसौ शलाकां फणयाऽघटत् ।
किञ्चिदुद्घाटितायां स मञ्जूषायां समाविशत् ॥ ३२ ॥

पुनःशलाकास्वंस्थानमागताऽथसकुण्डली । तत्रैवतस्थौनिश्चेष्टोमञ्जूषायांविषोल्बणः
अथ प्रभाते सर्वेतेचेलुःस्थानात्ततो नृप !। ब्राह्मणःसोऽपिमञ्जूषांकम्बलेन समावृताम्
कृत्वाशिरसिराजेन्द्रचचालप्रतिजाह्नवीम् । कतिभिर्वासरैःसार्थःसम्प्राप्तस्तीर्थगामिनाम्
इहैव कोशलायां वै पुनीतायां महीपते !। अथ शीतातुरो विप्रः कम्बलं चोद्घाटयत्
मञ्जूषावरणं राजंस्तत्राऽयोध्यातटेशुभे । सोऽपिसर्पो निराहारोलब्ध्वामारुतभोजनम्

निश्चकामबहिस्तस्मादुत्क्षेप्यसुशलाकिकाम् । तं निःसृतं समालोक्यसर्पःसर्पइतिक्रुधा व्याहरन्तो जनाः सर्वे लोष्टहस्ताः समभ्ययुः । यावत्पलायते सर्पस्तावदेकेन घातितः तत्याज स तदा प्राणान्पश्यतांतीर्थगामिनाम् । त्यक्त्वाभुजगदेहंसदेवत्वंप्राप दुर्लभम्

दिव्यं विमानमारुह्य प्रोवाचेदं जनानिह ॥ ४० ॥

सर्प उवाच ।

भो दाक्षिणात्याःशृणुत ब्राह्मणा वचनं मम । पुरा चण्डकनामाऽहंनापितोब्रह्महाऽधमः ब्रह्महत्याप्रदोषेण सर्प आसं मरुस्थले । भुक्त्वा नरकदुःखानि वर्षाणां लक्षपञ्चकम् अतीतं सर्पयोनौ मे वर्षाणामयुतद्वयम् । तीर्थस्याऽस्य प्रसादेन प्राप्तं देवत्वमुत्तमम्॥ तस्मादिदं न वै त्याज्यं तीर्थंवैकोशलाभिधम् । सर्वार्थदंयतोनाकःप्राप्तःपापीयसामया

नारद उवाच ।

एवं स नापितः पापो योनिं प्राप्य विनिन्दिताम् ।

जगाम द्यां विमानस्थस्तीर्थस्याऽस्य प्रसादतः ॥ ४५ ॥

ते दाक्षिणात्या यतयो भूत्वा तत्रैवतीर्थके । ऊषुर्गोविन्दपादाब्जमानसा दृष्टवैभवे ॥ माहात्म्यस्यतीर्थस्यदृष्ट्वासब्राह्मणोत्तमः । तीर्थेऽत्रजातविश्रद्धःपित्रोरस्थीनिसोऽक्षिपत् पतितेष्वस्थिखण्डेषु पितरौ तस्यतत्क्षणात् । विमानवरमारूढौ दिव्यौ तत्र समागतौ ऊचतुश्च स्वतनयं शृण्वानेषु जनेषु वै । वत्स जीव चिरं लोके धनधान्यसुखी भव ॥ आवयोर्मुक्तिदानाच्च मुक्तियास्यसिनोमृषा । गङ्गायांपिण्डदानेनयत्फलंस्यात्सुतस्यवै

पितॄणां या गतिश्चाऽत्र द्वयं स्यादस्थिपाततः ॥ ५० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये चण्डकोपाख्यानं नामैकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

# द्वादशाधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थस्थकोशलामाहात्म्यवर्णनम्

### नारद उवाच

इत्युक्त्वा तस्य विप्रस्य पितरौ दिव्यरूपिणौ । विमानवरमारुह्य गतौ हरिपुरं प्रति ॥
तयोः पुत्रस्तु तत्रैव कोशलायां दिनत्रयम् । उषित्वा स्वगृहं प्रायाच्चिन्तयंस्तीर्थवैभवम्
विबुधैः कोशला राजन्नियमेव तु कथ्यते । कथयिष्यामि तत्तेऽहं श्रवणोत्सुकचेतसे
ते दाक्षिणात्या वटवस्तस्यामूषुर्मुमूर्षवः । समर्थार्थप्रदायिन्यां कोशलायां विपश्चिताम्
कश्चिदेकस्तदा तेषु तामनादृत्य कोशलाम् । गच्छन्नारायणस्थानं विष्णुनावारितः पथि
वृद्धब्राह्मणरूपेण प्रोक्तं चेति द्विजं प्रति ॥ ७ ॥

### वृद्धब्राह्मण उवाच ।

क्व यासि ब्राह्मश्रेष्ठ! त्यक्त्वेमां कोशलांशुभाम् । इन्द्रप्रस्थमिदंतीर्थंसर्वतीर्थोत्तमं द्विज!
कोशलाह्यत्र पुत्रेयं मुक्तिदा विष्णुवल्लभा । यत्र यासि विहायैनांनिष्कामपददायिनीम्
न सिद्धिर्भविता तत्र विष्णुस्ते च पराङ्मुखः ।
मुक्तिं चेदिच्छसे विप्र ! तीर्थे त्वास्मं प्रगृह्य च ॥ ८ ॥
यस्ययस्येच्छया स्नासि तं तं वर्गं प्रदास्यति । तव दृष्टिपथे विप्र सर्पोऽपि मुक्ततामगात्
अस्याःप्रसादतोमुक्तौस्वर्गस्थौविप्रदम्पती । संजातप्रत्ययोऽपि त्वमेतन्माहात्म्यदर्शनात्
लब्ध्वाभाग्योदयेनापिकथमेनांविमुञ्चसि। यथाकश्चित्तृषार्तोऽपिलब्ध्वाप्यमृतवारिधिम्
तं त्यक्त्वा याति पङ्काम्भस्तद्वत्त्वं मूढ ! दृश्यसे ।
यथा चिन्तामणिं कश्चित्कूपे क्षिपति मोहितः ॥ १२ ॥
हस्तस्थं या गतिस्तस्य दृश्यते सा गतिस्तव ।
आराध्य विष्णुं विश्वेशं यथा कश्चित्पुमान्कुधीः ॥ १३ ॥
सुखमैन्द्रियकंतुच्छंयाचते सागतिस्तव । तयाहि कोशलामेनां त्यक्त्वासर्वार्थदायिनीम्

स्नातस्याऽत्र दिवः प्राप्तिर्मृतस्याऽमृतसंस्थितिः ॥ १५ ॥

नारद उवाच।

राजन्नाकर्ण्य विप्रोऽसौ द्विजरूपभृतो हरेः । वाक्यं प्रोवाचविप्राय श्रेष्ठं वदरिकाश्रमम्

विप्र उवाच ।

भोभो विप्रवर ! श्रद्धा तव वाक्येन जायते । मम श्रुतवतः पूर्वमल्पग्रामस्य वैभवम् ॥

इन्द्रप्रस्थमिदं तीर्थं न कदाचिन्मया श्रुतम् । कुतस्तु कोशला वृद्धा!एतदन्तरवर्तिनी ॥

यत्रनारायणःसाक्षान्मुक्ता यत्रचयोगिनः । मुक्त्वा तमाश्रमंपुण्यं तिष्ठाम्यऽत्र कथंद्विज

यथागत्यस्वयं विष्णुरित्युक्त्वामां निवारयेत् । वदर्य्याश्चाधिकं क्षेत्रमिन्द्रप्रस्थमिदंद्विज

तदाहं न प्रतिष्ठामि चालितोऽपितमाश्रमम् । मुक्तिकामः स्वसदनान्नान्यथा स्थितिरत्रमे

नारद उवाच ।

इत्युक्ते तेन विप्रेण प्रादुरासीच्चतुर्भुजः । विहाय प्राकृतं रूपं दिव्यरूपधरो हरिः ॥

उवाच च महाभागं तं द्विजं मोक्षकामुकम् ॥ २२ ॥

विष्णुरुवाच ।

इन्द्रप्रस्थमिदं विप्र ! सर्वतीर्थोत्तमोत्तमम् । ब्रह्मशेष्विव सर्वेषु शम्भुर्गङ्गा नदीष्विव॥

हिमवानिव शैलेषु पक्षिराडिव पक्षिषु । त्रिदशेषु यथाशक्रो वैष्णवेष्विव नारदः॥२४

तेजस्विषु यथा सूर्यःक्षीराब्धिरिवचाऽब्धिषु । यथा वर्णेषु भूदेवः सृष्टिष्विवपितामहः

विष्णोर्यथावतारेषु कौशल्याजनितो वरः । तथा समस्ततीर्थेषु शक्रप्रस्थमिदं वरम् ॥

निष्कामो वा सकामो वा यातितीर्थे क्वचिन्नरः । तत्र तत्र समस्तात्मा फलदाताहमेववै

इन्द्रप्रस्थान्तरगतां त्यक्त्वा यो याति कोशलाम् ।

स नो फलमवाप्नोति भक्तो वरदवृन्दपात् ॥ २८ ॥

नारद उवाच ।

एवं निशम्य तद्वाक्यं दृष्ट्वा तद्रूपमुत्तमम् । प्रणिपत्य रमाकान्तं तस्यामेवागमद्द्विजः

भगवानपि विश्वात्मा सपद्यन्तर्दधे विभुः । तत्त्वमुद्दिश्य तं विप्रं तेन भावेन पूजितः ॥

तत्राऽऽगत्य स विप्रोऽसौ कोशलायां नराधिप ! ।

कथयामास तद्वृत्तं सर्वं सर्वान्स्वसङ्गिनः ॥ ३१ ॥
तेऽपिश्रुत्वामहाभागा दाक्षिणात्या द्विजातयः । तस्यामनशनं कृत्वा तत्यजुःप्राकृतंवपुः
तदैव गरुडारूढः श्रीविष्णुः समुपागतः । विमानैःस्वगणैः सार्द्धं तावद्भिर्दीप्तिभास्वरैः
ते तं दृष्ट्वा समायान्तं विमानगणसंयुतम् । वपुषा दिव्यरूपेण दण्डवत्पतिता भुवि ॥
तुष्टुवुश्च द्विजाः सर्वे दिव्यज्ञानवपुर्द्धराः । तं दिव्यरूपिणं देवं देववन्द्यपदाम्बुजम् ॥

ब्राह्मणाऊचुः ।

नमस्तेऽतसीपुष्पसङ्काशभासं तनुं बिभ्रत्पीतवासो वृताय ।
लसत्कुण्डलप्रोतनानोपलाय श्रुतौ चञ्चलाव्यापिनीलाम्बुदाय ॥ ३६ ॥
भक्तिस्त्वदीया किल कल्पवल्ली समाश्रिता यच्छति चित्तवाञ्छितम् ।
यथा तथैषा तव कोशला विभो ! जनैरुभे ते कृपया तवाऽऽप्यते ॥ ३७॥
वन्दामहे ते चरणारविन्दं वृन्दारकैर्वन्दितमीश्वराद्यैः ।
विचिन्त्यमानं हृदि योगिवृन्दैः कन्दं परानन्दभुवो विमुक्तेः ॥ ३८ ॥
प्राप्ताः कामं श्रीपते ! त्वत्स्वरूपं श्रीवत्साद्यैर्लक्षितं चारुचिह्नैः ।
वाञ्छामस्ते दासभावं तथापि प्राप्तं सर्वैरादृतं नारदाद्यैः ॥ ३९ ॥
यत्सौख्यं ते दासभावं गतानां तन्नो लक्ष्म्यावक्षसोऽन्तर्वसन्त्याः ।
तज्जानाति श्रीपते ! श्रीमहेशो नान्यो लोके येन तच्चानुभूतम् ॥ ४० ॥
मध्येऽस्माकं श्रीपते!सेवकानां नीरागाणामप्यसौ माननीयः ।
अस्मात्तं ते नारदाद्या मुनीशास्त्वद्भक्तामैर्लोकनाथं भजन्ते ॥ ४१ ॥
कामं ब्रह्मानन्दमाप्तोऽन्तरात्मा त्वद्दास्ये नो तृप्तिमायाति शम्भुः ।
वारम्वारं त्वद्गुणानाग्रहीतुं नृत्यत्युच्चैस्त्वत्परो भावयुक्तः ॥ ४२ ॥
हेतोरस्माद्देहिनः स्वस्य दास्यं यत्प्राप्तानां नोर्मयः सम्भवन्ति ।
त्वच्चिह्नाङ्गौ द्वारपालौ तदीयौ मोहाद्धाम प्राप्य तौ तत्स्वकीयम् ॥४३ ॥
लोकादस्मादन्तरेण त्वदिच्छां त्वल्लोकानां नोद्यत चाऽऽशुपातः ।
को जानीयात्तावकीमत्र मायां दुर्विज्ञेयां ब्रह्मशर्वादिदेवैः ॥ ४४ ॥

नारद उवाच ।

एवन्तैः स्तूयमानः स प्रभुर्निजपदोन्मुखः । उवाच तान्दाक्षिणात्यान्मेघगम्भीरयागिरा

श्रीभगवानुवाच ।

भोभो द्विजा!भवन्तोऽस्याः कोशलायाः प्रसादतः ।
सारूप्यमपि मे प्राप्ता दासभावं च यास्यथ ॥ ४६ ॥

अद्यप्रभृति मे विप्रास्तीर्थमेतदनुत्तमम् । दक्षिणाकोशलेत्युच्चैर्नाम्ना ख्यातं भविष्यति
यत्र दाशरथी भूत्वा निहनिष्यामि रावणम् । सा कथ्यते मुनिवरैः सर्वैरुत्तरकोशला॥

विपन्नो ज्ञानवान्यस्यां वैकुण्ठमधिरोहति ।
विनाऽपितद्वसेद्योऽस्यां सोऽपि स्वर्गं च गच्छति ॥ ४६ ॥

इमां ततो दशगुणामाहुर्दक्षिणकोशलाम् । एकादशगुणामेके सम्यगाहुर्मुनीश्वराः॥५०
इयानेव विशेषोऽस्ति तस्या अस्यामतिर्मम । तस्यां मृतं नयन्त्येतेवैकुण्ठंमामकागणाः
अस्यां मृतं स्वयमहमनन्यपदमानसम् । आरोप्य गरुडं दत्त्वा सारूप्यं प्रापयामि तत्

नारद उवाच ।

इत्युक्त्वा तान्द्विजान्विष्णुर्नीत्वा वैकुण्ठमभ्यगात् ।
महिमानं स्तुवन्नस्य स्वयं तीर्थस्य भूपते !॥ ५३ ॥

एतत्ते सर्वमाख्यातं कारणं जगतीपते ! । येनेयं कथ्यते विज्ञैरिह दक्षिणकोशला॥५४

कलिमलकुलहन्ता शृण्वतां मानवानां कमलनयनपादप्राप्तये वाञ्छितश्च ।
नृपवर!महिमा ते वर्णितः कोशलाया मधुवनभववृत्तं शृण्वतस्ते वदामि ॥

इतिश्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
कोशलामहिमवर्णनं नाम द्वादशाधिकशततमोऽध्यायः ॥२१२ ॥

---

# त्रयोदशाधिकद्विशततमोऽध्यायः

## कुशलब्राह्मणपत्नीदुराचारवृत्तान्तवर्णनपुरःसरं मधुवनतीर्थमाहात्म्यं-तत्र च गोधायोनिमापन्नायास्तस्याःस्वपुत्रेणसमुद्धारवर्णनम्

नारद उवाच ।

एतन्मधुवनं तात शिवे! परमपावनम् । देवराजाय तुष्टेन स्थापिता विष्णुना पुरा ॥ २

यत्र विश्रान्तिनामेदं तीर्थं त्रिभुवनोत्तमम् । विविदां मुक्तिदं पुंसांपावनंसाधुसेवितम्

नित्यं वसति विश्वात्मा विष्णुः श्रीकोलरूपधृक् ।
अत्र तीर्थोत्तमे पुण्ये नृप! विश्रान्तिसञ्ज्ञके ॥ ३ ॥

बहुभिर्जन्मभिर्येन विष्णुराराधितः सदा । मरणं तस्य तीर्थेऽस्मिञ्जायते किल भूपते! ॥

कालिन्द्या एव कूलेतु द्विर्तीयंहरिणाकृतम् । तीर्थं विश्रान्तिसञ्ज्ञन्तुयत्रकंसोनिपातितः

एतद्द्वयं समं राजन्गुणैर्वैकुण्ठदातृभिः । भाग्योदयेन केनाऽपि लभ्यते सकलार्थदम् ॥

अथ तीर्थस्य माहात्म्यं कथयामि तवाऽग्रतः ।
यच्छ्रुत्वा सर्वतीर्थेषु मज्जनाल्लप्स्यसे फलम् ॥ ७ ॥

हिमाचलोपत्यकायां किराननगरे शुभे । ब्राह्मणो नाम कुशलो राजन्नासीद्दरिद्रकः ॥

तस्य पत्नी दुराचारा दुराचारनरे रता । कर्मणा मोहयामास पतिं सा बन्धकी वरा

पतिस्तया मोहितस्तु न निवारयितुं क्षमः । तदाज्ञातत्परो दीनःक्रयक्रीतइवाऽभवत् ॥

लोकाउपहसन्तिस्म तं द्विजंकुलटापतिम् । उपहासभयात्सोऽपिनिर्ययौ न गृहात्कुधीः

महार्हाणि दुकूलानिभूषणानि च सा दधौ । जारैर्दत्तानिदुष्टात्माहसिताऽपि न लज्जते

वस्त्रं पुरातनं जीर्णमुत्तीर्णं यच्छरीरतः । अवज्ञापूर्वकं दुष्टा स्वभर्त्रे सम्प्रयच्छति ॥

एवं तया कुलटया सोऽवज्ञातः स्वकः पतिः ।
नितान्तं दुःखमापन्नो विषं जग्ध्वा मृतो निशि ॥ १४ ॥
सा भीता राजतः पापा ह्यनयात्स्वैरिणी तदा ।

अनुयास्यामि भर्त्तारमित्युवाच मृषा वचः ॥ १५ ॥

तत्रैवशिक्षिताःसख्यः स्वकीयास्तांसमीपगाः । निवारयामासुरिति कथयित्वामहीपते

सख्यऊचुः ।

भो मृगाक्षि! किमर्थं ते क्रियतेऽनर्थ ईदृशः । यत्सुवर्णनिभं कायं त्वं नाशयितुमुद्यता
भवत्या किंसुखं दृष्टममुष्याऽव्यवसायिनः । दरिद्रस्याऽसमर्थस्य सखि! स्वोदरपूरिणः
पालयैनंसुतंबालं त्वदृतेकोऽस्य पालकः । मरिष्यामो वयं सर्वा मृतायां त्वयिसुन्दरि!
गृहमेतदवेक्षस्व समुत्तिष्ठ वरानने ! । जीयादयं तव सुतो यस्ते भाविसुखप्रदः ॥२०॥

वाञ्छन्ति बान्धवाः सर्वे त्वदीयास्तव जीवितम् ।

उत्तिष्ठ निजबन्धूनां कुरु चित्तसमीहितम् ॥ २१ ॥

रुदन्ति तव रागेण वयस्याः सकलाः सति !। निजवाक्यप्रदानेन वारयैताःसुदुःखिताः

नारद उवाच ।

इत्याकर्ण्यवचस्तासांदुष्टा साधर्मविश्रुतम् । उन्नमय्य मुखं प्राहश्रावयन्तीस्वबान्धवान्

सख्युवाच ।

युष्माभिर्यद्वचो धर्म्यंप्रोक्तं जानेऋतंननु । तथाऽपिस्वपतिः स्त्रीभिर्मान्योलोकद्वयप्रदः
यदुच्यते मया वाक्यं धर्मशास्त्रसमन्वितम् । तद्वचः श्रूयतां सख्यो युक्तं चेदनुमोदत॥
या स्त्री निधनमापन्नं पतिमन्वेति तत्परा । पापाऽपि सहतेनैव स्वर्गे वसतिसा चिरम्
स्त्रीभिः पतिर्न हातव्यो निर्धनो रोगवानपि । जीवन्मृतोऽनुगन्तव्यःश्रुतिरेषा सनातनी

विचिन्त्येति स्वमनसि सख्योऽन्वेमि स्वकं पतिम् ।

वर्तिष्यते स्वभाग्येन करिष्येऽहं किमस्य वै ॥ २८ ॥

नारद उवाच ।

इत्युक्तास्तास्तयासख्योदुष्टादुष्टमतिप्रदाः । ऊचुस्तां धर्मवाक्येन समस्तजनमोहिनीम्

सख्यऊचुः ।

जहि पूर्वं हि नः सुभ्रूः पश्चादन्वेहि वल्लभे !। समस्तास्त्वद्वियोगं न वयं सोढुं क्षमामहे

अस्मांस्तव विनिघ्नन्त्या अनुयान्त्याः स्वकं पतिम् ।

धर्मोऽल्पः पापबाहुल्यं स्वर्गप्राप्तिस्तु कीदृशी ॥ ३१ ॥
जीवन्नयं पतिः स्वीयःसाध्वयं प्रतिपालितः । यदुक्तंपतिपत्नीभ्यां तत्त्वया विहितंसखि
यावत्स्वजीवनोपायं विधातुमयमक्षमः । तावत्त्वदीयभाग्येन जीविष्यति सुतस्तव ॥

नारद उवाच ।

इत्युक्ता सा निववृते स्वभर्त्तुरनुयानतः । सुतेन कारयामास तदा तद्विरतिक्रियाम् ॥
अथ कालेन कियता सुतोपनयने मतिम् । कारयामास सा विप्रैर्दत्त्वा जारार्पितंधनम्
कृतोपनयनः कुण्डः स तत्त्वज्ञानवाञ्छिशुः । गृहान्निर्गम्य सपदि नारायणपरोऽभवत्
सतां सङ्गतिमासाद्य त्यक्त्वा स्वं प्राकृतं वपुः ।
आरुरोह निजं लोकमप्राप्यं योगिभिश्च तत् ॥ ३७ ॥
अथ सा निर्गते पुत्रे मनोदुःखंचकार वै । तस्मिन्नेव दिने राजन्भूयो जारैः सहाऽरमत्
इति तै रममाणायां तस्यां जारैःसमं नृप !। समागता जरा काले लावण्यमदनाशिनी
त्यक्तोपपतिभिर्दुष्टा सा जराग्रस्तविग्रहा । बभूव दूतिकाऽन्यासां कुलशीलविनाशिनी
तदा ह्येकस्य विप्रस्य सवत्सां गामपाहरत् । विक्रीता कियताराजन्द्रव्येण ननु सा तया
तयेति गमितःकालो दूतित्वेनकियान्नृप !। पश्चाच्छुष्कशरीरोऽस्याविगुणः समजायत
तस्याः कुष्ठे समुत्पन्ने गलितंह्यङ्गपञ्चकम् । हस्तौ पादौ च नृपते!पञ्चमी नासिकातदा
एवंभूतायदाऽऽहारं न लभतेकुतश्चन । तदा तु तत्रोदितया दास्यासाऽनीयताऽऽपणम्
तत्र सा पतिना पापा लोकान्सम्प्रार्थ्य दीनया ।
गिरा धिगिति कुर्वाणा चक्रे स्वोदरपूरणम् ॥ ४५ ॥
तदिहाभ्यासवर्त्येको द्विजः सर्वागमार्थवित् ।
तां विलोक्य महावाग्मी प्रोवाचेदं वचो नृप ! ॥ ४६ ॥
जनानां दुःखदं पापमिह लोके परत्र च । तस्मात्पापं न कर्त्तव्यं मानवैर्दुःखभीरुभिः ॥
पापं कृत्वा जनं यस्तु प्रायश्चित्तं करोति वै । नतदाचरितेभूयो न तत्फलमवाप्नुयात्
यः कृत्वा मुहुरेनांसि प्रायश्चित्तं करोति न । तस्याऽस्या इव पापायागतिरत्र परत्र च
अनया पापसङ्घातोलोकेऽत्र समुपार्जितः । इहैव तत्फलं भुङ्क्ते भोक्ष्यते नरकेऽप्यसौ

सर्वशास्त्रेषु दृष्टं वैसर्वेषां पापकर्मणाम्। प्रायश्चित्तं नच स्त्रीणां विमुखानांस्वकर्मणः

नारद उवाच।

इत्युक्त्वा स द्विजश्रेष्ठो नमस्कृत्य रविं ययौ।

विष्णुं संस्मृत्य संस्मृत्य भीतस्तदवलोकनात्॥ ५२॥

एवंसादुःखमापन्ना भुञ्जाना कर्मणः फलम्। अर्जितस्य स्वयं राजन्मृता कतिपयैर्दिनैः

न तस्या अग्निसंस्कारः संजातःपापकर्मणः। आकृष्यकेशे सानीता श्वपचैर्नगराद्बहिः

मरणावसरे तस्या यमभृत्याःसमागताः। प्रापय्य यातनादेहंतां निन्युर्भास्करेःपुरीम्

सौम्यः स धर्मिणां देवः साक्षाद्गुह्यस्तु पापिनाम्।

तस्या विलोकनाद्भूयः सोऽप्यभूद्वै पराङ्मुखः॥ ५६॥

भृत्यानाज्ञापयामास यम एव पराङ्मुखः। रौरवे नरके घोरे पात्यतां सा मयेरिता॥

इत्युक्तास्ते तदा भृत्या नीत्वा तां घोररौरवे।

न्यपातयन्नधो वक्त्रां स्मरन्तीं कर्म यत्कृतम्॥ ५८॥

एकमन्वन्तरं यावत्सा स्थित्वा तत्र रौरवे। पश्चाद्गोधासमुत्पन्ना श्मशाने मृतमांसभुक्

तत्राऽपि सा वर्षशतं लेभे दुःखं स्वकर्मणः। फलं मृतकमांसेन कुर्वत्याहारमुत्कटम्॥

एकदा स मुनेः पुत्रो योऽस्याः कुक्षौ व्यजायत।

विप्रयोनौ समायातः श्मशाने तत्र पर्यटन्॥ ६१॥

मुनिपुत्रस्तु तां वीक्ष्यमृतानांक्रव्यमश्नतीम्। ध्यात्वाक्षणंस्वमनसिबुबुधेतांस्वमातरम्

स उवाचाऽऽत्मनाऽऽत्मानं बुद्ध्वा तां निजमातरम्॥ ६३॥

मुनिपुत्र उवाच।

एतां तु तारयाम्यद्य दुस्तराद्दुःखवारिधेः। अहो न मुच्यते जन्तुर्जातपापेन कर्मणा॥

आत्मनोपार्जितेनैव भोगकालावधिं विना। अस्याः कालोव्यतीयायनिरयेमानवाभिधः

साम्प्रतं च जनैस्त्वत्र वत्सराणां शतं गतम्। कियदग्रेच भोक्तव्यमेतया पापमुल्बणम्

नारद उवाच।

इत्यालोच्यपुनर्दध्यौज्ञानेनाऽऽमील्यचक्षुषी। दृष्ट्वा तस्यागतिंघोरांपापायादिव्यचक्षुषा

पुनरात्मानमाहेदं स द्विजप्रवरो नृप ! ॥ ६७ ॥

मुनिपुत्र उवाच ।

अहो कल्पशतेनाऽपि निस्तारोऽस्या न दृश्यते । विना सत्तीर्थमरणं शरणं वा रमापतेः
अथवा पिण्डदानेन गयायां मत्कृतेन च । विनाऽस्याःसद्गतिर्नैव कल्पकोटिशतैरपि ॥
न घटेत द्वयं चास्या अस्यां योनौ कदाचन । सत्तीर्थविषये मृत्युःसेवायांश्रीपतेरतिः
अस्या उद्धारहेतुर्वै मग्नायाः पापसागरे । भविता मत्कृतं श्राद्धं गयायां च वहित्रकम्

नारद उवाच ।

इत्यालोच्य स धर्मात्मा ययौ स्वपितुराश्रमम् ।
आचख्यौ पितरं सर्वं स्वमातुर्दुःखकारणम् ॥ ७२ ॥

निशम्य पुत्रवचनं मातृदुःखनिवेदकम् । उवाच स मुनिश्रेष्ठः पुत्रं प्रणतकन्धरम् ॥

मुनिरुवाच ।

हे तात मातरं स्वीयां शीघ्रमुद्धर दुर्गतेः । नयविद्भूपतिः शत्रोर्जयलक्ष्मीमिवाहवे ॥
न तारयति यः पुत्रो मातरं पितरंस्वकम् । दुःखात्स याति नरकं यदि तारयितुं क्षमः
स्वपुत्रात्प्राप्य पार्नीयं पिण्डांश्चवरतीर्थके । पितरोनरकात्स्वर्गंस्वर्गाद्यान्तिहरेः पदम्
तस्मादाशु समुत्तिष्ठ गच्छ खाण्डवकानने । तत्राऽस्तियमुना पुण्या मुनिवर्यनिषेविता
तत्तीरेऽस्ति हरिप्रस्थं सर्वतीर्थमयं ततः । पुण्यं मधुवनं तत्र विष्णुनास्थापितं स्वयम्

तत्र स्नात्वा तु विधिवत्कृत्वा नित्यक्रियां निजाम् ।
तामुद्दिश्य कुरु श्राद्धं स्वप्रसोश्च कुरु क्रियाम् ॥ ७६ ॥

त्वयातत्रकृतेश्राद्धेतस्याःसद्गतिमिच्छता । सा प्राप्स्यतिहरेर्लोकंहित्वागोधाङ्गमुल्वणम्
गयायां पिण्डदानेन यत्फलंतात! जायते । ततः शतगुणं पुण्यं सद्भिर्मधुवने स्मृतम् ॥
इदानीं वर्तते तात कन्याराशिगतो रविः । पुत्र! गत्वा कुरु श्राद्धंपूर्वानुद्दिश्यबान्धवान्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये मधुवनमाहात्म्यवर्णनं नाम त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

# चतुर्दशाधिकद्विशततमोऽध्यायः

## पुत्रस्यपितृवाक्यान्मधुवनेस्वमातुरुद्धारायश्राद्धकरणम्

नारद उवाच ।

इत्याकर्ण्य पितुर्वाक्यं स जगाम त्वरान्वितः । पुण्यं मधुवनंराजन्गयाशतगुणाधिकम्
तत्तीर्थवासिनो विप्रान्सायमामन्त्र्य मन्त्रवित् । कालेपुनःसमाहूयबभाषेस्वागतं वचः
ततः प्रक्षाल्य तत्पादौ गन्धाद्यैरभिपूज्य च । पादार्घ्यमददात्प्रीत्याशेषेणस्वयमाचमत्
ततस्तान्ब्राह्मणान्नीत्वा श्राद्धदेशे न्यवेशयत् । कुशाम्बुतुलसीपुष्पगन्धाक्षततिलैः सह
पूरयित्वा कर्मपात्रं पुण्डरीकाक्षमस्मरत् । देवताभ्यइतिश्लोकंत्रिःकृत्वासोऽपठद्द्विजः
सतिलं शोधितकुशैर्विदधे बन्धनं ततः । अग्निष्वात्तेति मन्त्रेण पूर्वादीनांदिशांक्रमात्
रक्षोभूतेति मन्त्रेण नीवीबन्धं व्यधाच्च सः । ततः प्रतिज्ञामाधाय ददौ द्विजकुशासनम्
पितृन्समाह्वयामास स तदा ब्राह्मणोत्तमः । दत्त्वाततस्तुहस्तार्घ्यं पात्रंन्युब्जीचकारवै

कृत्वा गन्धादिदानं च पुनः सव्येन चाऽऽचमत् ।
सव्याऽपसव्येन तदा दत्त्वा पात्राणि स द्विजः ॥ ६ ॥

तैर्ब्राह्मणैरनुज्ञातश्चक्रेऽग्नौऽकरणं ततः । आज्यादिहविषा राजंस्तान्यमत्राण्यपूरयत् ॥
अनुत्तानोत्तानपाणिःकुर्वन्पात्रावलम्बनम् । पपाठपाठितोविप्रैः पृथ्वीत्वेतिद्विजन्मनाम्
असंस्कृतप्रणीतानामितिमन्त्रेण स द्विजः । दर्भेषु दक्षिणाग्रेषु ददौ च विकिरासनम्
अग्निदग्धेतिमन्त्रेण घृतमिश्रान्नमक्षिपत् । जलेन सह राजेन्द्र! विप्रैरे कुशकल्पिते ॥१३
सव्येन पुनराचम्य ददौ चुलकजीवनम् । तृप्ताः स्थेतिच संपृच्छ्यतृप्ताःस्मइतिभाषितः
शेषान्नभोजने तेषां जग्राहाज्ञांद्विजन्मनाम् । पिण्डार्थवेदिकांकृत्वावितस्तिप्रमितांद्विजः

रेखां चकार दर्भेण दक्षिणाभिमुखीं नृप ! ।
ये रूपाणीति मन्त्रेण दधेऽग्निदिशि चोल्मुकम् ॥ १६ ॥

पूर्वजन्मनि या माता पिता यश्च महीपते !। तयोश्च पितरौ यौहियौच राजन्पितामहौ

यः प्रमातामहश्चापि पितरौ राजसत्तम !। पित्रादीन्पट्सपत्नीकांस्तानुद्दिश्ययथाविधि
कुशासनानि दत्त्वावैददौपिण्डान्पडेवहि । गन्धादिभिश्चसम्पूज्यमध्यपिण्डविसर्जनम्
कृत्वाऽऽघ्रायच वामांसे पिण्डपात्रं न्यवेशयत् । जलपात्रंतदाऽऽदायवाजेवाजेपठन्निति
पाद्यार्घं च पुनर्दत्त्वा दक्षिणाद्यैरतू तुषत् । आद्वारंताननुव्रज्यतेभ्योलब्ध्वाऽनुशासनम्
बुभुजे च स्वयं राजन्बान्धवैः सह स द्विजः । एवं समाप्यराजेन्द्र! श्राद्धं स द्विजसत्तमः
पूर्वसम्बन्धिनां तत्र तीर्थे मधुवने शुभे । यदा चचाल शान्तात्मा पितुराश्रमकंप्रति ॥
तदा सम्मिलितामार्गे सर्वे ते श्राद्धभोजिनः । विमानषट्कमारूढा दिव्याभरणभूषिताः
दिव्याम्बरधरा राजन्नित्यूचुस्तद्द्विजोत्तमम् ॥ २४ ॥

पितरऊचुः ।

भो वत्स! विप्रशार्दूल! वृणीष्व वरमुत्तमम् । तीर्थेऽत्र कुर्वताश्राद्धंभवतातारिता वयम्
वयं गणत्वमापन्नाः श्रीपतेस्त्वत्प्रसादतः । प्रार्थयस्व महाबुद्धे ! यदिष्टं तव चेतसि॥

मुनिपुत्र उवाच ।

के यूयं कुत आयाता गणत्वं हि कुतोगताः । उपकारं विनाऽकस्माद्वरंयन्मे प्रयच्छथ

नारद उवाच ।

इत्याकर्ण्य वचस्तस्य पूर्वजन्मसुतस्य वै । पिता प्रोवाचयोदुःखाद्भक्षयित्वा विषं मृतः

पितोवाच ।

अहं तव पिता विप्र!पूर्वजन्मनि भूसुरः । भार्यया व्यभिचारिण्यामात्रातेपीडितोभृशम्
अतीवदुःखमापन्नो भक्षयित्वा विषं निशि । अपमृत्युं गतस्तस्मादभवं रजनीचरः ॥
एवं मन्वन्तरं तात! शतं पञ्चदशाधिकम् । वर्षाणां च व्यतीतं तद्राक्षसत्वं गते मयि॥
इदानीं षोडशाब्दे तु त्वया श्राद्धे कृतेऽत्र वै । पुण्ये मधुवने तीर्थे दैवत्वं प्राप्तवानहम्
एतद्विमानमायातं स्वर्गादिन्द्रप्रणोदितम् ।
सगणं साप्सरोवृन्दं ममारोहणहेतवे॥ ३३ ॥
अत्र तुभ्यं वरं दातुं सगणः साप्सरोगणः । विमानवरमारुह्य गच्छन्स्वर्गेऽहमागमम्
वरं वरय भद्रं ते न विलम्बसहा वयम् । ऐरावतगजारूढः सुरेशो मामवेक्षते ॥३५॥

नारद उवाच ।

इत्युक्त्वा निजवृत्तान्तं दत्त्वा च निजसूनवे । तत्प्रार्थितां हरेर्भक्तिं जगाम स दिवं नृप!
अथ प्रोवाच तन्माता पूर्वजन्मसुतं च तम् ॥ ३७ ॥

मातोवाच ।

त्वत्प्रसादादहं जातादेर्वामुक्ताच पापतः । प्राप्तंश्वश्रूःसर्वात्वंमे पापयाऽपिद्विजोत्तम!
त्वयाऽत्रविहितेश्राद्धेतीर्थेविश्रान्तिसञ्ज्ञके । प्रार्थयस्व महाभाग! निजचित्तसमीहितम्
ददामि ते यतोऽस्माकं देवीनां न वचो मृषा । येनपापेनजाताऽहं गोधा च पितृकानने
नरके चिरमास्थाय तत्त्वं वेत्सि द्विजोत्तम !। अनुजानीहि मां पुत्र पुलोमतनया दिवि
मामपेक्षत आकाशे वृता देवाङ्गना गणैः ॥४१ ॥

नारद उवाच ।

इत्युक्त्वाऽसाऽपितन्माता निष्कामायस्वसूनवे । ययौ त्रिविष्टपंराजञ्छिरसा तेनवन्दिता
ततः पितामहस्तस्य स्वपौत्रं तं द्विजोत्तमम् । उवाच वचनं भूप! हरेर्बिभ्रत्सरूपताम् ॥

पितामह उवाच ।

वत्सवत्सचिरं जीवलभवस्वनिजवाञ्छितम् । त्वत्प्रसादाद्वयंतीर्णादुस्तराद्भवसागरात्
पितामहोऽहन्ते वत्स तवेयंच पितामही । मृतं माऽनुगतासाध्वी सालोक्यमचिरंगता
अद्य त्वयाऽत्रविश्रान्तोविहिते श्राद्धकर्मणि । आवयोस्तु हरेर्लोकेलब्धा तस्य सरूपता

नारद उवाच ।

एवमुक्त्वा तया सार्द्धं स्वस्त्रिया भूपसत्तम !। ब्रह्मलोकमतिक्रम्य वैकुण्ठं स ययौद्विजः
अथ प्रोवाच राजेन्द्र! वचस्तत्प्रपितामहः । यत्ते तत्कथयाम्यद्य शृणुष्वैकमना द्विजः ॥

प्रपितामह उवाच ।

भोभो वत्स महाभाग तवाऽहंप्रपितामहः । भ्रूणहत्याफलेनाहं शौकरीं योनिमाप्तवान्
ततो विनिर्गतस्तात श्वाऽभवं पापपीडितः । ततः स्थावरतां प्राप्तो विन्ध्ये पर्वतसत्तमे
तत्राऽपिचिरकालेनस्थितःस्थावरतांदधत् । हस्तिनाकेनचित्तातमूलादुत्पाटितोबलात्
तस्मिन्नेवततः कालेत्वया श्राद्धमकारिवै । अस्मिंस्तीर्थोत्तमेतातमुक्तोऽहंस्थावरात्ततः

प्राप्तोऽयं यक्षराजस्य नगर्यां वासउत्तमः । देह्यनुज्ञां द्विजश्रेष्ठ! यामि तां त्वत्प्रसादतः॥
त्वां दिदृक्षुरिहाऽऽयातो दृष्टस्त्वं पुण्यदर्शनः । तीर्थं च सर्वतीर्थेषु श्रेष्ठं मधुवनं मया

नारद उवाच ।

इत्युक्तस्तेन राजेन्द्र! मुनिपुत्रः स धर्मवित् । पप्रच्छ शिरसाऽऽनम्य निजं प्रपितामहम्

ऋषिरुवाच ।

ब्राह्मणानां कुलेनातजातोऽसि त्वंगरीयसि । कथं विहितवान्पापं भ्रूणहत्याभिधंगुरो!
येन निन्द्यांसमापन्नो भवान्योनिपरम्पराम् । समाचक्ष्वमहाभाग यदितत्स्मृतिरस्तिते

प्रपितामह उवाच ।

पुराऽहं द्विजशार्दूल! ब्राह्मणस्यैव जन्मनि । मन्त्रयन्त्रविधानेन कृतवान्वृत्तिमात्मनः॥
धनलोभेन नारीणां गर्भार्थमहमौषधम् । दत्तवांश्चैव नाशाय दैवोपहतचेतनः ॥६१॥
लोभोहि धनहीनानांजनानांज्ञानमाहरेत् । शुचिकाले दिनाधीशःकुल्यानामिवजीवनम्
ज्ञानेनष्टे जनस्तात पापमाचरते ध्रुवम् । पापान्नरकमाप्नोति ततो याति कुयोनिताम्

काचिदेका तदा नारी गुर्विणी मामपृच्छत ।
किं जनिष्याम्यहं विप्र! पुत्रं वेत्यथवा स्त्रियम् ॥ ६२ ॥
तदाऽहमुक्तवांस्तां वै तव कन्या भविष्यति ।
पुत्रोत्पत्तिकृते तुभ्यं प्रदास्यामि महौषधम् ॥ ६३ ॥

इत्युक्ता च मया नारी दुर्बुद्धिस्त्रीशिरोमणिः । जग्राह ममपादौ तु दत्तं हेमपलं च मे॥
इत्युवाच च सामह्यंपट्कन्याजनितामया। सप्तमीयंत्वया चोक्ताजीविष्येऽस्यानजन्मनि
तथाकुरुमहाबुद्धेयथाऽहंवैनकन्यकाम्। जनयिष्यामिविप्राऽन्यांनिजप्राणविनाशिनीम्
इत्याकर्ण्यवचस्तस्यास्तामहं पुनरुक्तवान् । प्रसूतिकालेदास्यामि पुत्रोत्पाद्यहमौषधम्
तथेतिसा वचोमह्यं प्रतिश्रुत्य गतागृहम् । अपेक्षमाणा तं कालंतस्थौ वाक्यप्रतीतिकृत्
तस्यां गतायां भो तात चिन्तयाऽभवमातुरः । इत्यहं द्विजशार्दूल तच्छृणुष्व वदामिते
पुत्रोत्पत्तिप्रतीत्येयं मह्यं दत्तवती पलम् । सुवर्णस्यन जानामि किमस्याःसंभविष्यति
किमत्रकरणीयं मे कथमेतत्सुवर्णकम् । पलप्रमाणं तिष्ठेद्वै दरिद्रस्य गृहे मम ॥७१॥

एवं विमृश्य तद्दास्यास्तस्यै हस्तुनदापितम् । गर्भपातकरं तात! मया दारुणमौषधम्
तेनौषधेन तस्यास्तु गर्भस्रावोऽभवत्तदा । मासे तृतीये न ज्ञातं चिह्नं पुरुषकन्ययोः ॥
तदा सा मद्गृहं प्राप्ता विषण्णागर्भस्रावतः । अथाऽर्थयत्सुवर्णं तन्निराशा पुत्रजन्मनि
तदाहमिष्टकाच्चूर्णं भस्मना च समन्वितम् । हरिद्राचूर्णसंयुक्तं साम्बु तस्यै अदर्शयम्
एतच्चूर्णं कृतं मातस्त्वत्पुत्रोत्पत्तये मया । त्वद्दानाद्द्विगुणं द्रव्यं लग्नमेतस्य साधने

इत्युक्त्वा सा मया तात ! त्यक्त्वा चूर्णं गृहं ययौ ।
मामुक्त्वेति ग्रहीष्यामि काले त्वत्तो द्विजोत्तम ! ॥ ७७ ॥

एवं मया कृता तात भ्रूणहत्याऽतिदारुणा । ययाऽतिकुत्सिते योनित्रितये भ्रमितंमया
त्वत्प्रसादादहं मुक्तःसाम्प्रतं स्थावरत्वतः । देह्यनुज्ञां मुनिश्रेष्ठ! याम्यहं ह्यलकां शुभाम्

नारद उवाच ।

एवमुक्त्वातु राजेन्द्र तस्यतु प्रपितामहः । तेनाभिवन्दितो मूर्ध्ना प्रययौ दिशमुत्तराम्
विमानेन विचित्रेण किङ्किणीजालमालिना । नृत्यद्गन्धर्वजुष्टेन मणिप्राकारशोभिना॥
अथ तस्य महाराज विप्रस्य प्रपितामही । उवाच स्वप्रपौत्रं तं विमानवरमास्थिता ॥

प्रपितामह्युवाच ।

नान्यत्र कुत्र गन्ताऽसि पुण्येनाऽनेन सुव्रत !। विनापद्मापतेः पादपद्मचिह्नितमन्दिरम्
अयं मम पतिः पापो मुने! त्वत्प्रपितामहः । वारितोऽपि मया पापमाचचार सुदुष्टधीः

सोऽपि त्वयाऽतिपापात्मा तारितो दुःखसागरात् ।
शक्यते केन वै कर्तुं तावकं गुणवर्णनम् ॥ ८५ ॥

नारद उवाच ।

इत्युक्त्वा साऽपि राजेन्द्र पतिलोकं जगाम ह । अलकायां चिरंपत्या तेनैव मुमुदे सह
अथ ते मुनिपुत्रस्य सर्वे मातामहादयः । सपत्नीकाः समारुह्य विमानेषु ययुर्दिवम् ॥
सोऽपि द्विजवरस्तस्मात्तीर्थात्स्वपितुराश्रमम् । गत्वा तं सर्ववृत्तान्तंस्वपित्रेसमवर्णयत्
सोऽपि तत्र गतः सार्द्धं कुटुम्बेन वने मधोः । चकार पर्णशालांवैविश्रान्तेस्तुसमीपतः
तत्र विश्रान्तितीर्थेतुत्रिकालंस्नानमाचरन् । नाऽकरोद्विष्णुलोकेऽपिस्पृहांसमुनिसत्तमः

एकदा जलमध्ये स स्नानं कुर्वन्मुनिर्नृप !। आचकाङ्क्षे च भविताकदा मे हरिदर्शनम्
एवं कामयमानस्य मुनिवर्यस्य भूपते !। आजगाम त्वरायुक्तः पक्षिराजासनो हरिः ॥
लक्ष्म्यावक्षःस्थया सार्द्धं चतुर्बाहुधरो हरिः। नवीनघनवर्णाङ्गो विद्युद्वर्णाम्बरावृतः ॥
कौस्तुभोद्भासिसद्वक्षाः शङ्खचक्रगदाब्जभृत्। वनमालालसत्कण्ठो मकराकृतिकुण्डलः
फुल्लाम्बुजपलाशाक्षः स्वलकालङ्कृताननः। विद्रुमाकारकरजोऽरुणहस्तोऽङ्घ्रिसत्तलः
उवाच तं द्विजश्रेष्ठन्दन्तभासा विभासयन्। शरन्निशापतिस्तोमतिरस्कारकृता दिशः॥

श्रीभगवानुवाच।

भो भो द्विजवरं तन्मे तीर्थं मधुवनं शुभम्। विश्रान्तिसञ्ज्ञकं स्नानसर्वकामोपपादकम्
अत्र त्वया स्नानकाले वाञ्छितं मम दर्शनम्। तुभ्यंहितन्मया दत्तं ब्रह्मादिसुरदुर्लभम्
त्यज देहमिमं विप्र! मानुषं दिव्यमाप्नुहि। आयाहिमद्गृहंसार्द्धंमयाऽऽरुह्य खगेश्वरम्

नारद उवाच।

इत्याकर्ण्य वचस्तस्य श्रीपतेः स मुनीश्वरः। तुष्टाव प्रणतो भूत्वा जलएव विशाम्पते!

मुनिरुवाच।

श्रीपते श्रीमदम्भोजसंमर्दितपदाम्बुजम्। भवतो भवतापघ्नं वन्दे त्रिदशवन्दितम् ॥
त्वदीयमायया नाथ मोहिता येऽत्र जन्तवः। तेषां कदाचिन्निस्तारो न कृपामन्तरेणते
सत्तीर्थसेवनादीश तथा सज्जनसंगमात्। पुंसां भक्तिस्तु येषां वै जायते कृपया तव ॥

साधुभिर्बहुभिरीरितं हरे! यो निशम्यगुणकीर्त्तनं तव।
कीर्तयत्यखिलपापनाशनं मातृगर्भकुहरे स नो पतेत् ॥ १०४ ॥
श्रीपते! तव जनस्य मानसं दैवतस्तु पतितं महारणे।
गुण्ठितं च रजसा जहाति नो निर्मलत्वमिव रत्नमुत्तमम् ॥ १०५ ॥
यः पुमान्पतति ते पदाम्बुजे दण्डवत्पुलकमङ्गके दधत्।
सोऽन्वयं नयति तावकं पदं स्वं च वाञ्छितमशेषयोगिभिः ॥ १०६ ॥
जीवएव तव मायया विभो! मोहितो भ्रमति विश्ववर्त्मसु।
त्वत्कृपाललितलोचनाचलैस्तत्क्षणं तरति विश्ववारिधिम् ॥ १०७ ॥

नारद उवाच ।

इति संस्तुत्य गोविन्दं दण्डवत्तस्यपादयोः । पपात स मुनिश्रेष्ठो जयेति मुहुरीरयन् ॥

श्रीपतिस्तं मुनिश्रेष्ठं दण्डवत्पतितं भुवि । उत्थाप्य बाहुभिस्तूर्णं सुपर्णसमरोपयत्

तत्कुटुम्बं च विश्वात्मा वैकुण्ठं च जगाम ह । इत्येतत्कथितं राजञ्छिबे! मधुवनस्यवै

माहात्म्यं सर्वपापघ्नं किमन्यच्छ्रोतुमिच्छसि ।

यइदं शृणुयान्मर्त्यः सर्वपापैः प्रमुच्यते ॥ १११ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये मधुवनमाहात्म्यं नाम चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

# पञ्चदशाधिकद्विशततमोऽध्यायः

## मुनिपुत्रस्यकुण्डत्वेपूर्वजन्मकृतकारणवर्णनं तत्प्रसङ्गे बुधकृतशापस्तदनुग्रहवर्णनम्

सौभरिरुवाच ।

युधिष्ठिरेदमाकर्ण्य नारदस्य वचः शुभम् । शिबिरौशीनरो राजा विनीतस्तमुवाच ह

शिबिरुवाच ।

मुने! मया तु माहात्म्यं श्रुतं मधुवनस्यवै । त्वन्मुखात्किंतुसन्देहोह्येकोऽस्तिममानसे

येन धर्मात्मना सर्वे तारिता निजबान्धवाः । जन्मद्वयकृताह्यासीत्सकथं स्वैरिणीसुतः

एतदाचक्ष्व भगवन्सर्वस्त्वं वेत्सि तत्त्वतः । अतीतं वर्त्तमानं च भविष्यमपि नारद !॥

नारद उवाच ।

एकदा मुनयः सर्वे हरिद्वारे समागताः । दशम्यां ज्येष्ठशुक्लस्य युक्तायां सर्वपर्वभिः ॥

तत्र ते विधिवत्स्नात्वा कृत्वा च स्वक्रियां शुभाम् ।

हिमाचलस्य पृष्ठे तु स्वस्थचित्ता उपाविशन् ॥ ६ ॥
तारात्मजो बुधस्तत्र मुनिसङ्घे समागतः । सौन्दर्यभरसंयुक्तः स्मरो मूर्त्त इवाऽपरः॥
तं समागतमालोक्य समुत्तस्थुर्मुनीश्वराः । तेनाऽभिवन्दितामूर्ध्नापुनस्ते समुपाविशन्
बुधस्याऽऽदरमालोक्य विहितं मुनिपुङ्गवैः । मुनिपुत्रः स पप्रच्छ पितरंस्वमिति प्रभो!॥

मुनिपुत्र उवाच ।

कोऽयं तात!समायातःसौन्दर्येणाऽपरःस्मरः । व्यासादिभिर्मुनिवरैर्भृशंतस्याऽऽदरःकृतः

नारद उवाच ।

इत्याकर्ण्य स धर्मात्मा स्वस्यपुत्रस्यभाषितम् । वभाषे मुनिशार्दूलःपुत्रंनिर्बन्धसंयुतम्

पितोवाच ।

बृहस्पतेः सुरगुरोः सुतस्तारोदरोद्भवः । बुद्धिमान्बुधनामाऽयं शशिवंशकरः परः ॥१२॥

पुत्र उवाच ।

किं त्वया कथितं तात निःसम्बन्धपरं वचः । बृहस्पतेःसुतोयस्तुस कथं शशिवंशकृत्
जज्ञेऽनसूयया तात! विधुरत्रेर्मुनीश्वरात् । तस्य वंशस्य कर्त्ताऽयं कथं सुरगुरोः सुतः॥
एष मे मानसे तात संशयो वर्तते महान् । तमपाकुरु विप्रेन्द्र! सन्दिहानस्य मे शिशोः॥

पितोवाच ।

पुरा बृहस्पतेर्भार्या तारा नाम यशस्विनी । चन्द्रेणाऽपहृता तात बलाद्बलवता तदा॥
अपहृत्य तदानीं तां स्वगृहं विधिना गुरोः । भार्या सातुतथासार्द्धं रमितंतेन वै चिरम्
तस्या गर्भोऽभवत्तात कालेन कियता तदा । ततो बृहस्पतिर्भार्थी निजां तां समयाचत
चन्द्रमाश्च महाविष्णो न ददौ बलदर्पितः । ततो बृहस्पतिस्तात देवैः शक्रादिभिः सह ॥
सन्नद्धो योद्धुमारेभे समं बलवदिन्दुना । सहायार्थं विधोः शुक्रः समं दितिजदानवैः
समागतस्तदा तात तस्मिन्रणसमुद्यमे । ततस्तारानिमित्तं वै युद्धं प्रावर्त्ततोल्बणम् ॥
करिष्यते सर्वजनैः प्रधानं तारकामयम् । तस्मिन्युद्धे महाभीमे हता देवाश्च दानवाः ॥
न कस्यचिज्जयस्तात! बभूव न पराजयः । ततः समागतो ब्रह्मा सन्निवार्योल्बणं रणम्
ददौ बृहस्पतेस्तारां बोधयित्वा निशापतिम् । बृहस्पतिस्तुतांवीक्ष्यतारां गर्भवतीं तदा

क्रुद्धो विरिञ्चेः प्रत्यक्षं समाजे देवदैत्ययोः ॥ २४ ॥

वृहस्पतिरुवाच ।

शृणुष्व मामकं वाक्यं तारे तरललोचने !। कस्याऽयं ध्रियते गर्भो भवत्येन्दोर्ममाऽथवा

पितोवाच ।

एवं मुहुर्मुहुः पृष्टा सा च लज्जावती शुभा । यदा न कथयामास किञ्चित्तात! तदग्रतः॥

तदाऽयं पश्यतां तेषां देवानां च सुरद्विषाम् । उत्पन्नस्तामुवाचेदं जननीं च रुषान्वितः

बुध उवाच ।

कस्मान्न कथ्यते दुष्टे! मदीयो जनकस्त्वया । लज्जां विहाय सम्पश्य शापस्य ममवैभवम्

पितोवाच ।

इत्युक्त्वा जलमादाय यदा शप्तुं समुद्यतः । तदा सा मन्दमाहेदं पिता तव सुधाकरः ॥

इत्युक्तेच तयासाध्व्या चन्द्रःस्वतनयंवुधम् । अमुंगृहीत्वा सानन्दं जगामनिजमन्दिरम्

वृहस्पतिस्तुतांतारांगृहीत्वास्वगृहं ययौ । ब्रह्मा देवाश्चदैत्याश्चतेऽपि स्वं स्वंगृहं ययुः

एतत्त सर्वमाख्यातंयस्त्वं मास्परिपृष्टवान् । वृहस्पतिस्त्रियां जातोयथाऽयं चन्द्रवंशकृत्

नारद उवाच ।

इत्याकर्ण्य पितुर्वाक्यं जहासोच्चैर्मुनेःसुतः । उवाचचस्वपितरं कुण्डोऽयंस्वैरिणीसुतः

उवाचचपिता पुत्रं हापुत्रेदंन भण्यताम् । सर्वसत्त्वान्तरज्ञोऽयं शप्स्यतित्वांत्वदुक्तवित्

नारद उवाच ।

इत्युक्ते तेन मुनिना चान्द्रिर्ज्ञात्वातदीरितम् । सर्वेषां शृण्वतांप्राह मुनीनामिति भूपते!

बुध उवाच ।

शृण्वन्तुमुनिशार्दूला भवन्तोममभाषितम् । यदिसाध्वथ वाऽसाधु विचारयतमाचिरम्

भवतां तत्त्ववुद्धीनां दर्शनार्थमिहाऽगतः । कृतवान्कस्यचिन्नाऽहमपराधं मनागपि॥३७॥

असूयया किमर्थं मामवजानन्ति दुर्मदाः । स्वजन्मसफलत्वाय भवद्दर्शनलालसः ॥३८।

स्वभाव एव दुष्टानां साधूनपि निरेनसः । उद्वेजयन्ति यत्काऽपि मिष्टवाचः पिकाइव॥

दुःस्वभावंन मुञ्चन्ति दुष्टाः सत्सङ्गमादपि । गङ्गाम्बुसङ्गमेनाऽपि क्षारतामिव नीरधिः

अहोव्याधस्यदुष्टत्वं मुनिवृत्तीन्यतो मृगान् । वनेमृगचरान्हन्ति निजगानविदोऽपिसः
मत्स्यैः किमपराद्धंहि धीवराणांदुरात्मनाम् । यज्जले धरतस्तीर्थे घ्नन्ति तत्प्रकृतिर्हिसा
साधवोऽपिन मुञ्चन्ति स्वभावंदुष्टसङ्गताः । वृताविषाग्नियुक्सर्पैःश्रीखण्डाइवशीतताम्
परोदयेऽपि नृत्यन्तिकिंस्वपक्षस्य साधवः । यथोन्मना मुनिवरा वारिवाहस्य बर्हिणः
धारयन्ति परार्थे हि निजान्नमपि साधवः । पितृदेवमनुष्याणामर्थे मतिपतृवत्कलाः ॥
निजोदयस्तुसाधूनां स्वच्छस्याऽऽनन्दहेतवः । यथाकुमुदपुष्पाणांमतिपतुःशीतलत्विषः

नारद उवाच ।

इत्युदीर्य वचः क्रोधाद्बुधस्तं मुनिबालकम् । शशापेति त्वमप्याशु कुण्डोभवमहीतले
एवमाकर्ण्यतं शापं पिता बुधविसर्जितम् । स्वपुत्रं पातयामास तदङ्घ्र्योःक्षम्यतामिति
उवाच च न जानाति बालोऽयं तव वैभवम् । नोचितं क्रोधकरणमस्मिन्बाले भवादृशैः
कुतश्चित्कारणात्साधोः क्रुद्धस्य प्रकृतिः क्षमा । हुताशनप्रतप्तस्य शीतत्वमिव चाम्बुनः
अतःक्षमां विधायाऽऽशुविधेह्यस्मिन्ननुग्रहम् । बाले विवेकरहिते क्षमासाराहि साधवः

नारद उवाच ।

इत्युक्तस्तेन मुनिना शीतांशुतनयस्तदा । क्रोधंतत्याज शान्तात्मा चक्रे तस्मिन्ननुग्रहम्

बुध उवाच ।

अयं तव मुने!बालः कुण्डत्वं प्राप्य भूतले । दत्तयज्ञोपवीतःसल्लप्स्यते हि निजास्पदम्
एवं स मुनिपुत्रो वै बुधशापाद्नृपोत्तम !। कुण्डत्वमाप्तवान्भूमौ पितरो येन तारिताः ॥
इदं पवित्रं माहात्म्यं श्रुत्वा मधुवनस्य वै । समस्तमश्वमेधस्य फलं प्राप्नोति मानवः॥
ये नरा धारयन्त्यस्य माहात्म्यस्याऽर्थमुत्तमम् । हृदये यत्र तत्तेषां विषयैर्नाऽभिभूयते
येपठिष्यन्तिमाहात्म्यंश्रोष्यन्तिचमहाधियः। देहान्तेविष्णुसालोक्यंगमिष्यन्तिनसंशयः

इदमनिशपवित्रं तुभ्यमावर्णितं मे मधुवनसुचरित्रं श्रीपतेः प्रीतिकारि ।
कलिकलुषकलापच्छेदने दक्षमक्षोत्पथगमननिरासे कारणं पुण्यमूर्तौ ॥५८

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये मधुवनवर्णनं नाम पञ्चादशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

# षोडशाधिकद्विशततमोऽध्यायः

## बदरिकाश्रममाहात्म्यप्रसङ्गे देवदासराज्ञःस्वपुत्रेणसहसम्वादस्तंराज्यधुरं-समर्प्यराजमहिष्यासहमुनिवृत्त्याचरणायगमनंमध्येमार्गेसिद्धद्वारा-वैशिष्ट्यप्रतिपादनम्

नारद उवाच ।

अतो मधुवनाद्राजन्नयं बदरिकाश्रमः । एकादशधनुर्मात्रे भूभागे व्यवतिष्ठति ॥ १ ॥
अस्य तीर्थवरस्याऽहंमहिमानंमहाद्भुतम् । वर्णयामि पुरस्तात्ते यं श्रुत्वा मुच्यतेभयात्
एकस्तु मगधे राजन्देवदासो हि नामतः । ब्राह्मणः सत्यवादान्तः साक्षाद्धर्मइवाऽपरः
निष्णातः सर्वविद्यासु बृहस्पतिरिवाऽपरः । हरिसन्तोषको भक्त्या प्रह्लाद इव दैत्यराट्
सस्त्रीकोऽपि स्मरं जेता पार्वत्याइववल्लभः । सदाचारपरोनित्यं विश्वामित्रोमुनिर्यथा
मगधेशगृहे मान्यो द्रोणवत्कुरुवेश्मनि । दानशीलः सुपात्रेषु बलिर्दैत्याधिपो यथा ॥
तस्य भार्योत्तमा नाम लक्ष्मीरिव गुणोत्तमा । पतिशुश्रूषणपरा यथा जनकनन्दिनी ॥
तस्यैकश्च सुतो राजन्नङ्गदो नाम बुद्धिमान् । एकापुत्री तु बलया नाम सल्लक्षणान्विता
तयोर्ज्यायान्सुतः कन्या तस्माद्भूप! कनीयसी । तयोर्यथाक्रमं चक्रे विवाहं स द्विजोत्तमः
विवाहिता तु सा कन्या ययौ श्वशुरवेश्मनि । शुभलक्षणसम्पन्ना कालेन कियता नृप!
अङ्गदस्तु महाबुद्धिर्गृहभारं बभार ह । पितृवत्सर्वशास्त्रज्ञो यौवनश्रीविभूषितः ॥१२॥
एकदा स तु विप्रेन्द्रः पुत्रं तं गृहकर्मणि । क्षमं विज्ञाय राजेन्द्र! निजभार्यामुवाच ह ॥

देवदास उवाच ।

समाकर्णय मे साध्वि! कालेऽस्मिन्नुचितं वचः । ततो यदुचितं भद्रे! तदह्नायविधीयताम्
एषा जरा समायाता शरीरं पातयिष्यति । अङ्गान्याकम्पयन्तीव वात्या पक्वफलं यथा
अक्ष्णामपि द्युतिं मन्दां नूनमेषा करिष्यति । नक्षत्राणां सचन्द्राणां प्रातर्वेलेव सुव्रते!

स्खलतोः पादयोर्मन्दां गतिं प्रतिपदक्रमम् । करिष्यति जरा ह्येषा यथा निगडशृङ्खला
तस्मादेषा जरा यावन्न प्रौढा जायते शुभे ! ।
आत्मनस्तावदावाभ्यां करणीयं हि तं द्रुतम् ॥ १७ ॥
गृहपुत्रसुहृद्भ्रातृपितरो हि विनश्वराः । द्रव्यादिकं च सुभगे! तेषु सज्जेत नो बुधः ॥
अतोऽहं सर्वतीर्थेषु पर्यटन्विजितेन्द्रियः । वानप्रस्थेन विधिना वीक्षिष्ये हरिमीश्वरम्
ततः संन्यासमादाय कस्मिंस्तीर्थोत्तमे शुभे । प्रारब्धकर्मणामन्ते त्यक्ष्यामि स्वं कलेवरम्
एवं चेत्प्राणमुक्तः स्यान्मुक्तिः स्यान्नाऽत्र संशयः ।
मम श्रीपतिपादाब्जसम्यक्स्थापितचेतसः ॥ २१ ॥

उत्तमोवाच ।

पुमान्वा स्त्रीजनो वाऽपि को रमेत विनश्वरे । संसारेमाश्रवंमुक्त्वानित्याश्रममचेतनः ॥
तस्मान्मामपि जीवेश ! त्वत्पादाम्बुजसेविनीम् ।
नीत्वा स्वसङ्गमे तावच्छिश्वाब्धेराशु तारय ॥ २३ ॥
पुत्रोऽयमङ्गदः श्रीमान्गृहभारस्य धारणे । समर्थोऽभूत्स्नुषा चेयं कल्याणी तत्सहायिनी
पुत्रे समर्थे यो मूढः पुरुषःस्त्रीजनोऽथवा । नविरज्येतयो मूढो वञ्चितः श्रेयसा हि सः

नारद उवाच ।

एवमन्योन्यमामन्त्र्य दम्पती तौ रहस्तदा । पुत्रमाहूय कथयाञ्चक्रतुस्त्विदमङ्गदम् ॥

दम्पतीऊचतुः ।

जरागमश्लथद्गात्रावावां विद्धि त्वमङ्गद !। स्वश्रेयसे यतिष्यावः कुत्रचित्पुण्यभूतले ॥
हरेराराधनं भक्त्या श्रेयः परममुच्यते । तदर्थमेव निष्कामा यतन्ते साधवो भुवि ॥
विषयेषु न संसक्तिः समत्वं सर्वजन्तुषु । येषां हर्षविषादौ च न जातु सुखदुःखयोः ॥
तएव साधवो लोके गोविन्दपदसेविनः । तेषां दर्शनमात्रेण कृतार्थो जायते नरः॥३०॥
तीर्थानि पर्यटन्धीरस्तद्दर्शनसमुत्सुकः । भाग्योदयेन केनाऽपि तद्दर्शनमवाप्नुयात् ॥
तस्माद्भारं कुटुम्बस्य भुजयोर्युगदीर्घयोः । आरोप्य नौ विसर्जस्व तीर्थयात्रार्थमङ्गद !
तीर्थयात्राप्रसङ्गेन कदाचित्साधुदर्शनम् । भवेद्यदि तदा पुत्र ! द्वयोर्नौस्यात्कृतार्थता ॥

नारद उवाच ।

इत्युक्तः पितृभ्यां पुत्रः साधुवादमवादयत् ॥ ३४ ॥

अङ्गद उवाच ।

समस्तकुलनिस्तारो भवद्भ्यामयमीरितः । आशु मामनुजानीतं किंकरोमि भवद्धितम्
अहमाज्ञाकरो नित्यं युवयोः पूज्यपादयोः । पुण्यतीर्थेषु दानार्थं गृहीतं धनमुत्तमम् ॥
नयतं मामपि प्रेष्यं सेवायै निजसङ्गमम् ॥ ३६ ॥

नारद उवाच ।

इत्युक्त्वा धनमादाय गत्वा क्रोशद्वयं तयोः । सङ्गे गृहमगात्ताभ्यां कथञ्चित्संनिवर्तितः
तौ गृहीत्वा धनं किञ्चिद्विष्णुर्नौप्रीयतामिति । कन्दमूलफलाहारौतत्रोषित्वादिनत्रयम्
यदा तस्मात्प्रचलितौ दम्पती जगतीपते !। तदामार्गे महान्कश्चित्सिद्धःसम्मिलितस्तयोः
ताभ्यामुभाभ्यां शिरसा वन्दितः स उपाविशत् ।
उपविष्टस्तदा ताभ्यामिति पृष्टः स सिद्धराट् ॥
को भवान्कुत आयातो किञ्चित्कार्यमिति तद्वद ॥ ४० ॥

सिद्ध उवाच ।

सिद्धोऽहं तापसश्रेष्ठ! कलपग्रामे गृहं मम । इन्द्रप्रस्थात्समायातो दृष्टं तत्र महाद्भुतम् ॥
तत्राऽस्ति कपिलः सिद्धो नारायणसमो गुणैः ।
तस्मादहं पठन्साङ्ख्यं निवसामि तदाश्रमे ॥ ४२ ॥
एकदा मद्गुरुः श्रीमान्स्वाश्रमात्कपिलो ययौ । बदर्याख्यंमहापुण्यं स्नातुं सयमुनाजले
तत्रैकोऽरण्यमहिषस्तृषार्तो यमुनाजले । प्रविष्टो जलमापीय पूर्वजन्मस्वमस्मरत् ॥४४
स्मृत्वा स पूर्वकर्माणि महिषोऽरण्यसम्भवः । जलान्निःसृत्य तरसाववन्दे कपिलंगुरुम्
उवाच नरवाचा च मयि शृण्वति तापस !। यत्तत्ते कथयाम्यद्य शृणु त्वं परमाद्भुतम्

महिष उवाच ।

भोभो विष्णुकलाभूत! सिद्धानां कपिलेश्वर !। किंनामेदं महातीर्थं नताय कथयस्व मे
अस्य तीर्थवरस्याऽम्बुस्पर्शाद्वैपूर्वजन्मनि । जातास्मृतिर्महाभाग! पापस्याऽपिचकर्मणः

सिद्ध उवाच ।

एवमाकर्ण्य तद्वाक्यं महिषस्य महामुनिः । जानन्नपि च तद्वृत्तं विहस्येदमुवाच ह ॥

कपिल उवाच ।

भवान्महिषशार्दूल! क आसीत्पूर्वजन्मनि । तत्रकिंकृतवान्कर्म योनिर्येनाऽऽपमाहिषीम्

महिष उवाच ।

शृणुष्व मुनिशार्दूल! वृत्तं वै पूर्वजन्मनः । अहमासं पुरा राजा कलिङ्गाधिपतिर्बली ॥
स्वांपरांनैव जानामि योषितं काममोहितः । वणिजांसाधुवृत्तीनां धनहर्ता निरेनसाम्
निशीथे नगरे राजन्गतभीः पर्यटाम्यहम् । सुन्दरीभिः परस्त्रीभिः क्रीडितुं रतिलीलया
यद्गृहे सुन्दरींनारीं पश्यामि स्मरमोहितः । वसामिनिशि तत्राऽहंक्षेत्रेमध्ये गजोयथा
क्रीडित्वातत्र निःशङ्कं धनंहृत्वा च तद्गृहात् । स्वगृहं पुनरायामि कियद्भिर्वासरैरहम्
उपविष्टः सभामध्ये दिवा द्वौ पुरबालकौ । अनार्यबाहुयुद्धेन योधयामि निजाग्रतः ॥

नियोजयति यो बालस्तं मत्वा धनिनं बलात् ।
गृह्णामि तत्पितुर्वित्तं स्वल्पं वा भूरि वा मुने ! ॥ ५७ ॥

यः पराजयते तत्र कातरत्वान्महामुने ! । नाऽयमर्हः पुरे स्थातुं ममेति विनिहन्मि तम्
एवम्मय्यधमाचारे वर्त्तमाने महीपतौ । पौरा नगरमुत्सृज्य प्रययुर्विषयान्तरम् ॥५६॥
एकदा मुनिशार्दूलो दुर्वासाः पर्यटन्महीम् । पुरे मम समायातो दुर्वासा रुद्रसम्भवः ॥
मिलित्वा नागराः सर्वे तदा जग्मुस्तदन्तिके । प्रणिपत्येदमाहुस्तं स्वदुःखज्ञापकं वचः

पौराऊचुः ।

आत्रेय मुनिशार्दूल कृपां कुरु कृपानिधे !। अधर्मनिरतं भूपमेनं धर्मेण योजय ॥ ६२ ॥
भाग्योदयेन केनाऽपि भवानस्माकमागतः । उद्वेलाद्भूपदुःखाब्धेरस्मांस्तारय पोतवत्
धनं लोभयता तेन हृतं नो मुनिपुङ्गव !। दूषिताश्चस्त्रियः साध्व्यः सकामेन निरेनसाम्
दशवत्सरदेशीया बहवः शिशवो हताः । अगण्यवैगुण्यनिधिरेष भूपो महामुने ! ॥६५॥

महिष उवाच ।

एवमाकर्ण्य पौराणां वचः स मुनिरत्रिजः ।

दण्डयोऽयमिति सञ्चिन्त्य सभास्थं मामथाऽऽययौ ॥ ६६ ॥
दृष्ट्वा हि तं समायान्तमवधूतं दिगम्बरम् । आवारयमहं भृत्यैर्नैत्ययं दर्शनोचितः ॥६७॥
रेणुना सर्वलिप्ताङ्गो महिषाकृतिरेव वै । वार्यतामितिपार्श्वस्थान्बहुशोऽहं समादिशम्
ततस्ते तरसा भृत्यास्तं वारयितुमभ्ययुः । हुङ्कारेणैव तान्सर्वान्स चक्रेभस्मसान्मुनिः
यज्ञाश्वंरक्षतःस्वस्य पितुस्त्वमिवसागरान् । सर्वशस्तानहंभृत्यान्भस्मीभूतांस्तुतेजसा
आलक्ष्य सहसोत्थाय गृहमावेष्टुमुद्यतः । रेरेपापेति सम्बोध्य ततो मां मुनिसत्तमः ॥
शशापेति महारण्ये महिषो भव साम्प्रतम् । तेनाऽहमिति शप्तो वै मुक्त्वा राजतनुं तदा
मरुदेशे महारण्ये जातोऽहं महिषो मुने !। चिरकालमहं तत्र न्यवसं मुनिपुङ्गव ! ॥७३
अत्राऽऽगतस्तु केनाऽहं पुण्येन श्रूयतां मुने !। वापीकूपसरस्यस्तु बहवः कारिता मया
सहकारादिवृक्षाणामारोपो विहितः पथि । पुण्येनाऽनेन मे देव! पातो न नरकेऽभवत्
तीर्थस्य च मया प्राप्तो ह्यमुष्यजलसङ्गमः । एतत्ते कथितं सर्वं पूर्वजन्मशुभाशुभम् ॥
येन तीर्थंमया प्राप्तमेतद्योनिश्चमाहिषी । अस्य तीर्थवरस्याऽम्बुस्पर्शाज्जातिस्मरोऽभवम्
कथमस्या असद्योनेर्मुक्तिः स्यात्तन्मुने! वद ॥ ७७ ॥

कपिल उवाच ।

एतत्तीर्थं महापुण्यं बदर्याख्यं रमापतेः । अत्र स्नाहि द्रुतं कामं स्वचित्तस्थं हि लप्स्यसे

सिद्ध उवाच ।

एतच्छ्रुत्वा वचस्तस्य महिषस्य महामुने !। तत्र तीर्थे वरे स्नातुं प्राविशत्स्वर्गवाञ्छया
स्नात्वा स्वर्गेच्छया तस्मिञ्जलात्तटमुपागते । तत्क्षणं गजमारुह्य शक्रःस्वर्गात्समाययौ

इन्द्र उवाच ।

हे कलिङ्गपते नैजं देहं जहि हि माहिषम् । प्रतिलभ्य वपुर्दिव्यं सममायाहि मे दिवम्॥
त्वया स्वर्गेच्छया स्नातं प्राप्तं तत्ते सुरास्पदम् ॥ ८१ ॥

सिद्ध उवाच ।

इत्युक्तःस तदा तेन त्यक्त्वा देहं तु माहिषम् । दिव्यं वपुःसमासाद्यगजराजं समारुहत्
गजराजं समारुह्य स्थित्वा च गगनेक्षणम् । प्रणम्य शिरसादेवं तुष्टाव कपिलं मुनिम्

कलिङ्ग उवाच ।

नमस्ते परमेशान! केवलज्ञानहेतवे । सेतवे वेदविद्यानां रिपवे तद्विरोधिनाम् ॥ ८४ ॥

त्वत्तः प्रवृत्तिः साङ्ख्यस्य जाता तत्त्वाववोधिनी ।

देहिनां मायया ग्रस्तचेतसामपि ते विभो ! ॥ ८५ ॥

येवेदविहितंत्यक्त्वावर्तन्तेस्वेच्छयामुने!। तान्दण्डयसिदण्ड्यांस्त्वंमज्जयंस्तिर्यगादिषु

इन्द्रादयो लोकपालाःसर्वे त्वदधिकारिणः । त्वदिच्छामनुवर्तन्ते भीता दण्डकृतोहिते

त्रयीधर्मविरोद्धारः पूर्वदेवा युगे युगे । अवतीर्य विनाशाय कृताःसर्वात्मना त्वया ॥

ये ये त्वया हता नाथ!चक्रिणा त्रिदशारयः । ते ते तमोमयीं हित्वा तनुंवैकुण्ठमभ्ययुः

आज्ञापय जगन्नाथ गन्तुं मां त्रिदशालयम् । अनुगृह्णीष्व शक्रं च नमन्तं वीक्षणामृतैः

प्रसादात्तवदेवेश!बदर्याख्यस्यच प्रभो !। तीर्थस्य स्वतनुं हित्वा तामसीं सात्त्विकींगतः

इन्द्रेणसह नागेन्द्रमारुह्य त्रिदशालयम् । गच्छामि स्वेच्छया नाथ! कृपातस्ते कृपानिधे

सिद्ध उवाच ।

इत्यभिष्टूय देवेशं कपिलं स कलिङ्गपः । नमस्कृत्य च तत्पादौ जगाम त्रिदशालयम्

एतन्मयाऽद्भुतं विप्र दृष्टं बदरिकाश्रमे । गुरुंशुश्रूषमाणेन पापस्याऽपि विमोक्षणम् ॥

नाऽतःपरं त्रिलोक्यान्तु तीर्थं सर्वार्थदायकम् । याहितत्रेव सस्त्रीकः परंश्रेयोयदिच्छसि

अहंयामि समानेतुं बदर्याख्यं गृहान्द्विज !। वृद्धं स्वकीयपितरं निःस्पृहं मोक्षकामुकम्

नारद उवाच ।

इतितीर्थवरस्याऽस्य बदर्याख्यस्य भूपते !। महिमानं समुत्कीर्त्यस सिद्धः स्वगृहंययौ

अथ कालेन कियता सद्विजः सह भार्यया । तीर्थानि पर्यटन्धीर इन्द्रप्रस्थेऽभ्यगादिह

तेनैव वपुषा राजन्नीतवांस्तौ निजालयम् । ससिद्धोऽपि स्वपितरं गृहादानीय सत्वरः

तत्रैव स्नापयामास तत्तीर्थे मोक्षकामुकम् । सोऽपि श्रीवासुदेवेन वृद्धः सिद्धपिता तदा

ततो नीतो निजगृहं वृन्दारकविवन्दितः ॥ १०० ॥

इन्द्रप्रस्थान्तरगतमिदं सद्बदर्याख्यमीशः

स्नानाद्दद्यादखिलजनितामानसेष्टं पदार्थम् ।

माहात्म्यं ते नृप ! नतिमते ! वर्णितं तस्य पूतं
यच्छ्रुत्वा वै पतति न जनो मातृगर्भे कदाचित् ॥१०१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये बदरिकाश्रमवर्णनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥२१६ ॥

---

# सप्तदशाधिकद्विशततमोऽध्यायः

## हरिद्वारमाहात्म्यवर्णनप्रसङ्गे कालिङ्गश्वपचवृत्तान्तमुखेनवैश्यवृत्तवर्णनम्

राजोवाच ।

वर्णितंमे त्वयासाधो! माहात्म्यं बदरीभवम् । यन्निशम्य मनोयाति मम निर्मलतांमुने!
एतदद्भुतमाहात्म्यं शक्रप्रस्थाख्यमुत्तमम् । सकलं मुनिशार्दूल ! चतुर्वर्गप्रदायकम् ॥२॥
भुवि नाऽतः परं तीर्थं तिरश्चामपि मुक्तिदम् । श्रेष्ठं सकलपापघ्नं दर्शनादेव नारद !॥

एतदन्तर्गतस्याऽस्य हरिद्वारस्य नारद ! ।
माहात्म्यं श्रोतुमिच्छामि त्वत्तः सन्तोषकारकात् ॥ ४ ॥

मामुद्धर मुने ! दीनमविद्याकामकर्मभिः । वर्णनेनाऽस्य तीर्थस्य शक्रप्रस्थगतस्य वै ॥

नारद उवाच ।

आकर्णय महाभाग वर्णयामि तवाऽग्रतः । हरिद्वारस्य माहात्म्यमश्वमेधफलप्रदम् ॥६
अत्रैकःश्वपचःपापो यथा स्वर्गतिमाप्तवान् । तत्तेऽहं कथयाम्यद्य शृणुष्वैकमनाःप्रभो !
धर्मक्षेत्रे कुरुक्षेत्रे कालिङ्गइति विश्रुतः । श्वपचः पापकर्मा वै वसतिस्म पुराद्बहिः ॥
पञ्चषड्वर्षदेशीयान्बालान्नगरवासिनाम् । प्रसह्य वञ्चयित्वा च वने नीत्वा जघान सः
तेषामलङ्कारमयं रजतं हेमवन्नृप !। रत्नादिकं च कायस्थं हत्वा ताञ्जगृहेऽधमः ॥१०॥
विवेश साधुनिलये रात्रौ धनजिहीर्षया । पथिकान्धनमालक्ष्य स जघ्नेनिर्जने वने ॥

कुरुक्षेत्रे समायाता एकदा रविपर्वणि । नानादिग्भ्यो जना राजन्नानादानचिकीर्षया ॥
तस्मिन्यथाविधि स्नात्वा रविपर्वणि भूपते ! ।
दानं दत्त्वा यथावच्च लोकाः स्वान्स्वान्गृहान्ययुः ॥ १३ ॥
एकः कश्चिद्विशां श्रेष्ठो धनेन महता युतः । पश्चात्सर्वजनेभ्यस्तु चचाल स्वगृहं प्रति
अस्यचारः पदातीनां विंशतिं पुरतो दधत् । कालिङ्गः स महापापस्तमनु प्रस्थितस्तदा
कतिचिद्वसतीर्गत्वा सह तेन विशाऽधमः । सोऽन्त्यजस्तद्धनं हर्तुं न लेभे समयं नृप!
बलेनाऽपिग्रहीतुं न क्षमोऽभूत्तस्य स श्रियम् । वैश्यस्तुजनविंशत्या संयुक्तस्तुसएककः
अत्राऽऽगतः स पापात्मा वैश्यस्याऽर्थेन पार्थिव ! ।
निशिथे शिबिरं तस्य धनं हर्तुं समाविशत् ॥ १८ ॥
एकेन तस्य वैश्यस्य जनेन स तु लक्षितः । प्रविशन्नेव पापात्मा ददता प्रहरं स्वकम् ॥
तमालक्ष्य समीपस्थं स जनः प्रहरप्रदः । उभयोः पादयोराजन्स्वपन्नेव गृहीतवान् ॥
तौ गृहीत्व जनानन्यान्बोधयन्प्रहरप्रदः । हस्तेनैव तु पापेन चोरेणाऽऽघातितो हि सः
श्रुप्वा पलायमानस्तु गृहीतोऽन्यैर्जनैस्तदा । ग्रहीतारं पुनर्हत्वा सहसा स पलायितः॥
एकेन केनचिद्राजन्सेवकेन धनुर्भृता । दूरादेव शरेणाऽऽशु धावन्स निहतोऽधमः ॥२३
हतमात्रः शरेणाऽऽशुतत्याज सचजीवितम् । चोरेण निहतौ राजन्वैश्यस्याऽनुचरावुभौ
ते त्रयो वरयानानि गणानीतानि भूपते !। समारुह्य दिवि स्थित्वा वैश्यमेतद्बभाषिरे
कालिङ्गवैश्यानुचराऊचुः ।
भोभो वैश्यपते! साधो तीर्थमेतदनुत्तमम् । इन्द्रप्रस्थे हरिद्वारं शिवकृत्पापिनामपि ॥
वयं त्रयः सुतीर्थेऽस्मिन्नपमृत्युगता अपि । गच्छामस्त्रिदिवं वैश्य साम्प्रतं शिवमस्तुते
नारद उवाच ।
इत्युक्त्वा ते ययुः स्वर्गं शिवेशिवकृतांपदम् । यत्रेच्छयाहिलभ्यन्तेभोग्यवस्तून्यनेकशः
अथ रात्रौ व्यतीतायांप्रातरत्रविशाम्वरः । स्वभृत्यदेहयोः कृत्वा दाहमस्थीन्यपातयत्
तीर्थेऽत्र पात्यमानेषु भृत्यौतावस्थिषु प्रभो ! ।
स्वर्गात्पुनरिहाऽऽयातौतंवैश्यंमिदमूचतुः ॥ ३० ॥

भृत्यावूचतुः ।

भोभो वैश्यपते! साधो तीर्थेऽत्रमरणाद्भुवि । पापानामपि जन्तूनां स्वर्गप्राप्तिर्न संशयः

स्थले मृतस्यजन्तोश्चेत्पतन्त्यस्थीनि वारिणि ।
तीर्थस्याऽस्य तदा वैश्य ! सत्यलोके स्थितिर्भवेत् ॥३२॥
स्थले मृताभ्यामावाभ्यामस्थिपातेन वारिणि ।
सम्प्राप्ता ब्रह्मणो लोके स्थितिराब्रह्मसंस्थितेः ॥ ३३ ॥

स्थलेमृतस्यचौरस्य पेतुरस्थीनिनाऽम्बुनि । यतोऽतःसविशांनाथतस्यौ वृन्दारकालये
तस्याऽपिदेहमन्विष्यतीर्थेऽस्मिन्नाशुपातय । यथा सोऽपिसुरश्रेष्ठःप्राप्नुयाद्गतिपराम्
उपकारः सदा कार्यः परेषामपि साधुभिः । अपकारो न मन्तव्यः कृतो भृशमसज्जनैः॥

नारद उवाच ।

इत्युक्तवन्तौ महाभागौ गतौहरिपुरम्प्रति । हरिद्वारस्यतीर्थस्यसलिलेचाऽस्थिपातनात्
स वैश्यस्तु महाभागस्तस्य चौरस्यविग्रहम् । दग्धुमन्वेषयामास न लब्धं तत्तु भूपते!
पुनरावृत्य तत्रैव सर्वतीर्थशिरोमणौ । हरिद्वारे महाराज ! स सस्नाविति वाञ्छया ॥
अहमुत्पाद्य सत्पुत्रान्धर्मार्जितधनेन च । सन्तोष्य विप्रान्बन्धूंश्च विष्णुमाराध्यसेवया
त्वय्येव मरणं प्राप्य गच्छामि हरिमन्दिरम् । तीर्थराज!नमस्तुभ्यमेतत्कर्तव्यमस्ति ते
इतिकामनया राजन्सवैश्यस्तत्रकामदे । तीर्थेस्नात्वा गतः सर्वैर्भृत्यैःस्वं समगाद्गृहम्
तत्र गत्वा सपत्न्यांतु पुत्रानुत्पाद्यबुद्धिमान् । धर्मोपार्जितवित्तेनतोषयामासबान्धवान्

भक्त्या परमया राजन्नाराध्य कमलापतिम् ।
तीर्थेऽस्मिन्मरणं प्राप्तो यतो वैकुण्ठमाप्नुयात् ॥ ४४ ॥

इति वै वर्णितोराजंस्तीर्थस्य महिमा तव । हरिद्वारस्य पुण्यस्य श्रवणेऽस्य फलं शृणु
तिलद्रोणस्यदानेन माघेयत्फलमाप्नुयात् । जनस्तत्फलमाप्नोतिशृण्वन्माहात्म्यमस्यतु
गोपीचन्दनदानेन ब्रह्मक्षत्रेषु भोजनात् । यत्फलं तन्महिम्नोऽस्य श्रवणादेव कार्त्तिके॥

जागरे च प्रबोधिन्यांप्रहरे पश्चिमे नृप ! ।
यत्फलं तन्महिम्नोऽस्यतीर्थस्याऽऽकर्णनाद्भवेत् ॥ ४८ ॥

हरिद्वारस्य सदृशं शक्रप्रस्थगतस्य वै । न तीर्थं पृथिवीलोके चतुर्वर्गफलप्रदम् ॥४६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये हरिद्वारमहिमवर्णनं नाम सप्तदशाधिकद्विशततमोऽध्यायः ॥२१७॥

## अष्टादशाधिकद्विशततमोऽध्यायः

### विदर्भनगरस्थमालवब्राह्मणकथामुखेन तद्द्वारास्वस्वसुःसुतायगोदावरीतीरे-सुवर्णदानं गृहंतेनप्रतिगच्छतास्वभ्रातुर्भग्नस्यक्षतशरीरस्यकारणज्ञानम्

नारद उवाच ।

भूयः शृणु महाभाग! माहात्म्यं परमाद्भुतम् । अत्रस्थितस्यतीर्थस्यपुष्करस्य शिवप्रदम्
प्रसादात्तस्य तीर्थस्य विष्णुः सर्वसुरेश्वरः । प्रसन्नः पुण्डरीकस्य मासमेकंगृहेऽवसत्
अत्र मुक्तिं तदनुजो लेभे पापरतोऽपि हि ॥ २ ॥

शिबिरुवाच ।

कः पुण्डरीको धर्मात्मा कृतंनेनच कर्मकिम् । येन प्रसन्नोभगवांस्तद्गृहेमासमावसन्
कथं तदनुजः प्राप पापात्माश्रीहरेः पदम् । तीर्थस्याऽस्यप्रसादेन सर्वमाख्याहि मे मुने
शृण्वतोऽस्य न सन्तोषो माहात्म्यं मम जायते ॥ ५ ॥

नारद उवाच ।

विदर्भनगरे राजन्मालवाख्यो महायशाः । ब्राह्मणो ब्रह्मविच्छान्तोविद्वान्विष्णुपरायणः
देवर्षिपितृभूतानां मानुषाणां च पोषकः । विषयेषु न संसक्तो लोभमोहादिवर्जितः ॥७
स एकदा महाभाग! सिंहं प्राप्ते बृहस्पतौ । गोदावरीं महापुण्यां स्नातुं प्रतिजगाम ह॥
दातुं तत्र सुवर्णस्य गृहान्निन्ये पलायुतम् । गच्छन्पथि स धर्मात्मामनसैतदचिन्तयत्

मालव उवाच ।

गृहाद्दानार्थमानीतं मया हेमपलायुतम् । यस्मै कस्मै न दातव्यं दातव्यं पूज्यसाधवे ॥

निष्किञ्चनाय विप्राय पात्रायाऽनुपकारिणे । पूज्याय देशे कालेच दत्तमक्षयताम्व्रजेत्

उञ्छवृत्त्या समानीतं दत्त्वा दुर्वाससे मुनिः ।
शिलोञ्छवृत्तिर्धर्मात्मा स्वं त्यक्त्वाऽगात्परं पदम् ॥ १२ ॥

दानवेन्द्रोबलीराजापात्रंविज्ञायवामनम् । विपक्षायाऽप्यदात्तस्मैत्रिलोकीस्वभुजार्जिताम्
तस्मात्पात्राय दातव्यं धनं धर्मार्जितं मया । गोविन्दतुष्टयेसम्यग्वाञ्छनीयंनतत्फलम्
पुण्डरीकस्तुधर्मात्माभागिनेयोगजाह्वयात् । आयास्यतिमयाऽऽहूतःसर्वपात्रशिरोमणिः
आनीतस्य धनस्याऽर्द्धं तस्मैपात्रायसूनवे । स्वसुर्दास्यामिशेषंतुश्रोत्रियेभ्योयथाविधि

नारद उवाच ।

एवं विचिन्त्यधर्मात्मा मालवः स द्विजोत्तमः । कतिचिद्वासरैःप्राप्तःपुण्यांगोदावरींनृप
मिलितस्तस्यधर्मात्मा पुण्डरीकःस्वसुःसुतः । तस्य वै पूर्वमायातो मालवस्यमहीपते!
स तत्र विधिनास्नात्वा सिंहसंक्रमवासरे । पुण्डरीकाय वित्तार्धं ददौमेप्रीयतां हरिः॥
पुण्डरीकोऽपिधर्मात्मास्नात्वागोदावरीजले । स्ववित्तस्यचतुर्थांशंश्रोत्रियेभ्योददौमुदा

स तत्र विधिवत्स्नात्वा दत्त्वा दानं च शक्तितः ।
गच्छन्तं स्वगृहान्राजन्नित्युवाच स्वसुः सुतम् ॥ २१ ॥

मालव उवाच ।

गुरून्प्रति नमस्कारो वाच्य आशीर्लघून्प्रति । यथाद्वयोर्हि संयोगः क्षणिकोऽयंबभूवह
एवं हि सर्वजन्तूनां पुत्रदारादिभिः सह । तस्मात्क्षणिकसंयोगात्संसाराद्यः सुधीर्नरः
विरज्येत कृपापात्रं स हरेः स्याद्विनिश्चितम् । कृपातःश्रीहरेःप्राणीसत्संगमरतो भवेत्
ततस्तस्य हरेर्लीलाश्रवणेच्छा हि जायते । श्रुत्वाचकीर्तिनास्सद्भिर्हरिर्लीलाअपिस्वयम्
सस्पृहं कीर्तयत्येव ततः स्मरति केवलम् । ततस्तस्य भवेत्प्रेम गोविन्दपदसेवने ॥
नरस्ततस्तरत्याशु पोतेनेव महार्णवम् । एतदर्थं हि साधूनां ज्ञानिनां कर्मिणां तथा ॥

यत्नो भवति धर्मात्मन्नपि त्वं यत्नवान्भव ॥ २७ ॥

नारद उवाच ।

एवमुक्त्वा स वैदर्भः सुतं कथमपिस्वसुः । विसृज्याऽश्रुमुखोबाष्पपर्याकुलदृशंययौ॥

पुण्डरीकोऽपि धर्मात्मा चचालस्वगृहम्प्रति । कतिभिर्वासरै राजन्नागतोऽत्रशुभास्पदे
भरताख्यं कनीयांसंभ्रातरं पतितं भुवि । श्वसन्तं क्षतनिर्गच्छद्रुधिराक्तमवैक्षत ॥३०॥
पप्रच्छ च रुदन्नुच्चैर्भ्रातःकेनेदृशीं दशाम् । गमितोऽसि किमर्थं वा गृहादिह समागतः
इति पृच्छति राजेन्द्र!पुण्डरीके सपीडया । महत्या भरतः सद्यः पीडितोऽसूनमुञ्चत ॥
अवातरत्तदा यानमेकं सगणमद्भुतम् । आकाशात्पश्यतां भूप ! जनानां तद्गुरोरपि ॥
तदारुह्य स दिव्याङ्गो भरतः पापकार्यपि । उवाच वचनं ज्येष्ठं भ्रातरं विनमन्निदम् ॥

भरत उवाच ।

पुण्डरीकमहाबुद्धेर्तीर्थस्याऽस्यप्रसादतः । पुष्करस्य मयाप्राप्तापापिनाऽपिदिविस्थितिः
मदीयं दारुणं कर्म भ्रातर्जानासि यद्यपि । तथाऽपि कथयाम्यद्य किञ्चिदज्ञातमस्ति ते

यथा मया प्रभावत्या वेश्यया रमितं सह ।
तद्गृहव्ययितं भूरि धनं च मदिराकृते ॥ ३७ ॥

द्यूतेन हारितं यच्च चौरकर्मसमार्जितम् । शिवरात्र्यां मया शम्भुनिर्माल्यं यच्च भक्षितम्
यत्कृते भवता विप्रो जम्बुकोनाम दूषितः । एतन्मया कृतं कर्म विदितं पुण्डरीक! ते॥
गोदावरीं गते भ्रातस्त्वयि यत्कृतवानहम् । न तत्ते विदितं कर्म कथयामि तदप्यहो ॥
चलिते त्वय्यतिक्रान्तो यदा पक्षस्तदाह्यहम् । श्रुतवानितिलोकेभ्यो वचनंहरिदुःसहम्
पुण्डरीको धनं दातुमाहूतो मातुलेन हि । निजसोदरमाहत्य पुण्डरीकं तदाहृतम् ॥
ग्रहीष्यामि धनं भूरि मालवेन समर्पितम् । महता वसुना तेन तोषयामि प्रभावतीम् ॥
दुरोदरेण क्रीडामि स्वेच्छया तद्विदैःसह । इत्यालोच्य त्वदध्वानंनिरुध्याऽहमिहस्थितः
हत्वा त्वां च धनं भूरि ग्रहीतुं च महामते !। अतिक्रान्तेजने भ्रातःकुतश्चित्सार्थआगतः
वणिजामत्र सुप्तोऽहं रात्रौ तत्र महामते !। अथ कश्चिन्निशीथेतु तस्करो वणिजांधनम्
हर्तुं तत्र समाविष्टः सार्थे जनसमाकुले । नीत्वा यदा धनं किञ्चित्सचौरस्तुपलायितः

तमन्वधावन्सहसा क्रोशन्तइव सेवकाः ॥ ४७ ॥

सेवकाऊचुः ।

गृह्यतां गृह्यतामेष चौरोऽयं याति सत्वरम् । मध्याद्बहूनामस्माकमपहृत्य धनं बहु

भरत उवाच ।

इत्याकर्ण्य वचस्तेषां पुरतस्तु तमन्वहम् । अधावं सहसा भ्रातस्तद्ग्रहीतुं जिहीर्षया॥
ततस्ते वणिजां भृत्या ज्ञात्वा मां तस्य रक्षकम् । प्रजह्रुस्तस्यासर्वेसखड्गं खड्गपाणयः
तेषु कश्चिद्द्विजश्रेष्ठो ब्राह्मणोऽहमितिब्रुवन् । खड्गेन शितधारेण मया पापीयसा हतः
वणिजां सेवकैस्तैस्तु खड्गधारैरहं हतः । गतास्ते वणिजः प्रातर्निजगन्तव्यनीवृतम् ॥
ततो भवानिह प्राप्तः श्वसन्तं मां ददर्श ह । चलद्रुधिरलिप्ताङ्गं पीडामोहविचेतनम् ॥
इत्येतत्कथितं भ्रातर्यदर्थमहमागतः । अपमृत्युं यथा प्राप्तस्तच्चाऽपि कथितं मया ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

# एकोनविंशत्यधिकद्विशततमोऽध्यायः

## पुण्डरीकभरतसम्वादे पुष्करतीर्थमहिम्नासहप्रयागमहत्त्ववर्णनं कथाप्रसङ्गेन-पुण्डरीकगृहेमासंयावद्विष्णुनिवासवर्णनम्

नारद उवाच ।

इत्याकर्ण्य वचस्तस्य पुण्डरीको महामनाः । उवाच निजबन्धुंतंशृण्वतांनिजसाङ्गिनाम्

पुण्डरीक उवाच ।

केन पुण्येन तीर्थेऽस्मिन्मृत्युर्भरत! तेऽभवत् । यदि जानासि तद्ब्रूहिपापंविख्यातमेवते

भरत उवाच ।

पुण्डरीक! शृणुष्वेदं कथयामि तवाऽग्रतः । एतत्तीर्थप्रदं पुण्यं कृतं यदिह जन्मनि ॥३॥
एकदा तु धनं जित्वा समागच्छन्निजं गृहम् । अपश्यं मृतकं बालंमृतस्याऽनाथमापणे
निधाय तमहं मूर्ध्नि नीत्वा गङ्गातटे शुभे । वस्त्रादिभिरलङ्कृत्यचक्रेदाहादिसत्क्रियाम्

भृतेनोपार्जितं द्रव्यं तत्सर्वं व्ययितं मया । तेन पुण्येन प्राप्तं मे तीर्थमेतच्छुभावहम् ॥
कुरु त्वं मम देहस्य संस्कारं दाहपूर्वकम् ॥ ६ ॥

श्रीनारद उवाच ।

संस्कारे विहिते राजन्भरतः पापवानपि । तीर्थस्याऽस्य प्रसादेन पुष्करस्य गतो दिवि
मासमेकं यथा विष्णुः पुण्डरीकगृहे हरिः । उवासाऽस्य प्रसादेन तीर्थस्य शृणु साम्प्रतम्
अत्र तीर्थे स धर्मात्मा भरतस्याऽपि सद्गतिम् ।
दृष्ट्वेति हृदये मेने तीर्थमेतत्तु कामदम् ॥ ६ ॥
अत्रेतिवाञ्छया सस्नौ पुण्डरीकः स पण्डितः । माघमासं स्वरूपेण हरिर्वसतु मे गृहे
एवं स्नात्वा सकामेन ययौ निजगृहं प्रति । तीर्थेऽत्र नृपतिश्रेष्ठ! पुण्डरीकोऽखिलार्थदे
बन्धुभ्यो मरणं भ्रातुर्भरतस्य जगाद ह । तेऽपि श्रुत्वा शुचं चक्रुर्माययाऽऽवृतबुद्धयः
पुण्डरीकस्तदाकुर्वन्गृहे स्वस्मिन्निजक्रियाः । उवासेति महानन्दस्तपस्यायामयने हरिः
पूर्णिमायामथो पौष्यां चक्रे स परमोत्सवम् । मत्वेति श्वोगृहे मह्यं हरिरायास्यति ध्रुवम्
श्रीखण्डजलसेकेन गोमयालेपनेन च । मुक्ताचूर्णचतुष्केण समस्कुरुत केतनम् ॥१०॥
शतद्वयं ब्राह्मणानां नानाभोज्यैरभोजयत् । वस्त्रैर्भिर्दक्षिणाभिश्च तानेव समतोषयत् ॥
नानावादित्रकुशलैः कलकण्ठैश्च गायनैः । रजन्यां स्वजनैर्गायंश्चक्रे जागरणं तथा ॥
अथ प्रभाते तान्सर्वान्गायनादीन्विसृज्य सः । गोविन्दागमनाकाङ्क्षी गृहमध्य उपाविशत्
अथ तस्य गृहाभ्यासे निवर्त्य निजवाहनम् । प्राविशद्गृहमध्ये तु कर्तुं स्वजनवाञ्छितम्
स पुण्डरीकस्तं दृष्ट्वा माधवं समुपागतम् । उत्थायाऽऽसनतस्तूर्णं ववन्दे शिरसा नृप!
उवाच च स धर्मात्मा गोविन्दालोकनिर्वृतः । सम्पूज्याऽर्घादिदानेन विष्टरे तं निवेशितम्

पुण्डरीक उवाच ।

भवता भवतापघ्नं सुस्पष्टं तदनुष्ठितम् । तावदत्र त्वया विष्णोस्थीयतां स्थितिकारिणा
यावदस्य पुनीतस्य समाप्तिस्तपसो भवेत् । यत्र त्वं सेवकास्ते च वसन्ति परिचर्यया
तत्रैव खलु वैकुण्ठः सर्वदोषविवर्जितः । यद्गृहे तव कर्माणि वर्ण्यन्ते साधुभिर्विभो!
हरिर्निवसते तत्र सन्मुखादिति नः श्रुतम् । येषां वचसि ते नाम हृदि रूपं च सुन्दरम्

कर्णयोश्च गुणारोपस्तएव खलु साधवः । भवतो भवति स्वान्तं येषां शुश्रूषणे विभो!
उत्तमाङ्गे च निर्माल्यं त एव खलु साधवः ।
येषां तु बुद्धिः शत्रौ च मित्रे च कमलापते ! ॥ २७ ॥
चयापचययोश्चैव त एव खलु साधवः । येषां विकुरुते चेतो न विकारस्य कारणे ॥
सति लक्ष्मीपते!नूनं त एव खलु साधवः । यत्र त्वं माधवस्तत्र सन्तोयत्र ततो भवान
अतो विज्ञापयामि त्वां माघे मम गृहे वस ॥ २९ ॥

नारद उवाच ।

इत्याकर्ण्य वचस्तस्य पुण्डरीकस्यमाधवः । उवाच वचनं भासादन्तानां भासयन्दिशः

श्रीभगवानुवाच ।

साधूनामुत्तमः साधुस्त्वंपृथिव्यांमहामते !। यत्त्वया पुण्यतीर्थेतु स्नातंमत्सङ्गवाञ्छया
उत्तिष्ठ जाह्नवीतोये माघेस्नानं कुरुद्विज !। माघान्ते स्नापयामित्वां पूर्णिमायां तुपुष्करे
प्रयागे माघमासेतु पूर्णं यत्स्नानजं फलम् । तत्सर्वं पुष्करे तीर्थे दिनैकस्नानतो भवेत्

नारद उवाच ।

एवमुक्तः स विप्रेन्द्रः पुण्डरीकोमुरारिणा । किञ्चिदभ्युदिते सूर्येस्नानं गङ्गाजलेऽकरोत्
प्रत्यक्षं पुण्डरीकाक्षं पुण्डरीकः समार्चयत् । तुलसीविकसत्पुष्पयवकुङ्कुमचन्दनैः ॥
धूपैरगरुजैरङ्गवासिताङ्गं रमापतिम् । नीराजयति कर्पूरदीपकैः पञ्चभिः स्म सः ॥३६॥
चतुर्विधमयैर्भोज्यैर्भोजयित्वा जगद्गुरुम् । सुप्तं स मणिपर्यङ्के चामरैस्तमवीजयत् ॥
पादसम्वाहनं जातु चक्रे तस्य रमापतेः । जातिकर्पूरसंयुक्तं ददौ ताम्बूलवीटकम् ॥
उष्णीषंबध्नतस्तस्य श्रीपतेः पुरस्तदा । तस्थौ जातु स विप्रेन्द्रः करेणानीय दर्पणम्
एवं निजगृहे तस्य वसतः सभवच्छिदः । सपर्यां विदधद्विप्रो माघं निन्ये समस्तकम्
अथ माघावसाने तुपूर्णिमायां रमापतेः । स्मृतिमात्रागतं तार्क्ष्यमपश्यत्पुरतः स्थितम्
तं दृष्ट्वा पुण्डरीकाक्षः पुण्डरीकमुवाच ह ॥ ४१ ॥

श्रीभगवानुवाच ।

श्रूयतां भो द्विजश्रेष्ठ! यद्वचोऽहं वदामि ते । इन्द्रप्रस्थगते तीर्थे पुष्करे ते यदृच्छया ॥

स्नानाय ते मया दत्तं यन्मासमुषितं मया । अद्य पक्षीन्द्रमारुह्य मया सह महामते ! ॥
व्रज तीर्थशिरोरत्नं तदेव प्रतिपुष्करे । चतुर्वर्गप्रदे तस्मिन्स्नानं कुर्वन्यदीच्छसि ॥४४
तदहं ते प्रदास्यामि यदहं त्वद्वशो द्विज ! । पापोऽपि भरतस्ते वै भ्राता यत्र मृतो गतः
स्वर्गं स्वर्गसुखाकाङ्क्षी किमन्यत्तस्य वर्ण्यते ॥ ४६ ॥

नारद उवाच ।

एवमुक्त्वा स देवेन्द्रो ब्राह्मणेन्द्रं नरेन्द्र! तम् । पतगेन्द्रे समारोप्य सर्वतीर्थेन्द्रमागमत्
पुण्डरीकस्यदेहात्तु तेन तत्प्राणवायुना । समं ज्योतिः स निर्गत्य गोविन्दपदमाविशत्
एवं पुष्करतीर्थेऽस्मिन्निन्द्रप्रस्थगते नृप !। स्नानेन पुण्डरीकस्तु लेभे सायुज्यमीश्वरे ॥
एवं तीर्थानुरोधेन गोविन्दोऽपि च तद्गृहे । मासमेकं सुखं राजन्नुवास निजबन्धुवत् ॥
केन वर्णयितुं शक्यो महिमा पुष्करस्य वै ।
शक्रप्रस्थगतस्याऽस्य कोट्यंशो वर्णितो मया ॥ ५१ ॥
माहात्म्यश्रवणादस्य श्रद्धया लभते नरः । अश्वमेधक्रतुफलं पठनादपि भूपते ! ॥५२॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये पुष्करमहिमवर्णनं नामैकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

# विंशत्यधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थस्थप्रयागतीर्थमाहात्म्यप्रसङ्गे विश्वावसुगन्धर्वस्यकथानकवर्णनं माहिष्मतीनगरस्थायामोहिन्यावृत्तान्तवर्णनम्

नारद उवाच ।

शिवस्य तीर्थराजस्य प्रयागस्य तवाऽग्रतः । महिमानं महापुण्यं श्रद्धया वर्णयामि ते
विश्वावसुर्महीपाल!गन्धर्वो लोकविश्रुतः । एकदा स गतो गातुं सुमेरौ ब्रह्मणः सभाम्
तत्र सर्वैः सुरश्रेष्ठमुपविष्टं सुविष्टरे । जुष्टं सुरगणैर्भूप ! विश्वावसुरवैक्षत ॥ ३ ॥

ब्रह्मासनसमीपे तु वरासनगतं नृप !। द्वितीयमिव लोकेशमिन्द्रप्रस्थं स ऐक्षत ॥ ४ ॥
सुरराजतीर्थराजौ ब्रह्मेन्द्रप्रस्थयोर्नृप !। चामरोद्धूननं मूर्ध्नि कुर्वन्तौ स ददर्श ह ॥
अन्यानि देवतीर्थानि तयोर्दूरे महीपते !। स्थितानि तेन दृष्टानि बद्धाञ्जलिपुटानि तु ॥
तयोरग्रे जगौ राजन्गान्धर्वं रागमुत्तमम् । तीर्थैः सममगात्सत्यलोकं देवान्विसृज्य हि
अथ विश्वावसुर्धीमान्दृष्ट्वा तीर्थस्य वैभवम् । इन्द्रप्रस्थस्य राजेन्द्र! हाहामेतदुवाच ह॥

विश्वावसुरुवाच ।

भोभो गन्धर्वशार्दूल! तीर्थमेतन्महाद्भुतम् । इन्द्रप्रस्थाख्यमेतस्मिन्संसारे तीर्थराशिषु ॥
चराचरगुरुर्ब्रह्मा सुरवन्द्यपदाम्बुजः । तस्यासनसमीपस्थं यदतिष्ठत्समासनम् ॥ १०॥
तीर्थराजोऽपि पृष्ठस्थश्चामरं यस्यमस्तके । अधुना भृत्यवज्ज्ञातस्तीर्थेष्वन्येषु का कथा
पृथिव्यां यानि तीर्थानि त्रिवर्गफलदानि तु । इन्द्रप्रस्थमिदं तीर्थं चतुर्वर्गफलप्रदम् ॥

अत्र स्थितानि तीर्थानि तादृशानि गुणैर्ध्रुवैः ।
शेषेनाऽपि न शक्यन्ते स्तोतुं तेषां महागुणाः ॥१३ ॥

शरभ उवाच ।

एवं विश्वावसुर्धीमान्दृष्ट्वेन्द्रप्रस्थवैभवम् । गत्वा तस्य गृहं राजन्पावनं सर्वकामदम्
यथा देवेषु सर्वेषु शक्रःश्रेष्ठः शचीपतिः । तस्माद्ब्रह्मा च तीर्थेषु प्रयागोऽयं तथा वरः
तस्मादपि महाराज! शक्रप्रस्थमिदं वरम् । अस्यान्तरगतो योऽयं प्रयागो नृप! दृश्यते
कथयाम्यत्र यद्वृत्तं मोहिन्याः पण्ययोषितः । नर्मदासरितस्तीरे पुरी माहिष्मती नृप!
मोहिनीनामतत्राऽऽसीद्वेश्या बहुधनान्विता । रूपयौवनसम्पन्नानिष्णातानृत्यगीतयोः
तया बहूनि पापानि कृतानि धनलुब्धया । ब्रह्महत्याः कृताः सप्त दास्यश्च बहवो हताः
तासां च पातिता गर्भा बहुशः पापया तया । एवं तया सुतारुण्यं गमितं पापकर्मभिः
ततो जरा कियत्काले तद्देहे समपद्यत । जराग्रस्तशरीरा सा निवृत्तविषयस्पृहा ॥२१॥

न चक्रे मानसं यूनां ते च तां प्रति भूपते ! ।
पापार्जितं धनं स्वीयं न विश्वसिति कस्यचित् ॥ २२ ॥
न दत्ते न स्वयं भुङ्क्ते न निक्षिपति वै क्वचित् ।

एकदा सा निशीथे तु विबुध्येति व्यचिन्तयत् ॥ २३ ॥
मृतायां मयि कस्येदं धनं पापैरुपार्जितम् । तं नयिष्यति मां घोरं नरकं भृशदारुणम्
दास्यस्तासांच भर्त्तारस्तद्ग्रहीष्यन्ति धनं मम । मयैव सद्गतिस्तस्य कथं न क्रियतेऽधुना
एवंविचिन्त्य साधर्मे विधाय मतिमुत्तमाम् । चकाराऽऽरामसर्गश्चार्पाकूपसुरालयान्
अभितः पुरमाधत्ते प्रपाः पथिकहेतवे । निदाघे च महाराज ! तेभ्योऽन्नं प्रददौ च सा
धर्मशालां गृहाभ्याशेनिवासाय विदेशिनाम् । विदधे सा पुनस्तेभ्यो ददावाहारमुत्तमम्
एवं प्रवर्त्तमाना हि धर्मेसा भूप!मोहिनी । ज्वरातुरा भवत्काले कश्चिच्चेति व्यचिन्तयत्
धर्मार्थे हि मया वित्तं व्ययितं भूरि यद्यपि । तथापि स्वर्णरूप्यादि प्रचुरं वर्त्तते परम्
श्रोत्रियेभ्योददाम्येतज्ज्ञानेनेति व्यचिन्तयत् । विचिन्त्येतिसमाहूतामोहिन्यानगरद्विजाः
नागतास्ते महीपाल!ज्ञात्वा घोरं प्रतिग्रहम् । यदा तदा विभागं च चक्रे तत्तु धनंस्वकम्
एको भागस्तु दासीनां दत्तोऽन्यश्च विदेशिनाम् ।
स्वयं तु निर्द्धना राजन्नभवत्सा तु मोहिनी ॥ ३३ ॥
तथासमागतंमृत्युं विज्ञायान्तकमन्तिके । मुक्त्वा दास्यो धनंनीत्वायथेष्टगतयोऽभवन्
इति मत्वा यदा ह्येषा ज्वरमुक्ता भविष्यति । तदानीं यद्धनं दत्तं नूनमादास्यते हि तत्
अथ सा लङ्घनान्यष्टादश कृत्वा महीपते !। निजायुषस्तु शेषेण ज्वरमुक्ता तदाऽभवत्
एकाजरद्गवानामसखी तस्या महीपते !। सा तामुपचचाराऽऽशु पथ्यादिभिरतन्द्रिता॥
कियद्भिर्वासरैः सा तु पूर्णाहारा व्यजायत । तस्या जरद्गवायास्तु गृहेभुक्तं स्म लज्जया
मया स्थितं सुखेनाऽत्र दुःखमद्य समागतम् ।
दारिद्र्यान्न मया स्थेयं सा चिन्त्येति गताऽन्यतः ॥३९ ॥
गच्छन्ती सा वनेराजन्मोहिनी पुरतस्करैः । इतिमत्वा विनिहता गृहीत्वायात्यसौधनम्
धनमप्राप्य तैस्तस्याः सकाशात्पुरतस्करैः । श्वसन्ती सा परित्यक्तातस्मिन्नेव वनेनृप!
अथ वैखानसः कश्चित्प्रयागस्याऽस्य वै जलम् ।
बिभ्रत्कमण्डलौ राजन्नत्राऽरण्ये समाययौ ॥ ४२ ॥
अथ तां पतितां वीक्ष्य शस्त्रविक्षतविग्रहाम् । याचमानामिदं राजञ्जीवनं हस्तसञ्ज्ञया

वैखानस उवाच ।

का त्वं केन शितैः शस्त्रैः सक्षतीकृतविग्रहा । एकाकिनी किमर्थंवा निर्जनारण्यमागता
इन्द्रप्रस्थगतस्येदं प्रयागस्य जले शुभे । भाग्योदयेन केनाऽपि प्रापितं प्रियकाम्यया ॥
इत्युक्ता तेन सा वक्तुमक्षमा व्याददे मुखम् । पातुं तद्वारि महिषी भवेयमिति वाञ्छया
अथैतस्यप्रयागस्य पातितेऽम्बुनि तन्मुखे । तत्याज जीवितं सातु मोहिनीगणिकानृप!
प्राणप्रयाणकाले तु महिषीत्वमवाञ्छत । अतः सा महिषी जाता द्राविडे वीरवर्मणः
सम्भूय केरलाधीशगृहे तीर्थाम्बुपानतः । कुलशीलधनैश्वर्यसयुक्तस्य महीपतेः ॥४६ ॥
हेमगौरं ततः साङ्गं बभार कमलेक्षणा । अतस्तस्य पिता नाम हेमाङ्गीति चकार ह ॥
एकदा सा तु हेमाङ्गी हेमाभरणभूषिता । कलायाः स्ववयस्यायाः मन्त्रिपुत्र्यागृहं ययौ
तत्र यावकतैलेन स्नापिता भोजिता च सा । विविधान्नैस्तदा राजन्निविष्टा वरविष्टरे॥
पुष्पोद्ग्रथितधम्मिल्लाक्षामक्षौमविभूषिता । कलां प्रोवाचदधती मुखे ताम्बूलवीटिकाम्

हेमाङ्ग्युवाच ।

कले ! कलय मे वाक्यं कोकिलाकलभाषिणि !। गृहेयदद्भुतं वस्तु तव मामभिदर्शय ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये-
इन्द्रप्रस्थस्थप्रयागमहत्त्ववर्णनं नाम विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

# एकविंशत्यधिकद्विशततमोऽध्यायः

## द्राविड्देशस्थवीरवर्ममहिष्याहेमाङ्ग्याइन्द्रप्रस्थतीर्थकरणायस्वपतये प्रतिज्ञावर्णनन्तयोश्चतीर्थयात्रार्थप्रस्थानम्

नारद उवाच ।

इत्युक्तासा कला राजंस्तयानृपतिभार्यया । स्वकोशात्स्वर्णमञ्जूषामानाय्य विदधेपुरः

उवाच च महाराजभार्येऽस्यां महदद्भुतम् । पुस्तकं वर्तते देवि! तत्र चित्राणि सन्ति वै
उद्घाट्य दृश्यतां किञ्चित्किंकिमस्त्यत्रपुस्तके । रंस्यते ते मनो नूनं तत्रस्थालेख्यदर्शने

इत्युक्ता भूपपत्नी सा दास्या तामुदघाटयत् ।
मञ्जूषां तत्र संस्थं च पुस्तकं पाणिनाऽग्रहीत् ॥ ४ ॥

तत्राऽवलोकयामास साऽवतारान्समासतः । पूर्वं ततस्तु भूगोलंपञ्चाशत्कोटियोजनम्
तत्रान्धकारसंयुक्ताभूमिर्दृष्टाऽथ काञ्चनी । एतयोरन्तरेराजँल्लोकालोकश्च पर्वतः ॥६॥
सप्तद्वीपास्ततो दृष्टाः समुद्रैः समभिर्वृताः । एतेषु नद्यः शैलाश्च खण्डानि तु महामते॥
एतद्भारतखण्डं सा पश्यन्ती भूपतिप्रिया । यमुनाजाह्नवीमुख्याः सरितः समवैक्षत ॥८
यमुनातीरगं राजन्निन्द्रप्रस्थमिदं शुभम् । ददर्श सा महाभागा तीर्थं व्रजयुतं नृप ! ॥
अत्र तीर्थमिदं दृष्ट्वा प्रयागं ब्रह्मनिर्मितम् । पूर्वजन्मकृतं कर्म सा सस्मार मनस्विनी ॥

ततस्तूष्णीं समुत्थाय तूर्णं सा स्वगृहं ययौ ।
निश्चित्येति न भोक्ष्यामि ततः प्रस्थाय तीर्थकम् ॥ ११ ॥

तदैव सा तु हेमाङ्गी सह गन्तुमसुप्रियम् । वीरवर्माणमाहेदं तीर्थराजं प्रिया सती ॥

हेमाङ्ग्युवाच ।

भोभोः प्राणपते!वाक्यं मदीयंशृणु धर्मदम् । विधेहिच महाभाग तूर्णं पूर्णोभविष्यति
पुराऽहं मोहिनी नाम वेश्या च बहुपापकृत् । यौवने वार्द्धके किञ्चिद्धर्मे जाता मतिर्मम
पापेनोपार्जितं वित्तं धर्मेण व्ययितं मया । निर्द्धनाऽहं यदा राजन्निर्गता निजपत्तनात्
तदामां निर्जनेऽरण्ये यान्तींजघ्नुस्तुतस्कराः । वृथादारिद्र्यसन्तप्तां पापाधनजिघृक्षया
शितशस्त्रक्षताङ्गीं मां श्वसन्तीं गतचेतनाम् । विसृज्य तस्करास्तत्र गताहतमनोरथाः॥
ततो वैखानसो ह्येकः प्रयागस्य जलं वहन् । इन्द्रप्रस्थगतस्यैव वने तत्र समागतः ॥
तत्रमां पतितांदृष्ट्वा तदवस्थां स तापसः । का त्वं कुतःकिमर्थं वा हता केनेति पृष्टवान्
तदा किमपिनोक्तं मे प्रार्थितं पुण्यमम्बु तत् । तेन तन्मे मुखे क्षिप्तं ततोऽहं देहमत्यजम्
प्राणप्रयाणकालेतु वारितत्सर्वकामदम् । श्रुत्वेति वाञ्छितवती महिषीस्यामितिप्रभो!
तस्यतीर्थाम्भसो राजन्प्रसादात्ते गृहेश्वरी । जाताऽहंसत्कुलाचारशीलाशीलपयोनिधेः

साम्प्रतं द्रष्टुमिच्छामि शक्रप्रस्थगतं नृप !। प्रयागं तीर्थराजं तं भवता सह कामदम्

प्रस्थास्येऽहं यदा राजन्तीर्थराजं प्रति प्रभो !

तदाऽहमन्नं भोक्ष्यामि मयेति विहितः पणः ॥ २४ ॥

राजोवाच ।

कथमेतद्विजानीयां त्वदुक्तं चललोचने !। प्रतीतं कुरु मे भद्रे ! त्वदुक्तं करवाण्यहम् ॥

नारद उवाच ।

इत्युक्ते तेन भूपेन खे वागित्यभवत्तदा ॥ २६ ॥

आकाशवागुवाच ।

सत्यमुक्तं वचो राजन्ननया तव भार्यया । इन्द्रप्रस्थे गते पुण्ये प्रयागे तीर्थपुङ्गवे ॥

तत्र गत्वा कुरु स्नानं लप्स्यसे यद्यदिच्छसि ॥ २७ ॥

नारद उवाच ।

निशम्येतितनो वाणीनृपो गगनसम्भवाम् । दण्डवत्पतितो भूमौ तद्धक्कारं नमाम्यहम्

अथ मन्त्रिणमाहूय राज्यमारोप्य तत्र वै । तया सह समारुह्य रथं तीर्थवरं ययौ ॥

कतिभिर्वासरैस्तत्र हेमाङ्ग्या सह चाऽऽययौ । उपजह्रे तीर्थराजे क्षीरं भार्यायुतो नृपः

सस्नतुस्तौशिवे तीर्थे दम्पती तत्र कामदे । प्रयागस्नानपुण्येन वैकुण्ठप्राप्तिरस्त्विति ॥

प्रतीच्छया स्नातमात्रे मिथुने तत्र भूपते !। आगतौ सुरशार्दूलौ हंसपक्षीन्द्रवाहनौ ॥

आगतौतौ समालोक्य वीरवर्मा स भूपतिः । प्रणम्य शिरसा देवौ तुष्टावैकाग्रमानसः

राजोवाच ।

नमो वां सुरशार्दूलौ बिभ्रद्द्वयामसितारुणे । वपुषी क्षौमवासांसि हेमसिन्दूरभानि च

वन्दे युवां सत्त्वरजःप्रधानौ चराचरस्य स्थितिसर्गहेतू ।

वैकुण्ठसत्याद्भुतलोकनाथौ चतुर्द्विबाहू खगराजवाहौ ॥ ३५ ॥

वैराग्यसंरागवतां जनानां सन्मुक्तिभुक्तिप्रतिपादकौ च ।

वृन्दारकैर्वन्दितपादपद्मौ सद्भावनम्रेण नमामि मूर्ध्ना ॥ ३६ ॥

गोविन्दवृन्दारकवन्द्यपाद ! न कोऽपि जानाति तव स्वरूपम् ।

यतः परस्त्वं प्रकृतेश्च पुंसो मनोवचोभ्यामपि दूरवर्ती ॥ ३७ ॥
धन्यः स लोके पुरुषः परात्मन्यो विश्वमेतत्क्षणिकं विचिन्त्य ।
अनन्यचेता भजति त्वदीयपादारविन्दं मुनिवृन्दवन्द्यम् ॥ ३८ ॥
त्वत्पादसेवनं नाम तीर्थमेतच्च दुर्लभम् । जनानां भजमानानां वाञ्छितार्थफलप्रदम् ॥
तथाऽप्येतद्द्वयं सेव्यं मुक्तये नान्यलब्धये । अन्यकामनया यस्तु सेवते स तु वञ्चितः
सन्तो भवन्तमासेव्य तीर्थमेतच्चमुक्तिदम् । नान्यमिच्छन्त्यतिक्रम्यसर्वलोकाञ्जिगीषवः

नारद उवाच ।

इत्यभिष्टूय देवेशं लोकेशं स च भूपतिः । तस्थौ यदा तदा राजन्हेमाङ्गीसा जगाद ह

हेमाङ्ग्युवाच ।

पद्मापते पद्मपलाशलोचन ! ब्रह्मन्मरालासन ! भारतीगुरो !।
नमो युवाभ्यां यदि दीनचेतसे प्रसीद तं तारयतं भवाब्धेः ॥ ४३ ॥
तीर्थस्याऽस्य प्रसादेन जाताऽहं महिषी प्रभो !। युवयोर्दर्शनं जातं देवानामपिदुर्लभम्
युवामखिलचित्तज्ञौ दत्तं नौ मानसेप्सितम् । स्नानकालेयदावाभ्यांविहितंपारमार्थिकम्
एवं ताभ्यामुभाभ्यां तौ संस्तुतौ देवपुङ्गवौ । प्रसन्नवदनौ भूत्वा प्रोचतुर्दम्पती प्रति॥

हरिब्रह्माणावूचतुः ।

धन्या त्वमसि हेमाङ्गि ! यतोऽयं तारितः पतिः ।
त्वया राज्यसुखासक्तचित्तोऽप्येतत्समागमात् ॥ ४७ ॥
राज्ञां विषयसक्तानां दुर्लभा मुक्तिरीदृशी । त्वद्भर्तुर्यादृशी जाता तीर्थस्याऽस्यप्रसादतः

नारद उवाच ।

इत्युक्त्वा तौ समारुह्य गरुडं हंसमेव च । जग्मतुस्तौ सुरश्रेष्ठौ सत्यलोकं नरेश्वर !॥
तत्र ते ब्रह्मणा सर्वे पूजिता विधिवन्नृप !। तस्य चित्तानुरोधेन तस्थुरेकं मुहूर्तकम् ॥
अथ ताभ्यामुभाभ्यां स दम्पतिभ्यां समं हरिः । आरुह्यगरुडं श्रीमद्वैकुण्ठमगमन्नृप !॥
इत्येतत्कथितं तुभ्यं तीर्थराजस्य वैभवम् ।
पुण्यं समस्तपापघ्नं यशस्यं सुतदं नृप ! ॥ ५२ ॥

यएतच्छृणुयान्नित्यं पठेदपि च मानवः । स गच्छेद्वाञ्छितं स्थानंसत्यमेतन्मयोदितम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे इन्द्रप्रस्थ-माहात्म्ये तत्रस्थप्रयागवर्णनं नामैकविंशत्यधिकद्विशततमोऽध्यायः ॥२२१॥

---

# द्वाविंशत्यधिकद्विशततमोऽध्यायः

## नारदशिबिसम्वादे इन्द्रप्रस्थस्थितकाशीशिवकाञ्चीतीर्थसप्तकभीमकुण्डानां-माहात्म्यवर्णनं तत्रतत्रतीर्थेषुप्रथितनानाख्यानानाम्वृत्तप्रकाशनञ्च

नारद उवाच ।

आकर्णय शिबे!राजन्वर्णयामितवाऽग्रतः । पुण्यंयशस्यमायुष्यंकाश्यामाहात्म्यमुत्तमम्

इन्द्रप्रस्थतटस्थायां काश्यामेकस्तु पादपः । शिंशपाख्यो भवेद्राजन्पुरा पुण्ययुगे कृते॥२॥

तत्रैको वायसो ह्यासीत्कृतनीडोवनस्पतौ । तस्याधस्तान्महासर्पः कोटरे वसति स्म ह

एकदा तस्य काकस्य भार्याण्डद्वयमालये । प्रतिमुच्य गता क्वाऽपि न नीडेस्वेसमागता

स्वयमेव स काकस्तु पालयन्नण्डकद्वयम् । तामेव शिंशपामुच्चैरध्यतिष्ठन्महीपते ! ॥

अथैकदा निशीथे तु महावात्या समागता । अभनक्छिंशपां राजन्मूलादपि दृढामपि॥

वात्यया पात्यमानाया शिंशपायास्तदा तले ।
चूर्णितौ काकसर्पौ तौ गतप्राणौ बभूवतुः ॥ ७ ॥

दिव्याङ्गास्ते त्रयो भूत्वा शिंशपावायसादयः । विमानत्रयमारूढाजग्मुःश्रीपतिकेतनम्

शिबिरुवाच ।

देवर्षे ! केन पुण्येन प्राप्ता तैर्मुक्तिदा पुरी । आसंस्ते के त्रयः पूर्वं सर्वं कथय नारद !॥

नारद उवाच ।

कुरुजाङ्गलदेशीयो ब्राह्मणः श्रवणाभिधः । तस्यभार्या कुण्डानाम भ्राताऽभूच्चकुरण्टकः

अस्नातभोक्ता नित्यं स केवलो मिष्टभुग्रहः । श्रवणस्तेन दोषेण बभूव ग्रामवायसः ॥
कुरण्टकस्तुतद्भ्रातानास्तिकोऽभवदुल्बणः । श्रुतिस्मृतिपथोच्छेत्तादेवतानांचनिन्दकः
तेन दोषेण स मृतो ह्यभवत्कालकुण्डली ! सा कुण्डाश्रवणस्यस्त्रीबभूवोभयदोषभाक्
अतः सा स्थावरत्वं हि लब्ध्वाऽऽसीदुभयाश्रया ।
एतत्ते कथितं भूप ! तद्वृत्तं पूर्वजन्मनि ॥ १४ ॥
अतः परं प्रवक्ष्यामि तेषां पुण्यं यतस्त्रयः । प्रापुस्तेन पुरीं रम्यां काशीं वैश्वेश्वरींनृप!
ग्रामान्तरादेकदा तौ प्रत्यायातौ निजालयम् ।
कस्यचित्पथिकस्याऽत्र कूपमग्नां पयस्विनीम् ॥ १६ ॥
अवलोक्य तदुद्धारं चक्रतुस्तेन नोदितौ । ताभ्यां गदितमाकर्ण्यकुण्डासाध्वित्यभाषत
ते त्रयस्तेन पुण्येन मरणं प्राप्य दुर्लभम् । इन्द्रप्रस्थतटस्थायां काश्यां वैकुण्ठमारुहन्
इयं काशी महेशस्य पुरी यद्यपि भूपते !। तथाप्यस्यां मृतो जन्तुर्वैकुण्ठेस्यात्सुखीहरेः
एतत्ते कथितं राजन्काश्यामाहात्म्यमुत्तमम् । किमन्यच्छ्रोतुमिच्छातेविद्यतेतद्वदस्व मे

शिबिरुवाच ।

मुने!त्वया महेशस्य क्षेत्रत्रयमुदीरितम् । काशी च शिवकाञ्ची च गोकर्णंचतथाऽपरम्
एकस्या महिमा प्रोक्तस्त्वया काश्या महामुने ! ।
गोकर्णशिवकाञ्च्योश्च कथ्यतां यदि विद्यते ॥ २२ ॥

नारद उवाच ।

गोकर्णं केवलं शैवं क्षेत्रं परमपावनम् । तस्मिन्मृतो नरो राजञ्छिवःस्यान्नाऽत्रसंशयः
स्थले जलेऽन्तरिक्षे च जन्तुस्तत्र म्रियेत चेत् । तदा कैलासशिखरेशिवःसम्भूयदीव्यति
अत्र गोकर्णतीर्थेस्यान्मृतस्य न पुनर्भवः । शिवेन स समं राजन्मुक्तियास्यतिकर्हिचित्
अस्याऽऽपि तव माहात्म्यं गोकर्णस्य महामते ! ।
वर्णयामि यदाऽऽकर्णि मया ब्रह्ममुखात्प्रभो ! ॥ २६ ॥
प्रयागादेकगव्यूतौ गुरुतीर्थसमीपगः । मर्यादापर्वतो योऽयं दृश्यते पुण्यदर्शनः ॥२७॥
तत्रैकः कर्कटो नाम भिल्ल आसीत्सुदारुणः । तस्य भार्याजरानामसाजघ्नेपतिपञ्चकम्

सा जराविषसंयुक्तं षष्ठं कर्कटकं तदा । अकरोन्मोदकं हन्तुं तदा तेन स्वसुः श्रुतम्
निजाया मुखतो राजन्भिल्लेन च महात्मना । बालांतां हन्तुमारेभे कर्कटो भृशदारुणः
खड्गपाणिर्यदा याति तद्वधाय स भिल्लपः । यावत्तावत्तुसापापा ज्ञात्वा निजवधोद्यमम्
वनमभ्यद्रवद्भीता निजप्राणपरीप्सया । तामनुद्रवता तेन कर्कटेन महीपते ! ॥ ३२ ॥
अत्र गोकर्णतीर्थे तु गृहीता खड्गपाणिना । शिरश्छित्त्वा तु खड्गेन पातयित्वाजले वपुः
तस्य गोकर्णतीर्थस्य निजस्थानमगाच्च सः । सा जरातत्र गोकर्णेपापाऽपिनिधनंगता
कैलासशिखरे राजन्पार्वत्या अभवत्सखी । अहं कथितवानेतत्तत्र गोकर्णवैभवम् ॥३५

शिवकाञ्च्याश्च माहात्म्यं पवित्रं वर्णयामि ते ।
इन्द्रप्रस्थतटस्थायां शिवकाञ्च्यामपि प्रभो ! ॥ ३६ ॥

गतिः सा परमा पुंसां गोकर्णे या मयोदिता । अत्र श्रीमन्महादेवो विष्णुं सर्वसुरेश्वरम्
आराध्य भक्तराजत्वं लेभे ज्ञानं च तात्त्विकम् । अतः सर्वेवयंपुत्रा ब्रह्मणस्तंमहेश्वरम्
आराधयामः सततं सद्भक्तिज्ञानलिप्सया । अत्र बाणासुरो राजन्नाराध्य महेश्वरम् ॥
निराहारो वर्षशतं तद्गुणत्वबुभूषया । तस्मै प्रसन्नो भगवान्गणत्वं दत्तवान्निजम् ॥
स्वयं च सर्वदा तस्य पुरपालो बभूव ह । इयं पुरी पुरा राजन्नासीद्विष्णोर्महात्मनः ॥
दत्ता शिवाय तुष्टेन तपसा तस्य विष्णुना । अस्यामेकं पुरावृत्तं महदाश्चर्यकारकम्

विप्रस्य शिवभक्तस्य वैकुण्ठाप्तिर्यथाऽभवत् ।
एकस्तु ब्राह्मणो राजन्हेरम्बो नाम धार्मिकः ॥ ४३ ॥

कायेन मनसा वाचा शिवपूजारतः सदा । एकदा स महाभागः शिवतीर्थानि पर्यटन्
शिवभक्तःशिवे राजञ्छिवकाञ्च्यामिहाऽऽगतः । एनांमनोहरांचैवनतत्याजसबुद्धिमान्
पश्चात्तत्रैव तत्याज प्राणानस्याजलान्तरे । तत्रैव श्रीमहादेवगणास्तं ब्राह्मणोत्तमम्॥
नीत्वा कैलासमचलं चेलुस्तदनुशासनात् । अथ मध्ये समायाता गणावैकुण्ठतो हरेः
तेभ्यो बलात्समादातुं तं द्विजश्रेष्ठमुद्यताः । आसींत्तेषां महद्युद्धं गणानां हरिशर्वयोः॥
तत्र युद्धे नवै केषां विजयो न पराजयः । तत्र वैकुण्ठतो विष्णुरागतो गरुडासनः ॥
कैलासाद्वृषभारूढो महेशश्च त्रिलोकधृत् । तावन्योन्यं मुखं दृष्ट्वा विहस्य जगदीश्वरौ

पश्यतः स्म महद्युद्धं नभस्येवं गणैः कृतम् ।
अथ स्वीयान्गणान्विष्णुः शैवांश्च दिवि युद्धतः ॥ ५१ ॥
निवार्य तंद्विजंताक्ष्र्यमारोप्यागाच्छिवालयम् । शिवेनतद्गणैश्चाऽपिस्वकीयैरपिमाधवः
वृतो गच्छन्पथि श्रीमान्स्तुतस्त्रिदशवन्दितः । गत्वा विश्वेशतं चाऽऽगंमहादेवपुरःसरः
तस्मै द्विजाय वै तस्य दर्शयन्नमर्णायनाम् । अथ तस्मात्तु कैलासान्महादेवेन वन्दितः
माधवः परयाभक्त्या वैकुण्ठमगमत्तदा । द्विजःसोऽपिमहाभागस्तीर्थस्याऽस्यप्रसादतः
गोविन्ददर्शनं प्राप्य मुमुदे हरसन्निधौ । एतत्ते कथितंराजञ्छिवकाञ्च्यास्तु वैभवम्
तीर्थसप्तकनाम्नस्तु शृणुष्व सुसमाहितः । तीर्थमेतन्महाराज! चतुर्वर्गफलप्रदम् ॥५७॥
दर्शनात्स्पर्शनाद्ध्यानात्स्मरणादपि भूपते ! । वसिष्ठादिभिरेतस्मिन्महर्षिभिरनुष्ठितम्
महत्तपस्तु सृष्ट्यर्थं तत्रासंस्तुक्षमा नृप !। मरीचिरपि धर्मात्मा पुत्रार्थं स्नानमाचरन्
अत्र लेभे महाभागः कश्यपं सुतमुत्तमम् । अत्रिरत्राऽपितपसा तोषयेद्देवपुङ्गवान् ॥६०
सोमं दुर्वाससं दत्तं तेभ्यो लेभे सुतत्रयम् ।
अङ्गिरा अपि धर्मात्मा तीर्थस्याऽस्य प्रसादतः ॥ ६१ ॥
लेभे सुतांस्तु तद्वंश्या जाता आङ्गिरसाद्विजाः । पुलहोऽपिसुतंलेभेदम्भोलिगुणवत्तरम्
योऽगस्त्योऽभूत्पुरा राजंस्तीर्थेऽत्रैव निमज्जनात् ।
पुलस्त्यस्याऽत्र तीर्थे वै पुत्रो लब्धस्तपस्यतः ॥ ६३ ॥
कुबेरोऽभून्महाभागो यः सखाऽऽसीदुमापतेः । क्रतोरपिसुताजातावालखिल्याःसहस्त्रशः
तीर्थस्याऽस्य प्रसादेन ते सर्वे ह्यूर्ध्वरेतसः । रजआदीन्सुताँल्लेभे वसिष्ठोऽपिमहातपाः
समैव राजशार्दूल! महिमा तस्य वर्णितः । अन्यान्यपि च तीर्थानि सन्त्यनेकानिभूपते!
कपिलाश्रमकेदारप्रभासादीनि वै प्रभो !। नियुतैरपि वर्षाणां तेषां च महिमा नृप ! ॥
अनन्तेनाऽपि नो वक्तुं शक्यते किमु मादृशैः ॥ ६७ ॥

सौभरिरुवाच ।

एवमुक्त्वा मुनिश्रेष्ठो नारदो मुनिपुङ्गवः । शिबिं जगाम नभसो नारायणगुणान्गृणन्
शिबिरौशीनरो राजा शक्रप्रख्यस्य वैभवम् । श्रुत्वा मुनिमुखाद्राजन्कृतार्थं स्वममन्यत

तत्र स्नात्वा हि विधिवदिन्द्रप्रस्थे स भूपतिः । विधायसत्क्रियाःसर्वाजगामनिजपत्तनम्
इन्द्रप्रस्थस्य माहात्म्यमेतत्तव मया विभो !। यमुनातीरतीर्थस्य वर्णितं जनपावनम् ॥

नाऽस्याऽऽदरं करिष्यन्ति कलौ श्रद्धाविवर्जिताः ।
इन्द्रप्रस्थस्य राजेन्द्र ! सर्वतीर्थशिरोमणेः ॥ ७२ ॥

अष्टादशपुराणानां श्रवणाद्भारतस्य च । यत्फलं तन्महिम्नोऽस्य शक्रप्रस्थस्य जायते ॥
अरुणोदयवेलायां माघलक्षैकमज्जनात् । यत्फलं तन्महिम्नोऽस्य श्रवणाच्छ्रद्धयाभवेत्
श्रद्धयाऽस्य तु माहात्म्यं यः शृणोतिमहीपते !। तर्पितास्तेनपितरोदेवाश्च मुनयस्तथा
कृच्छ्रातिकृच्छ्रपाराकचान्द्रायणव्रतादिभिः । यत्फलंतन्महिम्नोऽस्यश्रद्धयाश्रवणाद्भवेत्
अश्वमेधादियज्ञानां समस्तानां महीपते !। यत्फलं तन्महिम्नोऽस्यश्रद्धया श्रवणाद्भवेत्

सूत उवाच ।

एवं युधिष्ठिरो राजा श्रुत्वाशौनकसौभरेः । इन्द्रप्रस्थस्यमाहात्म्यं स ययौहस्तिनम्पुरम्
ततो विनीय सद्भ्रातृन्दुर्योधनपुरःसरान् । इन्द्रप्रस्थमगात्पुण्यं राजसूयचिकीर्षया ॥
द्वारकायाः समायातं गोविन्दं कुलदैवतम् । राजसूयेन यज्ञेन स इयाज महीपतिः ॥
मुक्तिदं तीर्थमेतत्तु शपतोऽस्याऽप्यजायत । इति मत्वा हरिस्तत्र शिशुपालं जघान ह
शिशुपालोऽपि तस्यैव तीर्थस्य मरणाद्भुवि । सायुज्यमगमत्कृष्णे निखिलार्थप्रदायके
शिशुपालो हतो यत्र विहितो यत्र च क्रतुः । गदया तत्र भीमेन कृतं कुण्डं सुविस्तरम्
भीमकुण्डं तु विज्ञातं जातं तद्भुवि पावनम् । कालिन्द्या दक्षिणेभागेगव्यूत्यर्ध महीतले
इन्द्रप्रस्थगतायाः यत्कालिन्द्याः स्नानतःफलम् । तत्फलंतत्रकुण्डेतुजायते नाऽत्रसंशयः

सूत उवाच ।

यस्मिन्क्षेत्रे स्थितो जन्तुस्तं क्षेत्रमनुवत्सरम् ।
प्रदक्षिणादिभिर्धर्मैः स्वापराधान्क्षमापयेत् ॥ ८६ ॥

प्रतिसम्वत्सरं चैव परिक्रामति यो नरः । क्षेत्रापराधदोषैश्च न स लिप्येत्तु पातकैः ॥
प्रदक्षिणमकुर्वाणः क्षेत्रसिद्धिं न विन्दति । तस्मात्प्रदक्षिणातीर्थे दातव्याचफलार्थिभिः
हरेर्नामानि सञ्जल्पन्प्रकरोति प्रदक्षिणाम् । पदे पदे स लभते कपिलादानजं फलम् ॥

चैत्रकृष्णचतुर्दश्यां शक्रप्रस्थप्रदक्षिणाम्। यः करोति नरो धन्यः सर्वपापैः प्रमुच्यते

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी माहात्म्य इन्द्रप्रस्थगतकाशीगोकर्णशिवकाञ्चीतीर्थसप्तकभीमकुण्डवर्णनं नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

# त्रयोविंशत्यधिकद्विशततमोऽध्यायः

## वशिष्ठदिलीपसम्वादे भगवन्मन्त्रदीक्षाप्रसङ्गे विद्योपदेशवर्णनम्

शौनक उवाच।

सूत सूत महाभाग! धन्योऽसि त्वं भवाम्बुधौ।
यन्नोऽत्यर्थं निमग्नानां पाययस्यमृतोत्करम् ॥ १ ॥

साधोऽत्र भवनिस्तारं वाञ्छतां नः समादिश। मन्त्ररत्नं भावशुद्धं यन्मयं सचराचरम्

सूत उवाच।

शृणु शौनक! वक्ष्यामि मन्त्ररत्नं महाद्भुतम्। यद्दिलीपाय गदितं वसिष्ठेन महात्मना

एकदा तु दिलीपेन पृष्टमेतद्गुरुं प्रति। वसिष्ठं द्विजशार्दूलं प्रणिपत्य यथा त्वया ॥

दिलीप उवाच।

भगवन्भवता प्रोक्तास्सर्वे धर्मा विशेषतः। वर्णाश्रमयुता धर्मा नित्यनैमित्तिकाश्च ये

राजधर्माश्च यज्ञाश्च तीर्थदानव्रतादिकम्। श्रुता मया मुनिश्रेष्ठ! अक्षय्यस्वर्गभोगदाः

अधुनाश्रोतुमिच्छामि मोक्षमार्गंसनातनम्। दिष्ट्याऽहंयेन गच्छामितद्ब्रह्मन्वक्तुमर्हसि

को मन्त्रः सर्वमन्त्राणां भवरोगैकभेषजम्। सर्वेषामेव देवानां कोहि मोक्षप्रदः परः॥

तत्समाख्याहि तत्त्वेन मयि वात्सल्यगौरवात् ॥ ६ ॥

वसिष्ठ उवाच।

साधु पृष्टं त्वया राजन्सर्वलोकहितैषिणा। वक्ष्यामि परमं गुह्यमेकं संसारतारकम्

पुरा महर्षयः सर्वे यज्ञदानपराः शुभाः । पप्रच्छुर्ब्रह्मणः पुत्रं नारदं मुनिसत्तमम् ॥११॥

महर्षयऊचुः ।

भगवन्केन मन्त्रेण गच्छामः परमं पदम् । तन्नो ब्रूहि महाभाग! प्रसादं कर्तुमर्हसि॥१२

नारद उवाच ।

पितामहं पुरा सर्वे योगिनःसनकादयः । पप्रच्छुरेकमेकान्ते मोक्षमार्गं सुदुर्लभम् ॥१३

ब्रह्मोवाच ।

शृणुध्वं योगिनः सर्वे रहस्यमिदमद्भुतम् । न जानन्ति सुराः सर्वेऋषयश्च तपोधनाः ॥
सर्गादौ प्रोक्तवान्देवोमह्यं नारायणोऽव्ययः । ईश्वर्यासहदेव्याच सम्यक्सम्पूजितोमया
ततः प्रसन्नो भगवान्मम नारायणोऽव्ययः । प्राजापत्यं ददौ मह्यं श्रुतिजं सर्ववाङ्मयम्
स्वप्रकाशानि मन्त्राणि व्यापकाव्यापकानि च । ततस्तमब्रवंदेवं पुराणपुरुषोत्तमम् ॥
भगवन्केन मन्त्रेण संसारोत्तारणं नृणाम् । तन्ममाऽऽचक्ष्व तत्त्वेन सर्वलोकहितायवै
को मन्त्रः सर्वमन्त्राणां पुरश्चरणवर्जितः । सकृदुच्चारणान्नृणां ददाति परमं पदम् ॥

श्रीभगवानुवाच ।

साधुपृष्टं महाभाग सर्वलोकहितैषिणा । तस्माद्वक्ष्यामि ते गुह्यं येन मामाप्नुयुर्नराः
सर्वेषामेव मन्त्राणां मन्त्ररत्नं शुभावहम् । सकृत्स्मरणमात्रेण ददाति परमं पदम् ॥
मन्त्ररत्नं द्वयं न्यासः प्रपत्तिः शरणागतिः । लक्ष्मीनारायणमिति मन्त्रः सर्वफलप्रदः॥
नामानि मन्त्ररत्नस्य पर्यायेण निबोध मे । तस्योच्चारणमात्रेण परितुष्टोऽस्मिनित्यशः
कुलजो वा तपस्वी वा वेदवेदाङ्गपारगः । यज्ञदानपरो वाऽपि सर्वतीर्थोपसेवकः ॥२४
व्रती वा सत्यवादी वा यतिर्वा ज्ञानवानपि । मन्त्राधिकारी न भवेत्तं प्रयत्नेनवर्जयेत्

ब्राह्मणाःक्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतरे ।
तस्याऽधिकारिणः सर्वे मम भक्तास्तु ते यदि ॥ २६ ॥

अनन्यशरणानां च तथैवाऽनन्यसेविनाम् । अनन्यसाधकानां च वक्तव्यो मन्त्रउत्तमः
आर्त्तानामाशु फलदस्सकृदेव कृतो ह्यसौ । दृप्तानामपि जन्तूनां देहान्तरनिवारणः॥२८
आर्त्तोजिज्ञासुरर्थार्थीज्ञानी वाऽपिप्रजापते !। सकृन्मांशरणं यातिततःकामानवाप्नुयात्

नाऽदीक्षिताय वक्तव्यं नाऽभक्ताय च मानिने ।

नास्तिकाय न लुब्धाय न श्रद्धाविमुखाय च ॥ ३० ॥

न चाऽशुश्रूषवेवाच्यं नाऽसम्वत्सरवासिने । कामक्रोधविमुक्तस्तु दम्भलोभविवर्जितः

मां च योऽव्यभिचारेण भक्तियोगेन सेवते । वक्तव्यं तस्य विधिवन्मन्त्ररत्नमनुत्तमम्

देशकालादिनियमानारीमित्रादिशोधनम् । न्यासमुद्रादिकं तस्य पुरश्चरणसंयुतम् ॥

मच्चक्राङ्कितदेहत्वं मदीयाराधनं तथा । मयि संन्यस्तकर्मत्वं मदनन्यशरण्यता ॥ ३५ ॥

मयिसर्वफलन्यासोमहाविश्वासपूर्वकम् । अनन्यसाधनत्वं चाप्याकिञ्चन्यंतथाऽऽत्मनः

अवैष्णवानां सम्भाषावन्दनादिविवर्जनम् । अनन्यदेवतानां च वन्दनं पूजनं तथा ॥

एवमाद्याश्च नियमाः प्रपन्नस्य प्रकीर्तिताः । इत्यादिगुणयुक्ताय वक्तव्यं मन्त्रमुत्तमम्

तस्य नारायणश्चाऽहमृषिर्विष्णुःसनातनः । देवताच श्रियासार्द्धमहं वात्सल्यसागरः

सर्वलोकेश्वरः श्रीमान्सुशीलः सुलभस्तथा । सर्वज्ञः सर्वशक्तिश्च सदापूर्णमनोरथः ॥

सर्वगः सर्वबन्धुश्च कृपापीयूषसागरः । श्रीमान्नारायणश्चाऽहं देवतासमुदाहृतः॥४०॥

छन्दस्तु देवी गायत्री पञ्चविंशाक्षरात्मिका । द्विसप्तत्रित्रित्रिपञ्चद्विपडङ्गानि योजयेत्

लक्ष्म्या मदनपायिन्या मांध्यायेद्विश्वरूपिणम् । शङ्खचक्रगदापद्मपाणिकं दिव्यभूषणम्

वामाङ्कस्थश्रिया सार्द्धं पूजयेत्प्रयतः शुचिः । अनेन मन्त्ररत्नेन गन्धपुष्पनिवेदनैः ॥४३

सकृत्सम्पूज्यमानोऽपि सन्तुष्टोऽस्मि प्रजापते ! ॥ ४४ ॥

ब्रह्मोवाच ।

सम्यगुक्तं त्वया नाथ! रहस्यमिदमुत्तमम् । मन्त्ररत्नप्रभावश्च सर्वसिद्धिप्रदो नृणाम् ॥

पिता त्वं सर्वलोकानां माता त्वं गुरुरेव च ।

त्वं च स्वामी सखा भ्राता गतिस्त्वं शरणं सुहृत् ॥ ४६ ॥

अहंतु तवदेवेश दासश्शिष्यस्तथा सुतः । तस्मान्ममदयासिन्धो! प्रोक्तवानिदमुत्तमम्

अधुना मन्त्ररत्नस्यदीक्षां सम्यग्विधानतः । ब्रूहि सर्वत्र तत्त्वेन लोकानां हितकाम्यया

श्रीभगवानुवाच ।

शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् । आचार्यं संश्रयेत्पूर्वं मदाश्रयणसिद्धये

आचार्योवेदसम्पन्नो विष्णुभक्तोविमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्चसदा मन्त्राशयःशुचिः
सत्सम्प्रदायसंयुक्तो ब्रह्मविद्याविशारदः । अनन्यसाधनश्चैव तथानन्यप्रयोजनः ॥५१॥
ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः । सद्वृत्तौ शासिता चैव मुमुक्षुः परमार्थवित्
एवमादिगुणोपेत आचार्यःसर्वदा सुहृत् । आचाराञ्छासयेद्यस्तु स आचार्य इतीरितः
यस्त्वाचार्यपराधीनस्सद्वृत्तौ शास्यतेयदि । शासनेस्थिरवृत्तिश्च शिष्यःसद्भिरुदाहृतः

एवं लक्षणसंयुक्तं शिष्यं सर्वगुणान्वितम् ।
अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम् ॥ ५५ ॥

द्वादश्यां श्रवणे वाऽपि कर्हिचिद्वैष्णवे दिने । सदाचार्योपसम्प्रीते तत्रदीक्षां समाचरेत्
सुदर्शनं पाञ्चजन्यंसुवर्णेन प्रकारयेत् । रौप्येण वाऽपिताम्रेण कांस्येनाऽपि प्रकारयेत्
स्नापयपञ्चामृतैः शुद्धैरर्चयेत्पुरतो मम । तुलसीगन्धपुष्पाद्यैस्तन्मन्त्रेण विधानतः ॥
तत्र संस्थापयेदग्निं स्वगृह्योक्तविधानतः । आचार्योजुहुयादाज्यंमन्त्रेणाऽथद्विजोत्तमः
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा । जुहुयान्मन्त्ररत्नेन तथाऽन्यैर्वैष्णवैः शुभैः॥६०
मन्त्रैः पुरुषसूक्ताद्यैर्जुहुयाद्घृतपायसम् । तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः॥
षडक्षरेण जुहुयादाज्यं विंशतिसङ्ख्यया । प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद्गुरुः ॥६२॥
शङ्खेनचाऽङ्कनं कुर्याद्बाह्वोर्दक्षिणसव्ययोः । होमशेषं समाप्याऽथ पुनःपूजांसमाचरेत्
ततःकलशमादाय पवित्रोदकपूरितम् । मन्त्रेणैवाऽभिमन्त्र्याऽथ तस्यमूर्ध्न्यभिषेचयेत्
सितवस्त्रधरंसम्यगाचान्तं विनयान्वितम् । ऊर्द्ध्वपुण्ड्रधरं शिष्यंमन्त्रमध्यापयेद्गुरुः
मन्त्रार्थश्च प्रवक्तव्यो वृत्तिश्चैव विशेषतः । लब्धमन्त्रस्तदाचार्यं पूजयेद्भूषणादिभिः

अनेन विधिना मन्त्रं योऽधीते वैष्णवाद्गुरोः ।
ततः स वैष्णवं याति नान्यथा सुरसत्तम ! ॥ ६७ ॥

नारद उवाच ।

एवमुक्त्वा विधातारं देवदेवो हरिः पिता ।
स्वचक्रेणाऽङ्कयित्वा तु तस्मै मन्त्रं ददौ स्वयम् ॥ ६८ ॥

सर्वलोकेश्वरोदेवो ब्रह्मा मम पिताप्रभुः । ममाऽपि विधिवन्मन्त्रं स ददौमुनिसत्तमाः

तस्माद्यूयं मुनिश्रेष्ठा धारयित्वा सुदर्शनम् । नारायणपदद्वन्द्वं गच्छध्वं शरणं द्विजाः॥

वसिष्ठ उवाच ।

इत्युक्ता मुनयः सर्वे नारदेन सुरर्षिणा । द्वयाधिकारिणः सर्वे याता विष्णोःपरंपदम्
तस्मात्त्वमपि चेद्राजन्विष्णुसायुज्यमिच्छसि । दीक्षामार्गविधानेन धारयित्वासुदर्शनम्
नारायणपदद्वन्द्वं तदेकं शरणं व्रजः । सर्वलोकेश्वरः साक्षाद्ब्रह्मा त्रिभुवनेश्वरः ॥७३॥

ममाऽपि नारदस्याऽपि प्रोक्तवान्मन्त्रमुत्तमम् ।
शौनकादिमहर्षीणां नैमिषारण्यवासिनाम् ॥ ७४ ॥

नारदः प्रददौ मन्त्रं प्रपत्ति शरणागतिम् । एतद्गुह्यतमं राजन्न जानन्ति महर्षयः ॥७५
देवताश्चनजानन्तिसिद्धाः साध्याश्चदानवाः । मयाऽपिप्रापितो मन्त्रंशक्तिपुत्रःपराशरः
इदं रहस्यं परमं लक्ष्मीनारायणं द्वयम् । राजंस्तवाऽपि वक्ष्यामि प्रपत्ति शरणागतिम्
द्वयात्परतरं मन्त्रं नास्ति सत्यं ब्रवीमिते । अस्मात्परतरं धर्म्यं नास्ति लोकेषु किञ्चन

सत्यं सत्यं पुनः सत्यं ब्रह्मणा कथितं पुरा ।
नारायणात्परो देवो नास्ति मुक्तिप्रदो नृणाम् ॥ ७६ ॥
तत्सेवया भवेन्मोक्षः सर्वकर्मनिकृन्तनः ॥ ८० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वसिष्ठदिलीप-
सम्वादेविद्योपदेशो नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

# चतुर्विंशत्यधिकद्विशततमोऽध्यायः

## वशिष्ठदिलीपसम्वादप्रसङ्गात्पार्वतीप्रश्नेशङ्करद्वाराविष्णुभक्तिविधिप्रकाशनम्

दिलीप उवाच ।

भगवन्सर्वमाचक्ष्व हरिभक्तिसुधामयम् । शृण्वतो नैव तृप्तिर्मे विष्णुभक्तिं सुखावहाम्
तापत्रयमहाज्वालावह्निभिः सततंनृणाम् । सन्तप्तानां मुनिश्रेष्ठ! विष्णुभक्तिसुधार्णवम्

विना किमन्यच्छरणं भवारण्येभयानके । आचक्ष्व विस्तरेणाऽथ भक्तिभेदान्महामुने!
उपास्यमानान्सततं मुनिभिः परमात्मनः ॥ ३ ॥

वसिष्ठ उवाच ।

साधुपृच्छसिराजेन्द्र!संसारोत्तारणंनृणाम् । वैकुण्ठस्यपरेशस्यभक्तिनित्यसुखावहाम्
इममेव महाप्रश्नं कैलासशिखरे पुरा । पप्रच्छ गिरिजा देवी शङ्करं लोकपूजितम् ॥५।

पार्वत्युवाच ।

देवदेव महादेव त्रिपुरघ्न सुरेश्वर! । विष्णुभक्तिं ममाऽऽचक्ष्व मुक्तिदां सर्वदेहिनाम् ॥
उपास्यभेदान्मन्त्रांश्च तत्तत्पूजाविधींस्तथा ।
तस्य विष्णोः स्वरूपं च तद्विभूतिगुणादिकम् ॥ ७ ॥
तस्य लोकस्वरूपंच यंप्राप्य न निवर्तते । सर्गस्थितिलयं येन करोति भगवान्हरिः ॥८
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । येन केन च कृत्येन साधनेन परं पदम् ॥९॥
प्राप्नुवन्ति नराः पापा विषयासक्तचेतसः । विस्तरेण मयि प्रीत्या ब्रूहि सर्वमशेषतः॥

वसिष्ठ उवाच ।

इति पृष्टो महादेव्या हरस्त्रिपुरहा तदा । उवाच परमप्रीत्या नमस्कृत्य जनार्दनम् ॥

रुद्र उवाच ।

साधु साधु महादेवि ! सर्वलोकहितैषिणि ! ।
साधु पृच्छसि मां देवि ! श्रीशमाहात्म्यमुत्तमम् ॥ १२ ।
धन्याऽसि कृत्यपुण्याऽसि विष्णुभक्ताऽसि पार्वति ! ।
परितुष्टोऽस्मि ते भद्रे ! शीलरूपगुणैः सदा ॥ १३ ॥
अथ वक्ष्यामि गिरिजे! भगवद्भक्तिमुत्तमाम् ।
तन्मन्त्राणां विधानं च स्वरूपं तस्य शार्ङ्गिणः ॥ १४ ॥
तत्त्वं नारायणो विष्णुर्वासुदेवस्सनातनः । परमात्मा परं ब्रह्म परं ज्योतिः परात्परः
अच्युतः पुरुषःकृष्णः शाश्वतःशिवईश्वरः । नित्यः सर्वगतः स्थाणूरुद्रस्साक्षी प्रजापतिः
यज्ञो यज्ञपतिः साक्षाद्ब्रह्मणः पतिरेव च । हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः ॥

अकारवाच्यो भगवाञ्छ्रीभूनीलापतिः प्रभुः । उतामृतत्वस्येशानो यदन्नेनाऽतिरोहितः
सहस्रमूर्द्धा विश्वात्मा सहस्राक्षःसहस्रपात् । सभूमिंसर्वतः स्पृत्वाह्यत्यतिष्ठद्दशाङ्गुलम्
अनन्तःश्रीपतीरामो गुणभृन्निर्गुणो महान् । सर्वलोकेश्वरः श्रीमान्सर्वज्ञः सर्वतोमुखः
तस्यलोकप्रधानस्य जगन्नाथस्यपार्वति!। माहात्म्यं वासुदेवस्य यच्छक्यंतद्ब्रवीमिते
अशक्यं तन्मया वक्तुं ब्रह्मणा सह दैवतैः । सर्वोपनिषदामर्थे वेदान्ते परिनिश्चितम् ॥
तस्योपासनभेदांश्च शृणु वच्मि पुनः पृथक् । आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनंहरेः
धारणं चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणांपरिग्रहः । अर्चनंच जपोध्यानं तन्नामस्मरणंतथा
कीर्तनं श्रवणं चैव वन्दनं पादसेवनम् । तत्पादोदकसेवाच तन्निवेदितभोजनम् ॥२५
तदीयानां च सेवा च द्वादशीव्रतनिष्ठता । तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः ॥
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये । सर्वेषामेवदेवानां ममाऽपि पुरुषोत्तमः ॥
पूजनीयो हरिर्नित्यंब्राह्मणानां विशेषतः । तस्मात्तु ब्राह्मणो नित्यं विधिवत्पूजयेद्धरिम्
तच्चिह्नैरङ्कितः श्रीशपदं प्राप्नोत्यसंशयम् । शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहुमूलयोः ॥
हुताग्निनैव सन्तप्य सर्वपापापनुत्तये । चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ॥
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् । अग्नितप्तं पवित्रंच धृत्वा वै भुजमूलयोः ॥
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् । चक्रचिह्नविहीनस्तु यःपूजयतिकेशवम्
तत्सर्वं विफलं याति पूजामन्त्रजपादिकम् । अग्नितप्तेन चक्रेण ब्राह्मणोबाहुमूलयोः ॥
अङ्कयित्वाजपन्मन्त्रं संसारान्मोक्षमाप्नुयात् । सुदर्शनं धारयित्वावह्नितप्तं द्विजोत्तमः
तपनीयविधानेन पश्चात्कर्मसु योजयेत् । विष्णुचक्रविहीनंतु यः श्राद्धे भोजयिष्यति॥
व्यर्थं भवति तत्सर्वं निराशाःपितरो गताः । विष्णुचक्राङ्कितं विप्रं पूजयेच्छ्राद्धकर्मणि
विष्णुचक्रविहीनंतु प्रयत्नेन विवर्जयेत् । दद्याद्गोभूहिरण्यादिचक्राङ्कितभुजाय वै ॥३७
यद्दत्तं चक्रहीनाय तत्सर्वमसुराय वै । अग्नितप्तेन चक्रेण बाहुमूलेतु लाञ्छिताः ॥३८॥
सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् । हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम्
तस्य तीर्थानि यज्ञाश्च सम्प्राप्ता नाऽत्रसंशयः ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥ ४० ॥

न तस्य किञ्चिदश्नीयादपिक्रतुसहस्रिणः । अधृत्वा विधिना चक्रं ब्राह्मणो ज्ञानदुर्लभः
गर्हितस्सर्वलोकेषु ब्राह्मण्यात्प्रच्युतोभवेत् । शङ्खचक्रधरोदेवो हरिःपूज्योयथाऽऽत्मभिः
तथैव सर्वैस्सम्पूज्यो विप्रश्चक्रादिचिह्नितः । सर्ववेदविदो वाऽपि सर्वशास्त्रविशारदः॥
अधृत्वाविधिना चक्रं ब्राह्मणः पतितोभवेत् । ऊर्द्ध्वपुण्ड्रविहीनस्तु शङ्खचक्रविवर्जितः
तं गर्दभे समारोप्य बहिः कुर्यात्स्वपत्तनात् । प्रकृतिस्पर्शरहितो वासुदेवो जनार्दनः ॥
तथैव ब्राह्मणो देवि ! विष्णुचक्रेण चिह्नितः । तस्मात्प्रकृतिसंसर्गपापौघदहनं हरेः ॥
प्रतप्तं विभृयाच्चक्रं शङ्खंच भुजमूलयोः । स्त्रीशूद्राणां सदा धार्यं चन्दनेन सुगन्धिना॥
बाहुमूले लिखेच्चक्रं तप्तं तु ब्राह्मणस्य वै । तप्तेनैवाऽङ्कनं कुर्याद्ब्राह्मणस्य विधानतः ॥
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यैतथैवच । हरेः पूजाधिकारार्थं चक्रंधार्यंविधानतः
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यर्थमेव च । प्रतपेच्चक्रशङ्खाभ्यां हुत्वा होमं विधानतः
अन्यैर्न दाहयेद्गात्रं ब्राह्मणो हरिलाञ्छनात् । शङ्खचक्रगदाखड्गशार्ङ्गादन्यैर्हरेरपि ॥५१॥
लक्षणैर्न दहेद्देहं नान्यदग्धोऽर्हति क्रियाम् । अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ॥
श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् । वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम्

तस्मात्तु विधिना चक्रं धार्यं विप्रैः शुभानने ! ।
ब्राह्मणा मन्त्रसिद्ध्यै च ज्ञानसिद्ध्यै च मुक्तये ॥ ५४ ॥
अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः ।
विष्णुचक्रविहीनास्तु ब्राह्मणाः प्राकृताः स्मृताः ॥ ५५ ॥

सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः । विधिना वैष्णवं चक्रं धार्यंहि श्रुतिनोदनात्
दक्षिणंतु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्येतु शङ्खं बिभृयादिति ब्रह्मविदोविदुः
एवं महोपनिषदि प्रोक्तंचक्रादिधारणम् । तथैव साम्नि यजुषि ऋचि प्रोक्तं शुभानने!॥

अतप्ततनूर्नतदामो अश्नुते शृता स इद्वहन्तस्तत्समाशत ।
इत्यापस्तम्बशाखायाम्प्रोक्तं चक्रस्य धारणम् ॥ ५९ ॥
प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।
मूलेबाह्वोर्दधतेऽन्ये पुराणालिङ्गान्यङ्ग तावकान्यर्पयन्ति ॥ ६० ॥

चरणं पवित्रं विततं पुराणं वाङ्मयंशुभम् । तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधिम्
पवित्रं ब्राह्मणस्पत्यं जगद्व्याप्तं हरेस्सदा । तेनातप्ता तनूर्येषां न ते यान्ति परं पदम्
तेन तप्ता तनूर्येषां ते प्रयान्ति परं पदम् । पवित्रं चरणं नेमिः पविश्चक्रंसुदर्शनम् ॥६३
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् । नामानि विष्णुचक्रस्य पर्यायेण निबोध मे
शङ्खेन वह्नितप्तेन ब्रह्म तेन पुनीहि नः । यत्ते पवित्रमर्चिष्मदग्ने तेन पुनीहि नः ॥ ६५ ॥
येन देवाः पवित्रेण आत्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु माम्

प्राजापत्यं पवित्रन्तु शतोद्यामं हिरण्मयम् ।
वयं ब्रह्मविदस्तेन पूतं ब्रह्म पुनीमहे ॥ ६७ ॥

सनेमिचक्रमजरं चक्षुरस्य महात्मनः । अस्मिन्हि विधृते देहे महोन्नतपदं ययौ ॥६८॥
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः । ब्राह्मणानां विशेषेण वैष्णवानां विशेषतः

धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं याति विशुद्धचेताः ॥ ७० ॥
ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥

दिवस्पतेः सुविततं पवित्रं ये तु दक्षिणे । न वहन्ति भुजे सम्यङ्नहि शोचन्ति जन्तवः
येवहन्ति भुजेचक्रं शङ्खञ्च विधिना द्विजाः । परंव्योम्नितु ते स्थानमधितिष्ठन्ति तेजसा॥

होमाग्निसंतप्तपवित्रलाञ्छितो मूले तु बाह्वोः परमात्मनो हरेः ।
स तारयित्वा भवसागरं महच्छुद्धं परं याति परेशलोकम् ॥ ७४ ॥

अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु समङ्कयेत् ॥७५॥
इत्येवं श्रुतयः सर्वाः कथयन्ति वरानने ! तथैव सेतिहासेषु पुराणेष्वपि कथ्यते ॥७६
द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यन्तरं तथा । शङ्खचक्रादिभिर्बाह्यमान्तरं वीतरागता ॥
बाह्याभ्यन्तरसाम्यं यत्तद्वैष्णवमुदाहृतम् । तस्माच्चक्रादिचिह्नन्तु प्रथमं वैष्णवं स्मृतम्
आन्तरं स्मरदोषादि विमुक्तं स्वात्मदर्शनम् । सर्वभूतदयाशान्तिरिन्द्रियार्थेष्वलोलता॥
पुत्रदाराद्यसङ्गत्वं योगाभ्यासरतिस्तथा । अनन्यभक्तियोगेन परेशस्याऽभिषेवणम् ॥

तस्माच्चक्रादिहेतीनामङ्कनं वैष्णवं स्मृतम् । चक्रादिचिह्नहीनत्वाद्वैष्णवत्वं न लभ्यते॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादेसुदर्शनादिमाहात्म्यं नाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥२२४ ॥

# पञ्चविंशत्यधिकद्विशततमोऽध्यायः

## ऊर्ध्वपुण्ड्धारणविधिपूर्वकमूर्ध्वपुण्ड्माहात्म्यवर्णनम्

शङ्कर उवाच ।

ऊद्र्ध्वपुण्ड्रस्यमाहात्म्यं वक्ष्यामिशुभदर्शने !। धारणादेवमुच्येत भवबन्धाद्द्विजोत्तमः
ऊद्र्ध्वपुण्ड्रस्य मध्येतु विशाले सुमनोहरे । लक्ष्म्यासार्द्धं समासीनो देवदेवोजनार्दनः
तस्माद्यस्य शरीरेतु ऊद्र्ध्वपुण्ड्रं धृतं भवेत् । तस्य देहं भगवतो विमलं मन्दिरंशुभम्
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । धारयेदूर्ध्वपुण्ड्रं यो मृदा शुभ्रेण वैष्णवः ॥
ऊर्ध्वपुण्ड्रधरो विप्रः सर्वलोकेषु पूजितः । विमानवरमारुह्य याति विष्णोः परं पदम्
धारयेदूर्ध्वपुण्ड्रं तु त्रिसन्ध्यं तु द्विजोत्तमः । सर्वपापविशुद्ध्यर्थमिष्टापूर्तफलाप्तये ॥६
ऊद्र्ध्वपुण्ड्रधरं दृष्ट्वा सर्वपापैः प्रमुच्यते । नमस्कृत्वाऽथवा भक्त्या सर्वदानफलंलभेत्
ऊद्र्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति । आकल्पकोटिपितरस्तस्यतृप्तान संशयः
ऊद्र्ध्वपुण्ड्रधरोयस्तु कुर्याच्छ्राद्धंशुभानने !। कल्पकोटिसहस्राणि गयाश्राद्धफलंलभेत्
यज्ञदानतपश्चर्याजपहोमादिकं च यत् । ऊद्र्ध्वपुण्ड्रधरः कुर्यात्तस्य पुण्यमनन्तकम् ॥
ऊद्र्ध्वपुण्ड्रविहीनस्तु किञ्चित्कर्म करोतियः । इष्टापूर्तादिकंसर्व निष्फलं स्यान्नसंशयः
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम् । द्रष्टव्यं नैव तत्किञ्चिच्छ्मशानसदृशंभवेत्
ऊर्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्मादिकंचरेत् । तत्सर्वं राक्षसैर्नीतं नरकंचाऽधिगच्छति
ऊर्ध्वपुण्ड्रधरो विप्रो मृदा शुभ्रेण वैदिकः । न तिर्यग्धारयेद्विद्वानापद्यपि कदाचन ॥
विप्राणामूर्ध्वपुण्ड्रं स्यात्तिलकन्तु महीभृतः ।

पट्टाकारंतु वैश्यानां शूद्राणां वै त्रिपुण्ड्रकम् ॥ १५ ॥
ऊर्ध्वपुण्ड्रं मृदा कार्यं कस्तूर्यातिलकन्तथा । पट्टाकारंतु गन्धेन भस्मनैव त्रिपुण्ड्रकम्
ऊर्ध्वपुण्ड्रंतु सर्वेषांन निषिद्धं कदाचन । धारयेत्क्षत्त्रियाद्योऽपि विष्णुभक्तो भवेद्यदि
विप्राणां नैव कार्यंस्यात्तिर्यक्पट्टादिधारणम् । नारायणात्परेशानादन्येषामर्चनं न तु॥
ब्राह्मणः कुलजो विद्वान्भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि! मद्योच्छिष्टं घटं यथा
त्रिपुण्ड्रशूद्रकल्पानां शूद्राणाञ्च विधीयते । त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशयः
एकान्तिनो महाभागाः सर्वभूतहिते रताः । सान्तरालं प्रकुर्वीरन्पुण्ड्रं हरिपदाकृतिम्
हरेः पादाकृतिं कुर्यादूर्ध्वपुण्ड्रं विधानतः । मध्यच्छिद्रेण संयुक्तं तद्धि वै मन्दिरं हरेः
ऊर्ध्वपुण्ड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरम् ।
दण्डाकारं सुशोभाढ्यं मध्ये छिद्रं प्रकल्पयेत् ॥ २३ ॥
तस्माच्छिद्रान्वितंपुण्ड्रंदण्डाकारंसुशोभनम् । विप्राणांसततं कार्यंस्त्रीणांचशुभदर्शने!
ऊर्ध्वपुण्ड्रस्य मध्येतु विशाले सुमनोहरे । सान्तराले समासीनो हरिरस्तिश्रियासह॥
निरन्तरालंयः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । सहि तत्र स्थितंविष्णुं श्रियं चैव व्यपोहति
अच्छिद्रमूर्ध्वपुण्ड्रन्तु येकुर्वन्ति द्विजाधमाः । तेषां ललाटे सततं शुनः पादो न संशयः
तस्माच्छिद्रान्वितं पुण्ड्रं सहरिद्रं शुभान्वितम् ।
धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ॥ २८ ॥
आदाय परया भक्त्या वेङ्कटाद्रौ ह्रदे मृदम् । धारयेदूर्ध्वपुण्ड्राणि हरिसायुज्यसिद्धये॥
श्रीकृष्णतुलसीमूले मृदमादाय भक्तिमान् । धारयेदूर्ध्वपुण्ड्राणि हरिस्तत्र प्रसीदति ॥
द्वारवत्यां शुभे रम्ये वासुदेवह्रदे तथा । तत्रोद्भवां मृदं रम्यामादाय द्विजसत्तमः ॥३१॥
धारयेदूर्ध्वपुण्ड्राणि सर्वकामफलाप्तये । आदाय परया भक्त्या गङ्गातीरोद्भवां मृदम्
तयाधृत्वोर्द्धपुण्ड्राणि सर्वयज्ञफलं लभेत् । चन्दनं च हरिद्राच तथा भस्माग्निहोत्रजम्
सर्वं वश्यकरं प्रोक्तमूर्ध्वपुण्ड्रस्य धारणात् । यत्र पुण्यं हरिक्षेत्रं तत्रवै मृदमाहरेत् ॥
सैव श्रेयोऽर्थिभिर्ग्राह्या चोर्ध्वपुण्ड्रस्य धारणे । पर्वताग्रे नदीतीरे बिल्वमूले जलाशये
सिन्धुतीरेच वल्मीके हरिक्षेत्रे विशेषतः । विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः

पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् । श्रीरङ्गे वेङ्कटाद्रौच श्रीकूर्मे द्वारकेशुभे
प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने । गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैःसह

धृत्वा पुण्ड्राणि चाङ्गेषु विष्णुसायुज्यमाप्नुयात् ।
यस्मिन्कस्मिन्महाभागा वैष्णवा धारयन्ति वै ॥ ३६ ॥

तस्मिन्वैमृत्तिकाग्राह्या ऊर्ध्वपुण्ड्रस्यधारणे । श्यामं शान्तिकरं प्रोक्तंरक्तंवश्यकरं तथा
श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम् । वर्तुलं तिर्यगच्छिद्रं ह्रस्वंदीर्घं ततं तनुम्
वक्रं विरूपं बद्धाग्रछिन्नमूलं पदच्युतम् । अशुभंरूक्षमासक्तं तथाऽनङ्गुलिकल्पितम् ॥
विगन्धमपसव्यंच पुण्ड्रमाहुरनर्थकम् । आरभ्य नासिकामूलं ललाटान्तं लिखेन्मृदा ॥
समारभ्य भ्रुवोर्मध्यमन्तरालंप्रकल्पयेत् । अन्तरालंद्व्यङ्गुलं स्यात्पार्श्वावङ्गुलिमात्रकौ
मृदाशुभ्रेण चिलिखेत्पुण्ड्रं त्वृजुतरं शुभम् । ललाटे केशवं ध्यायेन्नारायणमथोदरे ॥
वक्षःस्थले माधवंच गोविन्दं कण्ठकूबरे । विष्णुंच दक्षिणे कुक्षौ बाहौच मधुसूदनम्
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके । श्रीधरं बाहुके वामे हृषीकेशन्तु कन्धरे ॥
पृष्ठे वै पद्मनाभन्तु त्रिके दामोदरं न्यसेत् । तत्प्रक्षालनतोयेन वासुदेवं तु मूर्द्धनि ॥
ललाटे भुजयुग्मे तु पृष्ठयोः कण्ठकूबरे । धारयेदूर्ध्वपुण्ड्रं तु चतुरङ्गुलमात्रतः ॥४६॥
कुक्षौ तत्पार्श्वयोः प्रोक्तमायतं तु दशाङ्गुलम् । बाह्वोर्वक्षः स्थलेपुण्ड्रमष्टाङ्गुलमुदाहृतम्

एवं द्वादशपुण्ड्राणि ब्राह्मणः सततं धरेत् ।
तत्तत्पुण्ड्रे तु तन्मूर्तीर्ध्यात्वा मन्त्रेण धारयेत् ॥५१ ॥

अन्तरालेषु सर्वेषु हरिद्रांधारयेच्छ्रियम् । चत्वारि भूभृतामाहुःपुण्ड्राणि द्वे विशांस्मृते
एकपुण्ड्रन्तु नारीणां शूद्राणांचविधीयते । ललाटे हृदि बाह्वोश्चचतुष्पुण्ड्राणिधारयेत्
ललाटे हृदये द्वे तु फालेत्वेकं विधीयते । ऊर्ध्वपुण्ड्रंललाटेतु सर्वेषां प्रथमं स्मृतम् ॥
ललाटादिक्रमेणैव धारणं तु विधीयते । मूर्तीस्तु वासुदेवाद्याश्चतुष्पुण्ड्रेषु धारयेत् ॥
द्वयोर्गोविन्दकृष्णौतु एकं नारायणंधरेत् । एवंपुण्ड्रविधिः प्रोक्तःसर्वेषां गिरिजे! मया
अश्वत्थपत्रसङ्काशो वेणुपत्राकृतिस्तथा । पद्मकुड्मलसङ्काशो मोहनं त्रितयं स्मृतम् ॥
महाभागवतः शुद्धः पुण्ड्रं हरिपदाकृतिम् । दण्डकारं तु वा देवि! धारयेदूर्ध्वपुण्ड्रकम्

सुदर्शनेनाऽङ्कितबाहुमूलास्तथोर्ध्वपुण्ड्राङ्कितसर्वगात्राः ।
मालारविन्दाक्षधरा विशुद्धा रक्षन्ति लोकान्दुरितौघसङ्गात् ॥ ५६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादऊर्ध्वपुण्ड्रमाहात्म्यं नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

# षड्विंशत्यधिकद्विशततमोऽध्यायः

## उमामहेश्वरसम्वादे ॐनमोनारायणेतिमन्त्रार्थोपदेशवर्णनम्

शङ्कर उवाच ।

न्यासे वाऽप्यर्चने वाऽपि मन्त्रमेकान्तिनः श्रयेत् ।
अवैष्णवोपदिष्टेन मन्त्रेण न परा गतिः ॥ १ ॥

अवैष्णवोपदिष्टं चेत्पूर्वं मन्त्रवरं द्वयम् । पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोः
सहस्रशाखाध्यायी वा सर्वयज्ञेषु दीक्षितः । कुले महति जातोऽपि न गुरुःस्यादवैष्णवः
यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः । स आचार्यस्तु विज्ञेयो भवबन्धविदारकः॥

आचार्यं संश्रयित्वाऽथ वत्सरं सेवयेद्द्विजः ।
तस्य वृत्तिं परिज्ञात्वा मन्त्रमध्यापयेद्गुरुः ॥ ५ ॥

कृत्वातापादिसंस्कारान्पश्चान्मन्त्रमुदीरयेत् । तापंपुण्ड्रं तथानामकृत्वावैविधिनागुरुः
पश्चादध्यापयेन्मन्त्रं शिष्यं निर्मलचेतसम् । चक्रेण विधिना तप्तं तापइत्यभिधीयते ॥
पुण्ड्रमूर्ध्वं तथा प्रोक्तं नाम वैष्णवमुच्यते । ततो मन्त्रविधानेन शिष्यमध्यापयेद्गुरुः
न्यासमष्टाक्षरं मन्त्रमन्यं वा वैष्णवं मनुम् । न्यासमेवाऽत्र परमं वैष्णवानां शुभानने
तस्मात्तु न्यासमेवैषामतिरिक्तमिहोच्यते । न्यासविद्यापरो यस्तु ब्राह्मणः श्रेष्ठउच्यते
न्यासात्परतरं नास्ति मन्त्रं सत्यं ब्रवीमिते । न्यासंद्वयं प्रपत्तिःस्यात्पर्यायेणनिबोधमे

द्वयोपदेशपूर्वं तु सर्वकर्म समाचरेत् । द्वयाधिकारी न भवेत्सर्वकर्मसु नाऽर्हति ॥१२॥
तस्माद्द्वयमधीत्यैव पश्चान्मन्त्रमनुत्तमम् । श्रीमदष्टाक्षरं सम्यगभ्यसेद्द्विजसत्तमः ॥
मन्त्रमष्टाक्षरं प्रोक्तं प्रणवस्यैव संग्रहात् । नैसर्गप्रणवाद्यं तु मन्त्रमित्युच्यते बुधैः ॥
नाऽन्यत्र सर्वमन्त्रेषु प्रणवः स्वस्वभावतः । पूर्वं तु सर्वमन्त्राणां योजयेत्प्रणवं शुभम्
ॐकारः प्रणवं ब्रह्म सर्वमन्त्रेषु नायकः । आदौ सर्वत्र गृह्णीत मन्त्राणां तु शुभानने !

स्वभावात्प्रणवस्तस्मिन्मूलमन्त्रो प्रतिष्ठितः ।
ओमित्येकाक्षरं पूर्वं द्व्यक्षरं नमइत्यथ ॥ १७ ॥

ततो नारायणायेति पञ्चार्णानि यथाक्रमम् । एवमष्टाक्षरो मन्त्रो ज्ञेयः सर्वार्थसाधकः
सर्वदुःखहरः श्रीमान्सर्वमन्त्रात्मकः शुभः । ऋषिर्नारायणस्तस्य देवता श्रीशएव च ॥
छन्दस्तु देवी गायत्री प्रणवो बीजमुच्यते । नित्यानपायिनीदेवी शक्तिःश्रीरुच्यतेमनोः
प्रथमं पदमोङ्कारो द्वितीयं नमउच्यते । तृतीयं नारायणायेति पदत्रयमुदाहृतम् ॥२१ ॥
अकारश्चाप्युकारश्च मकारश्च ततःपरम् । वेदत्रयात्मकं प्रोक्तं प्रणवं ब्रह्मणः पदम् ॥
अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते । मकारस्त्वनयोर्दासःपञ्चविंशःप्रकीर्तितः
वासुदेवस्वरूपं तदकारेणोच्यते बुधैः । उकारेण श्रियो देव्या रूपं मुनिभिरुच्यते ॥
मकारेणोच्यते जीवः पञ्चविंशोदितः पुमान् । भूतानि कवर्गेण चवर्गेणेन्द्रियाणि च॥
टवर्गेण तवर्गेण ज्ञानगन्धाद्यस्तथा । मनःपकारेणैवोक्तं फकारेण त्वहंकृतिः ॥ २६ ॥
बकारेण भकारेण महान्प्रकृतिरुच्यते । आत्मा तु समकारेण पञ्चविंशः प्रकीर्तितः ॥

देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
भगवच्छेषभूतोऽसौ मकाराख्यः सचेतनः ॥ २८ ॥

अवधारणवाच्येवमुकारः कैश्चिदुच्यते । श्रीतत्त्वमपि तत्पक्षे वकारेणैव चोच्यते ॥२६
भास्करस्य प्रभा यद्वत्तस्य नित्याऽनपायिनी । अकारेणोच्यतेविष्णुःकल्याणगुणसागरः
श्रीशः सर्वात्मनां शेषी जगद्बीजं परःपुमान् । जगत्कर्त्ताजगद्धर्त्ताईश्वरोलोकबान्धवः
जगतामीश्वरी नित्या विष्णोरनपगामिनी । माता सर्वस्य जगतः पत्नीविष्णोर्मनोरमा
जगदाधारभूता श्रीरुकारेणात्र चोच्यते । मकारेण तयोर्दासः क्षेत्रज्ञः प्रोच्यते बुधैः ॥

ज्ञानाश्रयो ज्ञानगुणश्चेतनः प्रकृतेः परः । न जडो निर्विकारश्च एकरूपस्वरूपभाक् ॥

अणुर्नित्यो व्याप्तिशीलश्चिदानन्दात्मकस्तथा ।

अहमर्थोऽव्ययः क्षेत्री भिन्नरूपः सनातनः ॥ ३५ ॥

अदाह्योऽच्छेद्यो ह्यक्लेद्यस्त्वशोष्योऽक्षरएव च । एवमादिगुणोपेतश्शेषभूतः परस्य वै
मकारेणोच्यते जीवः क्षेत्रज्ञः परवान्सदा । दासभूतो हरेरेव नान्यस्यतु कदाचन ॥
एवं दासत्वमेवाऽस्य मध्यमेनाऽवधार्यते । इत्येवं प्रणवस्यार्थो ज्ञातव्योक्तो मयाऽनघे
विवृतिः प्रणवस्यार्थमन्त्रशेषेण वै शुभे । परस्य दासभूतस्य स्वातन्त्र्यं नेह विद्यते ॥
तस्मान्ममत्वाहङ्कारौ नमसा विनिवर्त्तयेत् । स्वोपायबुद्ध्यायत्कृत्यंतदपिप्रतिषिध्यते
अहङ्कृतिर्मकारः स्यान्नकारस्तन्निषेधकः । तस्मात्तु नमसैवाऽस्य अहङ्कारविमोचनम्

नमसा सर्वसिद्धिः स्यादन्यथा नाशमाप्नुयात् ।

नमसा रहितं किञ्चित्तदहङ्कारउच्यते ॥ ४२ ॥

अहङ्कारेण युक्तस्य सुखं किञ्चिन्न विद्यते । अहङ्कारविमूढात्मा अन्धे तमसि मज्जति ॥
तस्मात्तु नमसा चाऽत्र स्वातन्त्र्यं प्रतिषिध्यते । भगवत्परतन्त्रोऽसौतदायत्तश्चजीवति
तस्मात्साधनकर्तृत्वं चेतनस्य न विद्यते । ईश्वरस्यैव संकल्पाद्वर्त्तते सचराचरम् ॥
तस्मात्स्वसामर्थ्यविधिं त्यजेत्सर्वमशेषतः । ईश्वरस्यतु सामर्थ्यान्नाऽलभ्यंतस्यविद्यते
तस्मिन्न्यस्तभरः शेतेतत्कर्मैव समाचरेत् । परमात्माहरिस्स्वामीस्वमहं तस्य सर्वदा
इच्छयाविनियोक्तव्यस्तस्यैवात्मेश्वरस्यहि । इत्येवं नमसाप्रोक्तश्चार्थस्तुममतोर्जितः ॥
देहेष्वहंमतिर्मूलं संसृतौ कर्मबन्धने । तस्मान्ममत्वाहङ्कारौ नमसा वर्जयेद्बुधः ॥ ४६
अथ नारायणपदं वक्ष्यामि गिरिजेशुभे !। नाराइत्यात्मनां सङ्घास्तेषां गतिरसौपुमान्
तएव चायनं तस्य तस्मान्नारायणःस्मृतः । सर्वं हि चिदचिद्वस्तुश्रूयते दृश्यते जगत्

योऽसौ व्याप्य स्थितो नित्यं स वै नारायणः स्मृतः ।

नाराश्चेति सर्वपुंसां समूहाः परिकीर्तिताः ॥ ५२ ॥

गतिरालम्बनं तेषां तस्मान्नारायणः स्मृतः । नराज्जातानितत्त्वानिनाराणीतिविदुर्बुधाः
तान्येव चायनं तस्य तेननारायणःस्स्मृतः । कल्पान्तेऽपिजगत्कृत्स्नंग्रसित्वायेनधार्यते

पुनः संसृज्यते येन स वै नारायणःस्मृतः । चराचरं जगत्कृत्स्नं नारइत्यभिधीयते ॥
तस्य वा सद्गतिर्येन तेन नारायणः स्मृतः । नारो नराणां सङ्घातस्तस्यासावयनं गतिः
तेनाऽसौ मुनिभिर्नित्यं नारायणइतीरितः । प्रभवन्ति यतो लोका महाब्धौपृथुफेनवत्
पुनर्यस्मिन्प्रलीयन्तेतस्मान्नारायणःस्मृतः । यो वै नित्यपदेनित्योनित्यमुक्तैकभोगवान्
ईशः सर्वस्य जगतः स वै नारायणःस्मृतः । नारायणः परं ब्रह्म तत्त्वं नारायणः परम्

यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ६० ॥

अपहतपाप्मा पुरुषः सर्वभूतान्तरस्थितः । दिव्यएकस्सदानित्यो हरिर्नारायणोऽच्युतः
यस्तु द्रष्टा च द्रष्टव्यं श्रोताश्रोतव्यमेव च । स्प्रष्टा चस्पर्शितव्यंचध्याताध्यातव्यमेवच
वक्ता च वाच्यं ज्ञाता च ज्ञातव्यं चिदचिज्जगत् । तच्चसर्वंहरिःश्रीशोनारायणउदाहृतः
सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । स लोकान्सर्वतो व्याप्य अत्यतिष्ठद्दशाङ्गुलम्
यद्भूतं यच्च भव्यं तत्सर्वं नारायणो हरिः । उतामृतत्वस्येशानो यदन्नेनाऽतिरोहति ॥
स एव पुरुषो विष्णुर्वासुदेवोऽच्युतोहरिः । हिरण्मयोऽथभगवानमृतः शाश्वतः शिवः
पतिर्विश्वस्य जगतः सर्वलोकेश्वरः प्रभुः । हिरण्यगर्भः सविता अनन्तोऽसौ महेश्वरः॥
भगवानितिशब्दोऽयं तथापुरुषइत्यपि । वर्त्तन्ते निरुपाधौ च वासुदेवेऽखिलात्मनि ॥
ईश्वरो भगवान्विष्णुः परमात्मा जगत्सुहृत् । शास्ता चराचरस्यैकोथर्तानांपरमागतिः
यो वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः

योऽसावकारो वै विष्णुर्योऽसौ नारायणो हरिः ।
स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ ७१ ॥

तस्यांशभूतमैश्वर्यं यस्मिन्कस्मिंश्च वर्तते । तस्मिन्नीश्वरशब्दोऽपि प्रोच्यतेमुनिभिस्तथा
निरुपाधीश्वरत्वं हि वासुदेवे प्रतिष्ठितम् । आत्मेश्वरइति प्रोक्तो वेदवादैः सनातनैः ॥
तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् । असौ त्रिपाद्विभूतेस्तु लीलायाअपिचेश्वरः
विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः । श्रीभूनीलापतिर्योऽसावीश्वरस्स उदाहृतः ॥
तस्मात्सर्वेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् । असौ यज्ञेश्वरो यज्ञो यज्ञभुग्यज्ञकृद्विभुः ॥

यज्ञभृद्यज्ञपुरुषः स एव परमेश्वरः ॥ ७६ ॥

यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।

तत्संनिधानादपयान्ति सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥ ७७ ॥

योऽसौ विराट्त्वमापन्नो हरिर्भूत्वाजनार्दनः । सन्तर्पयति लोकांस्त्रीन्स एव परमेश्वरः
यत्पुरुषेण हविषा देवा यज्ञमतन्वत । तस्माद्यज्ञात्समुत्पन्ना ये के चोभयादतः ॥७६ ॥
तस्माद्यज्ञात्सर्वहुतऋचः सामानि जज्ञिरे । तस्मादश्वा अजायन्त गावश्च पुरुषादयः ॥
पुरुषस्य तनोरस्य सर्वयज्ञमयस्य वै । हरेः सर्वं समुद्भूतं जगत्स्थावरजङ्गमम् ॥८२॥
मुखबाहूरुपादाः स्युस्तस्य वर्णा यथाक्रमम् । पद्भ्यांतुपृथिवीतस्यशिरसो द्यौरजायत
मनसश्चन्द्रमा जातश्चक्षुषश्च प्रभाकरः । मुखादग्निःसहस्राक्षो वायुः प्राणात्सदागतिः
नाभेर्विरिञ्चिर्गगनं जगत्सर्वं चराचरम् । यस्मात्सर्वं समुद्भूतं जगद्विष्णोःसनातनात्
तस्मात्सर्वमयो विष्णुर्नारायण इतीरितः । एवं सृष्ट्वा जगत्सर्वं पुनः संग्रसते हरिः ॥
निजलीलासमुद्भूतं तान्तवंचोर्णनाभिवत् । ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च ॥
निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते । असावेकार्णवीभूते मायावटतले पुमान् ॥

जगत्स्वजठरे कृत्वा शेते तस्मिन्सनातनः ।

आसीदेको हि वै चाऽत्र विष्णुर्नारायणोऽच्युतः ॥ ८८ ॥

न ब्रह्मा न च रुद्रश्च न देवा न महर्षयः । नेमे द्यावापृथिव्यौ च न सोमोनचभास्करः
न नक्षत्राणि लोकाश्च न चाण्डंमहदावृतम् । यस्माज्जगद्धृतं तेन सकलं हरिणा शुभे!
सृष्टं पुनस्तथा सर्गेतस्मान्नारायणःस्मृतः । तस्य दास्यंचतुर्थ्यातुमन्त्रेप्रोक्तंतुपार्वति!
दासभूतमिदं तस्य ब्रह्माद्यं सकलंजगत् । एवमर्थं विदित्वा वै पश्चान्मन्त्रं प्रयोजयेत्

अविदित्वा तु मन्त्रार्थं सिद्धिं नैवाऽधिगच्छति ।

न तु भुक्तिं च भक्तिं च न च मुक्तिं वरानने ! ॥ ६३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे
मन्त्रार्थोपदेशो नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

## सप्तविंशत्यधिकद्विशततमोऽध्यायः

### उमामहेश्वरसम्वादे भागवतो नारायणस्य त्रिपाद्विभूतिवर्णनम्

पार्वत्युवाच ।

विस्तरेण ममाऽऽचक्ष्व मन्त्रार्थपदगौरवम् । ईश्वरस्यस्वरूपं च तद्विभूतिगुणांस्तथा ॥१॥
तद्विष्णोः परमं धाम व्यूहभेदांस्तथा हरेः । सर्वमाख्याहि तत्त्वेन मम सर्वसुरेश्वर ! ॥२॥

ईश्वर उवाच ।

शृणु देवि ! प्रवक्ष्यामि स्वरूपं परमात्मनः । विभूतिगुणसङ्घातं तदवस्थात्मकं हरेः ॥३॥
यः परः पुरुषो विष्णुर्नारायण उदाहृतः । स ईश्वरश्च जगतां परमात्मा सनातनः ॥४॥

विश्वतः पाणिपादश्च चक्षुष्मान्विश्वतः प्रभुः ।
विश्वानि भुवनान्यस्मिन्धामानि परमाणि वै ॥ ५ ॥

धारयन्सोऽप्यत्यतिष्ठन्मनांसि च मनीषिणाम् । एवं बृहत्स्वरूपोऽयंश्रीपतिःपुरुषोत्तमः

ईश्वर्या सह भोगार्थं दिव्यमङ्गलरूपवान् ॥ ६ ॥
बृहच्छरीरोऽग्निसमानरूपो युवा कुमारत्वमुपेयिवान्हरिः ।
रेमे श्रियाऽसौ जगतां जनन्या स्वज्योत्स्नया चन्द्रइवाऽमृतांशुः॥ ७ ॥

अयं च जगदीश्वर्या कुमारो नित्ययौवनः । कन्दर्पकोटिलावण्यः सन्तस्थे परमे पदे ॥८॥
भोगार्थं परमं व्योमलीलार्थमखिलं जगत् । भोगेनक्रीडयाविष्णोर्विभूतिद्वयसंस्थितिः
भोगे नित्यस्थितिस्तस्य लीलां संहरते कदा । भोगो लीलाद्वयौतस्यधार्येतेशक्तिमत्तया

त्रिपाद्व्याप्तिः परे धाम्नि पादोऽस्येहाऽभवत्पुनः ।
त्रिपाद्विभूतिर्नित्या स्यादनित्यं पादमैश्वरम् ॥ ११ ॥

नित्यं तद्रूपमीशस्य परे धाम्निस्थितं शुभम् । अच्युतं शाश्वतं दिव्यंसदायौवनमाश्रितम्

नित्यं सम्भोगमीश्वर्या श्रिया भूम्या च सम्वृतम् ।
नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ॥ १२ ॥

यथासर्वगतो विष्णुस्तथालक्ष्मीश्शुभानने !। ईशाना सर्वजगतो विष्णुपत्नी सदाशिवा
सर्वतः पाणिपादान्ता सर्वतोऽक्षिशिरोमुखी । नारायणी जगन्माता समस्तजगदाश्रया
यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम् । जगत्स्थितिलयौ यस्याउन्मीलननिमीलनात्

सर्वस्याऽऽद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ।
लक्ष्या लक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥ १७ ॥

शून्यं तदखिलं विश्वं विलोक्य परमेश्वरी । शून्यं तदखिलं स्वेन पूरयामास तेजसा ॥
सा लक्ष्मीर्धरणी चैव नीलादेवीति विश्रुता । आधारभूता जगतः पृथिवीरूपमाश्रिता
तोयादिरसरूपेण सैव नीलावपुर्भवेत् । लक्ष्मीरूपत्वमापन्ना धनवाग्रूपिणी हि सा ॥
एवंदेवीस्वरूपासा जगतः श्रीःश्रिता हरिम् । समस्तविद्याभेदाः स्युर्लक्ष्मीरूपा वरानने!
श्रीरूपमखिलं सर्वंतस्या हि वपुरुच्यते । सौन्दर्यशीलवृत्तंच सौभाग्यं स्त्रीषु संस्थितम्

तस्या रूपं च गिरिजे ! सर्वासां मूर्ध्नि योषिताम् ॥२२ ॥
यस्याः कटाक्षायुतभागदृष्ट्या ब्रह्मा शिवस्स्वर्गपतिर्महेन्द्रः
चन्द्रश्चसूर्यो धनदो यमोऽग्निः प्रभूतमैश्वर्यमवाप्नुवन्ति ॥ २३ ॥

लक्ष्मीःश्रीःकमला विद्यामाताविष्णुप्रियासती । पद्मालयापद्महस्ता पद्माक्षीलोकसुन्दरी
भूतानामीश्वरी नित्या सत्या सर्वगता शुभा । विष्णुपत्नी महादेवी क्षीरोदतनयारमा
अनन्ता लोकमाता भूर्नीला सर्वसुखप्रदा । रुक्मिणीच तथा सीता सर्वावेदवती शुभा

सती सरस्वती गौरी शान्तिः स्वाहा स्वधा रतिः ।
नारायणी वरारोहा विष्णोर्नित्यानपायिनी ॥ २७ ॥

एतानि पुण्यनामानि प्रातरुत्थाय यःपठेत् । स महाश्रियमाप्नोति धनधान्यमकल्मषम्
हिरण्यवर्णांहरिणीं सुवर्णरजतस्रजाम् । चन्द्रांहिरण्मयीं लक्ष्मीं विष्णोरनपगामिनीम्
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्
एवमृक्संहितायांतु स्तूयमानामहेश्वरी । सर्वैश्वर्यसुखं प्रादाच्छिवादीनां दिवौकसाम्
अस्येशाना हि जगतो विष्णुपत्नी सनातनी । यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम्॥
यस्य वक्षसि सा देवी प्रभाभ्राविव तिष्ठति । स वै सर्वेश्वरः साक्षादक्षरःपुरुषोऽव्ययः

स वै नारायणः श्रीमान्वात्सल्यगुणसागरः ।
स्वामी सुशीलः सुभगःसर्वज्ञः सर्वशक्तिमान् ॥ ३४ ॥
नित्यं सम्पूर्णकामश्च नैसर्गिकसुहृत्सखा । कृपापीयूषजलधिः शरणं सर्वदेहिनाम् ॥
स्वर्गापवर्गसुखदो भक्तानां करुणाकरः । श्रीमतेविष्णवे तस्मै दास्यं सर्व करोम्यहम्
देशकालाद्यवस्थासु सर्वासु कमलापतेः । इतिस्वरूपसंसिद्धः सुखं दास्यमवाप्नुयात्
एवं विदित्वा मन्त्रार्थं तद्भक्तिं सम्यगाचरेत् । दासभूतमिदं तस्य जगत्स्थावरजङ्गमम्
श्रीमन्नारायणः स्वामी जगतां प्रभुरीश्वरः । मातापिता सुतो बन्धुर्निवासःशरणंगतिः
कल्याणगुणवाञ्छ्रीशः सर्वकामफलप्रदः । योऽसौ निर्गुणइत्युक्तः शास्त्रेषुजगदीश्वरः
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते । यत्र मिथ्याप्रपञ्चत्वं वाक्यैर्वेदान्तगोचरैः ॥४१॥
दृश्यमानमिदं सर्वमनित्यमिति चोच्यते । अत्राऽतिप्राकृतं रूपमण्डस्यैव विनाशनात्
प्राकृतानांहि रूपाणामनित्यत्वं तथोच्यते । इदमण्डं महादेवि ! प्रकृतेरुद्भवं हरेः॥४३॥
क्रीडार्थं देवदेवस्य विष्णोर्लीलाधिकारिणः । लोकैश्चतुर्भिर्दशभिः सागरैर्द्वीपसंयुतैः
भूतैश्चतुर्विधैश्चाऽपि भूधरैश्च महोच्छ्रयैः । परिपूर्णमिदं रम्यमण्डं प्रकृतिसम्भवम् ॥
दशोत्तरगुणोपेतंसप्तावरणसम्वृतम् । कलाकाष्ठादिरूपेण यः कालः परिवर्त्तते ॥४६॥
कालेनैव जगत्सर्गस्थितिसंहरणं भवेत् । चतुर्युगसहस्रं वै ब्राह्मणो दिवसो भवेत् ॥
तावन्ति रात्रिवर्षाणि ब्रह्मणोऽव्यक्तजन्मनः । क्षये तु ब्रह्मणः प्राप्ते सर्वसंहरणं भवेत्
अण्डमण्डगता लोका दह्यन्ते कालवह्निना ।
सर्वात्मानस्तथा विष्णोः प्रकृतौ विनिवेशिताः ॥ ४९ ॥
अण्डावरणभूतानि प्रकृतौ लयमाप्नुयुः । सा सर्वजगदाधारा प्रकृतिर्हरिसंश्रिता ॥५०
तया जगत्सर्गलयौ करोति भगवान्सदा । क्रीडार्थं देवदेवेन सृष्टा माया जगन्मयी ॥
अविद्याप्रकृतिर्माया गुणत्रयमयी सदा । सर्गस्थितिलयानां सा हेतुभूता सनातनी ॥
योगनिद्रामहामायाप्रकृतिस्त्रिगुणान्विता । अव्यक्तंच प्रधानंच विष्णोर्लीलाविकारिणः
जगत्सर्गलयौस्यातां प्रकृतेरेवसर्वदा । असङ्ख्यं प्रकृतेःस्थानं निबिडध्वान्तमव्ययम्
ऊर्ध्वं तु सीम्नि विरजा निस्सीमाऽधस्सनातनी ।

तयाऽऽवृतं जगत्सर्वं स्थूलसूक्ष्माद्यवस्थया ॥ ५५ ॥
विकाससङ्कोचावस्थे तस्यां सर्गलयौ स्मृतौ । एवंसर्वाणि भूतानि प्रकृत्यन्तर्गतानिवै
ततः शून्यमिदं सर्वं प्रकृत्यन्तर्गतं महत् । एवं प्रकृतिरूपाया विभूते रूपमुत्तमम् ॥५७॥
त्रिपाद्विभूतिरूपंतु शृणु भूधरनन्दिनि ! प्रधानपरमव्योम्नोरन्तरा विरजा नदी ॥ ५८॥
वेदाङ्गस्वेदजनिततोयैः प्रस्राविताशुभा । तस्याः पारेपरे व्योम्नि त्रिपाद्भूतिस्सनातनी
अमृतं शाश्वतं नित्यमनन्तं परमं पदम् । शुद्धसत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् ॥६०
अनेककोटिसूर्याग्नितुल्यवर्चसमव्ययम् । सर्ववेदमयं शुद्धं सर्गप्रलयवर्जितम् ॥ ६१ ॥
क्षुत्पिपासादिरहितं नित्यतृप्तं निरञ्जनम् । असङ्ख्यमजरं नित्यं जाग्रत्स्वप्नादिवर्जितम्
हिरण्मयं मोक्षपदं ब्रह्मानन्दसुखावहम् । समानाधिक्यरहितमाद्यन्तरहितं शुभम् ॥६३
अमत्सरमनालस्यमक्रोधं भयवर्जितम् । तेजसाऽत्यद्भुतं रम्यं नित्यमानन्दसागरम् ॥
एवमादिगुणोपेतं तद्विष्णोः परमं पदम् । न तद्भासयते सूर्यो न शशाङ्को न पावकः॥
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । तद्विष्णोः परमं धाम शाश्वतं नित्यमच्युतम्
न हि वर्णयितुं शक्यं कल्पकोटिशतैरपि ॥ ६६ ॥

हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रसङ्घैः ।
यस्मिन्पदे ह्यच्युतईश्वरो यः सन्वङ्ग वेद यदि वा न वेद ॥६७॥
यदक्षरं वेदगुह्यं यस्मिन्देवा अधिविश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति ये तद्विदुस्त इमे समासते ॥ ६८ ॥

तद्विष्णोःपरमं धामसदा पश्यन्ति सूरयः । अक्षरंशाश्वतं दिव्यं दिविचक्षुरिवाऽऽततम्
तत्प्रवेष्टुमशक्यं च ब्रह्मरुद्रादिदैवतैः । ज्ञानेन शास्त्रमार्गेण वीक्ष्यते योगिपुङ्गवैः ॥७०
अहं ब्रह्मा च देवाश्च न जानन्ति महर्षयः । सर्वोपनिषदामर्थं दृष्ट्वा वक्ष्यामि सुव्रते! ॥
विष्णोः पदेहि परमे मध्वउत्स शुभाश्रयः । यत्रगावो भूरिशृङ्गा आसतेसुसुखाःप्रजाः
अत्राऽऽह तत्परंधाम गायमानस्य शार्ङ्गिणः । तद्भाति परमंधाम गोभिर्गोपैस्सुखाह्वयैः
आदित्यवर्णं तमसः परस्ताज्ज्योतिरच्युतम् ।
अथाऽतो ब्रह्मणो लोकश्शुद्धसत्त्वस्सनातनः ॥ ७४ ॥

सामान्याविधितेभूमिरतेऽस्मिञ्छाश्वतेपदे। तस्थतुजागरूकेऽस्मिन्युवानौश्रीसनातनौ
उतस्वसारौ युवती भूनीले विष्णुवल्लभे। यत्र पूर्वे ये च साध्या विश्वेदेवास्सनातनाः
ते हनाकं महिमानस्सचन्ते शुभदर्शनाः। तत्र विज्ञानिनो विप्रा जागृवांसस्समिन्धते
तत्पदं ज्ञानिनो विप्रा यान्ति संवासमिच्छवः। तद्विष्णोः परमंधाममोक्षइत्यभिधीयते

तस्मिन्बन्धविनिर्मुक्ताः प्राप्नुवन्ति सुखं पदम्।
तत्प्राप्य न निवर्तन्ते तस्मान्मोक्ष उदाहृतः ॥ ७६ ॥

मोक्षं परम्पदं दिव्यममृतं विष्णुमन्दिरम्। अक्षरं परमं धाम वैकुण्ठं शाश्वतं पदम् ॥
नित्यं च परमं व्योम सर्वोत्कृष्टंसनातनम्। पर्यायवाचकान्यस्यपरधाम्नोऽच्युतस्य च

तस्य त्रिपाद्विभूतेस्तु रूपं वक्ष्यामि विस्तरात् ॥ ८१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसंवादे त्रिपाद्विभूतिकथनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

# अष्टाविंशत्यधिकद्विशततमोऽध्यायः

## त्रिपाद्विभूतिस्थलोकानाम्वर्णनम्

श्रीमहादेव उवाच।

त्रिपाद्विभूतेर्लोकास्तु असङ्ख्याताःप्रकीर्तिताः। शुद्धसत्त्वमयाःसर्वेब्रह्मानन्दसुखाह्वयाः
सर्वे नित्या निर्विकारा हेयरागादिवर्जिताः। सर्वे हिरण्मयाश्शुद्धाःकोटिसूर्यसमप्रभाः
सर्वे वेदमया दिव्याः कामक्रोधविवर्जिताः। नारायणपदाम्भोजभक्त्येकरससेविताः॥
निरन्तरं सामगानपरिपूर्णसुखाश्रिताः। सर्वे पञ्चोपनिषदस्वरूपा वेदवर्चसः ॥ ४ ॥
सर्वेवेदमयैर्दिव्यैः पुरुषैः स्त्रीभिरावृताः। वेदैकरसतोयाढ्यैस्सरोभिरुपशोभिताः ॥५॥
श्रुतिस्मृतिपुराणादिरूपस्थावरसंयुताः। सर्वं वर्णयितुं शक्यं न मया लोकविस्तृतम् ॥

विरजापरमव्योम्नोरन्तरा केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
स्वात्मानुभवजानन्दसुखदं केवलम्पदम् । निःश्रेयसं च निर्वाणं कैवल्यं मोक्षउच्यते ॥
श्रीशाङ्घ्रिभक्तिसेवैकरसभोगविवर्जिताः । तदिच्छन्त्यल्पमतयो मोक्षं सुखविवर्जितम्
महात्मानो महाभागा भगवत्पादसेवकाः । तद्विष्णोः परमं धाम यान्ति ब्रह्मसुखप्रदम्
नानाजनपदाकीर्णं वैकुण्ठं तद्धरेः पदम् । प्राकारैश्च विमानैश्च सौधैरत्नमयैर्वृतम् ॥
तन्मध्येनगरीदिव्यासाऽयोध्येतिप्रकीर्तिता । मणिकाञ्चनचित्राढ्यप्राकारैस्तोरणैर्वृताः
चतुर्द्वारसमायुक्ता रत्नगोपुरसम्वृता । चण्डादिद्वारपालैश्च कुमुदाद्यैश्च रक्षिता ॥१३॥
चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ । वारुण्यां जयविजयौसौम्येधातृविधातरौ
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथवामनः । शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥
एते दिक्पतयः प्रोक्ताः पुर्यामत्र शुभानने !। कोटिवैश्वानरप्रख्यगृहपङ्क्तिभिरावृता ॥
आरूढयौवनैर्नित्यैर्दिव्यनारीनरैर्युता । अन्तःपुरं तु देवस्य मध्ये पुर्या मनोहरम् ॥१७॥
मणिप्राकारसंयुक्तं रत्नतोरणशोभितम् । विमानैर्गृहमुख्यैश्च प्रासादैर्बहुभिर्युतम् ॥१८॥

दिव्याप्सरोगणैः स्त्रीभिस्सर्वतस्समलङ्कृतम् ।
मध्ये तु मण्डपं दिव्यं राजस्थानं महोच्छ्रयम् ॥ १९ ॥

माणिक्यस्तम्भसाहस्रजुष्टं रत्नमयं शुभम् । दिव्यैर्मुक्तैःसमाकीर्णसामगानोपशोभितम्
मध्ये सिंहासनं रम्यं सर्ववेदमयं शुभम् । धर्मादिदैवतैर्नित्यैर्वृतं पादमयात्मकैः ॥२१॥
धर्मज्ञानमहैश्वर्यवैराग्यैः पादविग्रहैः । ऋग्यजुःसामाथर्वाख्यरूपैर्नित्यवृतं क्रमात् ॥२२
शक्तिराधारशक्तिश्च चिच्छक्तिश्च सदाशिवा । धर्मादिदेवतानां च शक्तयः परिकीर्तिताः
वसन्ति मध्यमे तत्र वह्निसूर्यसुधांशवः । कूर्मश्च नागराजश्च वैनतेयस्त्रयीश्वरः ॥ २४ ॥
छन्दांसि सर्वमन्त्राश्च पीठरूपत्वमास्थिताः । सर्वाक्षरमयं दिव्यं योगपीठमितिस्मृतम्
तन्मध्येऽष्टदलं पद्ममुदयाऽर्कसमप्रभम् । तन्मध्ये कर्णिकायां तु सावित्र्यां शुभदर्शने! ॥
ईश्वर्या सह देवेशस्तत्रासीनः परः पुमान् । इन्दीवरदलश्यामः कोटिसूर्यप्रकाशवान् ॥
युवा कुमारः स्निग्धश्च कोमलावयवैर्वृतः । फुल्लरक्ताम्बुजनिभः कोमलाङ्घ्रिसरोजवान्
प्रबुद्धपुण्डरीकाक्षः सुभ्रूलतायुगाङ्कितः । सुनासस्सुकपोलाढ्यस्सुश्रोत्रमुखपङ्कजः ॥

मुक्ताफलाभदन्ताढ्यः समिस्ताधरविद्रुमः । परिपूर्णेन्दुसङ्काशसुस्मिताननपङ्कजः ॥३०

तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजितः ।

सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितः ॥ ३१ ॥

मन्दारपारिजाताढ्य कबरीकृतकेशवान् । प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितः ॥३२

हारस्वर्णस्रगासक्तकम्बुग्रीवाविराजितः । सिंहस्कन्धनिभैः प्रोच्चैः पीनैरंसैर्विराजितः

पीनवृत्तायतभुजैश्चतुर्भिरुपशोभितः । अङ्गुलीयैश्च कटकैः केयूरैः परिमण्डितः ॥ ३४ ॥

बालार्ककोटिसङ्काशैः कौस्तुभाद्यैः सुभूषणैः । विराजितमहावक्षोवनमालाविभूषितः॥

विधातृजननस्थाननाभिपङ्कजशोभितः । बालातपनिभश्लक्ष्णपीतवस्त्रसमन्वितः ॥३६॥

नानारत्नविचित्राङ्घ्रिः कटकाभ्यां विराजितः ।

सज्योत्स्नचन्द्रप्रतिमनखपङ्क्तिसमन्वितः ॥ ३७ ॥

कोटिकन्दर्पलावण्यसौन्दर्यनिधिरच्युतः । दिव्यचन्दनलिप्ताङ्गो दिव्यमालाविभूषितः ॥

गृहीतशङ्खचक्राभ्यामुद्बाहुभ्यां विराजितः । वरदाभयहस्ताभ्यामितराभ्यां तथैव च ॥

वामाङ्के संस्थिता देवी महालक्ष्मीर्महेश्वरी । हिरण्यवर्णा हरिणी सुवर्णरजतस्रजा ॥

सर्वलक्षणसम्पन्ना यौवनारम्भविग्रहा । रत्नकुण्डलसंयुक्ता नीलकुञ्चितशीर्षजा ॥४१ ॥

दिव्यचन्दनलिप्ताङ्गी दिव्यपुष्पोपशोभिता । मन्दारकेतकीजातीपुष्पाञ्चितसुकुन्तला ॥

सुभ्रूस्सुनासासुश्रोणी पीनोन्नतपयोधरा । परिपूर्णेन्दुसङ्काशसुस्मिताननपङ्कजा ॥४३॥

तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजिता । तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा

हस्तैश्चतुर्भिः संयुक्ता कनकाम्बुजभूषिता । नानाविचित्ररत्नाढ्या कनकाम्बुजमालया॥

हारकेयूरकटकैरङ्गुलीयैश्च शोभिता । भुजद्वयधृतोदग्रपद्मयुग्मोपशोभिता ॥ ४६ ॥

गृहीतमातुलुङ्गाख्यजाम्बूनदकराञ्चिता । एवं नित्यानपायिन्या महालक्ष्म्या महेश्वरः ॥

मोदते परमे व्योम्नि शाश्वते सर्वदा प्रभुः । पार्श्वयोर्धरणीनीले समासीने शुभासने ॥

अष्टदिक्षु दलाग्रेषु विमलाद्याश्च शक्तयः । विमलोत्कर्षिणी ज्ञाना क्रियायोगा तथैव च

प्रह्वा सत्या तथेशाना शक्तयःपरमात्मनः । गृहीत्वाचामरान्दिव्यान्सुधाकरसमप्रभान्

सर्वलक्षणसम्पन्नाः सेवन्ते पतिमच्युतम् । दिव्याप्सरोगणाःपञ्चशतसङ्ख्याश्चयोषितः ॥

अन्तःपुरनिवासिन्यः सर्वाभरणभूषिताः । पद्महस्ताश्च ताः सर्वाः कोटिवैश्वानरप्रभाः
सर्वलक्षणसम्पन्नाःशीतांशुसदृशाननाः । ताभिः परिवृतो राजा शुशुभे परमःपुमान् ॥
अनन्तविहगाधीशसेनान्याद्यैस्सुरेश्वरैः । अन्यैः परिजनैर्नित्यैर्मुक्तैश्च परिसम्वृतः ॥५४
मोदते रमया सार्द्धं भोगैश्वर्यरतः पुमान् । एवं वैकुण्ठनाथोऽसौ राजते परमे पदे ॥

तद्व्यूहभेदाँल्लोकांश्च वक्ष्यामि गिरिजे शुभे ! ।
प्राच्यांवैकुण्ठलोकस्य वासुदेवस्यमन्दिरम् ॥ ५६ ॥
आग्नेय्यांलक्ष्म्यालोकस्तुयाम्यांसंकर्षणालयः ।
सारस्वतस्तुनैर्ऋत्यांप्राद्युम्नः पश्चिमे तथा ॥ ५७ ॥

रतिलोकस्तुवायव्यामुदीच्यामनिरुद्धभूः।ऐशान्यांशान्तिलोकःस्यात्प्रथमावरणंम्मृतम्
केशवादिचतुर्विशत्यमी लोकास्ततः क्रमात् । द्वितीयावरणंप्रोक्तं वैकुण्ठस्य शुभाह्वयम्
मत्स्यकूर्मादिलोकास्तुतृतीयावरणं शुभम् । सत्याच्युतानन्तदुर्गाविष्वक्सेनगजाननाः
शङ्खपद्मनिधीलोकाश्चतुर्थावरणं शुभम् । ऋग्यजुःसामाथर्वाणो लोका दिक्षुमहत्सु च
सावित्र्या विहगेशस्य धर्मस्य च मखस्य च । पञ्चमावरणंप्रोक्तमक्षयंसर्ववाङ्मयम् ॥
शङ्खचक्रगदापद्मखड्गशार्ङ्गहलं तथा । मौशलं च तथा लोकाः सर्वशस्त्रास्त्रसंयुताः ॥
षष्ठमावरणं प्रोक्तं मन्त्रास्त्रमयमक्षरम् । ऐन्द्रपावकयाम्यानि नैर्ऋतं वारुणं तथा ॥
वायव्यं सौम्यमैशानं सप्तमं मुनिभिःस्मृतम् । साध्यामरुद्गणाश्चैवविश्वेदेवास्तथैव च
नित्याः सर्वेपरेधाम्नियेचान्येचदिवौकसः । ते वै प्राकृतलोकेऽस्मिन्ननित्यास्त्रिदशेश्वराः
तेहनाकं महिमानः सचन्तइति वै श्रुतिः । एवं परं पदं नित्यैर्मुक्तैर्भोगपरायणैः ॥६७॥
दिव्याभिर्महिषीभिश्च राजते विभुरीश्वरः । न तद्भासयते सूर्यो न शशाङ्को न पावकः
यद्गत्वा न निवर्त्तन्ते योगिनः संशितव्रताः । द्वयैकमन्त्रनिष्ठा ये ते वै यान्तितदव्ययम्
न वेदयज्ञाध्ययनैर्नदानैर्न व्रतैः शुभैः । न तपोभिर्निराहारैर्न च साधनकर्मभिः ॥ ७० ॥
एकेन द्वयमन्त्रेण तथा भक्त्या त्वनन्यया । तद्रम्यं शाश्वतंस्थानंप्रपत्त्या वै सनातनम्

पार्वत्युवाच ।

साधूक्तं परमं स्वर्गस्वरूपं भवता प्रभो !। परव्योम्निस्थितो नित्यं कथं प्रकृतिमण्डले

स्थितवान्किन्निमित्तेन लीलया किं प्रयोजनम् । शुद्धसत्त्वमये लोके संस्थितः परमेश्वरः
कथं रजस्तमोमिश्रविभूत्यां स्थितवान्प्रभुः ॥ ७३ ॥

रुद्र उवाच ।

त्रिपाद्विभूतौ भगवानीश्वर्या परमेश्वरः । नित्यमुक्त्यैकभोग्योऽसौ मोदते सततंविभुः
तमीश्वरं महामायाप्रकृतिर्जगदाश्रया । कृताञ्जलिपुटा भूत्वा तुष्टाव परमेश्वरम् ॥७५॥

महामायोवाच ।

नमस्ते त्रिजगद्धाम्ने नमस्ते विश्वरूपिणे । पुराणाय नमस्तुभ्यं जगदुत्पत्तिहेतवे ॥
श्रीभूलीलाधिपतये नमो नारायणाय च । नमो भगवते तुभ्यं वासुदेवाय शार्ङ्गिणे ॥
सर्वदेवस्य रूपाय विष्णवे जिष्णवे नमः । सहस्रमूर्तयेतुभ्य मनन्ताय नमोऽस्तुते ॥
अच्युतायाऽविकाराय शुद्धसत्त्वस्वरूपिणे । आदिमध्यान्तरहितस्वरूपाय नमोनमः ॥
नमो हिरण्यगर्भाय ज्ञानाय परमात्मने । सर्वभूतात्मने तुभ्यं सर्वभूताश्रयाय च ॥८०
ब्रह्मणे ज्योतिषे तुभ्यं नमस्ते विश्वरूपिणे । नमः शुचिपदे तुभ्यं हंसाय परमाय च ॥
संकर्षणाय रुद्राय सर्वभूतधराय च । हयग्रीवाय दीप्ताय कालाय हरये नमः ॥ ८२ ॥
नमस्ते यज्ञपुरुषहव्यकव्यस्वरूपिणे । नमः प्रजापते तुभ्यं सूर्याय शुभवर्चसे ॥ ८३ ॥
अग्नये हव्यभोक्त्रे च तस्मै यज्ञात्मने नमः । सवित्रे प्रसवित्रे च सर्गस्थित्यन्तहेतवे ॥
नमो वेदान्तवेद्याय चतुरात्मस्वरूपिणे । ब्रह्मणे विष्णवे तुभ्यं नमस्ते शङ्कराय च ॥
त्रिगुणाय नमस्तुभ्यं सर्गस्थित्यन्तहेतवे । निर्गुणाय नमस्तुभ्यं सर्वात्मान्तरवर्तिने ॥
अव्यक्ताय नमस्तस्मै विष्णवे लोकसाक्षिणे ।
नारायणाय श्रीशाय पूर्णषाड्गुण्यमूर्त्तये ॥ ८७ ॥
अनन्तगुणपूर्णाय नमः सर्वार्थदायिने । नमस्ते वासुदेवाय पञ्चावस्थस्वरूपिणे ॥८८॥
नमः पञ्चनवव्यूहभेदरूपाय ते नमः । नमो यज्ञवराहाय गोविन्दाय नमोनमः ॥ ८६ ॥
अविकाराय शुद्धाय हेयप्रतिभटाय च । नमो रामाय कृष्णाय नरसिंहाय ते नमः ॥
केशवाय नमस्तुभ्यं जगतां क्लेशहारिणे । त्वमेव सर्वलोकानामाश्रयः पुरुषोत्तमः ॥
प्रसीद देवदेवेश सर्वलोकहिताय वै । मत्संस्थाश्चेतनास्सर्वे निराधारानिराश्रयाः ॥६२

हीनदेहा निराकाराः सर्वेन्द्रियविवर्जिताः । सर्वानुष्ठानरहिताः सततं दुःखभोगिनः ॥
तेषां लोकांश्च देहांश्च दातुमर्हसि केशव ! । लीलाविभूतिसर्वज्ञ! यथापूर्वं प्रकल्पय॥९४॥
चेतनाचेतनं कृत्स्नं जगत्स्थावरजङ्गमम् । मया संमोहितं पश्य लीलार्थं परमेश्वर! ॥
प्राकृताण्डं मया सार्धं सृजस्व पुरुषोत्तम !। धर्माऽधर्मौसुखंदुःखंतस्मिन्निक्षिप्यसंसृतौ
मामधिष्ठायलीलां वै कर्तुमर्हसि माचिरम् ॥ ९६ ॥

श्रीमहादेव उवाच ।

एवमुक्तस्तयादेव्या मायया परमेश्वरः । तस्यां निवेश्य मायायां जगत्स्रष्टुं प्रचक्रमे ॥
योऽसौ प्रकृतिपुरुषः प्रोच्यते स इहाऽच्युतः । स एव भगवान्विष्णुः प्रकृत्यांप्रविवेशह
असृजत्प्रकृतौ ब्रह्म भूतादिमहदाह्वयम् । महतः पुरुषादस्मादहङ्कारोऽभ्यजायत ॥ ९९॥
अहङ्कारात्तु वै तस्माद्गुणत्रयमजायत । त्रिभ्यो गुणेभ्यस्तन्मात्रामसृजद्विश्वभावनः ॥
तन्मात्रेभ्योऽभ्यजायन्त महाभूतानि तत्क्षणात् ।
आकाशः प्रथमं जातो ब्रह्मणस्त्रिगुणात्मनः ॥ १०१ ॥

आकाशादभवद्वायुर्वायोरग्निरजायत । अग्नेरापः समुद्भूता अद्भ्यश्च पृथिवी मता ॥
आकाशादीनि भूतानि सृष्टान्येकोत्तराणि वै । शब्दःस्पर्शश्चरूपं च रसोगन्धश्चतद्गुणाः
एकोत्तरगुणान्सृष्ट्वा तानादाय महाप्रभुः । तेषां विमिश्रणं कृत्वा जगदण्डं महत्तरम् ॥
असृजत्तत्र लोकान्वै सङ्ख्यया ये चतुर्दश । ब्रह्मादित्रिदशांस्तस्मिन्नसृजत्पुरुषोत्तमः ॥
दैवं तिर्यक्तथा मर्त्यं स्थावरं च चतुर्विधम् । तथा सृष्टो महासर्गस्तेन वै जलजेक्षणे!॥
तत्रकर्मानुरूपेण त्रिदशादिषु योनिषु । संस्थिताः प्रकृतौ पूर्वेआत्मनः प्रभवन्ति हि ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे परमव्योमादि-
वर्णनं नामाऽष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥२२८ ॥

---

# एकोनत्रिंशदधिकद्विशततमोऽध्यायः

## उमामहेश्वरसम्वादे त्रिपाद्विभूतौविष्णुव्यूहभेदवर्णनम्

पार्वत्युवाच ।

विस्तरेण ममाऽऽख्याहि देवसर्गमनुत्तमम् । ब्रह्मादित्रिदिवश्रेष्ठाः कथं जाताः सनातनाः

ईश्वरस्यावतारांश्च विस्तरेण वदस्व मे ॥ १ ॥

रुद्र उवाच ।

आकाशानिलतेजोम्बुभुवः सृष्टायथाक्रमम् । तासांमध्येऽसृजद्ब्रह्मा अगाधजलमर्णवम्

अस्मिन्नेकार्णवीभूते जले मायावटच्छदे । आदाय सर्वभूतानि योगनिद्रां ययौ हरिः ॥

स जगत्स्रष्टुकामस्तु योगनिद्रामुपेयिवान् । तया रेमे चिरं कालं मायया मधुसूदनः॥

तस्यां तु जनयामास कालात्मानमनुत्तमम् । कलाकाष्ठादिभूता ये पक्षमासादिरूपिणः

तस्मिन्काले हरेर्नाभिपङ्कजं मुकुलाकृति । विकसन्सर्वजगतो बीजभूतं सुवर्चसम् ॥

उदस्थादुदभूत्तत्र ब्रह्मा च सुमहामतिः । स जगत्स्रष्टुकामस्तु रजोगुणविचोदितः ॥

तुष्टाव योगनिद्रायां शयानं परमेश्वरम् ॥ ७ ॥

ब्रह्मोवाच ।

नमोऽस्तु विष्णवे तुभ्यं सर्गस्थित्यन्तहेतवे । जगद्भूषणभूताय श्रीमते विश्वरूपिणे

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमोनमः

प्रधानकालरूपाय पुरुषायेश्वराय च । नमः प्रपञ्चरूपाय निष्प्रपञ्चस्वरूपिणे ॥ १० ॥

नारायणाय विश्वाय विश्वेशाय नमोनमः । श्रीभूनीलाधिपतये ब्रह्मणे परमात्मने ॥

नमोऽस्तु वासुदेवाय विश्वरूपाय शार्ङ्गिणे । त्रयीनाथाय हरये विश्वनाथस्वरूपिणे ॥

अनन्तकल्याणगुणपरिपूर्णाय ते नमः । जगच्च सर्वं स्वपिति त्वयि सुप्ते जगन्मये॥१३

वृतं सर्वं जगन्नाथ! प्रपञ्चे सचराचरम् । त्वमेव कारणं कर्त्ता कार्यं च त्रिगुणोद्भवम्

स्रष्टा ध्याता विधाताच त्वमेव परमेश्वरः । जागर्षि शुद्धसत्त्वस्थस्तव निद्राकुतः प्रभो

देव ! त्वयि स्थिता लोकाः समाधिष्ठाः सनातनाः ॥ १५ ॥

शिव उवाच ।

एवमुक्तोहृषीकेशो ब्रह्मणा परमेश्वरः । उत्तस्थौ शयनात्तस्माद्विमुक्तो योगनिद्रया ॥
नियम्य योगनिद्रां तां जगत्स्रष्टुं प्रचक्रमे । अचिन्त्यस्तत्क्षणाद्देवो जगतां प्रभुरच्युतः
चिन्तयित्वा जगत्सर्वमसृजत्स पुमांस्ततः । लोकान्सर्वांस्तदाह्यप्सु गतमण्डंहिरण्मयम्
सप्तद्वीपान्समुद्रान्तान्मेदिनीभूधरैर्युतान् । सहैकाण्डकटाहेन नाभिपद्मेऽसृजत्प्रभुः ॥
तदण्डमध्ये चास्थानमीश्वरःकृतवान्हरिः । अथनारायणं कस्तु दध्यावध्यात्मचेतसा
ध्यानान्तेतस्यभालात्तु स्वेदबिन्दुरजायत । सबिन्दुर्बुद्बुदाकारः पृथिव्यामपतत्क्षणात्
तस्मात्तुबुद्बुदात्सोऽहमुत्पन्नोऽस्मिवरानने !। त्र्यक्षस्त्रिशूलहस्तोऽहंजटामुकुटमण्डितः
किङ्करोमीति देवेशमवोचं विनयान्वितः । ततो नारायणो देवो मामित्याह मुदान्वितः
कर्त्ताऽसि जगतो रुद्र!संहारं भीमदर्शनम् । साक्षात्सङ्कर्षणांशेन संहारार्थे वरानने !॥
तस्मान्नारायणाद्देवि ! ह्युत्पन्नोऽस्मिभयङ्करः । नियोज्य मां तु संहारे पुनरेव जनार्दनः

नेत्राभ्यामसृजच्चन्द्रसूर्यौ ध्वान्तापहारिणौ ।
वायुं दिशश्च श्रोत्राभ्यामिन्द्राग्नी मुखतोऽसृजत् ॥ २६ ॥

नासाभ्यांवरुणं मित्रमसृजत्पङ्कजेक्षणः । बाहुभ्यामखिलान्देवान्ससाध्यान्समरुद्गणान्
समस्तरोमकूपेभ्यो रत्नान्योषधयस्तथा । त्वचि शैलान्समुद्रांश्च गवाद्याः पशवस्तथा
मुखतोब्राह्मणः सृष्टो बाहुभ्यां क्षत्रियस्तथा । ऊर्वोर्वैश्यस्ततः पद्भ्यां शूद्रश्चैवमजायत
एवं सृष्ट्वा जगत्सर्वमचेतनमवस्थितम् । विश्वरूपेणदेवेशो यस्यान्तरमधिष्ठितः ॥३०॥
शक्त्या विनाहरेस्तस्य नोन्मेषोविद्यते यतः । तस्मात्सर्वजगत्प्राणो विष्णुरेवसनातनः
स एवाऽव्यक्तरूपः सन्परमात्मा व्यवस्थितः । सर्गस्थितिलयं ब्रह्मा स्वयमेव प्रवर्त्तते॥
षाड्गुण्यपरिपूर्णोऽसौ वासुदेवः सनातनः । त्रिगुणादात्मनो रूपं चतुर्द्धा कुरुते जगत्
प्रद्युम्नमूर्तिर्भगवान्सर्वैश्वर्यसमन्वितः । विधेः प्रजापतीनां च कालस्य च जनस्य च ॥
अन्तर्यामित्वमापन्नः सर्गं सम्यक्करोति हि । सेतिहासांस्ततो वेदान्ददौ तस्मै महात्मने
प्रद्युम्नस्यांशभागोऽसौब्रह्मा लोकपितामहः । जगत्सर्गस्थितिं सर्वं प्रकरोत्यंशसम्भवः

अनिरुद्धश्च भगवाञ्छक्तिनेजःसमन्वितः । मनूनां पार्थिवानां च कालस्यच जनस्यच
स्थितिं करोति भगवानन्तर्यामित्वमास्थितः । सङ्कर्षणो महाविष्णुर्विद्याबलसमन्वितः
कालस्य सर्वभूतानां रुद्रस्यच यमस्यच । अन्तर्यामित्वमास्थाय जगत्संहरते प्रभुः ॥
इत्यन्तर्याम्यवस्थायामन्तर्यामित्वमात्मनः । मत्स्यःकूर्मो वराहश्च नरसिंहोऽथ वामनः
रामो रामश्च रामश्च कृष्णः कल्की च ते दश । एते तु विभवावस्थाब्रह्मणःपरमात्मनः
नृसिहरामकृष्णेषु षाड्गुण्यं परिकीर्तितम् । परावस्थातु देवस्य दीपादुत्पन्नदीपवत् ॥
व्यूहावस्थां हरेरस्य शृणुष्व गिरिजे शुभे ॥ वैकुण्ठं परमं लोकं विष्णुलोकमनुत्तमम्
श्वेतद्वीपं स्वरूपं तु क्षीरसागरमुत्तमम् । एवं चतुर्द्धा व्यूहन्तु सम्यगुक्तं महर्षिभिः॥४४
जलावरणमध्येतु वैकुण्ठं कारणं शुभम् । कोटिवैश्वानरप्रख्यं सर्वं धर्मवदव्ययम् ॥
आमोदसान्तानिकादिलोकैर्बहुभिरावृतम् । नानामणिमयं दिव्यं विमानकोटिभिर्युतम्
यदुक्तं परमं धाम तादृग्लक्षणसंस्थितम् । तस्मिन्वैकुण्ठनगरे नानारत्नसमुज्ज्वले॥४७॥
मध्ये वेदवतीनाम पुरं रम्यमनुत्तमम् । चतुर्द्वारसमायुक्तं हेमप्राकारतोरणम् ॥ ४८ ॥
चण्डादिद्वारपालाद्यैः कुमुदाद्यैश्च रक्षितम् । नानामणिमयैर्दिव्यैर्गृहपङ्क्तिभिरावृतम्
विततं पञ्चपञ्चाशद्योजनैश्च समन्ततः । सहस्रयोजनोत्तुङ्गैः प्रासादैः कोटिभिर्वृतम् ॥

आरूढयौवनैर्दिव्यैः पुम्भिः स्त्रीभिश्च शोभितम् ।
स्त्रियश्च पुरुषांश्चाऽस्मिन्सर्वलक्षणशोभिताः ॥ ५१ ॥

समरूपाश्च श्रीविष्णोः सर्वालङ्कारभूषिताः । दिव्यस्रग्वस्त्रसञ्छन्ना दिव्यचन्दनभूषिताः
मोदन्ते तत्र देवेशभक्त्या त्वात्मामनोरमे । मन्त्रग्राहरसंसिद्धा भक्त्या षोडशरूपया॥

वृतास्तत्पदमाविश्य मोदन्ते मनसीप्सितम् ।
गत्वाऽस्मिन्न निवर्तन्ते विष्णुना सह संस्थिताः ॥ ५४ ॥

अविच्छिन्नात्मनातेवै विष्णुनासङ्गताःशुभाः । तत्समानसुखंनित्यंप्राप्नुवन्तिमनीषिणः
यत्र तत्र हरेर्लोकानाविश्य शुभचेतसः । नाप्नुवन्ति पुनः स्वर्गं स्वर्गस्था इव जन्तवः॥
यथा सौमित्रिभरतौ यथा संकर्षणादयः । तथातेऽपिचजायन्ते सत्यलोके यथेच्छया
पुनस्तेनैव यास्यन्ति तत्पदं शाश्वतं परम् । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते

विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः । न दास्यमपरेशस्य बन्धनं परिकीर्तितम् ॥
सर्वबन्धननिर्मुक्ता हरिदासा निरामयाः । आब्रह्मभुवनाल्लोकाः पुनरावृत्तिलक्षणाः ॥
कर्मबन्धमया दुःखमिश्रासंख्यभयप्रदाः । बह्वायासफला देवि ! जनिनाशकहेतवः॥६१॥
स्वर्गेऽपि भोगस्तु नृणां विषमिश्राशनं यथा । स्वर्गसंस्थान्नरान्दृष्ट्वा क्षीणे कर्मणि देवताः
कुपिताः पातयन्त्येव संसृतौ कर्मबन्धने । तस्मात्स्वर्गसुखं देवि ! बहुधायाससाधनम्
अनित्यं कुटिलं दुःखमिश्रं योगी परित्यजेत् । यज्ञदानतपःकर्म बहुक्लेशमयं त्यजेत् ॥
सततं संस्मरेद्विष्णुं सर्वदुःखौघनाशनम् । नामोच्चारणमात्रेण प्राप्नुवन्ति परं पदम् ॥

तस्मात्तु वैष्णवं लोकं गौरि ! सम्प्रार्थयेत्सुधीः ।
भक्त्या त्वनन्यया देवं भजेत करुणाम्बुधिम् ॥ ६६ ॥

ससर्वज्ञानगुणवान्रक्षत्येव न संशयः । तस्मादष्टाक्षरं मन्त्रं जप्त्वा सुखतरं शुभम् ॥
सम्प्राप्नोति परं लोकं वैष्णवं सर्वकामदम् । तस्मिन्मणिमये तल्पे सहस्रसूर्यरश्मिनि ॥
विमाने शुभे दिव्ये संस्थितो भगवान्हरिः । तत्र चाधारशक्त्यादिभूते पीठे हिरण्मये
नानारत्नमये दिव्ये नानावर्णसमन्विते । तस्मिन्नष्टदले पद्मे मन्त्राक्षरपदे शुभे ॥ ७० ॥
कर्णिकायां सुरम्यायांलक्ष्मीबीजशुभाक्षरे । तस्मिन्बालार्कसाहस्रकोटितुल्यप्रभान्वितः
दिव्ये नारायणः श्रीमानासीनः पङ्कजासने । तस्य दक्षिणकेपार्श्वे जगन्माताहिरण्मयी

गृहीत्वा चामरान्दिव्यान्दिव्यमाल्यविभूषणा ।
सर्वलक्षणसम्पन्ना दिव्या कल्पविभूषिता ॥ ७३ ॥

वसुपात्रं मातुलुङ्गं स्वर्णपद्मं धृतं करैः । वामतः पृथिवी देवी नीलोत्पलदलद्युतिः॥७४॥
नानाभरणसंयुक्ता विचित्राम्बरभूषिता । सा धृत्वा चोद्र्ध्वबाहुभ्यांरम्यंरक्तोत्पलद्वयम्
इतराभ्यां धृतं देव्याधानपात्रंशुकन्तथा । गृहीत्वा चामरान्दिव्याञ्छक्तयो विमलादिकाः
दलाग्रेषु समासीनाः सर्वलक्षणशोभिताः । तासां मध्ये समासीनो भगवानच्युतोहरिः
शङ्खचक्रगदापद्मपाणिभिर्दिव्यभूषणैः । केयूराङ्गदहाराद्यैर्भूषणैरुपशोभितः ॥ ७८ ॥
प्रातरुद्यत्सहस्रांशुकुण्डलाभ्यां विराजितः । पूर्वोक्तैस्त्रिदशैर्नित्यैः सेवितः परमेश्वरः ॥

आस्ते वैकुण्ठनगरे नित्ये सत्ये च भोगवान् ।

श्रीमदष्टाक्षरं मन्त्रं सिद्धानां वै मनीषिणाम् ॥ ८० ॥
गम्यं तद्वैष्णवं लोकं नेतरेषां कथञ्चन । इत्येवं प्रथमं व्यूहं कथितं ते वरानने !॥८१॥
द्वितीयं वैष्णवं लोकं शृणु वक्ष्यामि सुव्रते ! ।
योऽयं सत्यइतिख्यातो लोकाख्यो वैष्णवः स्मृतः ॥ ८२ ॥
तं लोकं विपुलं पुण्यं शुद्धं सत्त्वमयं शुभम् । मध्याह्नसूर्यसाहस्रयुगपद्भासितं तदा ॥
कल्पान्तेऽपि न लीयेत तत्त्वलोकं महत्तरम् । मम ब्रह्मादिदेवानां न द्रष्टुमपि शक्यते॥
स्वर्णकल्पद्रुमवनैः परिपूर्णं समन्ततः । सुधाम्बुपरिपूर्णाभिर्दीर्घिकाभिः समन्वितम् ॥
स्वर्णरत्नमयैर्दिव्यैः पङ्कजैरुपशोभितम् । ज्वलदग्निनिभैर्दिव्यैर्भूषणैः कोटिभिर्वृतम् ॥
निरन्तरं सामभिश्च कूजितैः कोकिलादिभिः । ऊह्यमानैर्गन्धवृक्षैः पुष्पकैरपिशोभितम्
ऊनषोडशवर्षाब्दैर्दिव्यनारीनरैर्वृतम् । सर्वलक्षणशोभाढ्यैर्दिव्यकल्पविभूषणैः ॥८८ ॥
तत्र प्रदेशे रम्येषु देशेषु कमलापतिम् । मुदितैः पतिभिः सार्द्धमर्चयन्ति स्म योषितः॥
तत्प्रसादोपलभ्यं वै सुखमश्नन्ति सर्वदा । गायन्ति परमानन्दं कृष्णस्य चरितं महत्
पद्मेक्षणाः पद्महस्ताः पद्मया सदृशाःशुभाः । दिव्यस्त्रग्वसनोपेताः क्रीडन्तिस्मसुयोषितः
शङ्खचक्रगदापद्मधरा भूषणभूषिताः । स्रग्विणः पीतवसनाः पुरुषास्तत्र संस्थिताः॥९२
अन्योन्यस्पर्शनात्तत्र स्त्रीपुंसोः क्रीडमानयोः । भवत्यनुदिनं वृद्धं हरिभक्तिसुधारसम्
तन्मध्येऽन्तःपुरं रम्यं वासुदेवस्य शोभितम् । चन्दनागुरुकर्पूरकुङ्कुमोदकसंयुतम् ॥९४
नानापुष्पविमानाद्यैः सर्वतः समलङ्कृतम् । तन्मध्ये कल्पवृक्षस्य च्छायायांकमलासने
विचित्रश्लक्ष्णपर्यङ्के शुभास्तरणसम्वृते । दिव्यगन्धसुशोभाढ्यैर्नानापुष्पपरिच्छदैः ॥
तस्मिन्मनोरमे दिव्ये समासीनः श्रिया सह । ईश्वर्या सह देवेशो वासुदेवः सनातनः
सुधांशुकोटिसङ्काशो दिव्याभरणभूषितः । सुवर्णशुभ्रयुगलश्लक्ष्णनासाञ्चिताननः ॥
स्निग्धायतसुलावण्यकपोलाभ्यां विराजितः ।
नीलकुञ्चितकेशाढ्यो रक्ताब्जदललोचनः ॥ ९९ ॥
मन्दारकेतकीजातीकबरीकृतशेखरः । स्निग्धबिम्बफलाभौष्ठः सुस्मिताननपङ्कजः ॥१००
अनर्घ्यमौक्तिकाभासदन्तावलिविराजितः । हरिचन्दनलिप्ताङ्गः कस्तूरीतिलकाङ्कितः ॥

उन्नतांसभुजैर्दीर्घैश्चतुर्भिरुपशोभितः । जपाकुसुमसङ्काशकरपल्लवशोभितः ॥ १०२ ॥

श्रीवत्सकौस्तुभाभ्यां च शोभितः पृथुवक्षसा ।

मुक्तामयैः सुशोभाढ्यैर्दिव्यस्त्रग्भिरलङ्कृतः ॥ १०३ ॥

स्फुरत्केयूरकटकैरङ्गुलीयैश्च शोभितः । बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः ॥

माणिक्यनूपुरोपेतपद्मपत्रविराजितः । अकलङ्कितचन्द्राभनखपङ्क्तिविराजितः ॥१०५॥

रक्तोत्पलनिभश्लक्ष्णशुभाङ्घ्रिकरपङ्कजः । पाञ्चजन्यरथाङ्गाढ्यबाहुयुग्मविराजितः ॥

इतराभ्यां श्रियो गात्रमाश्लिष्य निजवक्षसि । श्लिष्यद्विद्युल्लतोर्द्ध्वाश्रिताभ्र इव राजते॥

तप्तजाम्बूनदश्लक्ष्णशुभाङ्घ्रियुगपङ्कजः । अत्र क्रीडति देवेशो वासुदेवः सनातनः ॥

तप्तकाञ्चनसङ्काशा सर्वाभरणभूषिता । पद्मेक्षणा पद्महस्ता पद्ममालाविभूषिता ॥१०६॥

दिव्यचन्दनलिप्ताङ्गी स्वर्णाभरणभूषिता । सुस्निग्धनीलकुटिलकचभारविराजिता ॥

मन्दारपारिजातादिदिव्यपुष्पविराजिता । मणिरत्नसुसीमन्तकस्तूरीतिलकाञ्चिता ॥

कर्णावतंसशोभाढ्या चिकुरान्तालिसन्निभा । पीनोन्नतस्तनाभ्यां च पीडन्ती हरिवक्षसि

केयूराङ्गदहाराद्यैर्भूषणैरुपशोभिता । आरूढयौवना नित्यं सर्वलोकेशसुन्दरी ॥११३ ॥

तत्र क्रीडति लोकेशी पत्या सह निरन्तरम् । स एव वासुदेवोऽत्र सर्वभूतमनोहरः ॥

क्रीडते सर्वलोकेऽस्मिन्सर्वकामप्रदो नृणाम् ।

अत्राऽष्टशक्तयो लक्ष्म्यास्तनवः परितः स्थिताः ॥ ११५ ॥

रमा च रुक्मिणी सीता पद्मा पद्मालया शिवा । सुलक्षणासुशीलाचरतिकामप्रदाश्चताः

शङ्खचक्रगदापद्मशार्ङ्गाद्यैर्हेतिभिस्तथा । परितः पुष्कराकारैस्तं लोकं परिरक्षते ॥१७॥

एवं द्वितीयोव्यूहश्च सम्यक्ते शुभदर्शने ! संक्षेपतो मया प्रोक्तो न शक्यं विस्तरेण हि

द्वादशाक्षरमन्त्रं वै ये जपन्ति सुखाह्वयम् । तेप्राप्नुवन्ति सततं शाश्वतंशुभमक्षयम् ॥

न वेदाध्ययनैर्यज्ञैर्न व्रतैर्नोपवासतः । न प्राप्यं वैष्णवं लोकं विना दास्येन कुत्रचित्

तस्माद्दास्यं हरेर्भक्तिं भजेताऽनन्यमानसः । प्राप्नोति परमां सिद्धिं कर्मबन्धविमोचनीम्

एवं सम्प्रोच्यतेदेवि द्वितीयं व्यूहमव्ययम् । तृतीयन्तु परंव्यूहं शृणु वक्ष्यामि पार्वति!

तोयाब्धेरुत्तरं कूलं श्वेतद्वीपमिहोच्यते । सन्दर्शनाय योगीन्द्रसनकादिमहात्मनाम् ॥

सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो जातश्च वोढुः पञ्चशिखस्तथा ॥
सप्तैते ब्रह्मणः पुत्रा योगिनः सुमहौजसः । विरक्ताः सर्वभोगेषु शुद्धास्सत्त्वगुणाःसदा
भगवद्दर्शनोद्भूतसुखैकरससेविनः । नरनारायणाद्याश्च श्वेतद्वीपे वसन्ति ये ॥१२६ ॥
तेषां सन्दर्शनार्थाय तत्र सन्निहितो हरिः । शुभ्रांशुकोटिसङ्काशे नानारत्नमयोज्ज्वले ॥
श्वेतद्वीपे महायोगिसेविते हेयवर्जिते । तत्रोद्यानानि रम्याणि पारिजातमयानि वै ॥
सन्तानकलताकीर्णं चन्दनद्रुममण्डितम् । फुल्लपद्मोत्पलोपेतं नानातोयालयैर्युतम् ॥
तन्मध्ये नगरी रम्या नाम्ना श्वेतवती शुभा । नानारत्नमयाकीर्णा हेमप्राकारतोरणा॥

नानारत्नमयैर्दिव्यैर्विमानैरुपशोभिता ॥ १३० ॥

दिव्यस्त्रीपुम्भिराक्रान्ता बहुप्रासादसङ्कुला । तन्मध्येऽन्तःपुरं रम्यं रत्नद्रुमसमाकुलम्
बालसूर्यनिभैस्तुङ्गैः प्रासादैर्बहुभिर्वृतम् । तन्मध्ये मण्डपं दिव्यं मणिकाञ्चनशोभितम्
चन्दनागुरुकर्पूरकुङ्कुमामोदवासितम् । नानाकुसुममालाढ्यैर्वितानैः समलङ्कृतम् ॥
दिव्याप्सरःसमाकीर्णं सामगानोपशोभितम् । मध्ये सिंहासनं तत्र सूर्यवैश्वानरप्रभम्
तन्मध्येऽष्टदलं पद्मं चन्द्रबिम्बमिवाऽपरम् । तन्मध्येकर्णिकायांतु समासीनो जनार्दनः
शुद्धजाम्बूनदप्रख्यो मुक्ताहारविभूषितः । शङ्खचक्रगदापद्मयुक्तहस्तचतुष्टयः ॥ १३६ ॥
केयूरहारकटकैरङ्गुलीयैश्च शोभितः । सुवर्णपङ्कजप्रख्यपदयुग्मविराजितः ॥ १३७ ॥
सुधाकरनिभश्लक्ष्णनखपङ्क्तिविराजितः । षोडशाब्दवयारूढयौवनेन विराजितः १३८
विशालभालदेशे तु कुङ्कुमेन सुगन्धिना । रचितेनोर्ध्वपुण्ड्रेण सीमन्तेनोपशोभितः ॥
मथितामृतफेनाभशुक्लवस्त्रसुवेष्टितः । मुक्तामयाभ्यां शुभ्राभ्यां कुण्डलाभ्यां विराजितः
माणिक्यमुकुटोपेतनीलकुन्तलशोभितः । दिव्यचन्दनलिप्ताङ्गो दिव्यपुष्पविराजितः ॥
श्लक्ष्णोन्नतसुनासाढ्यसुस्मिताधरविद्रुमः । पुण्डरीकदलप्रख्यसितरक्तान्तलोचनः ॥

नीलशुक्लौघताम्राभ्यां लोचनाभ्याम्विराजितः ।
सुनीलघनवक्त्राढ्यः सुपक्ष्माभिविराजितः ॥ १४३ ॥

पद्मासनसमासीनो जगन्मोहनविग्रहः । वामाङ्के संस्थिता देवी तस्य दिव्यस्वरूपिणी
तस्यैव सदृशी लक्ष्मीः शीलरूपगुणादिभिः ।पद्मकिञ्जल्कसङ्काशा यौवनारम्भशोभिता

सर्वलक्षणसम्पन्ना तप्तकाञ्चनभूषणा । दिव्यस्रग्वसनोपेता नीलकुञ्चितमूर्धजा ॥ १४६
चतुर्भुजैर्विराजन्ती केयूराङ्गदभूषिता । मुक्ताहारैर्विराजन्ती मन्दाराञ्चितशीर्षजा ॥
श्लक्ष्णनासापुटयुता लसद्दन्तविराजिता । कस्तूरीतिलकोपेता नासाग्राञ्चितमौक्तिका
सुवर्णकलशप्रख्यपीनोन्नतपयोधरा । दिव्यकुङ्कुमलिप्ताङ्गी पद्ममालोपशोभिता ॥ १४९
वसुपात्रं मातुलिङ्गं दर्पणं हेमपङ्कजम् । करपद्मैर्धारयन्ती चेतनाऽभीष्टदायिनी ॥ १५०
तस्यैताः सदृशास्तत्र शक्तयः परितो हरेः । इशावास्या महादेवी जाह्नवी कमलालया ॥
सावित्री सर्वगा पद्मा शक्तयः परिकीर्तिताः । श्रद्धामेधाधृतिः प्रज्ञा धारणा शान्तिरेव च

श्रुतिः स्मृतिर्मतिर्धन्या वृद्धिर्बुद्धिर्मनोपिणी ।
दास्यस्त्वेताः श्रियः प्रोक्ताः सर्वकैङ्कर्यकारिकाः ॥ १५३ ॥

अनन्तवैनतेयादिदेवतानित्यकिङ्कराः । साध्या मरुद्गणाश्चैव सेवन्ते नित्यदेवताः ॥
प्रासादेषु विमानेषु वनेषु नगरेषु च । तत्प्रसादोपलब्धेषु भोगेष्वत्राऽनुरञ्जिताः॥१५५
क्रीडन्तिसततंनित्या हेयनिष्यन्दवर्जिताः । येविष्णुमन्त्रजप्तारः सततं श्रद्धयाऽन्विताः
येद्वादशीव्रते युक्तास्तत्पदं यान्ति तेऽव्ययम् । न वेदैर्न च दानैश्च न यज्ञैर्न व्रतैरपि ॥

प्राप्तुं च शक्यो गिरिजे ! विष्णुलोकः सनातनः ।
भक्त्या चाऽनन्यया प्राप्तुं शक्यं विष्णुपदं नृणाम् ॥ १५८ ॥

तस्मात्सम्पूजयेन्नित्यं भक्त्या देवंजनार्दनम् । कीर्तयेन्नामसाहस्रं ध्यायन्मन्त्रं जपेत्सदा
जुहुयात्तर्पयेद्भक्त्या सर्वगं सर्वकामदम् । एवमुक्तं तृतीयस्य व्यूहस्य परमात्मनः ॥
स्वरूपं तव सुश्रोणि! यथाप्रोक्तं पुरातनैः । अतः परं प्रवक्ष्यामि चतुर्थं व्यूहमुत्तमम् ॥
दिवौकसां दर्शनार्थं दुग्धाब्धौ परमेश्वरः । सुधांशुकोटिसङ्काशे सहस्रफणशोभिते ॥
फणारत्नमयूखैस्तु च्छादिते दुग्धवारिधौ । तस्मिन्ननन्तपर्यङ्के विमले विस्तृते शुभे ॥
देव्या सह समासीनः पद्मनाभोऽच्युतो हरिः । नीलजीमूतसङ्काशः पद्मपत्रायतेक्षणः

विवस्वत्कोटिसङ्काशकिरीटेन विराजितः ।
नानारत्नोज्ज्वलद्दिव्यकुण्डलाभ्यां विराजितः ॥ १६५ ॥

बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः । स्फुरद्रक्तारविन्दाभहस्ताङ्घ्रितलशोभितः

हारकेयूरकटकैरङ्गुलीयैर्विराजितः । शङ्खचक्रगदाशार्ङ्गखड्गहस्तैर्विभूषितः ॥ १६७ ॥
सुपुष्पफलशाखाढ्यकल्पशाखीविराजितः । श्रीवत्सकौस्तुभोपेतवनमालाविराजितः ॥
बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः । विश्वसृड्जन्मशरणनाभीपङ्कजशोभितः ॥
हरिचन्दनलिप्ताङ्गः सर्वाभरणभूषितः । मन्दारपरिजातादिदिव्यपुष्पैर्मनोरमैः ॥१७०॥
सुस्निग्धनीलकुटिलकबरीकृतकेशवान् । श्लक्ष्णोन्नतसुनासांसजानुयुग्मविराजितः ॥
मणिविद्रुमशाखाढ्यनूपुराङ्घ्रिविराजितः । अकलङ्कितचन्द्राभनखपङ्क्तिविराजितः ॥
अशोकपुष्पसङ्काशरक्तोष्ठमुखपङ्कजः । अनर्घ्यमौक्तिकाभासदन्तपङ्क्तिविराजितः ॥
सम्पूर्णचन्द्रप्रतिमस्मितवक्त्रसुशोभितः । आरूढयौवनः श्रीमान्कोमलावयवोज्ज्वलः
शरण्यः सर्वलोकानां सर्वकामफलप्रदः । सदृशी तस्य देवी तु रूपशीलगुणादिभिः ॥
तप्तकाञ्चनसङ्काशा तप्तकाञ्चनभूषणा । तरुणी रूपलावण्यकान्तिशीलगुणान्विता ॥
दुग्धाब्धिफेनसङ्काशशुभवस्त्रेण वेष्टिता । मन्दारकेतकीजातीपुष्पाञ्चितशिरोरुहा ॥
कस्तूरीतिलकोपेता रत्नसीमन्तशोभिता । नानावर्णसुशोभाढ्यकर्णभूषणभूषिता ॥
प्रवालसदृशज्योत्स्ना रक्ताधरशुचिस्मिता । मत्तभृङ्गोपमैः स्निग्धैरलकैः सुविराजिता॥
तनुमध्या विशालाक्षी पीनोन्नतपयोधरा । चतुर्हस्तैर्विराजन्ती सर्वाभरणभूषिता ॥
उद्वाहुभ्यां धारयन्ती हेमपद्मयुगंशुभम् । इतराभ्यां समाश्लिष्य भर्तारं निबिडंस्थिता
आलोकयन्ती सततं त्रिदशांश्च कटाक्षकैः । निरीक्षितास्तयादेव्याधन्यास्ते सततंशिवे
तत्रदेवा विमानस्थाः सिद्धचारणकिन्नराः । गायन्तिसततंदेवीमानन्दाश्रुपरिप्लुताः ॥
दैतेयैर्बाध्यमानैस्तु ब्रह्मरुद्रादिभिः सुरैः । संस्तूयमानस्तत्रेशो देवानामभयं ददौ ॥
देवानामभयं दत्त्वा सर्वदेवेश्वरो हरिः । राक्षसान्हन्तुमारेभे जगत्संरक्षणाय वै ॥
एवं चतुर्थ व्यूहन्तुहरेःप्रोक्तं तवाऽनघे !। किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि वरानने!

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे विष्णुव्यूह-
भेदवर्णनंनामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

# त्रिंशदधिकद्विशततमोऽध्यायः

## विष्णुविभूतिपुरस्सरं मत्स्यावतारवर्णनम्

पार्वत्युवाच ।

भगवान्यत्रदेवेशो राक्षसान्मधुसूदनः । जघान केन रूपेण यथावद्वक्तुमर्हसि ॥ १ ॥
वैभवावस्थमीशस्य मत्स्यकूर्मादिरूपकम् । विस्तरेणसमाख्याहि ममप्रीत्यामहेश्वर !

महादेव उवाच ।

शृणु देवि! प्रवक्ष्यामि वैभवं स्वस्थमानसा । मत्स्यकूर्मादियद्रूपमवतारात्मकं हरेः ॥
दीपादुत्पादितो दीपो यथा तद्वद्भविष्यति । परावस्था परेशस्य सव्यूहा विभवादयः॥

शक्त्यावेशावतारास्तु विष्णोस्तात्कालिकाःस्मृताः ।
अर्चावतारा देवस्य वैभवाः परमात्मनः ॥ ५ ॥

परवद्व्यूहसामर्थ्यगुणसम्भूतिदर्शनाः । वैभवानां तु सर्वेषाम्मत्स्यः पूर्वमुदाहृतः ॥
प्रजापतिः पुरा ब्रह्मा ससर्ज सुमहात्मवान् । भृगुर्मरीचिरत्रिश्च दक्षः कर्दम एव च ॥
पुलस्त्यः पुलहश्चैव अङ्गिराश्च तथाक्रतुः । नव प्रजानां पतय इमे प्रोक्ता यथाक्रमम्
मरीचिर्भगवांस्तत्र जनयामास कश्यपम् । कश्यपस्याभवञ्जायाश्चतस्रः शुभदर्शने ! ॥
अदितिश्च दितिश्चैव कद्रूश्च विनता तथा । अदितिर्जनयामास देवांस्तु शुभदर्शनान् ॥
दितिश्च राक्षसान्पुत्रांस्तामसान्सुमहासुरान् । शम्बूकस्तुहयग्रीवोहिरण्याक्षोमहाबलः
हिरण्यकशिपुर्जम्भो मयाद्याः सुमहातपाः । मकरस्तु महावीर्यो ब्रह्मलोकमुपागतः ॥

ब्रह्माणं मोहयित्वाऽसौ वेदाञ्जग्राह वीर्यवान् ।
ग्रसित्वा च श्रुतीः सोऽथ प्रविवेश महार्णवम् ॥ १३ ॥

ततः सर्वं जगच्छून्यमभवद्धर्मसंकरः । नाऽधीतं न वषट्कारं वर्णाश्रमविवर्जितम् ॥
ततः प्रजापतिर्देवः सर्वदेवगणैर्वृतः । गत्वा दुग्धाम्बुधिं देवं तुष्टाव शरणं गतः ॥१५॥

ब्रह्मोवाच ।

प्रसीद देव! मे नाथ! नागपर्यङ्कसंस्थित !। सर्वेश सर्वदेवात्मन्सर्वदेवमयाऽच्युत ! ॥
आद्यं जगत्तरोर्बीजं मध्ये त्वंसर्वतोऽधिकः । अन्तेचपशुनाथस्त्वंस्वेच्छाचारस्त्वमेवच
त्वमेव चिदचिद्रूपं जगत्सर्वं सनातनम् । त्वमव्यक्तो हि भूतादिः प्रधानपुरुषोऽव्ययः
त्वमादिमध्यान्तवपुर्जगतः परमेश्वरः । त्वमेव सर्वलोकानामाश्रयः पुरुषोत्तमः ॥१६॥
भूतादिस्त्वं महद्भूतं भूतसङ्घस्य कारणम् । त्वमहङ्कारमाश्रित्य गुणत्रैविध्यमाप्तवान्

त्वमादिभूतश्चाऽऽकाशं त्वं वायुः सर्वगो महान् ।
त्वमादिस्त्वमनादिश्च त्वमग्निस्तेजसां निधिः ॥ २१ ॥

त्वमापः सर्वजगतां जीवनः परमेश्वरः । त्वं भूमिर्जगदाधारो भूधरस्त्वं महामते ! ॥
सरितः सागरस्त्वं वै सर्वस्याऽऽदिस्त्वमेव च । दैवर्षिः सर्वभूतानि त्वमेवपुरुषोत्तम!
त्वयैव प्रेरिता लोकाश्चेष्टन्ते साध्वसाधुषु । दैत्येनेनाऽऽहृता वेदाःप्रविष्टाश्चमहार्णवम्
वेदाधारमिदं सर्वं जगत्स्थावरजङ्गमम् । वेदाश्चैव हि सर्वेषां धर्माणां परितः स्थितिः
वेदैश्च सर्वदेवानां नित्यं तृप्तिर्भविष्यति । तस्माद्वेदान्समानेतुं त्वमेवाऽर्हसि केशव !॥

श्रीमहादेव उवाच ।

एवमुक्तो हृषीकेशो ब्रह्मणा परमेश्वरः । मात्स्यरूपं समास्थाय प्रविवेश महोदधिम् ॥
तं दैत्यं सुमहाघोरं माकरं रूपमास्थितम् । तुण्डाग्रेण विदार्याऽथ जघानामरपूजितः
तं हत्वा सर्ववेदांश्च साङ्गोपाङ्गसमन्वितान् । गृहीत्वा प्रददौ तस्मै ब्रह्मणेसमहाद्युतिः
अन्योन्यमिश्रिता वेदा ग्रसितास्तेनरक्षसा । व्यस्ता भगवता तेन व्यासरूपेणविष्णुना
पृथक्कृतास्तथा वेदा व्यासेनैव महात्मना । एवं मत्स्यावतारेण रक्षिताः सर्वदेवताः

श्रुतिप्रदानेन जगत्त्रयं तदा कृत्वा निरातङ्कमहोरमाधवः ।
संस्तूयमानः सुरसिद्धसङ्घैरन्तर्दधे योगिभिरर्चिताङ्घ्रिः ॥ ३२ ॥
वासुदेवोहि भगवान्सर्वदेवमयो हरिः ॥ ३३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे मत्स्यावतारवर्णनं नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

# एकत्रिंशदधिकद्विशततमोऽध्यायः

## कूर्मावतारवर्णने दुर्वासःशापकथनम्

श्रीरुद्र उवाच ।

यत्कौर्मं वैभवंविष्णोःसर्वलोकनमस्कृतम् । तद्वक्ष्यामिप्रिये!सम्यक्छृणुष्वैकाग्रचेतसा

अत्रिपुत्रो महातेजा दुर्वासा इति विश्रुतः । प्रचण्डःसर्वलोकानां क्षोभकारी महातपाः

स ययौ हिमवत्पृष्ठं ब्रह्मर्षिस्तपसोनिधिः । ममांशभूतो ब्रह्मर्षिः सर्वेषां भयदस्तदा ॥

स कदाचिन्महामेरोः पार्श्वे किन्नरसेविते । सम्प्राप्य देवतास्तत्र पूजयामासनित्यशः

उषितस्तत्र वर्षं तु किन्नरीभिः स पूजितः । महेन्द्रं द्रष्टुकामोऽसौस्वर्लोकंप्रययौमुनिः

तस्मिन्काले महातेजा गजारूढं महेश्वरम् । ददर्श सर्वदेवैस्तं पूज्यमानं शचीपतिम् ॥

तं च दृष्ट्वा स हृष्टात्मा दुर्वासाः सुमहातपाः ।

पारिजातस्रजं तस्मै प्रददौ विनयान्वितः ॥ ७ ॥

आदाय देवताधीशस्तां स्रजं गजमूर्द्धनि । विन्यस्य तत्र देवेशः प्रययौ नन्दनं प्रति ॥८

करेणाऽऽदाय तां मालांमदोद्रिक्तस्ततोगजः । पीडयित्वाऽथचिक्षेपसञ्छिन्नांधरणीतले

ततः क्रुद्धो महातेजा दुर्वासा रक्तलोचनः । प्रशमवान्महेन्द्रं तं संतमक्रोधवह्निना ॥१०

दुर्वासा उवाच ।

त्रैलोक्यैकश्रिया युक्तो यस्मान्मामवमन्यसे । तस्मात्त्रैलोक्यश्रीर्नष्टा भवत्वेवनसंशयः

रुद्र उवाच ।

इतिशप्तस्ततः शक्रो जगाम स्वपुरं पुनः । ततः श्रीर्जगतां धात्री क्षणादन्तर्दधे स्वयम् ॥

अन्तर्द्धानं गता लक्ष्मीस्तदा नष्टं जगत्त्रयम् । यदपाङ्गाश्रितंसर्वं जगत्स्थावरजङ्गमम्

तस्यामन्तर्द्धानवत्यां सर्वं नष्टतरं भवेत् । ब्रह्मादित्रिदशाः सर्वे गन्धर्वा यक्षकिन्नराः ॥

दैत्याश्च दानवा नागा मनुष्या राक्षसास्तथा । पशवःपक्षिणःकीटाःसर्वेस्थावरजङ्गमाः

तया लक्ष्म्या जगन्मात्रा ते सर्वे नाऽवलोकिताः ।

दारिद्र्येणैव विहतास्ते सर्वे दुःखभागिनः ॥ १६ ॥
क्षुत्पिपासार्दितास्सर्वे चुक्रुशुर्गतचेतसः । न ववृषुर्जलधराः सर्वे शुष्का जलाशयाः ॥
सर्वे ते पादपाःशुष्काःफलपुष्पविवर्जिताः । एतत्सर्वं जगच्छून्यं लक्ष्मीवीक्षणवर्जितम्
निस्सत्त्वाश्चाभवन्देवा यज्ञभागविवर्जिताः । तदा देवाः सगन्धर्वा दैत्यदानवराक्षसाः
क्षुत्पिपासार्दिता जग्मुर्ब्रह्माणममितौजसम् । ऊचुस्तं देवदेवेशमब्जयोनिं पितामहम्

देवाऊचुः ।

भगवन्क्षुत्पिपासाभ्यां पीडितं हि जगत्त्रयम् । न हुतं न वषट्कारः सर्वधर्मविवर्जितम्
क्षुत्पिपासार्दिताः सर्वे देवदानवमानवाः । त्राताऽरं सर्वलोकेशं भवन्तं शरणं गताः ॥
त्रातुमर्हसि देवेश ! क्षुत्पिपासार्दिताञ्जनान् ॥ २३ ॥

रुद्र उवाच ।

इति तेषां वचः श्रुत्वा सर्वलोकपितामहः । उवाच परमप्रीतस्तान्सर्वान्प्रतिमानदः ॥

ब्रह्मोवाच ।

शृणुध्वं देवताः सर्वे दैत्यगन्धर्वमानवाः । महेन्द्रस्याऽपचारेण सर्वमेतदुपस्थितम् ॥
समुद्भूतमिदं घोरं जगत्सम्वर्त्तकं महत् । दुर्वासाः सुमहात्मा तु यतःक्रोधमवाप्तवान्
तस्मात्क्रोधेन तेनेदं नष्टं लोकत्रयं सुराः । असौ रोषपरीतात्मा क्रोधेन कलुषीकृतः
जगत्त्रयं च श्रीनष्टं भवत्वित्याहदुर्मतिः । तच्छापाज्जगतां धात्रीलक्ष्मीर्नारायणप्रिया
अन्तर्द्धानं गता देवी जगन्माता महेश्वरी । यदपाङ्गेक्षितालोका भवन्ति सुखितास्सदा
नाऽलोकिता जगन्मात्रा दुःखभागिन एव हि ।
तस्मात्सर्वे वयं गत्वा दुग्धाब्धौ स्थितमुत्तमम् ॥ ३० ॥
तत्र नारायणं देवमर्चयामः सनातनम् । तस्मिन्प्रसन्ने देवेशे शिवमेतद्भवेज्जगत् ॥३१॥

महादेव उवाच ।

इतिनिश्चित्य मनसा ब्रह्मा देवगणैर्युतः । भृग्वादिमुनिभिः सार्द्धं प्रययौ क्षीरसागरम्
क्षीराब्धेरुत्तरतटे ब्रह्मरुद्रादिदेवताः । विष्णुं समर्चयामासुः पौरुषेण विधानतः ॥३३॥
जपन्तोऽष्टाक्षरं मन्त्रं पौरुषं सूक्तमेव च । ध्यायन्तोऽनन्यमनसो जुहुवुः परमेश्वरम् ॥

तुष्टुवुः स्तवनैर्दिव्यैर्नमश्चक्रुर्विधानतः । ततः प्रसन्नो भगवान्सर्वेषां च दिवौकसाम् ॥
तेषां सन्दर्शने तस्थौ स्तूयमानो महर्षिभिः । वैनतेयं समारूह्य सर्वदेवमयं विभुम् ॥
तं दृष्ट्वा जगतामीशं शङ्खचक्रगदाधरम् । पीतवस्त्रं चतुर्बाहुं पुण्डरीकनिभेक्षणम् ॥
श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् । किरीटहारकेयूरनूपुरैरुपशोभितम् ॥
तं दृष्ट्वा जगतामीशमानन्दाश्रुपरिप्लुताः । तुष्टुवुर्जयशब्देन नमश्चक्रुर्निरन्तरम् ॥ ३९॥
ततः प्रोवाच भगवान्कृपया सर्वदेवताः । वरदोऽस्मि वरं देवा वृणीध्वमितिचाऽब्रवीत्
इति श्रुत्वा तदा सर्वे देवा ब्रह्मपुरोगमाः । ऊचुः प्राञ्जलयो देवमिदं वचनमीश्वरम् ॥

देवाऊचुः ।

भगवन्मुनिशापेन संप्रतीदं जगत्त्रयम् । क्षुत्पिपासार्दितं सर्वं सदेवासुरमानुषम् ॥
तस्माद्भवन्तं शरणं याताःस्म पुरुषोत्तम !। त्राहि सर्वमिमंलोकं नान्यस्त्राताभवेत्कचित्

रुद्र उवाच ।

इत्युक्तो देवतैः सर्वैरच्युतः परमेश्वरः । विचार्यैतदुवाचैतान्देवान्ब्रह्मपुरोगमान ॥४४॥

श्रीभगवानुवाच ।

अत्रिसूनोर्मुनेः शापादन्तर्द्धानं गता रमा । कटाक्षदर्शनात्तस्या जगदैश्वर्यसंयुतम् ॥
तस्माद्यूयं सुराः सर्वे शिवब्रह्मपुरोगमाः । उत्पाट्य मन्दरं शैलं निधाय क्षीरसागरे ॥
मन्दरं घर्घरं कृत्वा सर्पराजेन वेष्टितम् । कुरुध्वं मथनं देवा दैत्यगन्धर्वदानवैः ॥४७॥
उत्पद्यते च सा लक्ष्मीर्जगत्संरक्षणायवै । तया दृष्टा महाभागा भविष्यथ न संशयः॥
धारयाम्यहमेवाद्रिं कूर्मरूपेण सम्वृतः । मम शक्त्या सुराःसर्वे भवन्ति च बलीयसः॥

रुद्र उवाच ।

इत्युक्ता देवताःसर्वा हरिणा कमलेक्षणे !। साधुसाध्विति देवेशमूचुर्ब्रह्मपुरोगमाः ॥५०
संस्तूयमानो भगवानच्युतः सुरसत्तमैः । अन्तर्दधे ततः श्रीमान्सर्वलोकनमस्कृतः ॥
सर्वाधारः सर्वदेवः सर्वत्र समदर्शनः ॥ ५१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे दुर्वासःशापकथनं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

# द्वात्रिंशदधिकद्विशततमोऽध्यायः

## कूर्मावतारकथने देवैर्लक्ष्मीप्राप्त्यै मन्दरेणक्षीरसागरमथनम्

शङ्कर उवाच ।

ततः सुरगणाः सर्वे दानवाद्या महाबलाः । उत्पाट्य मन्दरं शैलं चिक्षिपुः पयसांनिधौ
ततो नारायणः श्रीमान्भगवान्भूतभावनः । कूर्मरूपेण तं शैलं दधाराऽमितविक्रमः ॥
अनादिमध्यान्तवपुर्विश्वरूपः सनातनः । अधारयद्गिरिवरं स्वपृष्ठे जगदीश्वरः ॥ ३ ॥
तथैकेन भुजेनैव शिखरं सर्वगोऽव्ययः । ततो देवासुराःसर्वे ममन्थुः क्षीरसागरम् ॥
सर्पराजेन सम्वेष्ट्य घर्घरं मन्दराचलम् । मथ्यमानेऽथ दुग्धाब्धौ दैवतैः सुमहाबलैः
उत्पादनार्थं लक्ष्म्याश्च सर्वएव महर्षयः । उपोष्य नियमं कृत्वा जेपुः श्रीसूक्तमेव च ॥
सहस्रनामपठनं चक्रुर्दिव्या द्विजोत्तमाः । एकादश्यां तु शुद्धायां मथ्यमाने महाम्बुधौ॥
उपोष्यऋषयः सर्वेजेपुः श्रीमन्त्रमुत्तमम् । काङ्क्षमाणाःश्रियो जन्म लक्ष्मीनारायणंहरिम्
ध्यात्वासमर्चयामासुर्द्विजाद्या मुनिसत्तमाः । ततस्तस्मिन्मुहूर्ते तुमथ्यमानेमहाम्बुधौ
समभूत्तत्र प्रथमं कालकूटं महाविषम् । महापीडं महाघोरं सम्वर्ताग्निसमप्रभम् ॥१०॥
दृष्ट्वा प्रदुद्रुवुः सर्वे भयार्त्ता देवदानवाः । ततस्तान्विद्रुतान्दृष्ट्वा भयार्त्तान्सुरसत्तमान् ॥
तान्निवार्याऽब्रवंवाक्यमहं तत्र शुभेक्षणे ! । भोभोदेवगणाः सर्वे न भेतव्यं विषं प्रति॥
अहमाहारयिष्यामि कालकूटं महाविषम् । इत्युक्तास्ते मयासर्वे देवा इन्द्रपुरोगमाः ॥

साधुसाध्विति वाक्यैर्मां तुष्टुवुः प्रणता भृशम् ।
तद्दृष्ट्वा मेघसङ्काशं प्रादुर्भूतं महाविषम् ॥ १४ ॥

ध्यात्वा नारायणं देवं हृदये गरुडध्वजम् । उदयादित्यसङ्काशं शङ्खचक्रगदाधरम् ॥
श्रीभूमिसहितं देवं तप्तकाञ्चनकुण्डलम् । एकाग्रमनसा ध्यात्वा सर्वदुःखहरं प्रभुम् ॥
नामत्रयं महामन्त्रं जप्त्वा भक्त्या समन्वितः । तद्विषं पीतवान्घोरमाद्यं सर्वभयङ्करम्
नामत्रयप्रभावाच्च विष्णोः सर्वगतस्य वै । विषं तदभवज्जीर्णं लोकसंहारकारकम् ॥

अच्युतानन्तगोविन्दइतिनामत्रयं हरेः । योजपेत्प्रयतो भक्त्या प्रणवाद्यं नमोऽन्तकम् ॥
तस्य मृत्युभयंनास्ति विषरोगाग्निजं महत् । नामत्रयं महामन्त्रं जपेद्यः प्रयतात्मवान् ॥
कालमृत्युभयं चाऽपि तस्य नास्ति किमन्यतः । इतिनामत्रयेणैव पीतं देवि! मया विषम्
ततः प्रहृष्टास्त्रिदशास्तुष्टुवुर्मां सुविस्मिताः । मां प्रणम्य पुनर्देवा ममन्थुःक्षीरसागरम्
तस्मिन्प्रमथ्यमाने तु मयादेवैश्चभामिनि !। ज्येष्ठादेवी समुत्पन्नारक्तम्रग्वाससाऽऽवृता
उत्पन्ना साऽब्रवीद्देवान्किं कर्त्तव्यं मयेति वै । तामब्रुवंस्तु ते देवीं सर्वदेवगणाभृशम्

देवाऊचुः ।

येषां गृहान्तरे नित्यं कलहः सम्प्रवर्तते । तत्र स्थानं प्रयच्छामो वस तत्राऽशुभान्विता
परुषं भाषणं नित्यं वदन्त्यनृतवादिनः । सन्ध्याकाले तु येपापाःस्वपन्ति मलचेतसः ॥
तेषां वेश्मनि सन्तिष्ठ दुःखदारिद्र्यदायिनी । कपालकेशभस्मास्थितुषाङ्गाराणि यत्र तु॥
तत्र ते सततं स्थानंभविष्यति न संशयः । यस्य वेश्म कपालास्थिभस्मकेशादिचिह्नितम्

तद्भजस्वाऽशुभे ! नित्यं कलिना सह नित्यशः ।
अकृत्वा पादयोः शौचं यस्त्वाचामति दुर्मतिः ॥ २६ ॥

तं भजस्व महादेवि ! कलुषेण भृशं वृतम् । तुषाङ्गारकपालाश्मवालुकावस्त्रचर्मभिः ॥
दन्तधावनकर्तारो भविष्यन्ति नराधमाः । रमस्व कलिना देवि! तेषां वेश्मसु नित्यशः
तिलपिष्टं कलञ्जञ्चकलिङ्गं शिग्रुगृञ्जनम् । छत्राकं विड्वराहंचबिल्वं कोशातकीफलम्
अलाबुंच पलाण्डुंच ये खादन्ति नराधमाः । तेषां गेहे तव स्थानं देवि दारिद्र्यदे! सदा

रुद्र उवाच ।

इत्यादिश्य सुराःसर्वे ज्येष्ठांच कलिवल्लभाम् । पुनश्चमथनं चक्रुःक्षीराब्धेःसुसमाहिताः
ततश्च वारुणीदेवी समुत्पन्ना शुभानने !। अनन्तो नागराजोऽथ तां जग्राह सुलोचनाम्
ततस्तत्र समुत्पन्ना सर्वाभरणभूषिता । वैनतेयस्य भार्याऽभूत्सर्वलक्षणशोभिता ॥३६
ततोऽप्सरोगणा दिव्या गन्धर्वाश्च महौजसः । जज्ञिरे रूपसम्पन्ना मधुगायनतत्पराः॥
ऐरावतस्ततोजज्ञे तथैवोच्चैःश्रवा हयः । धन्वन्तरिः पारिजातः सुरभिः सर्वकामधुक्
एतान्सर्वान्सहस्राक्षो जग्राह प्रीतमानसः । ततः प्रभातसमये द्वादश्यामुदिते रवौ ॥३९

मथ्यमाने पुनस्तस्मिन्देवैरिन्द्रपुरोगमैः । ततः प्रहृष्टवदनैः स्तूयमाना महर्षिभिः ॥४०
उत्पन्ना श्रीमहालक्ष्मीः सर्वलोकेश्वरी शुभा । बालार्ककोटिसङ्काशा कनकाङ्गदभूषिता
हेमाम्बुजसमासीना सर्वलक्षणशोभिता । पद्मपत्रविशालाक्षी नीलकुञ्चितमूर्द्धजा ॥४२
दिव्यचन्दनलिप्ताङ्गी दिव्यपुष्पैरलङ्कृता । नानारत्नमयैर्दिव्यैः सर्वैराभरणैर्युता ॥४३॥

तनुमध्या जगद्धात्री पीनोन्नतपयोधरा ।
चतुर्हस्ता विशालाक्षी पूर्णेन्दुसदृशानना ॥ ४४ ॥

वसुपात्रं मातुलुङ्गं स्वर्णपद्मयुगं शुभम् । बिभ्राणा हस्तकमलैः सर्वाभरणभूषितैः ॥
अम्लानपङ्कजां मालां धारयन्ती हृदःस्थले । ददृशुस्तां महादेवीं सर्वलोकहितैषिणीम्
ईश्वरीं सर्वभूतानां मातरं पद्ममालिनीम् । नारायणीं जगद्धात्रीं नारायणहृदालयाम् ॥
तां विलोक्य महालक्ष्मीं प्रहृष्टाः सर्वदेवताः । अवादयन्त पटहान्दिवि देवगणा भृशम्
ववृषुः पुष्पवर्षाणि वनदेव्यो निरन्तरम् । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥४९

ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ।
जज्वलुश्चाऽग्नयः शान्ताः प्रसन्नाश्च दिशो दश ॥ ५० ॥

रजताद्रिनिभैर्दिव्यैश्चतुर्दन्तैर्महागजैः । सुधापूर्णैरत्नकुम्भैस्सिच्यमानां स्वमूर्धनि ॥५१
तां दृष्ट्वा मुनयस्सर्वे जयशब्दैर्निरन्तरम् । स्तुतिभिः पुष्कलाभिश्च नमश्चक्रुस्समन्ततः
अनन्तरं शीतरश्मिरुदगात्क्षीरसागरे । सुधामयूखवान्सोमो मातुर्भ्राता सुखावहः ॥
नक्षत्राधिपतिश्चाभूच्चन्द्रो वै लोकमातुलः । ततः प्रिया हरेः पुण्या तुलसी लोकपावनी
समुत्पन्ना जगद्धात्री पूजार्थं शार्ङ्गिणो हरेः । ततः प्रहृष्टमनसः सर्वे देवा दिवौकसः॥
तं शैलं पूर्ववत्स्थाप्य परिपूर्णमनोरथाः । समेत्य मातरं सर्वे शिवब्रह्मपुरोगमाः ॥५६॥
स्तुत्वा नामसहस्रेण जेपुः श्रीसूक्तसंहिताम् । ततः प्रसन्ना सा देवी सर्वान्देवानुवाचह

श्रीरुवाच ।

वरं वृणीध्वं भद्रं वो वरदाऽहं सुरोत्तमाः ॥ ५८ ॥

रुद्र उवाच ।

ततः प्रहृष्टवदनास्सर्वएव दिवौकसः । ऊचुः प्राञ्जलयो देवाः श्रियं नम्रात्ममूर्तयः ॥

देवाऊचुः ।

प्रसीद कमले ! देवि ! सर्वलोकेश्वरप्रिये ! ।

विष्णोर्वक्षःस्थले देवि ! भव नित्याऽनपायनी ॥ ६० ॥

त्रैलोक्यं न त्वया देवि! त्याज्यं हि परमो वरः । यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम्
त्वया विलोकिताःसर्वे प्रभवन्ति दिवौकसः । माता रुद्रादिदेवानामैश्वर्यं त्वत्कटाक्षतः

एतदिच्छामहे देवि ! जगन्मातर्नमोऽस्तु ते ॥ ६२ ॥

रुद्र उवाच ।

इत्युक्ता दैवतैः सर्वैर्लोकमाता महेश्वरी । एवमस्त्विति तान्देवान्प्राह नारायणप्रिया॥
ततो नारायणः श्रीशः शङ्खचक्रगदाधरः । तथैवाऽऽविरभूद्ब्रह्मा पूर्ववत्क्षीरसागरे ॥
ततः प्रतुष्टुवुर्देवा नमस्कृत्य जनार्दनम् । ऊचुः प्राञ्जलयः सर्वे प्रहृष्टवदनाः शुभाः॥६५

देवाऊचुः ।

गृहाण देवीं सर्वेश! महिषीं तव वल्लभाम् । जगत्संरक्षणार्थाय लक्ष्मीमनपगामिनीम्

रुद्र उवाच ।

इत्युक्त्वा मुनयः सर्वे देवा ब्रह्मपुरोगमाः । नानारत्नमये दिव्ये पीठे बालार्कसन्निभे ॥

निवेश्य देवीं देवं च आनन्दाश्रुपरिप्लुताः ।

नानारत्नमयैः शुभ्रैः स्वर्णकुम्भैर्मनोरमैः ॥ ६८ ॥

सुधामृतजलैःपूर्णैः श्रीमन्मन्त्राभिमन्त्रितैः । अत्राभिषेचनं चक्रुस्तयोर्मूर्ध्नोःसुधाजलैः
वैष्णवैश्चानुवाकैश्च श्रीसूक्तेन महर्षयः । दिव्याम्बरैर्दिव्यमाल्यैर्नानारत्नविभूषितैः ॥
लक्ष्म्या सह समासीनमर्चयामासुरच्युतम् । गन्धैर्धूपैश्च दीपैश्च नैवेद्यैश्च सुधामयैः ॥
अप्राकृतैः फलैर्दिव्यैरर्चयामासुरीश्वरम् । अमृतादुत्थिता देवी तुलसी कोमलाशुभा ॥
तया श्रीपादयुगलमर्चयामासुरञ्जसा । प्रदक्षिणमनुव्रज्य नमस्कृत्य मुहुर्मुहुः ॥ ७३ ॥
तुष्टुवुः स्तुतिभिर्देवा हर्षपूर्णाश्रुविक्लवाः । ततः प्रसन्नो भगवान्सर्वदेवेश्वरो हरिः ॥

अभीष्टान्प्रददौ तेभ्यो वरान्देव्या सह प्रभुः ॥ ७४ ॥

ततः सुहृष्टाः सुरमानुषाद्या लक्ष्मीकटाक्षार्पितदृष्टिपूताः ।

प्रभूतधान्यार्थयुता निरन्तरं सुखं परं प्रापुरनामया भृशम् ॥ ७१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे लक्ष्म्युत्पत्तिर्नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

# त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः

## लक्ष्मीप्रादुर्भावेदेवकृतालक्ष्मीनारायस्तुतिस्तत्रैकादश्युपवासमाहात्म्यवर्णनम्

शङ्कर उवाच ।

ततः प्रोवाच भगवान्सुरांश्चैव महामुनीन् । देव्या सह प्रहृष्टात्मा सर्वलोकहितायवै

श्रीभगवानुवाच ।

शृणुध्वं मुनयः सर्वेदेवताश्च महाबलाः । एकादशी महापुण्या सर्वोपद्रवनाशिनी ॥२॥

लक्ष्मीसन्दर्शनार्थाय भवद्भिःसमुपोषिता । अद्यप्रभृति लोकानामुपोष्या सा भविष्यति

पूजितोऽस्मि श्रिया सार्धं भवद्भिर्मुनिसत्तमाः ! ।

द्वादश्यां तु विशेषेण तुलस्या च तथा श्रिया ॥ ४ ॥

यस्मात्तु पूजितोऽस्म्यत्र भवद्भिर्मुनिसत्तमाः । तस्मात्तु सर्वदा पुण्या द्वादशी ममवल्लभा

अद्यप्रभृति ये लोका उषिताः पूर्ववासरे । द्वादश्यामुदिते भानौ श्रद्धया परया युताः॥

ये पूजयन्ति मां भक्तास्तुलस्याच श्रिया सह । सर्वे ते बन्धनिर्मुक्ताः प्राप्नुवन्तिपदंमम

नार्चयन्ति च ये वै मां द्वादश्यां पुरुषोत्तमम् ।

ते नराः पापकर्माणो मम मायाविमोहिताः ॥ ८ ॥

ये नार्चयन्ति पापिष्ठा नरा नरकगामिनः । तान्पापान्विपर्यैर्बद्धान्मम पूजापराङ्मुखान्

क्षिपत्यजस्रं संसारे माया मम दुरत्यया ॥ ६ ॥

रुद्र उवाच ।

अद्यप्रभृति ये लोका एकादश्यां सुरोत्तमाः !। भुञ्जन्तेतेऽपि निरयं प्राप्नुवन्ति न संशयः

एवमुक्त्वा तु भगवान्परमात्मा सनातनः । संस्तूयमानो मुनिभिः प्रययौ स्वकमालयम्
क्षीराब्धौ शेषपर्यङ्के विमाने सूर्यसन्निभे । देव्या सह विशालाक्ष्या रमया परमेश्वरः ॥
दर्शनार्थं सुराणां च तत्र सन्निहितोऽभवत् । ततः सुरगणाः सर्वे कूर्मरूपं सनातनम् ॥
भक्त्या सम्पूजयित्वाऽथ तुष्टुवुर्हृष्टमानसाः । ततः प्रसन्नो भगवन्कूर्मरूपी जनार्दनः ॥

भगवानुवाच ।

वरं वृणीध्वं देवेशा यद्वो मनसि वर्तते ॥ १७ ॥

रुद्र उवाच ।

ततो देवगणाः सर्वे कूर्मरूपं जनार्दनम् । ऊचुः प्राञ्जलयः सर्वे हर्षनिर्भरमानसाः ॥१८॥

देवा ऊचुः ।

शेषस्य दिग्गजानां च सहायार्थं महाबल ! । धर्तुमर्हसि देवेश ! सप्तद्वीपवतीं महीम् ॥

रुद्र उवाच ।

एवमस्त्विति हृष्टात्मा भगवाँल्लोकभावनः । धारयामास धरणीं सप्तद्वीपसमावृताम्
ततो देवाः सगन्धर्वा दैत्यदानवमानुषाः । महर्षिभिरनुज्ञाताः स्वलोकान्प्रतिपेदिरे ॥
तदाभृति ते सर्वे देवा ब्रह्मपुरोगमाः । सिद्धा ये मानुषाश्चैव योगिनो मुनिसत्तमाः ॥
विष्णोराज्ञां पुरस्कृत्य भक्त्या परमया युताः ।
एकादश्यामुपोष्याऽथ भक्त्या चैव जनार्दनम् ॥ २१ ॥
द्वादश्यामर्चनं चक्रुर्विधिना वरवर्णिनि ! । एतत्ते सर्वमाख्यातं देव्या जन्म वरानने ! ॥
कौर्मं च वैभवं विष्णोः किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे लक्ष्मीदर्शनादिमाहात्म्यं एकादश्युपवासकथनं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३३ ॥

---

# चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

## एकादशीव्रतनिर्णयन्द्वादशीमाहात्म्यवर्णनम्

पार्वत्युवाच ।

भगवञ्छ्रोतुमिच्छामिद्वादश्याश्च विधानकम् । विष्णोःपूजाविधानंचकर्त्तव्यंतत्रवैप्रभो!
एकादश्याः प्रभावं च सर्वपापहरं नृणाम् । आचक्ष्व विस्तरेणैव मयि प्रीत्या महेश्वर!

महादेव उवाच ।

शृणु देवि! प्रवक्ष्यामि द्वादश्याश्च विधानकम् ।
तस्याः स्मरणमात्रेण सन्तुष्टः स्याज्जनार्दनः ॥ ३ ॥

एकादश्यान्तु प्राप्तायां समुपोष्येहमानवाः । सर्वपापविनिर्मुक्ता यान्तिविष्णोःपरंपदम्
सप्तजन्मार्जितं पापं जानतोऽजानतः कृतम् । क्षणाच्च लयं याति द्वादश्यां हरिपूजनात्
अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्
धर्मदा ह्यर्थदा चैव कामदा मोक्षदा किल । सर्वकामदुघा नृणां द्वादशी वरवर्णिनि!॥
एकादशीसमं किञ्चित्पापत्राणं न विद्यते । एकादशीसमं किञ्चिद्व्रतं नास्ति शुभेक्षणे!
एकादशीं परित्यज्य यो ह्यन्यद्व्रतमाचरेत् । स करस्थं महद्राज्यंत्यक्त्वा भैक्ष्यंतुयाचते
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रिये! । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥
रटन्तीह पुराणानि भूयोभूयो वरानने!। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥
अभक्ष्यं सर्वदाप्रोक्तं किम्पुनः शुक्लकृष्णयोः । स ब्रह्महा सुरापीच स्तेयी च गुरुतल्पगः
मोहादश्नाति यो मर्त्यस्सम्प्राप्ते हरिवासरे । अतिक्रामति यो मोहाद्द्वादशीन् वरानने!

उपवासेन मूढात्मा विष्णुलोकं न पश्यति ।
भुङ्क्ष्वभुङ्क्ष्वेति यो ब्रूयात्सम्प्राप्ते हरिवासरे ॥ १४ ॥

यो ब्राह्मणं स्त्रियंगांच जहीतिच वदेत्कचित् । मद्यं पिबेति यो ब्रूयात्तेषामपि तथागतिः
पुरोडाशोऽपि वामोरु! सम्प्राप्तेहरिवासरे । अभक्ष्यस्सर्वदाप्रोक्तःकिंपुनश्चाऽन्नसंस्क्रिया

वर्णानामाश्रमाणांच सर्वेषां वरवर्णिनि ! । एकादश्युपवासस्तु कर्त्तव्यो नाऽत्रसंशयः
एकादश्यांच प्राप्तायां मातापित्रोर्मृतेऽहनि । द्वादश्यान्तु प्रदातव्यंनोपवासदिनेकचित्
गर्हितान्नं नवाऽश्नन्ति पितरश्च दिवौकसः ।
एकादश्यां न भोक्तव्यं सुराम्वा न पिवेत्कचित् ॥ २६ ॥
ब्राह्मणं नैव हन्याच्च इत्येषा वैदिकीश्रुतिः । तस्मादेकादशीं शुद्धामुपवासं समाचरेत्
दशमीमिश्रितां तान्तु प्रयत्नेन विवर्जयेत् । अरुणोदयवेलायां दशमीमिश्रिता भवेत्
तां त्यक्त्वा द्वादशीं शुद्धामुपोषेद्विचारयन् । कलायांविद्यमानायांसूर्यस्योदयनम्प्रति
त्रयोदश्यां तथा देवि ! द्वादशी परिविद्यते । तथा च द्वादशी शुद्धा ह्युपवासे विधीयते
अरुणोदयवेलायां कृत्यं सर्वं समाचरेत् । कलायामपि द्वादश्यां पारणं तत्र चोदितम्
शुद्धामेकादशीं चापि त्यजेदत्र न संशयः । कलाऽप्येकादशी यत्र द्वादश्यामुदिते रवौ॥
सर्वामेकादशीं त्यक्त्वा तत्रैवोपवसेद्द्विजः ।
एवं विधिं विनिश्चित्य समुपोष्य हरेर्दिनम् ॥ २६ ॥
सायमाद्यन्तयोरह्नोः सायम्प्रातस्तुमध्यमे । तत्रोपवासं कुर्वीत त्यक्त्वा भुक्तिचतुष्टयम्
दशम्यामेकभक्तस्तु नारीसंगमवर्जितः । अवनीतल्पशायी च परेऽहनि वसेच्छुचिः ॥
धात्रीफलानुलिप्ताङ्गः स्नानं नद्यां समाचरेत् । उपवासपरो भूत्वा रात्रौसम्पूजयेद्धरिम्
पाषण्डिनं विकर्मस्थं पतितं श्वपचं तथा । नावलोकेन्न सम्भाषेन्न स्पृशेत्तत्र वैष्णवः
अवैष्णवस्तु यो विप्रःसपाषण्डःप्रकीर्तितः । शिखोपवीतत्यागी च विकर्मस्थइतीरितः
महापापोपपापाभ्यां युक्तः पतितउच्यते । अन्त्यजः श्वपचः प्रोक्तो वेदैस्तत्र सुनिर्णयः
रात्रौ सम्पूज्य देवेशं जागरं च समाचरेत् । गन्धैः पुष्पैस्तथादीपैर्वस्त्रैराभरणैः शुभैः
जपैः स्तोत्रैर्नमस्कारैः पूजयेन्निशि भक्तितः । ततः प्रभातसमये तुलसीमिश्रितैर्जलैः ॥
स्नात्वा सम्यग्विधानेन सन्तर्प्य पितृदेवताः । पूजयेज्जगतामीशं लक्ष्म्या सह जनार्दनम्
कोमलैस्तुलसीपत्रैः पुष्पैश्चैव सुगन्धिभिः । दीपार्न्नीराजयेत्तत्र वारमष्टोत्तरं शतम् ॥
शतपत्रकृतां मालां ताभ्यां सम्यङ्निवेदयेत् । धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत्
शर्करासहितं दिव्यं पायसान्नं समर्पयेत् । कर्पूरेण च संयुक्तं ताम्बूलं च निवेदयेत् ॥

प्रदक्षिणनमस्कारं कृत्वा भक्त्या समन्वितः ।
आज्यं च जुहुयाद्वह्नौ शतमष्टोत्तरं तथा ॥ ३६ ॥
प्रत्यृचं पुरुषसूक्तेन लक्ष्मीसूक्तेन पायसम् । ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुञ्जीत वाग्यतः
पुराणादिप्रपाठेन क्षपयेत्तद्दिनं महत् ।क्षितिशायी ब्रह्मचारी तस्यामेव निशि स्वपेत् ॥
एवं सम्पूज्यमानः स द्वादश्यां कमलापतिः । क्षणात्प्रसन्नो भगवान्सर्वाभीष्टप्रदोध्रुवम्
इत्येतत्कथितं देवि! द्वादशीव्रतमुत्तमम् । किमन्यच्छ्रोतुकामाऽसि तद्वक्ष्यं ब्रवीम्यहम्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे
द्वादशीमाहात्म्यं नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

---

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः

### उमामहेश्वरसम्वादे नमुच्यादिरक्षोमारणम्पापण्डोत्पत्तिवर्णनम्

श्रीपार्वत्युवाच ।

पाषण्डानां च सम्वादं वर्जयेदिति यत्त्वया । उक्तं ममेह भगवञ्छ्रवणाच्चादपि गर्हितम्
ते कीदृशाः समाख्याताः कैर्लिङ्गैश्चिह्निता भुवि ॥ २ ॥

रुद्र उवाच ।

येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात्ते वै पाषण्डिनःस्मृताः
द्वेष्टारो विष्णुभक्तानां ये चाऽवैष्णवसंश्रयाः ।
पाषण्डिभिश्च संयुक्तास्ते वै पाषण्डिनस्स्मृताः ॥ ४ ॥
कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः । ऋते वनस्थाश्रमाच्चजटावल्कलधारिणः॥
अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा । शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ॥
रहिता ये द्विजा देवि!तेवै पाषण्डिनःस्मृताः । श्रुतिस्मृत्युदिताचारंयस्तुनाचरतिद्विजः

स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः। समस्तयज्ञभोक्तारमविदित्वाऽच्युतं हरिम्
उद्दिश्य देवता एव जुहोति च ददाति च। सपाषण्डीतिविज्ञेयः स्वतन्त्रः सर्वकर्मसु॥
स्वातन्त्र्यात्कुरुते यस्तु कर्म वेदोदितं महत्। विनावै भगवत्प्रीतिंसपाषण्डीतिवैस्मृतः
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वे नैव वीक्षेत स पाषण्डीभवेत्सदा॥
अवस्थात्रितये यस्तु मनोवाक्कायकर्मभिः। वासुदेवं न जानाति सपाषण्डीभवेद्द्विजः
किमत्र बहुनोक्तेन ब्राह्मणा येऽप्यवैष्णवाः। न स्प्रष्टव्यानवक्तव्या न द्रष्टव्याः कदाचन

वसिष्ठ उवाच।

एवं श्रुत्वाच सा देवी शङ्करेणाऽभिभाषितम्। विस्मयंपरमं गत्वा पुनःप्रोवाचभामिनी

पार्वत्युवाच।

भगवन्परमं गुह्यं पृच्छामि सुरसत्तम!। मयि प्रीत्या समाचक्ष्व संशयो वर्त्तते भृशम्
कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम्। तत्त्वया धार्यते देव! गर्हितं केन हेतुना॥
स्त्रीचापल्येन देवेश! पृच्छामि त्वां महामते!। महानुभावकथितं न कर्त्तव्यं महेश्वर!॥
त्वयाचरितमित्येतद्वक्तव्यं न कचित्प्रभो!। अकर्त्तव्यमपि प्रश्नं क्षन्तुमर्हसि मे प्रभो!॥

वसिष्ठ उवाच।

इतिदेव्या हरः पृष्टो रहस्ये जनवर्जिते। उवाच परमं गुह्यं यद्यदाचरितं स्वकम्॥१६॥

शिव उवाच।

शृणु देवि! प्रवक्ष्यामि यद्गुह्यं परमाद्भुतम्। न वक्तव्यं त्वया देवि! जनेषु कथितं मया
अपृथक्त्वाच्छरीरस्यवक्ष्यामितव सुव्रते!। नमुचयाद्या महादैत्याःपुरास्वायम्भुवेऽन्तरे
महाबला महावीर्या महावीरा महौजसः। सर्वे विष्णुरताः शुद्धाः सर्वपापविवर्जिताः
त्रयीधर्मव्रताः सर्वे भगवद्भक्तिसंयुताः। निर्जित्य सकलान्देवानव्याहतपराक्रमाः॥
पदानि तेषां जगृहुर्बलवीर्यसमन्विताः। ततो देवगणास्सर्वे भग्ना इन्द्रपुरोगमाः॥
विष्णोः समीपमागम्य भयार्त्ताः शरणं गताः॥ २४॥

देवाऊचुः।

देवदेव! महादैत्यैर्जम्भासुरपुरोगमैः। स्वात्स्वात्स्थानाच्च्यावितास्तु भवन्तंशरणंगताः

अजेयान्सर्वदेवानां तपोनिर्द्धूतकल्मषान् । त्वमेवैतान्महादैत्याञ्जेतुमर्हसि केशव ! ॥

महादेव उवाच ।

इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ।
तान्समाश्वास्य दिक्पालान्सामाह पुरुषोत्तमः ॥ २७ ॥

श्रीभगवानुवाच ।

त्वं हि रुद्र महाबाहो! मोहनार्थं सुरद्विषाम् । पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम!॥
तामसानि पुराणानि कथयस्व च तान्प्रति । मोहनानिचशास्त्राणिकुरुष्व च महामते!
मच्चभक्ताश्चविप्राश्चभविष्यन्तिमहर्षयः । त्वच्छक्त्यातान्समाविश्यकथयस्वचतामसान
काणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासोमृकण्डुंचबृहस्पतिम्
भार्गवं जामदग्न्यंचदशैतांस्तामसानृषीन् । तवशक्त्यासमाविश्यकुरुष्वजगतोऽहितम्

त्वच्छक्त्या च निविष्टास्ते तमसोद्रिक्तया भृशम् ।
तामसास्ते भविष्यन्ति क्षणादेव न संशयः ॥ ३३ ॥

कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये । पुराणानिचशास्त्राणि त्वत्परत्वपराणिच
कपालचर्मभस्मास्थिचिह्नान्यमरसर्वशः । त्वमेव धृत्वा ताँल्लोकान्मोहयस्व जगत्त्रये ॥
तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्कृतः । कङ्कालशैवपाषण्डमहाशैवादिभेदतः॥३६॥
अलक्ष्यं च मतं सम्यग्वेदबाह्यं नराधमाः । भस्मास्थिधारिणःसर्वेभविष्यन्तिह्यचेतसः
त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः । तेषां मतमधिष्ठायसर्वेदैत्याः सदानवाः
भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः । अहमप्यवतारेषु त्वां च रुद्र ! महाबल !॥
तामसानां मोहनार्थं पूजयामि युगेयुगे । मतमेतदवष्टभ्य पतन्त्येव न संशयः ॥ ४० ॥

महादेव उवाच ।

तच्छ्रुत्वाऽहं यथोक्तं तु वासुदेवेन भामिनि !। समुद्विग्नमना दीनो बभूवाऽत्र वरानने!
नमस्कृत्याऽथ तन्देवमब्रवं परमेश्वरम् । त्वयोदितमिदं देव! करोमि यदि भूतले॥४२॥

तस्मान्नाशो हि मे नाथ ! भविष्यति स संशयः ।
तत्र शक्यं मया कर्तुमेतत्कृत्यं हरेऽधुना ॥ ४३ ॥

त्वदाज्ञाऽपिच नोल्लङ्घ्या एतद्दुखतरं महत् । एवमुक्ते ततो देवि समाश्वास्यचमांपुनः
आत्मनाशाय तेनाऽत्र भवत्वित्याह मां हरिः । देवतानां हितार्थाय कुरुष्व वचनं मम
तवाऽपि जीवनोपायं कथयामि सुरोत्तम !। दत्तवान्कृपया मह्यमात्मनामसहस्रकम् ॥
हृदये मां समाधाय जपमन्त्रं ममाऽव्ययम् । षडक्षरं महामन्त्रं तारकं ब्रह्मसञ्ज्ञितम् ॥
ये भजन्ति हि मां भक्त्या तेषां मुक्तिर्न संशयः । इन्दीवरदलश्यामं पद्मपत्रविलोचनम्
शङ्खारशार्ङ्गधुधरं सर्वाभरणभूषितम् । पीतवस्त्रं चतुर्बाहुं जानकीप्रियवल्लभम् ॥ ४६॥
श्रीरामायनमइत्येवमुच्चार्य मन्त्रमुत्तमम् । सर्वदुःखहरं चैतत्पापिनामपि मुक्तिदम् ॥
इमंमन्त्रं जपन्नित्यममलस्त्वंभविष्यसि । भस्मास्थिधारणाद्यत्तु सम्भूतंकिल्बिषंत्वयि
मङ्गलं तद्भवेत्सर्वं मन्मन्त्रोच्चारणाच्छुभात् । नर्पितो नाशयिष्यामि पापंसर्वं सुरोत्तम!
मदन्यदेवताभक्तिर्जायते न तु सुव्रत !। मनसैवार्चय हृदि मां नाथं पुरुषोत्तमम् ॥५३॥
मदाज्ञां कुरु मत्प्रीत्या सर्वमेतच्छुभं तव । इति सन्दिश्यमां देवि! विससर्ज मरुद्गणान्

विसृष्टास्ते ततो देवा निवृत्ताः स्वाश्रमं ययुः ।
ततो मां प्रार्थयामासुर्देवा इन्द्रपुरोगमाः ॥ ५५ ॥

इन्द्रादयऊचुः ।

शीघ्रं कुरु हितं देव ! यथोक्तं हरिणाऽधुना ॥ ५६ ॥

महादेव उवाच ।

देवतानां हितार्थाय वृत्ति पाखण्डिनां शुभे !। कपालचर्मभस्मास्थिधारणं तत्कृतंमया
तामसानि पुराणानि यथोक्तं विष्णुना शुभे!। पाषण्डशैवशास्त्राणि यथोक्तंकृतवानहम्
मच्छक्त्याऽपिसमाविश्यगौतमादिद्विजानपि । वेदबाह्यानिशास्त्राणिसम्यगुक्तंमयाऽनघे
इमं मतमवष्टभ्य दुष्टाः सर्वे च राक्षसाः । भगवद्विमुखाः सर्वे बभूवुस्तमसावृताः ॥६०
भस्मादिधारणं कृत्वा महोग्रतमसावृताः । मामेव पूजयाञ्चक्रुर्मांसासृक्चन्दनादिभिः
मत्तो वरप्रदानानि लब्ध्वा मदबलोद्धताः । अत्यन्तविषयासक्ताः कामक्रोधसमन्विताः
सत्त्वहीनास्तु निर्वीर्या जिता देवगणैस्तदा । सर्वधर्मपरिभ्रष्टाः कालेयान्त्यधमांगतिम्
ये मे मतमवष्टभ्य चरन्ति पृथिवीतले । सर्वधर्मैश्च रहिताः पश्यन्ति निरयं सदा ॥६४॥

एवं देवहितार्थाय वृत्तिर्मेदेवि! गर्हिता । विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम्
बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषाम् । अथान्तर्हृदये नित्यं ध्यात्वादेवंजनार्दनम्
जपन्नेव च तन्मन्त्रं तारकं ब्रह्मवाचकम् । सहस्रनामसदृशं विष्णोर्नारायणस्य तु ॥६७
षडक्षरं महामन्त्रं रघूणां कुलवर्द्धनम् । जपन्वै सततं देवि सदानन्दसुधाप्लुतम् ॥
सुखमात्यन्तिकं ब्राह्ममश्नामि सततं शुभे ! ॥ ६८ ॥
एतत्ते सर्वमाख्यातं त्वया पृष्टं शुभानने ! ।
किमन्यच्छ्रोतुकामाऽसि प्रीत्या तत्परिपृच्छ माम् ॥ ६९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे पाषण्डोत्पत्ति-वर्णनं नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

# षट्त्रिंशदधिकद्विशततमोऽध्यायः

## उमामहेश्वरसम्वादेऽष्टादशपुराणनानादर्शनवर्णनप्रसङ्गे-सात्त्विकादिशास्त्रवर्णनम्

पार्वत्युवाच ।

तामसानि च शास्त्राणि समाचक्ष्व ममाऽनघ !। सम्प्रोक्तानिचयैर्विप्रैर्भगवद्भक्तिवर्जितैः
तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ! ॥ १ ॥

रुद्र उवाच ।

शृणु देवि! प्रवक्ष्यामि तामसानियथाक्रमम् । येषांस्मरणमात्रेणमोहःस्याज्ज्ञानिनामपि
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि चततःशृणु
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेनतथान्यायंसाङ्ख्यंतुकपिलेन वै
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुनाबुद्धरूपिणा

बौद्धशास्त्रं महत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते
मयैव कथ्यते देवि! कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम्
कर्मस्वरूपं त्याज्यत्वं यत्र वै प्रतिपाद्यते । सर्वकर्मपरिभ्रष्टो विकर्मस्थः स उच्यते ॥
परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते । ब्रह्मणोऽत्र परं रूपं निर्गुणं वक्ष्यते मया ॥११॥
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्
मयैव वक्ष्यते देवि ! जगतां नाशकारणात् । द्विजन्मना जैमिनिना पूर्वं वेदमपार्थकम्
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् । शास्त्राणि चैव गिरिजे तामसानि निबोध मे

पुराणानि च वक्ष्यामि तामसानि यथाक्रमात् ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ १३ ॥

तथैव नारदीयं तु मार्कण्डेयं तु सप्तमम् । आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् । द्वादशं च वाराहं च वामनं च त्रयोदशम् ॥१५

कौर्मं चतुर्दशं प्रोक्तं मात्स्यं पञ्चदशं स्मृतम् ।
षोडशं गारुडम्प्रोक्तं स्कान्दं सप्तदशं स्मृतम् ॥ १६ ॥

अष्टादशं तु ब्रह्माण्डं पुराणानि यथाक्रमम् । मात्स्यं कौर्मं तथालैङ्गंशैवंस्कान्दंतथैवच
आग्नेयं च षडेतानि तामसानि निबोध मे । वैष्णवं नारदीयं च तथा भागवतं शुभम्
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।। सात्त्विकानि पुराणानि विज्ञेयानिशुभानिवै
ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोध मे

सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि ! निरयप्राप्तिहेतवः ॥ २१ ॥

तथैव स्मृतयःप्रोक्ताऋषिभिस्त्रिगुणान्विताः । सात्त्विकाराजसाश्चैवतामसाःशुभदर्शने
वासिष्ठं चैव हारीतं व्यासंपाराशरन्तथा । भारद्वाजंकाश्यपंचसात्त्विकामुक्तिदाःशुभाः
मानवं याज्ञवल्क्यं चाऽप्यात्रेयं दाक्षमेवच । कात्यायनंवैष्णवंचराजसाःस्वर्गदाशुभाः
गौतमं बार्हस्पत्यं च सांवर्तं च यमंस्मृतम् । शाङ्खं चौशनसं चेतितामसानिरयप्रदाः
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि । तामसा नरकायैव वर्जयेत्तान्विचक्षणः ॥

एतत्ते सर्वमाख्यातं प्रसङ्गाच्छुभदर्शने !। शेषं च वैभवावस्थां हरेर्वक्ष्यामि ते शृणु ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे तामसशास्त्रकथनं नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

---

# सप्तत्रिंशदधिकद्विशततमोऽध्यायः

## उमामहेश्वरसम्वादे विष्णोर्वैभवावस्थावर्णनक्रमेसनकादिभिर्जयविजयाभ्यांशापदानंशापोपहतयोस्तयोरक्षोयोनिधारणंतदर्थंवराहावतारवर्णनं हिरण्याक्षवधवर्णनञ्च

श्रीरुद्र उवाच ।

हिरण्यकहिरण्याक्षौ काश्यपेयौ महाबलौ । दितिपुत्रौ महावीर्यौ सर्वदैत्यपती उभौ॥

वैकुण्ठनगरस्याऽऽस्तां पश्चिमद्वारपालकौ । नाम्ना तौ जयविजयौ श्वेतद्वीपे हरिं गतौ

तस्मिन्प्रविष्टान्योगीन्द्रान्सनकादीन्महाबलौ ।

वारयामासतुर्देवि ! हरिसन्दर्शनोत्सुकान् ॥

तैः प्रशप्तौ महावीर्यौ द्वारपालौ सुरोत्तमौ ॥ ३ ॥

सनकादयऊचुः ।

उत्पत्स्यतः पृथिव्यां तु द्वाःस्थौ देवस्य किङ्करौ ॥ ४ ॥

रुद्र उवाच ।

इति शापं तयोर्दत्त्वा तत्र तस्थुर्मुनीश्वराः । देवस्तमर्थं ज्ञात्वा च तानाहूय च तावपि

तौ द्वाःस्थावब्रवीत्तत्र भगवान्भूतभावनः ॥ ५ ॥

भगवानुवाच ।

कृतवन्तौ महावीर्यावपराधं महात्मनाम् । नातिक्रमणीयमिदं भवद्भ्यां द्वारपालकौ

दासत्वं सप्तजन्मानियुवांभक्तौममाऽनघौ । अमित्रतांतथात्रीणिजन्मानिभजतोऽपिवा

रुद्र उवाच ।

इत्युक्तौ तौ महावीर्यावब्रूतां परमेश्वरम् ॥ ८ ॥

जयविजयावूचतुः ।

चिरकालं महीं गन्तुं न समर्थौस्वमानद !। तस्मात्त्रीण्येवजन्मानिविद्विट्त्वंचभजावहे

देव ! त्वयैव निहतौ प्राप्स्यावो भवदन्तिकम् ॥ ९ ॥

रुद्र उवाच ।

इत्युक्त्वा द्वारपालौ तौ पूर्वं जातौ महाबलौ । कश्यपस्यमहावीर्यौ दितिगर्भे महासुरौ

हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षः कनिष्ठकः । उभौतौलोकविख्यातौ महावीर्यबलोद्धतौ

अप्रमाणशरीरः स हिरण्याक्षो महोद्धतः । उत्पाट्य बाहुसाहस्रैः पृथिवीं समहीधराम्

ससागरां द्वीपयुतां सर्वप्राणिसमन्विताम् । उत्पाट्य शिरसा धृत्वा प्रविवेशरसातलम्

ततो देवगणाः सर्वे चुक्रुशुर्भयपीडिताः । शरणं प्रययुर्देवं नारायणमनामयम् ॥ १४ ॥

ततस्तदद्भुतं ज्ञात्वा शङ्खचक्रगदाधरः । वाराहं रूपमास्थाय विश्वरूपं जनार्दनः ॥१५॥

अनादिमध्यान्तवपुः सर्वदेवमयो विभुः । विश्वतः पाणिपच्चक्षुर्महादंष्ट्रो महाभुजः ॥

एकया दंष्ट्रया दैत्यं जघान परमेश्वरः । संचूर्णितमहागात्रो ममार दितिजाधमः॥१७॥

पतितां धरणीं दृष्ट्वा दंष्ट्रयोद्धृत्य पूर्ववत् । संस्थाप्य धारयामास शेषे कूर्मवपुस्तदा ॥

तं दृष्ट्वा देवताः सर्वाः क्रोडरूपं महाहरिम् । तुष्टुवुर्मुनयश्चैव भक्तिनम्रात्ममूर्त्तयः ॥

देवाऊचुः ।

नमोयज्ञवराहाय कृष्णाय शतबाहवे । नमस्ते वेदवेदाङ्गतनवे विश्वरूपिणे ॥ २० ॥

सर्गस्थितिस्वरूपाय सर्वयज्ञस्वरूपिणे । कलाकाष्ठानिमेषादिकालरूपाय ते नमः ॥

भूतात्मने नमस्तुभ्यमृग्वेदवपुषे तथा । सुरात्मने नमस्तुभ्यं सामवेदाय ते नमः ॥

ॐकाराय नमस्तुभ्यं यजुर्वेदस्वरूपिणे । आथर्वणस्वरूपाय चतुर्वेदमयाय च ॥ २३॥

नमस्ते वेदवेदाङ्गसाङ्गोपाङ्गाय ते नमः । नमो भगवते तुभ्यं वराय वपुषे सदा ॥२४॥

नमो भूर्भुवस्स्वःपतये महईशायते नमः । जनस्तपस्सत्यपतये सर्वलोकेश्वराय च ॥

वषट्कारात्मने तुभ्यं यज्ञरूपाय ते नमः । गोविन्दाय नमस्तुभ्यमनादिनिधनाय च ॥
नमस्ते चिदचिद्वस्तुविशिष्टैकस्वरूपिणे । श्रीभूनीलाधिपतये जगत्पित्रे नमोनमः ॥

रुद्र उवाच ।

इत्यादिस्तुतिभिः स्तुत्वा देवं वाराहरूपिणम् ।
अर्चयामासुरात्मेशं गन्धपुष्पादिभिर्हरिम् ॥ २८ ॥

समर्च्यमानस्तैर्देवैस्तेषामिष्टं वरं ददौ । गन्धर्वैरप्सरोभिश्च गीयमानो मुदा हरिः ॥
महर्षिभिःस्तूयमानस्तत्रैवाऽन्तरधीयत । एभिःस्तुत्वानरोभक्त्याप्रातरुत्थायभक्तिमान्
ईप्सितांल्लभते भूमिं चिरं सस्यफलान्विताम् । एतत्ते सर्वमाख्यातं वाराहं वैभवं हरेः
नारसिंहं तथा वक्ष्ये शृणु देवि ! वरानने ! ॥ ३१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वराहावतार-
कथनं नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

---

# अष्टात्रिंशदधिकद्विशततमोऽध्यायः

## हिरण्यकशिपुपापाचारेणपीडितायास्त्रिलोक्याःसमुद्धारे वैष्णवप्रह्लाद-कथाप्रसङ्गे नृसिंहावतारवर्णनम्

रुद्र उवाच ।

भ्रातरं निहतं ज्ञात्वा हिरण्यकशिपुस्ततः । तपस्तेपे महादैत्यो मेरोः पार्श्वे च मां प्रति
दिव्यवर्षसहस्राणि वायुभक्षो महाबलः । जपन्पञ्चाक्षरं मन्त्रं पूजयामास मां शुभे !॥
ततः प्रहृष्टमनसा तमवोचं महासुरम् । वरं वृणीष्व दैतेय ! यत्ते मनसि वर्त्तते ॥
ततः प्रोवाच दैतेयो मां प्रसन्नं शुभानने ! ॥ ३ ॥

हिरण्यकशिपुरुवाच ।

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् । पशुपक्षिमृगाणां च सिद्धानां वै महात्मनाम्

यक्षविद्याधराणां च किन्नराणान्तथैव च । सर्वेषामेव रोगाणामायुधानां तथैव च ॥
सर्वेषामृषिमुख्यानामवध्यत्वं प्रयच्छ मे ॥ ५ ॥

रुद्र उवाच ।

एवमस्त्विति तद्ब्रह्मस्त्वब्रवं प्रियदर्शने ! । मत्तो महद्वरं प्राप्य स दैतेयो महाबलः ॥
जित्वामहेन्द्रंदेवांश्चसत्रैलोक्येश्वरोऽभवत् । सर्वांश्चयज्ञभागांश्चस्वयमेवाऽग्रहीद्बलात्
त्रातारं नाधिगच्छन्ति देवतास्तेन निर्जिताः । तस्यैव किङ्कराःसर्वे गन्धर्वादेवदानवाः
यक्षाश्च नागाः सिद्धाश्च साध्याश्च वशवर्तिनः ।
उत्तानपादस्य सुतां कल्याणीं नाम कन्यकाम् ॥ ६ ॥
उपयेमे विधानेन दैत्यराजो महाबलः । तस्यां जातो महातेजाः प्रह्लादो दैत्यराट्शुभे !
अनुरक्तोहृषीकेशे गर्भवासेऽपि यो हरौ । सर्वावस्थासु कृत्येषु मनोवाक्कायकर्मभिः ॥
नान्यंजानाति देवेशात्प्रसन्नात्मासनातनात् । सकालेनोपनीतः सन्गुरुगेहेऽवसन्सुधीः
अधीत्य सर्ववेदांश्च शास्त्राणि विविधानि च ।
कस्यचित्त्वथ कालस्य गुरुणा सह दैत्यजः ॥ १३ ॥
पितुः समीपमागत्य ववन्दे विनयान्वितः । तं परिष्वज्य बाहुभ्यां तनयं शुभलक्षणम्
अङ्के निधाय दैत्येन्द्रः प्रोवाचेदं सुविस्मितम् ॥ १४ ॥

हिरण्यकशिपुरुवाच ।

प्रह्लाद! चिरकालंत्वं गुरुगेहे निवेशितः । यदुक्ता गुरुणा विद्या तन्ममाऽऽचक्ष्वसुव्रत!

रुद्र उवाच ।

इतिपृष्टः स्वपित्रा वै प्रह्लादो जन्मवैष्णवः । प्राह दैत्येश्वरं प्रीत्या वचनं कलुषापहम् ॥

प्रह्लाद उवाच ।

यो वै सर्वोपनिषदामर्थः पुरुषईश्वरः । तं वै सर्वगतं विष्णुं नमस्कृत्य ब्रवीमि ते ॥

रुद्र उवाच ।

इति विष्णुस्तुतिं श्रुत्वा दैत्यराड्विस्मयान्वितः ।
उवाच तं गुरुं रोषात्किं त्वयोक्तं ममात्मजे ॥ १८ ॥

ममाऽऽत्मजस्यदुर्बुद्धे! हरिसंस्तवमीदृशम् । किमर्थमुक्तवान्ज्ञात्वाऽप्यकार्यंब्राह्मणोचितम्
अश्राव्यं मदमित्रस्यस्तवमेतं ममाऽग्रतः । बालेनाऽपि कृतं त्वेतत्त्वत्प्रसादाद्द्विजाधम!
इत्युक्त्वा परितोवीक्ष्यदैत्यराट्क्रोधमूर्च्छितः । उवाच दैत्यमेकं तु बन्धयैनंद्विजाधमम्
इतिराजवचः श्रुत्वा स बबन्ध भृगोः सुतम् । बध्यमानं गुरुं दृष्ट्वा प्रह्लादो ब्राह्मणप्रियः
उवाच पितरं तात! इदं मे नोक्तवान्गुरुः । कृपया देवदेवस्य शिक्षितोऽस्मि हरेः प्रभो!
नान्यो गुरुर्मे भवति स एव प्रेरको हरिः । श्रोता मन्ता तथा वक्ता द्रष्टा सर्वग ईश्वरः

हरिरेवाऽक्षयः कर्त्ता नियन्ता सर्वदेहिनाम् ।
तदनागा ह्यसौ विप्रो मोक्तव्योऽयं गुरुः प्रभो ! ॥ २५ ॥

रुद्र उवाच ।

इति पुत्रवचःश्रुत्वा हिरण्यकशिपुस्ततः । तम्ब्राह्मणं मोचयित्वा स्वसुतंप्राहविस्मयात्

किं वत्स ! त्वं भ्रमस्येवं मिथ्यावाक्यैर्द्विजन्मनः ।
को विष्णुः किं तु तद्रूपं कुत्राऽसौ संस्थितो हरिः ॥ २७ ॥

अहमेवेश्वरो लोके त्रैलोक्याधिपतिर्मतः । मामेवार्चय गोविन्दं त्यज शत्रुं दुरासदम् ॥
अथवा शङ्करं देवं रुद्रं लोकगुरुं प्रभुम् । अर्चयस्व सुराध्यक्षं सर्वैश्वर्यप्रदं शिवम् ॥
त्रिपुण्ड्रधारणं कृत्वा भस्मना दैत्यपूजितम् । पूजयस्व महादेवं पाशुपत्योक्तमार्गतः ॥

रुद्र उवाच ।

इति दैत्यपतेर्वाक्यं श्रुत्वोचुस्तत्पुरोहिताः ॥ ३१ ॥

पुरोहिताऊचुः ।

एवमेव महाभाग ! कुरुष्व वचनं पितुः । त्यज शत्रुं कैटभारिं पूजयस्व त्रिलोचनम् ॥
रुद्रात्परतरो देवोनास्ति सर्वप्रदोनृणाम् । पितातवाऽपि तस्यैव प्रसादादीश्वरोऽभवत्

रुद्र उवाच ।

इति तेषां वचः श्रुत्वा प्रह्लादः प्राह वैष्णवः ॥ ३४ ॥

प्रह्लाद उवाच ।

अहो भगवतः श्रैष्ठ्यंयन्मायामोहितं जगत् । अहो वेदान्तविद्वांसः सर्वलोकेषुपूजिताः

ब्राह्मणाअपि चापल्याद्वदन्त्येवं मदान्विताः । नारायणः परं ब्रह्मतत्त्वं नारायणः परम्
नारायणः परोध्याता ध्यानं नारायणःपरम् । गतिर्विश्वस्य जगतःशाश्वतं शिवमच्युतः
धाता विधाता जगतो वासुदेवः सनातनः । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥३८
हिरण्मयवपुर्नित्यः पुण्डरीकनिभेक्षणः । श्रीभूनीलापतिः सौम्यो निर्मलः शुभविग्रहः॥
तेनैव सृष्टौ ब्रह्मेशौ सर्गसंहारकारकौ । तस्यैवाऽऽज्ञां पुरस्कृत्य वर्त्तेते ब्रह्मशङ्करौ ॥

भीषाऽस्माद्वाति पवनो भीषोदेति दिवाकरः ।
भीषाऽस्मादग्निश्चेन्द्रोऽथ मृत्युर्धावति पञ्चमः ॥ ४१ ॥

आसीदेको हरिर्दिव्यो देवो नारायणः परः । ब्रह्मा नेन्द्रो नचेशानो नच चन्द्रदिवाकरौ
नवाद्यावापृथिव्यौच नक्षत्राणि दिवौकसः । तस्य विष्णोः परंधाम सदापश्यन्तिसूरयः
एवं सर्वोपनिषदामर्थंहित्वा द्विजोत्तमाः । रागाल्लोभाद्भयाद्वापि किम्वा ब्रूथ ममाऽग्रतः
तं सर्वरक्षकं देवं त्यक्त्वासर्वेश्वरं हरिम् । कथं पाषण्डमाश्रित्य पूजयामिच शङ्करम्
लक्ष्मीपतिं देवदेवमनन्तं पुरुषोत्तमम् । इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम् ॥४६ ॥
श्रीवत्सलक्षितोरस्कं सर्वाभरणभूषितम् । सदाकुमारं सर्वेशं नित्यानन्दसुखप्रदम् ॥
कृष्णं दध्युर्महात्मानो योगिनः सनकादयः । यमर्चयन्ति ब्रह्मेशशक्राद्या देवतागणाः॥
यस्य पत्न्याः कटाक्षार्द्धदृष्ट्या दृष्टा दिवौकसः । ब्रह्मेन्द्ररुद्रवरुणयमसोमधनाधिपाः ॥
यन्नामस्मरणादेव पापिनामपि सत्वरम् । मुक्तिर्भवति जन्तूनां ब्रह्मादीनां सुदुर्लभा ॥
स एव रक्षकः श्रीशो देवानामपि सर्वदा । तमेव पूजयिष्यामि लक्ष्म्या संयुतमच्युतम्

प्राप्स्यामि सुसुखेनैव तद्विष्णोः परमं पदम् ॥ ५१ ॥

रुद्र उवाच ।

इतितस्यवचःश्रुत्वा हिरण्यकशिपुस्ततः । क्रोधेनमहताऽऽविष्टो जज्वालाऽग्निरिवाऽपरः

परितो वीक्ष्य दैतेयानित्याह क्रोधमूर्च्छितः ॥ ५२ ॥

हिरण्यकशिपुरुवाच ।

भीषणैः शस्त्रसङ्घातैः प्रह्लादं पापकारिणम् । ममाऽऽज्ञया घातयध्वं शत्रुपूजनतत्परम्
रक्षिता हरिरेवेति प्रोच्यते तेन वाक्छलात् । अद्यैव सफलं तस्य पश्येयं हरिरक्षणम्

रुद्र उवाच ।

तदोद्यतास्त्रा दैतेया हन्तुं दैत्येश्वरात्मजम् । परिवार्य महात्मानं तस्थुर्दैत्येश्वराज्ञया
प्रह्लादोऽपि तदा विष्णुं ध्यात्वा हृदयपङ्कजे । जजाप्नष्टाक्षरंमन्त्रं तस्थौ गिरिरिवाऽपरः
तं जघ्नुः परितो वीराः शूलतोमरशक्तिभिः । प्रह्लादस्य वपुस्तत्र हरिसंस्मरणाच्छुभे !

विष्णोः प्रभावाद्दुर्द्धर्षं वज्रभूतमभूद्भृशम् ।

ततः सम्प्राप्य तद्गात्रं महास्त्राणि सुरद्विषाम् ॥ ५८ ॥

नीलोत्पलदलानीव पेतुश्छिन्नाःक्षितौ शुभे !। अल्पमप्यस्य तद्गात्रं भेत्तुंदैत्या न च क्षमाः
विस्मितावाङ्मुखास्तस्थुर्दैत्यराजान्तिकेभटाः । तादृग्विधंमहात्मानंदृष्ट्वापुत्रम्महाबलम्
विस्मयंपरमंगत्वा दैत्यराट्क्रोधमूर्च्छितः । आदिदेश ततः सर्वान्दन्दशूकान्महाविषान्

वासुकिप्रभृतीन्धीमान्खादयध्वमितिक्रुधा ।

आदिष्टास्तेनराज्ञाऽथ तेनागाःसुमहाबलाः ॥ ६२ ॥

ज्वलितास्या महाभीमास्तं चखादुर्महाबलम् । गरुडध्वजभक्तन्तं विदश्य गरलायुधाः॥
निर्विषाश्छिन्नदशना बभूवुरनिलाशनाः । वैनतेयसहस्रेण छिन्नगात्राः सुविह्वलाः ॥
प्रदुद्रुवुर्दिशः सर्वा वमन्तो रुधिरंभृशम् । तादृग्विधान्महासर्पान्दृष्ट्वा दैत्यपतिस्तदा ॥

आदिदेश ततः क्रुद्धो दिग्गजान्सुमदान्वितान् ।

निर्दिष्टास्तेन राज्ञाऽथ दिग्गजाश्च मदोद्धताः ॥ ६६ ॥

परिवार्याऽथ तं जघ्नुर्दन्तैः पृथुतरैर्भृशम् । अथ दिग्गजदन्ताश्चछिन्नमूलास्ततोऽपतन्
दन्तैर्विना कृतानागा भयार्त्ता वै प्रदुद्रुवुः । तान्दृष्ट्वाऽथ महानागान्दैत्येन्द्रःकुपितोबली
प्रज्वाल्यचमहावह्निं चिक्षेप सुतमात्मनः । जलशायिप्रियं दृष्ट्वा प्रह्लादं हव्यवाहनः ॥
न ददाह च तंधीरं सुशीतः समभूच्छिखी । अदह्यमानं तं बालं दृष्ट्वा राजा सुविस्मितः
प्रादात्तस्मै विषं घोरं सर्वभूताहितन्तदा । तस्य विष्णोः प्रभावाच्च विषमस्याऽमृतंभवेत्
अर्पणात्तस्य देवस्य विषं चामृतमश्नुते । एवमाद्यैर्वधोपायैर्घोररूपैः सुदारुणैः ॥७२॥

बाधयित्वाऽऽत्मजं राजा तस्याऽवध्यत्वमीक्ष्य च ।

ततः साम्ना सुतं प्राह दैत्यराड्विस्मयाकुलः ॥ ७३ ॥

हिरण्यकशिपुरुवाच ।

त्वया विष्णोःपरत्वं च सम्यगुक्तं ममाग्रतः । व्यापित्वात्सर्वभूतानां विष्णुरित्यभिधीयते
योऽसौ सर्वगतो देवः स एव परमेश्वरः । तस्य सर्वगतत्वं वै प्रत्यक्षं दर्शयस्व मे ॥७५॥
ऐश्वर्यशक्तितेजांसि ज्ञानवीर्यबलानि च । पश्येयं तस्य परमं रूपं गुणविभूतयः ॥७६॥
सम्यग्द्रष्ट्वा प्रयत्नेन विष्णुं मन्ये दिवौकसम् । मम प्रतियत्नो लोके नास्ति देवेषु कश्चन
ईशानवरदानेन सर्वभूतेष्ववध्यताम् । प्राप्तवान्सर्वभूतानां दुर्जयत्वं च मानद ! ॥
ईश्वरत्वं लभेद्विष्णुर्मां जित्वा बलवीर्यतः ॥ ७८ ॥

रुद्र उवाच ।

इति तस्य वचः श्रुत्वा प्रह्लादः प्राह विस्मितः । हरेः प्रभावं दैत्यस्य कथयामास सुव्रतः

प्रह्लाद उवाच ।

योऽसौ नारायणः श्रीमान्परमात्मा सनातनः । वसनात्सर्वभूतेषु वासुदेवः स उच्यते
सर्वव्यापी जगद्धाता विष्णुरित्यभिधीयते । न किञ्चिदस्मादन्यत्तु जगत्स्थावरजङ्गमम्
सर्वत्र चिदचिद्वस्तुरूपं तस्यैव नान्यथा । त्रिपाद्व्याप्तिः परंव्योम्नि पाद्व्याप्तिरिहाद्भुता
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः ।
योगिभिर्दृश्यते भक्त्या नाऽभक्त्या दृश्यते क्वचित् ॥ ८३ ॥
द्रष्टुं न शक्यो रोषाच्च मत्सराद्वा जनार्दनः । देवतिर्यङ्मनुष्येषु स्थावरेष्वपि जन्तुषु॥
व्याप्य तिष्ठति सर्वेषु क्षुद्रेष्वपि महत्सु च ॥ ८४ ॥

रुद्र उवाच ।

इति प्रह्लादवचनं श्रुत्वा दैत्यवरस्तदा । उवाच रोषताम्राक्षो भर्त्सयंश्च सुतं मुहुः ॥

हिरण्यकशिपुरुवाच ।

असौ सर्वगतो विष्णुरपि चेत्परमः पुमान् । प्रत्यक्षं दर्शयस्वाऽद्य बहुभिः किं प्रलापितैः

महादेव उवाच ।

इत्युक्त्वा सहसा दैत्यः प्रासादस्तम्भमात्मनः ।
ताडयामास हस्तेन प्रह्लादमिदमब्रवीत् ॥ ८७ ॥

हिरण्यकशिपुरुवाच ।

अस्मिन्दर्शयतं विष्णुं यदि सर्वगतो भवेत् । अन्यथा त्वामहं निष्यामि मिथ्यावाक्यप्रलापिनम्

रुद्र उवाच ।

इत्युक्त्वा सहसा खड्गमाकृष्य दितिजेश्वरः । प्रह्लादोरसि चिक्षेप हन्तुं खड्गेन तं रुषा
तस्मिन्क्षणे महाशब्दः स्तम्भे संश्रूयते भृशम् । सम्वर्ताशनिसंरावैः खमिव स्फुटितान्तरम्
तेन शब्देन महता दैत्यश्रोत्रविघातिना । सर्वे निपातिता भूमौ छिन्नमूला इव द्रुमाः॥

विभ्यति संप्लुतं दैत्या मेनिरे वै जगत्त्रयम् ।
तां स्थूणां तु द्विधा भित्त्वा निष्क्रान्तो वै महाहरिः ॥ ९२ ॥

चकार स महाघोरं जगत्क्षयनिभस्वनम् । तेन नादेन महता तारकाः पतिता भुवि ॥
नृसिंहवपुरास्थाय तत्रैवाऽऽविरभूद्धरिः । अनेककोटिसूर्याग्निनेजसा स समावृतः ॥
मुखे पञ्चाननप्रख्यः शरीरे मानुषाकृतिः । दंष्ट्राकरालवदनस्त्र्यक्षश्च त्रिसटोद्धतः ॥९५॥
ज्वालावलितकेशान्तस्सस्फुलिंगेक्षणो विभुः । सहस्रबाहुभिर्दीर्घैः सर्वायुधसमन्वितैः॥
वृतो मेरुरिवाभाति बहुशाखानगान्वितः । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥
श्रीवत्सकौस्तुभोरस्को दिव्याभरणभूषितः । तस्थौ नृकेसरी तत्र संहर्तुं सर्वदानवान्
तं दृष्ट्वा घोरसङ्काशं नरसिंहं महाबलम् । दग्धाक्षिपक्ष्मा दैत्येन्द्रो विह्वलाङ्गः पपात ह
प्रह्लादोऽपि तदा दृष्ट्वा नारसिंहोपमं हरिम् । जयशब्देन देवेशं नमश्चक्रे जनार्दनम् ॥
ददर्श तस्य गात्रेषु नृसिंहस्य महात्मनः । लोकान्समुद्रान्सद्वीपान्सुरगन्धर्वमानुषान् ॥
अजाण्डानां सहस्रं तु सटाग्रे तस्य दृश्यते । दृश्यन्ते तस्य नेत्रेषु सोमसूर्यादयस्तथा ॥
कर्णयोरश्विनौ देवौ दिशश्च विदिशस्तथा । ललाटे ब्रह्मरुद्रौ च नभो वायुश्च नासिके

इन्द्राग्नी तस्य वक्त्रान्ते जिह्वायां तु सरस्वती ।
दंष्ट्रासु सिंहशार्दूलाः शरभाश्च महोरगाः ॥ १०४ ॥

कण्ठे च दृश्यते मेरुः स्कन्धेऽपि च महाद्रयः । देवतिर्यङ्मनुष्याश्च बाहुष्वपि महात्मनः
नाभौ चास्यान्तरिक्षं च पादयोः पृथिवी तथा । मेर्वादयः पर्वताश्च दृश्यन्तेऽङ्गुलिपङ्क्तिषु
रोमस्वोषधयः सर्वाः पादपा नखपङ्क्तिषु । निःश्वासेषु च वेदाश्च साङ्गोपाङ्गसमन्विताः

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । सर्वाङ्गेषु प्रदृश्यन्ते गन्धर्वाप्सरसश्च ये
इत्थं विभूतयस्तस्य दृश्यन्ते परमात्मनः । श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम्
शङ्खचक्रगदाखड्गशार्ङ्गाद्यैर्हेतिभिर्युतम् । सर्वोपनिषदामर्थं दृष्ट्वा दैत्येश्वरात्मजः ॥११०॥
हर्षाश्रुजलसिक्ताङ्गः प्रणनाम मुहुर्मुहुः । दैत्येन्द्रस्तु हरिं दृष्ट्वा क्रोधान्मृत्युवशे स्थितः॥
योद्धुं खड्गं समुद्यम्य नृसिंहं तमभिद्रवत् । अथ दैत्यगणाः सर्वे लब्धसञ्ज्ञा महाबलाः

स्वान्यायुधानि चाऽऽदाय हरिं जघ्नुस्त्वरान्विताः ।

पलालकाण्डानि यथा वह्नौ क्षिप्तान्यनेकशः ॥ ११३ ॥

तथैव भस्मतां यान्ति महास्त्राणि हरेस्तनौ । तान्यनीकानि दैत्यानां दृष्ट्वा नरहरिस्तदा
सटैर्ददाह च ज्वालामालाविरचितस्फुटैः । नृकेसरिसटोद्भूतवह्निना दानवा भृशम् ॥
निहतास्तत्क्षणात्सर्वे निःशेषंतदभूद्बलम् । प्रह्लादं सानुगं हित्वाभस्मितेर्वाक्ष्यतद्बले
क्रोधाद्दैत्यपतिः खड्गमाकृष्याऽभिप्रपद्यत । खड्गहस्तं तु दैत्येन्द्रं जग्राहैकेन बाहुना ॥
पातयामास देवेशो यथा शाखां महानिलः । गृहीत्वा पतितं भूमौ महाकायं नृकेसरी
स्वोत्सङ्गे स्थापयामास ददर्शाऽसौ मुखं हरेः । विष्णुनिन्दाकृतंपाप द्रोहवैष्णवजंतथा
नृसिंहस्पर्शनादेव निर्भस्मितमभूत्तदा । अथ दैत्येश्वरस्याऽथ महद्गात्रं नृकेसरी ॥१२०
नखैर्विदारयामास तीक्ष्णैर्वज्रनिभैर्नखैः । सनिर्मलात्मा दैत्येन्द्रः पश्यन्साक्षान्मुखंहरेः
नखनिर्भिन्नहृदयः कृतार्थो विजहावसून् । तद्गात्रं शतधा भित्त्वा नखैस्तीक्ष्णैर्महाहरिः

आकृष्याऽन्त्राणि दीर्घाणि कण्ठे संसक्तवान्प्रियान् ।

अथ देवगणास्सर्वे दृष्ट्वा तत्र नृकेसरिम् ॥ १२३ ॥

प्रदहन्तं जगद्दीपं कालाग्निमिव मेनिरे । अथ देवगणाः सर्वे मुनयश्च तपोधनाः॥१२४॥
ब्रह्मरुद्रौ पुरस्कृत्य शनैः स्तोतुं समाययुः । ते प्रसादयितुं भीता ज्वलन्तंविश्वतोमुखम्
मातरं जगतां धात्रीं चिन्तयामासुरीश्वरीम् । हिरण्यवर्णां हरिणींसर्वोपद्रवनाशिनीम्

विष्णोर्नित्यानवद्याङ्गीं ध्यात्वा नारायणीं शुभाम् ।

देवीसूक्तजपैर्भक्त्या नमश्चक्रुः सनातनीम् ॥ १२७ ॥

तैश्चिन्त्यमाना सा देवी तत्रैवाऽऽविरभूत्तदा । चतुर्भुजाविशालाक्षी सर्वाभरणभूषिता

दुकूलवस्त्रसहितां दिव्यमालानुलेपनाम् । तां दृष्ट्वा देवदेवस्य प्रियां सर्वे दिवौकसः ॥
ऊचुः प्राञ्जलयो देवीं प्रसन्नं कुरु ते प्रियम् । त्रैलोक्यस्याऽभयंस्वामीयथा दद्यात्तथाकुरु

रुद्र उवाच ।

इत्युक्ता महसादेवी प्रियं प्राप्य जनार्दनम् । प्रणिपत्य नमस्कृत्य साप्रसीदेत्युवाचतम्
तां दृष्ट्वा महिषीं स्वस्य प्रियां सर्वेश्वरोहरिः । रक्षःशरीरजंक्रोधंतत्याजप्रीतवत्क्षणात्
अङ्कमादाय तां देवीं समाश्लिष्य दयानिधिः । कृपासुधार्द्रदृष्ट्या वै निरैक्षतसुरान्हरिः
ततो जयजयेत्युच्चैः स्तुवतांनमतां तदा । तद्दयादृष्टिदृष्टानां सानन्दः सम्भ्रमोऽभवत्
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । ऊचुः प्राञ्जलयो देवं नमस्कृत्य जगत्पतिम् ॥

देवगणाऊचुः ।

द्रष्टुमत्यद्भुतं तेजो न शक्तास्ते जगत्पते ! । अत्यद्भुतमिदं रूपं बहुबाहुपदाङ्कितम् ॥
जगत्त्रयसमाक्रान्तं तेजस्तीक्ष्णतरं तव । द्रष्टुं स्थातुं न शक्ताःस्मः सर्व एव दिवौकसः

महादेव उवाच ।

इत्यर्थितस्तु विबुधैस्तेजस्तदतिभीषणम् । उपसंहृत्य देवेशो बभूव सुखदर्शनः॥१३८॥
शरत्कोटीन्दुसङ्काशः पुण्डरीकनिभेक्षणः । सुधामयसटापुञ्जविद्युत्कोटिनिभः शुभः ॥
नानारत्नमयैर्दिव्यः केयूरैः कटकान्वितैः । बाहुभिः कल्पवृक्षस्य शाखाग्रैरिव सत्फलैः
चतुर्भिः कोमलैर्दिव्यैरन्वितः परमेश्वरः । जपाकुसुमसङ्काशैः शोभितः करपङ्कजैः ॥
शङ्खचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितः । वरदाभयहस्ताभ्यामितराभ्यां नृकेसरी ॥
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । उद्यद्दिनकराभ्यांचकुण्डलाभ्यांविराजितः
हारकेयूरकटकैर्भूषणैः समलङ्कृतः । सव्याङ्कस्थश्रिया युक्तो राजते नरकेसरी॥१४४॥
लक्ष्मीनृसिंहं तं दृष्ट्वा देवताः समहर्षयः । आनन्दाश्रुजलैः सिक्ता हर्षनिर्भरचेतसः ॥
आनन्दसिन्धुमग्नास्ते नमश्चक्रुर्निरन्तरम् । अर्चयामासुरात्मेशं दिव्यपुष्पसमर्पणैः ॥
रत्नकुम्भैः सुधापूर्णैरभिषिच्य सनातनम् । वस्त्रैराभरणैर्गन्धैः पुष्पैर्धूपैर्मनोरमैः ॥
दिव्यैर्नीराजनैर्दीपैरर्चयित्वा नृकेसरिम् । तुष्टुवुः स्तवनैर्दिव्यैर्नमश्चक्रुर्मुहुर्मुहुः॥१४८॥
ततः प्रसन्नो लक्ष्मीशस्तेषामिष्टान्वरान्ददौ ।

ततो देवगणैः सार्धं सर्वेशो भक्तवत्सलः ॥ १४६ ॥
प्रह्लादं सर्वदैत्यानां चक्रे राजानमव्ययम् । आश्वास्य भक्तं प्रह्लादमभिषिच्य सुरोत्तमैः
ददौ तस्मै वरानिष्टान्भक्तिंचाऽव्यभिचारिणीम् । ततोदेवगणैःसर्वैःस्तूयमानोनृकेसरी
विकीर्णपुष्पवर्षैश्च तत्रैवाऽन्तरधीयत । ततः सुरगणाः सर्वे स्वं स्वं स्थानं प्रपेदिरे ॥
पुनश्च यज्ञभागान्स्वान्बुभुजुः प्रीतमानसाः । ततो देवाः सगन्धर्वानिरातङ्कास्तदाऽभवन्
तस्मिन्हते महादैत्ये सर्व एव प्रहर्षिताः । प्रह्लादस्तु तदा चक्रे राज्यं धर्मेण वैष्णवः
हरेः प्रसादाल्लब्धं तु राज्यं वैष्णवसत्तमः । बहुभिर्यज्ञदानाद्यैरर्चयित्वा नृकेसरिम् ॥
काले हरिपदं प्राप योगिगम्यं सनातनम् । एतत्प्रह्लादचरितं ये तु शृण्वन्ति नित्यशः
ते सर्वे पापनिर्मुक्ता यास्यन्ति परमांगतिम् । एतत्ते कथितं देवि ! नृसिंहं वैभवं हरेः
शेषां च वैभवावस्थां शृणु देवि ! यथाक्रमम् ॥ १५७ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे
नृसिंहप्रादुर्भावो नामाऽष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

# एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः

## बलिराजोपाख्याने वामनप्रादुर्भाववर्णनम्

रुद्र उवाच ।

प्रह्लादस्य सुतो जज्ञे विरोचनइतीरितः । तस्य पुत्रो महाबाहुर्बलिर्वैश्वानरः प्रभुः ॥१॥
स तु धर्मविदां श्रेष्ठः सत्यसन्धो जितेन्द्रियः । हरेः प्रियतमोभक्तोनित्यंधर्मरतः शुचिः
स जित्वा सकलान्देवान्सेन्द्रांश्च समरुद्गणान् ।
त्रीँल्लोकान्स्ववशे स्थाप्य राज्यं चक्रे महाबलः ॥ ३ ॥
अकृष्टपच्या पृथिवी बहुसस्यफलप्रदा । गावः पूर्णदुघाः सर्वाः पादपाः फलपुष्पिताः
स्वधर्मनिरताः सर्वे नराः पापविवर्जिताः । अर्चयन्ति हृषीकेशं सततं विगतज्वराः ॥

एवं चकार धर्मेण राज्यं दैत्यपतिर्बली । इन्द्रादित्रिदशास्तस्य किङ्कराः समुपस्थिताः
ऐश्वर्यं त्रिषु लोकेषु बुभुजे बलदर्पहृत् । भ्रष्टराज्यं सुतं दृष्ट्वा तस्याऽपि हितकाम्यया॥
कश्यपो भार्यया सार्द्धं तपस्तेपे हरिं प्रति । अदित्या सह धर्मात्मा पयोव्रतसमन्वितः
अर्चयामास देवेशं पद्मनाभं जनार्दनम् । ततो वर्षसहस्राणि तेन सम्पूजितो हरिः ॥६॥
तत्रैवाऽऽविरभूत्तस्य देव्या सह सनातनः । तं दृष्ट्वा पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ॥
इन्द्रनीलमणिश्यामं सर्वाभरणभूषितम् । स्फुरत्किरीटकेयूरहारकुण्डलशोभितम् ॥११

कौस्तुभोद्भासितोरस्कं पीतवस्त्रेण वेष्टितम् ।
श्रिया सह समासीनं मण्डपेन्द्रे महात्मनि ॥ १२ ॥

तं दृष्ट्वा जगतामीशं हर्षनिर्भरचेतसा । पत्न्या सह नमस्कृत्य तुष्टाव द्विजसत्तमः ॥

कश्यप उवाच ।

नमो नमस्ते लक्ष्मीश सर्वज्ञ जगदीश्वर !। सर्वात्मन्सर्वदेवेश! सृष्टिसंहारकारक ! ॥
अनादिनिधनानन्तवपुषे विश्वधारिणे । नमस्ते वेदवेदाङ्गवपुषे सर्वचक्षुषे ॥ १५ ॥
सर्वात्मने नमस्तुभ्यं नमः सूक्ष्मतराय च । कल्याणगुणपूर्णाय योगिध्येयात्मने नमः
नमो नित्यकुमाराय श्रीभूर्नीलाधिपाय च । नित्यमुक्तैकभोगाय परधाम्नि स्थिताय च
चतुरात्मन्नमस्तुभ्यं चतुर्व्यूह नमोऽस्तु ते । पञ्चावस्थाय वै तुभ्यं नमस्ते पाञ्चकालिक!

पाञ्चकालिकनिष्ठैस्तु योगिभिः पूज्यसे सदा ।
पञ्चार्थतत्त्वविदुषां पञ्चसंस्कारशालिनाम् ॥ १६ ॥

पञ्चावस्थं स्वरूपं ते विज्ञेयं सततं हरे !। चतुर्धापरिपूर्णात्मन्नियतं कवयो विदुः ॥२०
त्वत्प्रसूतिं जगत्सर्वं पुनन्तितव किङ्कराः । त्रयीमयाः कर्मनिष्ठा ये द्विजा भक्तवत्सलाः
तेषां दयेक्षणादेव भवबन्धविमुक्तये । नमोऽस्तु त्रिजगद्धात्रे स्वयं धात्रेऽखिलात्मने
धात्रे विधात्रे विश्वाय विश्वरूपायते नमः । नारायणाय कृष्णाय वासुदेवाय शार्ङ्गिणे

विष्णवे जिष्णवे तुभ्यं शुद्धसत्त्वाय ते नमः ॥ २२ ॥

महादेव उवाच ।

इत्यादिस्तुतिभिः सम्यक्स्तूयमानो महर्षिणा । प्राहगम्भीरयावाचा परितुष्टो जनार्दनः

श्रीभगवानुवाच ।

सन्तुष्टोऽहं द्विजश्रेष्ठ त्वयाभक्त्या समर्चितः । वरंवृणीष्व भद्रंतेकरोमि तववाञ्छितम्

महादेव उवाच ।

ततः प्राह हृषीकेशं भार्यया सह कश्यपः ॥

कश्यप उवाच ।

पुत्रत्वंममदेवेश!सम्प्राप्य स्वर्गिणांहितम् । कुरुष्व बलिनादेव त्रैलोक्यं निर्जितंबलात्
इन्द्रस्याऽवरजो भूत्वा उपेन्द्रइति विश्रुतः । येन केन च मार्गेण बलिनिर्जित्य मायया
त्रैलोक्यं मम पुत्राय देहि शक्राय शाश्वतम् ॥ २८ ॥

महादेव उवाच ।

इत्युक्तस्तेन विप्रेण तथेत्याह जनार्दनः । संस्तूयमानस्त्रिदशैस्तत्रैवाऽन्तरधीयत ॥२९॥
एतस्मिन्नेव काले तु कश्यपस्य महात्मनः । अदित्या गर्भमागच्छद्भगवान्भूतभावनः ॥
तस्मिन्काले बलिर्यागं दीर्घसत्रं महातपाः । यष्टुं महर्षिभिः सार्द्धमारेभे तद्विधानतः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसंवादे वामनप्रादुर्भावोनामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

# चत्वारिंशदधिकद्विशततमोऽध्यायः

## बटुवेषधारिणावामनेनबलियागेगत्वायज्ञार्थंत्रिपदक्रमंपृथिव्यायाचनं-तत्स्वीकृतौ च पदद्वयेनभूलोकादिब्रह्मलोकमापनं ब्रह्ममण्डलेगङ्गोत्पत्तिवर्णनञ्च

श्रीमहादेव उवाच ।

अथवर्षसहस्रान्ते सर्वलोकमहेश्वरम् । अदितिर्जनयामास वामनं विष्णुमच्युतम् ॥१॥
श्रीवत्सकौस्तुभोरस्कं पूर्णेन्दुसदृशद्युतिम् । सुन्दरं पुण्डरीकाक्षमतिखर्वतनुं हरिम् ॥

बटुवेषधरं देवं सर्ववेदाङ्गगोचरम् । मेखलाजिनदण्डादिचिह्नैरङ्कितमीश्वरम् ॥ ३ ॥
तं दृष्ट्वा देवताः सर्वे शतक्रतुपुरोगमाः । स्तुत्वा महर्षिभिः सार्द्धं नमश्चक्रुर्महौजसम्
ततः प्रसन्नो भगवान्प्रोवाच सुरसत्तमान् ॥ ४ ॥

वामन उवाच ।

किं कर्तव्यं मया चाऽद्य तद्ब्रूत सुरसत्तमाः ! ॥ ५ ॥

श्रीशङ्कर उवाच ।

ततः प्रहृष्टास्त्रिदशास्तमूचुः परमेश्वरम् ॥ ६ ॥

देवाऊचुः ।

अस्मिन्काले बलेर्यज्ञो वर्त्तते मधुसूदन !। अप्रत्याख्यानकालोऽयं तस्य दैत्यपतेःप्रभो!
याचित्वा त्रिदिवं लोकं तन्नस्त्वं दातुमर्हसि ॥ ७ ॥

शङ्कर उवाच ।

इत्युक्तस्त्रिदशैस्सर्वैराजगाम बलिं हरिः । यागदेशे समासीनमृषिभिस्सार्द्धमग्रभिः ॥
अभ्यागतंतु तंदृष्ट्वा सहसोत्थाय दैत्यराट् । अभ्यागतः स्वयं विष्णुरितिहाससमन्वितः
पूजयामास विधिना निवेश्य कुसुमासने । प्रणिपत्य नमस्कृत्य प्राह गद्गदया गिरा ॥

बलिरुवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि सफलं मम जीवितम् ।
त्वामर्चयित्वा विप्रेन्द्र ! किं करोमि तव प्रियम् ॥ ११ ॥
आगतोऽसियदर्थन्त्वं मामुद्दिश्य द्विजोत्तम !। तत्प्रयच्छामि ते शीघ्रंब्रूहि वेदविदांवर!

शङ्कर उवाच ।

ततः प्रहृष्टमनसा तमुवाचमहीपतिम् ॥ १३ ॥

वामन उवाच ।

शृणु राजेन्द्र! वक्ष्यामि ममागमनकारणम् । अग्निकुण्डस्य पृथिवीं देहि दैत्यपते! मम
मम त्रिविक्रममितां नान्यदिच्छामि मानद !। सर्वेषामेव दानानां भूमिदानमनुत्तमम्॥
यो ददाति महीं राजा विप्रायाऽकिञ्चनाय वै । अङ्गुष्ठमात्रामपिवा स भवेत्पृथिवीपतिः

न भूमिदानसदृशं पवित्रमिह विद्यते। भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ॥१७
उभौ तौपुण्यकर्माणौनिधने स्वर्गगामिनौ। तस्माद्भूमिं महाराज! प्रयच्छ त्रिपदीमम
एतदल्पां महीं दातुं माविशङ्क महीपते!। जगत्त्रयप्रदानं तन्नाम भूप! भविष्यति ॥१९

शङ्कर उवाच।

ततः प्रहृष्टवदनस्तथेत्याह महीपतिः। तस्मै महीप्रदानं तु कर्तुं मेने विधानतः॥ २०॥
तं दृष्ट्वा दैत्यराजं तं तदा तस्य पुरोहितः। उशना ह्यब्रवीद्वाक्यं मा राजन्दीयतां मही

शुक्र उवाच।

एषविष्णुःपरेशोऽथदेवैः सम्प्रार्थितोनृप!। वञ्चयित्वामहींसर्वां त्वत्तःप्राप्तुमिहाऽऽगतः
तस्मान्मही न दातव्या तस्मै राजन्महात्मने। अन्यमर्थं प्रयच्छस्व वचनान्मम भूपते!

श्रीशङ्कर उवाच।

ततः प्रहस्य राजाऽसौ तं गुरुं प्राह धैर्यतः॥ २४॥

बलिरुवाच।

प्रीतयेवासुदेवस्यसर्वं पुण्यंकृतंमया। अद्य धन्योऽस्म्यहं विष्णुः स्वयमेवाऽऽगतोयदि
तस्यप्रदेयमेवाऽद्य जीवितंचमहत्सुखम्। तस्मादस्मैप्रयच्छामि त्रिलोकीमपिमाचिरम्

श्रीशङ्कर उवाच।

इत्युक्त्वा भूपतिस्तस्यपादौ प्रक्षाल्यभक्तितः। वाञ्छितांप्रददौ भूमिंवारिपूर्वं विधानतः
परिणीय नमस्कृत्य दत्त्वा वै दक्षिणां वसु। प्रोवाचतं वटुं विप्रं प्रहृष्टेनाऽन्तरात्मना

बलिरुवाच।

धन्योऽस्मि कृतकृत्योऽस्मि तव दत्त्वा महीं द्विज!।
यत्रेष्टं तव विप्रेन्द्र! तद्गृहाण महीमिमाम्॥ २९॥

श्रीशङ्कर उवाच।

तमुवाच नृपं विष्णूराजंस्तव समीपतः। मापयामि पदेनाऽद्य पृथिवीं तव पश्यतः॥
इत्युक्त्वा खर्वरूपं तद्विहाय परमेश्वरः। त्रिविक्रमवपुर्भूत्वा जग्राह पृथिवीमिमाम्॥
पञ्चाशत्कोटिविस्तीर्णां ससमुद्रमहीधराम्। ससागरां च सद्वीपां सदेवासुरमानुषाम्

पादेनैकेन वपुषो विक्रम्य मधुसूदनः । उवाच दैत्यराजेन्द्र किङ्करोमीति शाश्वतः ॥३३
तद्वै त्रैविक्रमं रूपमीश्वरस्य महौजसम् । हितार्थमपिदेवानामृषीणां च महात्मनाम् ॥
न द्रष्टुमपि शक्यं स्याद्ब्रह्मणः शङ्करस्यच । तत्पदं पृथिवी सर्वामाक्रम्य गिरिजेशुभे!
अतिरिक्तं समभवच्छतयोजनमायतम् । दिव्यं चक्षुर्ददौ तस्मै दैत्यराजे सनातनः ॥३६
तस्मै सन्दर्शयामास स्वकं रूपं जनार्दनः । तद्विश्वरूपं देवस्य दृष्ट्वा दैत्येश्वरो बलिः॥
प्रहर्षमतुलं लेभे सानन्दाश्रुपरिप्लुतः । दृष्ट्वा देवं नमस्कृत्य स्तुत्वा स्तुतिभिरेव च ॥
प्राह गद्गदया वाचा प्रहृष्टेनाऽन्तरात्मना ॥ ३८ ॥

बलिरुवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि त्वांदृष्ट्वापरमेश्वरम् । लोकत्रयं त्वमेवैतद्गृहाण परमेश्वर!

श्रीशङ्कर उवाच ।

अथ सर्वेश्वरो विष्णुर्द्वितीयं पदमव्ययम् । ऊर्ध्वं प्रसारयामास ब्रह्मलोकान्तमच्युतः॥
सनक्षत्रग्रहोपेतं सर्वदेवसमावृतम् । पदेन परिपूर्णोऽभूदच्युतस्य शुभानने ॥ ४१ ॥
ततः पितामहो ब्रह्मा चक्रपद्मादिचिह्नितम् । पादं तद्देवदेवस्य हर्षसङ्कुलचेतसा ॥४२॥
धन्योऽस्मीति वदन्ब्रह्मा गृहीत्वा स्वकमण्डलुम् ।
भक्त्या प्रक्षालयामास तत्र संस्थितवारिणा ॥ ४३ ॥
अक्षय्यमभवत्तोयं तस्य विष्णोः प्रभावतः । तत्तीर्थं मेरुशिखरे पपात विमलं जलम् ॥
जगतः पावनार्थं वै चतुर्दिक्षु प्रवाहितम् । सिता चाऽलकनन्दा च चक्षुर्भद्रा यथाक्रमम्
ततश्चाऽलकनन्दा च मेरोर्दक्षिणतःस्मृता । त्रिधानाम्ना त्रिपथगा त्रिस्रोतालोकपावनी
स्वर्गे मन्दाकिनी प्रोक्ता त्वधो भोगवतीतथा । मध्ये वेगवतीगङ्गा पावनार्थं नृणांशिवा
तां दृष्ट्वा मेरुमध्येतु प्रस्रवन्तीं शुभानने !। आत्मनः पावनार्थाय शिरसाऽहमधारयम्॥
दिव्यं वर्षसहस्रं तु धृत्वा गङ्गाजलं शुभम् । शिवत्वमगमं देवि! सर्वलोकेषु पूजितः ॥
यो वहेच्छिरसा गङ्गातोयं विष्णुपदोद्भवम् । प्राशयेद्वा जगत्पूज्यो भविष्यतिनसंशयः
गङ्गागङ्गेति योब्रूयाद्यो जनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति
ततो भगीरथो राजा गौतमश्च महातपाः । तपसा पूजयित्वा मां गङ्गार्थं समयाचत

सर्वलोकहितार्थाय तां गङ्गां वैष्णवीं शिवाम् ।
तयोरहं तामददां प्रीत्या देवि ! सरिद्वराम् ॥ ५३ ॥

गौतमेन समानीता गौतमी तेन कीर्त्तिता । भागीरथीति विख्याता तेनराज्ञा वृता यतः
प्रसङ्गात्ते समाख्यातं गङ्गाजन्माऽत्यनुत्तमम् । ततो नारायणः श्रीमान्बलेर्दैत्यपतेःप्रभुः
रसातलं शुभं लोकं प्रददौ भक्तवत्सलः । सर्वेषां दानवानां तु नागानां यादसामपि ॥
राजानं तु बलिं चक्रे यावदाभूतसम्प्लवम् । प्रतिगृह्य बलेर्लोकान्बटुवेषेण दैत्यहा ॥५७
महेन्द्राय ददौ प्रीत्या काश्यपो विष्णुरव्ययः । ततोदेवाः सगन्धर्वा ऋषयश्च महौजसः
तुष्टुवुः स्तवनैर्दिव्यैः पूजयामासुरच्युतम् । संक्षिप्य तन्महद्रूपं तेषां सन्दर्शनाय वै ॥
सम्पूज्यमानस्त्रिदशैरन्तर्द्धानं ययौ हरिः । इत्थं सुरक्षितः शक्रो विष्णुना प्रभविष्णुना
त्रैलोक्यं महदैश्वर्यमवाप त्रिदिवेश्वरः । एतत्ते सर्वमाख्यातं वामनं वैभवं शुभम् ॥
शेषं यद्वैभवं देवि ! तद्वक्ष्यामि यथाक्रमात् ॥ ६१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादेवामनप्रादुर्भावो नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

# एकचत्वारिंशदधिकद्विशततमोऽध्यायः

## परशुरामचरित्रप्रसङ्गे जमदग्निहैहयाधिपत्योः कामधेनुप्राप्त्यैविवादोयुद्धश्च-जमदग्निहननम्परशुरामकृतानिःक्षत्रापृथ्वीवर्णनम्

ईश्वर उवाच ।

भृगुपुत्रो महानासीज्जामदग्निर्द्विजोत्तमः । समस्तवेदवेदाङ्गपारगश्च महातपाः ॥ १ ॥
तपस्तेपे स धर्मात्मा महेन्द्रं प्रति भामिनि !। सहस्रवर्षपर्यन्तं गङ्गायाः पुलिने शुभे !॥
ततः प्रसन्नः प्राहेदं भगवान्पाकशासनः ॥ २ ॥

इन्द्र उवाच ।

वरं वृणीष्व विप्रेन्द्र ! यत्ते मनसि वर्त्तते ॥३ ॥

ईश्वर उवाच ।

ततः प्रोवाच विप्रर्षिः परितुष्टं शतक्रतुम् ॥ ४ ॥

जमदग्निरुवाच ।

सुरभिं देहि मे देव ! सर्वकामदुघां सदा ॥ ५ ॥

ईश्वर उवाच ।

ततः प्रसन्नो देवेशस्तस्मै विप्राय गोत्रभित् । प्रददौ सुरभिं देवीं सर्वकामदुघां तदा॥
स लब्ध्वा सुरभिं देवीं जमदग्निर्महातपाः । उवास महदैश्वर्यैः शतक्रतुरिवाऽपरः ॥७॥
रेणुकस्य सुतां रम्यां रेणुकां नामनामतः । उपयेमे विधानेन जमदग्निर्महातपाः ॥८॥
तयासह स धर्मात्मा रेमे वर्षाण्यनेकशः । पौलोम्या शुभयादेव्या यथासङ्क्रन्दनोविभुः
ततःसपुत्रकामत्वादिष्टिं चक्रेसुधार्मिकः । इष्ट्या सन्तोषयामास पाकशासनमीश्वरम्
परितुष्टः शचीभर्त्ता ददौ पुत्रं महाबलम् । महौजसं महाबाहुं सर्वशत्रुप्रतापनम् ॥११॥
अथ कालेन विप्रेन्द्रो रेणुकायां शुचिस्मिते !। पुत्रमुत्पादयामास महावीर्यं बलान्वितम्
विष्णोरंशांशभागेन सर्वलक्षणलक्षितम् । तस्मिन्सुते महावीर्ये भृगुस्तस्य पितामहः॥
नाम चास्मैददौ हर्षाद्विष्णोरंशोपलक्षितम् । चक्रेऽथ नामधेयन्तु रामइत्यस्यशोभनम्
जमदग्नेः समुत्पन्नो जामदग्न्य इतीरितः । तद्भार्गवान्वयः सोऽपि ववृधे द्विजपुङ्गवः ॥
उपनीतस्तदा काले सर्वविद्याविशारदः । तपस्तप्तुं जगामाऽथ शालिग्रामाचलं प्रति ॥
ददर्श कश्यपं तत्र ब्रह्मर्षिममितौजसम् । दृष्ट्वा प्रणम्य हर्षेण पूजयामास भार्गवः ॥१७
तेन सम्पूजितस्सम्यङ्गरीचितनयो द्विजः । विधिना प्रददौ तस्मै मन्त्रं वैष्णवमव्ययम्
लब्धमन्त्रस्तदा रामः कश्यपात्त महात्मनः । पूजयामास विधिना सतदा कमलापतिम्
षडक्षरं महामन्त्रं जपन्नेव दिवानिशम् । ध्यायन्कमलपत्राक्षं विष्णुं सर्वगतं हरिम् ॥
तपस्तेपे स धर्मात्मा बहुवर्षाणि भार्गवः । जितेन्द्रियस्तु यतवाक्तदा तस्थौ महातपाः
जमदग्निस्तु विप्रर्षिः स्थितो गङ्गातटे शुभे । चकार विधिवद्धर्मं यज्ञदानादिकं महत् ॥

धेन्वाः प्रसादादिन्द्रस्य सम्पूर्णास्तस्य सम्पदः ।
कस्यचित्त्वथ कालस्य हैहयाधिपतिः प्रभुः ॥ २३ ॥
विजित्वा सर्वराष्ट्राणि सर्वसैन्यसमावृतः । भार्गवस्याऽऽश्रमम्प्राप्य जमदग्नेर्महीपतिः
समीक्ष्य तं महाभागं ववन्दे मुनिसत्तमम् । पृष्ट्वा तु कुशलं तस्य महर्षेर्भावितात्मनः॥
प्रददौ नृपतिस्तस्मै वस्त्राण्याभरणानि च । स च सम्पूजयामास राजानं गृहमागतम्
मधुपर्केण विधिना पूजयित्वा नृपोत्तमम् । ससैन्याय नृपेन्द्राय भोजनं प्रददौ मुनिः
प्रार्थिता सुरभिस्तेन भार्गवेण सुधीमता । सम्पूर्णमन्नपानादि ससर्ज शबला तदा ॥
अक्षय्यमन्नपानादि तया सृष्टं महातपाः । ससैन्याय नृपेन्द्राय प्रददौ मुनिसत्तमः ॥
तांदृष्ट्वा शबलांराजा कुतूहलसमन्वितः । स्पृहां चाऽप्यकरोद्राजा तस्यांगवि सुदुर्मतिः
अयाचत्सुरभिं तत्र जमदग्निं नृपोत्तमः ॥ ३० ॥

कार्त्तवीर्योवाच ।

शबलां देहि मे विप्र! कपिलां सर्वकामदाम् । अन्यधेनुसहस्राणि दास्यामि तव सुव्रत!

ईश्वर उवाच ।

इत्युक्तस्तेन राज्ञाऽऽह जमदग्निर्महातपाः ॥ ३२ ॥

जमदग्निरुवाच ।

न देया शबला राजन्मया तव महीपते !। इयं च देवदेवेन शक्रेण परिपालिता ॥
देवतानां धनं राजन्दातव्यं स्यात्कथं मया ॥ ३३ ॥

ईश्वर उवाच ।

इत्युक्तः स तदा राजा क्रोधेन कलुषीकृतः । बलाज्जग्राह शबलां सर्वसैन्यसमावृतः ॥
ततः क्रुद्धा महाभागा शबला वरवर्णिनि !। जघान तस्य सैन्यानि शृङ्गैः खुरतलैरपि ॥
घातयित्वा मुहूर्त्तेन तत्सैन्यंशबलाबलात् । अन्तर्द्धानंगता देवी ययौशक्रान्तिकंक्षणात्
स्वसैन्यं निहतं दृष्ट्वा सोऽर्जुनः क्रोधमूर्च्छितः । मुष्टिना ताडयामास भार्गवंद्विजसत्तमम्
ताडितस्तेन बहुशो विकलाङ्गः प्रकल्पितः । पपात सहसा भूमौ ममार द्विजसत्तमः ॥
हत्वा मुनिवरं तत्र पापात्मा हैहयाधिपः । महासैन्यपरीवारो विवेश नगरं स्वकम् ॥

रामस्तु देवदेवेशं पूजयामास भार्गवः । तेन सम्पूजितो देवः प्रसन्नः प्राह केशवः ॥

श्रीभगवानुवाच ।

प्रीतोऽस्मि तपसा वत्स! भवतो नियतात्मनः । सम्प्रदास्यामि ते विप्र मच्छक्तिं परमां शुभाम्

आवेशितोऽथ मच्छक्त्या जहि दुष्टान्नृपोत्तमान् । भूभारकविनाशाय देवतानां हिताय वै

ईश्वर उवाच ।

इत्युक्त्वा प्रददौ देवः परशुं शत्रुधर्षणम् । वैष्णवं च महच्चापं दिव्यान्यस्त्राण्यनेकशः

दत्त्वा प्रोवाच भगवाञ्जामदग्न्यं जनार्दनः ॥ ४३ ॥

श्रीभगवानुवाच ।

मदोत्कटान्नृपान्हत्वा बहुशः परवीरहा । गृहाण पृथिवीं सर्वां सागरान्तां द्विजोत्तम !

पालयस्व च धर्मेण वीर्येण महतावृतः । कालेन मत्पदं चाऽपि मत्प्रसादाद्गमिष्यसि ॥

ईश्वर उवाच ।

इत्युक्त्वाऽन्तर्हितो देवं वरं दत्त्वा द्विजन्मने । रामोऽपि चाऽथ सहसा प्रययौ पितुराश्रमम्

पितरं निहतं दृष्ट्वा भार्गवः क्रोधमूर्च्छितः । निःक्षत्रां कर्तुमन्विच्छन्महीं नृपसमाकुलाम्

जगाम हैहयपतेर्नगरं नृपसम्वृतम् । क्रोधावेशज्वलद्गात्रो धार्यतिप्रदुदायुधः ॥ ४८ ॥

तं दृष्ट्वा तत्पुरजना जामदग्न्यं महौजसम् । जाज्वल्यमानं वपुषा कालाग्निमिव मेनिरे ॥

भयार्त्ता विद्रुताः सर्वे राजानं हैहयाधिपम् । शशंसुस्तं महासत्त्वं सर्वायुधसमन्वितम्

श्रुत्वा स राजा तद्वाक्यं प्राह विस्मितचेतसा ॥ ५० ॥

हैहयाधिप उवाच ।

कोऽसौ मम पुरद्वारि सायुधः संस्थितो बलात् । महेन्द्रो वा यमो वाऽपि रुद्रो वा धनदोऽपि वा

सायुधो मत्पुरद्वारि स्थातुं शक्तो न कर्हिचित् ॥ ५२ ॥

महादेव उवाच ।

इत्युक्त्वा पार्थिवेन्द्रोऽसौ किङ्करान्सुमहाबलान् । प्रेरयामास तं दुष्टं गृह्णीतेत्याह दुर्मतिः

ते गत्वा ददृशुर्वीरं पुरद्वारि महाबलम् । ज्वलन्तमिव कालाग्निं दुर्निरीक्ष्यं स्वतेजसा

तस्य सन्दर्शनेऽप्यत्र न शक्तास्ते महाबलाः । ग्रहीतुकामास्तं वीरं समन्तात्प्रययुर्भृशम्

तान्दृष्ट्वा सायुधान्सर्वान्पार्थिवेन्द्रस्यकिङ्करान् । प्रहसन्प्राहविप्रेन्द्रोजामदग्न्योमहाबलः

परशुराम उवाच ।

भार्गवस्य सुतो रामः सम्प्राप्तोऽहं नराधमाः ! ।
स्वपितुर्निधनात्सर्वान्हनिष्यामि नृपोत्तमान् ॥ ५७ ॥

कार्तवीर्यस्य रुधिरं मत्पित्रे तिलसंयुतम् । दास्यामि पिण्डदानं च तच्छिरःकवलेन वै

महादेव उवाच ।

इत्युक्तास्ते महावीर्याः किङ्करास्तस्य भूपतेः । शरैस्तं ताडयामासुःपलालैरिवपावकम्
ततः क्रुद्धोमहावीर्योरामस्सत्यपराक्रमः । वैष्णवं चापमाकृष्य ज्यानिनादमथाऽकरोत्
तेन नादेन महता पूरितं भुवनत्रयम् । देवानामपि सन्त्रासो वभूव महदद्भुतम् ॥६१ ॥
ततः पावकसङ्काशैराशुगैः सुमहाबलः । ताडयामास तान्वीरान्किङ्करान्वै महाबलान् ॥
हत्वा तु किङ्करांस्तस्य पार्थिवस्य महात्मनः । कालाग्निरिवसन्तस्थौ सर्वभूतभयङ्करः
श्रुत्वा तु किङ्करान्स्वस्य हतान्रामेणधीमता । हैहयाधिपतिर्वीरः क्रोधसंरक्तलोचनः ॥
निर्ययौ सहसैन्येनयत्राऽऽस्तेभार्गवोऽव्ययः । तं दृष्ट्वा घोरसङ्काशं ज्वलन्तंस्वेनतेजसा
त्रस्ताः सर्वे जनास्तत्र शङ्कमाना जनक्षयम् । ततो युद्धं महाघोरं रामस्य नृपतेस्तदा
शस्त्रास्त्रपातनैर्भीमैर्मेघयोरिव वर्षतोः । ततो रामो महातेजास्तत्सैन्यं नृपतेस्तदा ॥
निर्ददाह क्षणात्सर्वं वैष्णवास्त्रेणलीलया । ततः परशुना रामस्तीक्ष्णेनाऽमितविक्रमः
चिच्छेद बाहुसाहस्रं कार्तवीर्यस्य दुर्मतेः । न शशाक महावीर्यो योद्धुं रामेण भूपतिः
नष्टवीर्यो बभूवाऽत्र पापेन स्वेन दुर्मतिः । चिच्छेद तच्छिरः क्रुद्धो रेणुकातनयो बली॥
महाद्रिशृङ्गं वज्रेण यथा देवपतिर्वली । हत्वा सहस्रबाहुं तं जामदग्न्यः प्रतापवान् ॥
जघान पार्थिवान्सर्वान्क्रुद्धः परशुना मृधे । रामं दृष्ट्वा महारौद्रं पार्थिवाः पृथिवीतले॥
भयार्त्ता विद्रुताः सर्वे नागाः केसरिणं यथा । विद्रुतानपि भूपालान्पितुर्निधनमन्युना
जघान भार्गवः क्रुद्धो नागानिव खगेश्वरः । निःक्षत्रं कृतवान्सर्वं जामदग्न्यः प्रतापवान्
ररक्ष भगवानेकमिक्ष्वाकोः सुमहत्कुलम् । मातामहस्यान्वयत्वाद्रेणुकावचनादथ ॥

तान्भ्रष्टराज्यान्कृत्वा वै मातामहकुलोद्भवान् ।

न हत्वा मनुवंशांस्तान्रामो नृपकुलान्तकः ॥ ७६ ॥

सर्वं तु भूभृतां वंशं नाशयामास वीर्यवान् । कृत्वा चोर्वीं तु निःक्षत्रांजमदग्निसुतोबली

अश्वमेधं महायज्ञं चकार विधिवद्द्विजः । प्रददौ विप्रमुख्येभ्यः सप्तद्वीपवतीं महीम् ॥

दत्त्वा महीं स विप्रेभ्यो जामदग्न्यःप्रतापवान् । तपस्तप्तुंययौसोऽथनरनारायणाश्रमम्

एतत्ते कथितं देवि जामदग्न्यमहात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोः

नोपास्यं हि भवेत्तस्यशक्त्यावेशान्महात्मनः । उपास्यो भगवद्भक्तैर्विप्रमुख्यैर्महात्मभिः

रामकृष्णावतारौ तु परिपूर्णौ हि सद्गुणैः । उपास्यमानावृषिभिरपवर्गप्रदौ नृणाम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे परशुरामचरितं नामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४१ ॥

# द्विचत्वारिंशदधिकद्विशततमोऽध्यायः

## श्रीरामावतारवर्णनेस्वायम्भुवमनोस्तपःकरणंत्रेतायांदशरथस्यराज्ञोगृहे-रामावतारः श्रीरामवनवासोद्भववृत्तान्तवर्णनम्

रुद्र उवाच ।

स्वायम्भुवो मनुः पूर्वं द्वादशार्णं महामनुम् । जजाप गोमतीतीरे नैमिषे विमले शुभे ॥

तेन वर्षसहस्रेण पूजितः कमलापतिः । मत्तो वरं वृणीष्वेति तं प्राह भगवान्हरिः ॥

मनुरुवाच ।

पुत्रत्वं भज देवेश!त्रीणि जन्मानिचाच्युत !। त्वां पुत्रलालसत्वेन भजामि पुरुषोत्तमम्

रुद्र उवाच ।

इत्युक्तस्तेन लक्ष्मीशः प्रोवाच सुमहागिरा ॥ ४ ॥

विष्णुरुवाच ।

भविष्यति नृपश्रेष्ठ! यत्ते मनसि काङ्क्षितम् । ममैव त्व महाप्रीतिस्तव पुत्रत्वहेतवे॥५॥

स्थितिप्रयोजने काले तत्र तत्र नृपोत्तम !। त्वयि जातेत्वहमपि जातोऽस्मि तवसुव्रत !

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय सम्भवामि तवाऽनघ ! ॥ ७ ॥

रुद्र उवाच ।

एवं दत्त्वा वरं तस्मै तत्रैवाऽन्तर्दधेहरिः । अस्याभूत्प्रथमं जन्म मनोः स्वायम्भुवस्यच
रघूणामन्वयेपूर्वं राजा दशरथो ह्यभूत् । द्वितीयो वसुदेवोऽभूद्वृष्णीनामन्वये विभुः
कलेर्दिव्यसहस्राब्दप्रमाणस्यान्त्यपादयोः । शम्भलग्रामके मुख्ये ब्राह्मणः सञ्जनिष्यते
ततो मुक्तिर्भवेत्तस्य मनोर्जन्मत्रयान्तरे । राघवः प्रथमं जज्ञे कृष्णस्तु तदनन्तरम् ॥११

कल्किरूपी हरिः पश्चाद्ब्राह्मणस्य जनिष्यति ।
तस्य पत्नी महाभागा सुशीला नाम भामिनी ॥ १२ ॥

कौसल्या समभूत्पत्नी राज्ञो दशरथस्य हि । यदुवंश्यस्य सवाऽथ देवकी नामविश्रुता
हरिव्रतस्य विप्रस्य भार्या देवप्रभापुनः । एवंमातृत्वमापन्ना त्रीणि जन्मानि शार्ङ्गिणः
पूर्वं रामस्य चरितं वक्ष्यामि तव सुव्रते !। यस्य स्मरणमात्रेण विमुक्तिः पापिनामपि
हिरण्यकहिरण्याक्षौ द्वितीयं जन्मसंश्रितौ । कुम्भकर्णदशग्रीवावजायेतां महाबलौ ॥

पुलस्त्यस्य सुतो विप्रो विश्रवानाम धार्मिकः ।
तस्य पत्नी विशालाक्षी राक्षसेन्द्रसुताऽनघे ! ॥ १७ ॥
सुकेशितनया सा स्यात्सुमालेर्दानवस्य च ।
केकसी नाम कन्याऽऽसीत्तस्य भार्या दृढव्रता ॥ १८ ॥

कामोद्रिक्तातु सा देवी सन्ध्याकालेमहामुनिम् । रमयामास तन्वङ्गी यथेष्टं शुभदर्शना
तत्कालसम्भवौ गर्भौतस्यां जातौमहाबलौ । रावणःकुम्भकर्णश्च राक्षसौलोकविश्रुतौ
कन्याशूर्पणखानामजाताऽतिविकृतानना । कस्यचित्त्वथकालस्यतस्यांजातोविभीषणः
सुशीलो भगवद्भक्तः सत्यवाग्धर्मवाञ्छुचिः । रावणः कुम्भकर्णश्च हिमवत्पर्वतोत्तमे ॥
महोग्रतपसा मां वै पूजयामासतुर्भृशम् । रावणस्त्वथ दुष्टात्मा स्वशिरःकमलैः शुभैः
पूजयामास मां देवि ! दारुणेनैव कर्मणा । ततस्तमब्रवं सुभ्रूः प्रहृष्टेनान्तरात्मना॥२४

वरं वृणीष्व मे वत्स यत्ते मनसि वर्त्तते । ततः प्रोवाच दुष्टात्मा देवदानवरक्षसाम् ॥
अवध्यत्वं प्रदेहीति सर्वलोकजिगीषया । ततोऽहं दत्तवांस्तस्मै राक्षसाय दुरात्मने ॥
देवदानवयक्षाणामवध्यत्वं वरानने !। राक्षसोऽसौ महावीर्यो वरदानात्तु गर्वितः ॥२७
त्रीँल्लोकान्पीडयामास देवदानवमानुषान् । तेन सम्बाध्यमानाश्च देवा ब्रह्मपुरोगमाः॥
भयार्त्ताः शरणं जग्मुरीश्वरं कमलापतिम् । ज्ञात्वाऽथ वेदनां तेषामभयाय सनातनः॥
उवाच त्रिदशान्सर्वान्ब्रह्मरुद्रपुरोगमान् ॥ २९ ॥

श्रीभगवानुवाच ।

राज्ञो दशरथस्याहमुत्पत्स्यामि रघोःकुले । हनिष्यामि दुरात्मानं रावणं सहबान्धवम्
मानुषं वपुरास्थाय हन्मि दैवतकण्टकम् । नन्दिशापाद्भवन्तोऽपि वानरत्वमुपागताः ॥
कुरुध्वं मम साहाय्यं गन्धर्वाप्सरसोत्तमाः ॥ ३० ॥

रुद्र उवाच ।

इत्युक्ता देवतास्सर्वा देवदेवेन विष्णुना । वानरत्वमुपागम्य जज्ञिरे पृथिवीतले॥३२॥
भार्गवेण प्रदत्ता तु मही सागरमेखला । दत्ता महर्षिभिः पूर्वं रघूणां सुमहात्मनाम् ॥
वैवस्वतमनोः पुत्रो राज्ञां श्रेष्ठो महाबलः । इक्ष्वाकुरिति विख्यातस्सर्वधर्मविदांवरः॥
तदन्वये महातेजा राजा दशरथो बली । अजस्य नृपतेः पुत्रः सत्यवाञ्छीलवाञ्छुचिः
स राजा पृथिवींसर्वां पालयामासवीर्यतः । राज्येषु स्थापयामास सर्वान्पार्थिवसत्तमान्
कोसलस्यनृपस्याऽथ पुत्री सर्वाङ्गशोभना । कौसल्या नाम तांकन्यामुपयेमे स पार्थिवः
मागधस्य नृपस्याऽथ तनया च शुचिस्मिता ।
सुमित्रानाम नाम्ना च द्वितीया तस्य भामिनी ॥३८ ॥
तृतीया केकयस्याऽथ नृपतेर्दुहिता तथा । भार्याऽभूत्पद्मपत्राक्षी कैकेयी नाम नामतः
ताभिः स्म राजा भार्याभिस्तिसृभिर्धर्मसंयुतः ।
रमयामास काकुत्स्थः पृथिवीं चाऽनुपालयन् ॥ ४० ॥
अयोध्यानामनगरी सरयूतीरसंस्थिता । सर्वरत्नसुसम्पूर्णा धनधान्यसमाकुला ॥४१॥
प्राकारगोपुरैर्जुष्टा हेमप्राकारसङ्कुला । उत्तमैर्गार्गतुरगैर्महेन्द्रस्ययथापुरी ॥ ४२ ॥

तस्यां राजा स धर्मात्मा उवास मुनिसत्तमैः । पुरोहितेन विप्रेण वसिष्ठेन महात्मना
राज्यंच कारयामास सर्वं निहतकण्टकम् । यस्मादुत्पत्स्यते तस्यां भगवान्पुरुषोत्तमः
तस्मात्तु नगरीपुण्या साप्ययोध्येतिकीर्तिता । नगरस्यपरं धाम्नो नामतस्याप्यभूच्छुभे !
यत्राऽऽस्ते भगवान्विष्णुस्तदेव परमं पदम् । तत्र सद्यो भवेन्मोक्षः सर्वकर्मनिकृन्तनः
जाते तत्र महाविष्णौ नराःसर्वे मुदं ययुः । स राजा पृथिवीं सर्वां पालयित्वाशुभानने
अग्रजर्द्रैष्णवेष्ट्याच पुत्रार्थी हरिमच्युतम् । तेन सम्पूजितः श्रीशो राज्ञासर्वगतोहरिः
वैष्णवेन तु यज्ञेन वरदः प्राह केशवः । तस्मिन्नाविरभूदग्नौ यज्ञरूपो हरिस्तदा ॥४६॥
शुद्धजाम्बूनदप्रख्यः शङ्खचक्रगदाधरः । शुक्लाम्बरधरः श्रीमान्सर्वभूषणभूषितः ॥५०॥
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । पद्मपत्रविशालाक्षश्चतुर्बाहुरुदारधीः ॥
सन्ध्याङ्कस्थश्रिया सार्द्धमाविरासीद्रमेश्वरः । वरदोऽस्मीति तं प्राह राजानं भक्तवत्सलः
तं दृष्ट्वा सर्वलोकेशं राजा हर्षसमाकुलः । ववन्दे भार्यया सार्द्धं प्रहृष्टेनान्तरात्मना ॥
प्राञ्जलिः प्रणतो भूत्वा हर्षगद्गदया गिरा । पुत्रत्वं मे भजेत्याह देवदेवं जनार्दनम् ॥
ततः प्रसन्नो भगवान्प्राह राजानमच्युतः ॥५४ ॥

विष्णुरुवाच ।

उत्पत्स्येऽहं नृपश्रेष्ठ! देवलोकहिताय वै । परित्राणाय साधूनां राक्षसानां वधाय च॥
मुक्तिं प्रदातुं लोकानां धर्मसंस्थापनाय च ॥ ५५ ॥

महादेव उवाच ।

इत्युक्त्वापायसं दिव्यं हेमपात्रस्थितंभृतम् । लक्ष्म्याहस्तस्थितं शुभ्रंपार्थिवायददौहरिः

विष्णुरुवाच ।

इदं वै पायसं राजन्पत्नीभ्यस्तव सुव्रत ! । देहि ते तनयास्तासु उत्पत्स्यन्ते मदंशजाः

महादेव उवाच ।

इत्युक्त्वा मुनिभिःसर्वैः स्तूयमानोजनार्दनः । स्वात्मानंदर्शयित्वाऽथतत्रैवान्तरधीयत
स राजा तत्र दृष्ट्वा च पत्नीं ज्येष्ठां कनीयसीम् ।
विभज्य पायसं दिव्यं प्रददौ सुसमाहितः ॥ ५६ ॥

एतस्मिन्नन्तरे पत्नी सुमित्रा तस्य मध्यमा। तत्समीपं प्रयातासापुत्रकामा सुलोचना
तां दृष्ट्वा तत्र कौसल्या कैकेयी च सुमध्यमा। अर्द्धमर्द्धं प्रददतुस्ते तस्यैपायसं स्वकम्
तत्प्राश्यपायसं दिव्यं राजपत्न्यःसुमध्यमाः। सम्पन्नगर्भाः सर्वास्ताविरेजुः शुभ्रवर्चसः
तासां स्वप्नेषु देवेशः पीतवासा जनार्दनः। शङ्खचक्रगदापाणिराविर्भूतस्तदा हरिः॥
अथ काले मनोरम्ये मधुमासि शुचिस्मिते। शुक्ले नवम्यां विमले नक्षत्रेऽदितिदैवते
मध्याह्नसमये लग्ने सर्वग्रहशुभान्विते। कौसल्या जनयामास पुत्रं लोकेश्वरं हरिम्॥
इन्दीवरदलश्यामं कोटिकन्दर्पसन्निभम्। पद्मपत्रविशालाक्षं सर्वाभरणशोभितम् ॥६६
श्रीवत्सकौस्तुभोरस्कं सर्वाभरणभूषितम्। उद्यद्दिनकरप्रख्यकुण्डलाभ्यां विराजितम्
अनेकसूर्यसङ्काशं तेजसा महतावृतम्। परेशस्य तनो रम्यं दीपादुत्पन्नदीपवत् ॥६८॥
ईशानं सर्वलोकानां योगिध्येयं सनातनम्। सर्वोपनिषदामर्थमनन्तं परमेश्वरम् ॥६९॥
जगत्सर्गस्थितिलये हेतुभूतमनामयम्। शरण्यं सर्वभूतानां सर्वभूतमयं विभुम् ॥७०॥
समुत्पन्ने जगन्नाथे देवदुन्दुभयो दिवि। विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः॥

प्रजापतिमुखा देवा विमानस्था नभस्तले।
तुष्टुवुर्मुनिभिः सार्द्धं हर्षपूर्णाङ्गविह्वलाः॥ ७२॥

जगुर्गन्धर्वपतयो ननृतुश्चाऽप्सरोगणाः। ववुःपुण्याःशिवा वाताः सुप्रभोऽभूद्दिवाकरः
जज्वलुश्चाग्नयः शान्ता विमलाश्चदिशो दश। ततस्स राजा हर्षेण पुत्रं दृष्ट्वा सनातनम
पुरोधसा वसिष्ठेन जातकर्मतदाऽकरोत्। नाम चाऽस्मैददौरम्यं वसिष्ठो भगवांस्तदा
श्रियः कमलवासिन्या रमणोऽयंमहान्प्रभुः। तस्माच्छ्रीरामइत्यस्यनामसिद्धंपुरातनम्

सहस्रनाम्नां श्रीशस्य तुल्यं मुक्तिप्रदं नृणाम्।
विष्णुमासे समुत्पन्नो विष्णुरित्यभिधीयते॥ ७७॥

एवंनामाऽस्यदत्त्वाऽथ वसिष्ठो भगवानृषिः। परिणीयनमस्कृत्यस्तुत्वास्तुतिभिरेवच
संकीर्त्यनामसाहस्रं मङ्गलार्थं महात्मनः। विनिर्ययौमहातेजास्तस्मात्पुण्यतमाद्गृहात्
राजाऽथ विप्रमुख्येभ्यो ददौ बहुधनं मुदा। गवामयुतदानं च कारयामास धर्मतः॥
ग्रामाणां शतसाहस्रं ददौ रघुकुलोत्तमः। वस्त्रैराभरणैर्दिव्यैरसङ्ख्येयैर्धनैरपि ॥८१॥

विष्णोस्संतुष्टये तत्र तर्पयामास भूसुरान् । कौसल्याचसुतं दृष्ट्वा रामं राजीवलोचनम्
फुल्लहस्तारविन्दाभं पद्महस्ताम्बुजान्वितम् । तस्य श्रीपादकमले पद्माब्जे च वरानने !
शङ्खचक्रगदापद्मध्वजवज्रादिचिह्निते । दृष्ट्वा वक्षसि श्रीवत्सं कौस्तुभं वनमालया ॥
तस्याऽङ्के सा जगत्सर्वं सदेवासुरमानुषम् । स्मितवक्त्रे विशालाक्षी भुवनानि चतुर्दश
निःश्वासे तस्य वेदांश्च सेतिहासान्महात्मनः । द्वीपानब्धीन्गिरींस्तस्य जघनेवरवर्णिनि
नाभ्यां ब्रह्मशिवौ तस्य कर्णयोश्च दिशःशुभाः । नेत्रयोर्वह्निसूर्यौचघ्राणे वायुं महाजवम्
सर्वोपनिषदामर्थं दृष्ट्वा तस्य विभूतयः । कृत्स्ना भीता वरारोहा प्रणम्य च पुनःपुनः ॥
हर्षाश्रुपूर्णनयना प्राञ्जलिर्वाक्यमब्रवीत् ॥ ८८ ॥

कौसल्योवाच ।

धन्याऽस्मि देवदेवेश!लब्ध्वा त्वां तनयं प्रभो !। प्रसीद मे जगन्नाथ! पुत्रस्नेहं प्रदर्शय

ईश्वर उवाच ।

एवमुक्तो हृषीकेशो मात्रा सर्वगतो हरिः । मायामानुषतां प्राप्य शिशुभावाद्रुरोद सः॥
अथ प्रमुदिता देवी कौसल्या शुभलक्षणम् । पुत्रमालिङ्ग्यहर्षेणस्तन्यं प्रादात्सुमध्यमा
तस्याः स्तन्यं पपौ देवो बालभावात्सनातनः । ववास मातुरुत्सङ्गे जगद्भर्ता महाविभुः
तस्मिन्दिने शुभे रम्ये सर्वकामप्रदे नृणाम् । उत्सवं चक्रिरे पौरा दृष्टा जानपदा नराः
कैकेय्यां भरतो जज्ञे पाञ्चजन्यांशसम्भवः । सुमित्रा जनयामास लक्ष्मणंशुभलक्षणम्
शत्रुघ्नं च महाभागा देवशत्रुप्रतापनम् । अनन्तांशेन सम्भूतो लक्ष्मणः परवीरहा ॥
सुदर्शनांशाच्छत्रुघ्नः सञ्जज्ञेऽमितविक्रमः । ते सर्वे बवृधुस्तत्र वैवस्वतमनोः कुले ॥९६
संस्कृतास्ते सुताः सम्यग्वसिष्ठेनमहौजसा । अधीतवेदास्ते सर्वेश्रुतवन्तस्तथा नृपाः
सर्वशास्त्रार्थतत्त्वज्ञा धनुर्वेदे च निष्ठिताः । बभूवुः परमोदारा लोकानां हर्षवर्द्धनाः॥९८
युग्मं बभूवतुस्तत्र राजानौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशवशात्स्वतः ॥
अथ लोकेश्वरी लक्ष्मीर्जनकस्य निवेशने । शुभक्षेत्रे हलोत्खाते सुनासा सुशुभेक्षणा॥
बालार्ककोटिसङ्काशा रक्तोत्पलकराम्बुजा ।
सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता ॥ १०१ ॥

धृत्वा वक्षसि वार्त्तङ्गी मालामम्लानपङ्कजाम् । सीतामुखे समुत्पन्ना बालभावेनसुन्दरी
तां दृष्ट्वा जनको राजा कन्यां वेदमयींशुभाम् । उद्धृत्याऽपत्यभावेनपुपोष मिथिलापतिः
जनकस्य गृहे रम्ये सर्वलोकेश्वरप्रिया । ववृधे सर्वलोकस्य रक्षणार्थं सुरेश्वरी॥१०४॥
एतस्मिन्नन्तरे देवि! कौशिको लोकविश्रुतः । सिद्धाश्रमे महापुण्ये भागीरथ्यास्तटेशुभे
क्रतुप्रवरमारेभे यष्टुं तत्र महामुनिः । वर्त्तमानस्य तस्याऽस्य यज्ञस्याऽथ द्विजन्मनः॥
क्रतुविध्वंसिनोऽभूवन्रावणस्य निशाचराः । कौशिकश्चिन्तयित्वाऽथरघुवंशोद्भवंहरिम्

आनेतुमैच्छद्धर्मात्मा लोकानां हितकाम्यया ।
स गत्वा नगरीं रम्यामयोध्यां रघुपालिताम् ॥ १०८ ॥

नृपश्रेष्ठं दशरथं ददर्श मुनिसत्तमः । राजाऽपिकौशिकं दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः ॥
पुत्रैः सह महातेजा ववन्दे मुनिसत्तमम् । धन्योऽहमस्मीति वदन्हर्षेण रघुनन्दनः ॥
अर्चयामास विधिना निवेश्य परमासने । परिणीय नमस्कृत्य किंकरोमीत्युवाच तम्

ततः प्रोवाच हृष्टात्मा विश्वामित्रो महातपाः ॥ ११२ ॥

विश्वामित्र उवाच ।

देहि मे राघवं राजन्रक्षणार्थं क्रतोर्मम । साफल्यमस्तु मे यज्ञे राघवस्य समीपतः ॥

तस्माद्रामं रक्षणार्थं दातुमर्हसि भूपते ! ॥ ११३ ॥

ईश्वर उवाच ।

तच्छ्रुत्वा मुनिवर्यस्य वाक्यं सर्वविदाम्वरः । प्रददौ मुनिवर्याय राघवं सह लक्ष्मणम्
आदाय राघवौ तत्र विश्वामित्रो महातपाः । स्वमाश्रममतिप्रीतः प्रययौ द्विजसत्तमः॥
ततः प्रहृष्टास्त्रिदशाः प्रयाते रघुसत्तमे !। ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महौजसः ॥
अथाजगाम हृष्टात्मा वैनतेयो महाबलः । अदृश्यस्सर्वभूतानां सम्प्राप्य रघुसत्तमौ ॥

ताभ्यां दिव्ये च धनुषी तूणी चाक्षयसायकौ ।
दिव्यान्यस्त्राणि शस्त्राणि दत्त्वा च प्रययौ द्विजः ॥ ११८ ॥

तौ रामलक्ष्मणौवीरौ कौशिकेन सहाऽध्वनि । गच्छन्तौ विपिनेघोरेराक्षसींघोरदर्शनाम्
नाम्ना तु ताटकांदेवि!भार्यांसुन्दस्यरक्षसः । जघ्नतुस्तौ महावीरौबाणैर्दिव्यधनुश्च्युतैः

निहता राघवेणाऽथ राक्षसी घोरदर्शना । त्यक्त्वा तनुं घोररूपां दिव्यरूपा बभूव सा
जाज्वल्यमाना वपुषा सर्वाभरणभूषिता । प्रययौ वैष्णवं लोकं प्रणम्य च रघूत्तमौ ॥

तां हत्वा राघवः श्रीमान्कौशिकस्याऽऽश्रमं शुभम् ।
प्रविवेश महातेजा लक्ष्मणेन महात्मना ॥ १२३ ॥

ततः प्रहृष्टा मुनयः प्रत्युद्गम्य रघूत्तमम् । निवेश्य पूजयामासुरर्घाद्यैः परमासने ॥१२४
कौशिकः कृतदीक्षस्तु यष्टुं यज्ञमनुत्तमम् । आरेभे मुनिभिःसार्द्धं विधिना मुनिसत्तमः
वर्त्तमाने महायज्ञे मारीचो नाम राक्षसः । भ्रात्रा सुबाहुना तत्र विघ्नं कर्तुमवस्थितः
दृष्ट्वा तौ राक्षसौ घोरौ राघवः परवीरहा । जघानैकेन बाणेन सुबाहुं राक्षसेश्वरम् ॥
पवनास्त्रेण महता मारीचं तु निशाचरम् । सागरे पातयामास शुष्कपर्णमिवाऽनिलः
स रामस्य महावीर्यं दृष्ट्वा राक्षससत्तमः । न्यस्तशस्त्रस्तपस्तप्तुं प्रययौ महदाश्रमम् ॥
विश्वामित्रो महातेजाः समाप्ते महतिक्रतौ । प्रहृष्टमनसा तत्र पूजयामास राघवम् ॥
समाश्लिष्य महात्मानं काकपक्षधरं हरिम् । नीलोत्पलदलश्यामं पद्मपत्रायतेक्षणम् ॥
उपाघ्राय तदा मूर्ध्नि तुष्टाव मुनिसत्तमः । एतस्मिन्नन्तरे राजा मिथिलाया अधीश्वरः
वाजपेयं क्रतुं यष्टुमारेभे मुनिसत्तमैः । तं द्रष्टुं प्रययुस्सर्वे विश्वामित्रपुरोगमाः ॥
मुनयो रघुशार्दूलसहिताः पुण्यचेतसः । गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः ॥
अभूत्सुरूपा वनिता समाक्रान्ता महाशिला । साऽपि शप्ता पुरा भर्त्रा गौतमेनद्विजन्मना
अहल्या रघुनाथस्यपादस्पर्शाच्छुभाभवत् । अथ सम्प्राप्यनगरीं मिथिला मुनिसत्तमाः
राघवाभ्यां तु सहिता बभूवुः प्रीतमानसाः । समागतान्महाभागान्दृष्ट्वा राजा महाबलः
प्रत्युद्गम्य प्रणम्याऽथ पूजयामास मैथिलः । रामं पद्मविशालाक्षमिन्दीवरदलप्रभम् ॥
पीताम्बरधरं श्लक्ष्णं कोमलावयवोज्ज्वलम् । अवधीरितकन्दर्पकोटिलावण्यमुत्तमम्
सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम् । स्वस्य हृत्पङ्कजे ध्येयं परेशस्य तनोर्हरेः ॥
उत्पन्नं दीपवद्दीपात्सौशील्यगुणसागरम् । तं दृष्ट्वा रघुनाथं स जनको हृष्टमानसः ॥
परेशमेव तं मेने रामं दशरथात्मजम् । पूजयामास काकुत्स्थं धन्योऽस्मीति ब्रुवन्नृपः

प्रसादं वासुदेवस्य विष्णोर्मेने नरेश्वरः ।

प्रदातुं दुहितां तस्मै मनसा चिन्तयन्प्रभुः ॥ १४३ ॥
आत्मजौ रघुवंशस्य ज्ञात्वा तत्र नृपोत्तमः । पूजयामास धर्मेण वस्त्रैराभरणैः शुभैः॥
ऋषीन्समर्चयामास मधुपर्कादिपूजनैः । ततोऽवसाने यज्ञस्य रामो राजीवलोचनः ॥
भङ्क्त्वा शैवं धनुर्दिव्यं जितवाञ्जनकात्मजाम् ।
अथाऽसौ वीर्यशुल्केन महता परितोषितः ॥ १४६ ॥
मुदा धरणिजां तस्मै प्रददौ मिथिलाधिपः । केशवाय श्रियमिव यथा पूर्वं महार्णवः ॥
स दूतं प्रेषयामास राघवं मिथिलाधिपः । पुत्राभ्यांसहधर्मात्मा मिथिलायां विवेश ह
वसिष्ठवामदेवाद्यैः प्रीतैः सह महीपतिः । उपवास नगरे रम्ये जनकस्य रघूत्तमः ॥
तस्मिन्नेव शुभे काले रामस्य धरणीसुताम् । विवाहमकरोद्राजा मैथिलेन समर्चितः
लक्ष्मणस्योर्मिलांनामकन्यांजनकसम्भवाम् । जनकस्याऽनुजस्याऽथतनये शुभवर्चसौ
माण्डवींश्रुतकीर्तिश्च सर्वलक्षणलक्षिते । भरतस्य च सौमित्रेर्विवाहमकरोन्नृपः ॥
निर्वर्त्यौद्वाहिकं तत्र राजा दशरथो बली । अयोध्यां प्रस्थितः श्रीमान्पौरैर्जानपदैर्वृतः
पारिबर्हं समादाय मैथिलेन च पूजितः । ससुतः सस्नुषः साश्वः सगजः सबलानुगः॥
तदध्वनि महावीर्यो जामदग्न्यः प्रतापवान् । गृहीत्वा परशुं चापं संक्रुद्धइव केसरी ॥
अभ्यधावच्च काकुत्स्थं योद्धुकामो नृपान्तकः । सम्प्राप्य राघवंदृष्ट्वा वचनंप्राहभार्गवः

परशुराम उवाच ।

रामराममहाबाहो शृणुष्व वचनं मम । बहुशः पार्थिवान्हत्वा संयुगे भूरिविक्रमान्
ब्राह्मणेभ्यो महीं दत्त्वा तपस्तप्तुमहंगतः । तत्र वीर्यबलं श्रुत्वा त्वयायोद्धुमिहाऽऽगतः
इक्ष्वाकवो न वध्यामे मातामहकुलोद्भवाः । वीर्यं क्षत्त्रबलं श्रुत्वा न शक्यं सहितुं मम
रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप !। तस्माद्वदान्य! युद्धं मे दीयतां रघुसत्तम !
इदं तु वैष्णवं चापं तेन तुल्यमरिन्दम!। आरोपयस्ववीर्येण निर्जितोऽस्मि त्वयैवहि
अथवा त्यज शस्त्राणि पुरस्ताद्बलिनोमम । शरणंभजकाकुत्स्थ! कातरोऽस्यपिचेदिह

ईश्वर उवाच ।

एवमुक्तस्तुकाकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्यजग्राह तच्छक्तिंवैष्णवींमपि

शक्त्या वियुक्तस्सतदा जामदग्न्यःप्रतापवान् । निर्वीर्यो नष्टतेजाश्च कर्महीनोयथाद्विजः
विनष्टतेजसं दृष्ट्वा भार्गवं नृपसत्तमाः । साधुसाध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥
काकुत्स्थस्तन्महच्चापं गृहीत्वाऽऽरोप्य लीलया ।
सन्धाय बाणं तच्चापे भार्गवं प्राह विस्मितम् ॥

राम उवाच ।

अनेन शरमुख्येण किंकर्त्तव्यं मया द्विज ! । छेद्मि लोकद्वयं चापि स्वर्गंवाहन्मि तेद्विज !

ईश्वर उवाच ।

तं दृष्ट्वा घोरसङ्काशं बाणं रामस्य भार्गवः । ज्ञात्वा तं परमात्मानं प्रहृष्टो राममब्रवीत्

परशुराम उवाच ।

रामराममहाबाहो! न वेद्मित्वां सनातनम् । जानाम्यद्यैव काकुत्स्थ!तववीर्यगुणादिभिः
त्वमादिपुरुषः साक्षात्परं ब्रह्मपरोऽव्ययः । त्वामनन्तो महाविष्णुर्वासुदेवः परात्परः
नारायणस्त्वं श्रीशस्त्वामीश्वरस्त्वं त्रयीमयः ।
त्वं कालस्त्वं जगत्सर्वमकारव्यस्त्वमेव च ॥ १७१ ॥
स्रष्टा धाता च संहर्त्ता त्वमेव परमेश्वरः ।
त्वमचिन्त्यो महद्भूतं विश्वरूपस्त्वणुर्महान ॥ १७२ ॥
चतुः षट्पञ्चगुणवांस्त्वमेव पुरुषोत्तमः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्रयीमयः
व्यक्ताव्यक्तस्वरूपस्त्वं गुणभृन्निर्गुणः परः । स्तोतुं त्वाहमशक्तश्च वेदानामप्यगोचरम्
यच्चाऽपमानंकृतवांस्त्वां युयुत्सुतया प्रभो !। तत्क्षन्तव्यं त्वया नाथ! कृपया केवलेन तु
तव शक्त्या नृपान्सर्वाञ्जित्वा दत्त्वा महीं द्विजान् ।
त्वत्प्रसादवशादेव शान्तिमाप्नोमि नैष्ठिकीम् ॥ १७३ ॥

ईश्वर उवाच ।

एवमुक्त्वा तु काकुत्स्थं जामदग्न्यो महातपाः । परिणीय नमस्कृत्य राघवंलोकरक्षकम्
शतक्रतुकृतं स्वर्गं तदस्त्राय न्यवेदयत् । राघवोऽथ महातेजा ववन्दे तं महामुनिम् ॥
विधिवत्पूजयामास पाद्यार्घ्याचमनादिभिः । तेन सम्पूजितस्तत्र जामदग्न्यो महातपाः

तपस्तप्तुं ययौ रम्यं नरनारायणाश्रमम् । राजा दशरथः सोऽथ पुत्रैर्दारसमन्वितैः ॥
स्वां पुरीं सुमुहूर्त्तेन प्रविवेश महाबलः । राघवो लक्ष्मणश्चैव शत्रुघ्नो भरतस्तथा ॥
स्वान्स्वान्दारानुपागम्य रेमिरे हृष्टमानसाः । तत्र द्वादशवर्षाणि सीतया सह राघवः॥
रमयामास धर्मात्मा नारायणइव श्रिया । तस्मिन्नेव तु राजाऽथ काले दशरथः सुतम्
ज्येष्ठंराज्येन संयोक्तुमैच्छत्प्रीत्यामहीपतिः । तस्यभार्याऽथ कैकेयी पुरा दत्तवराप्रिया
अयाचत नृपश्रेष्ठं भरतस्याऽभिषेचनम् । विवासनं च रामस्य वत्सराणि चतुर्दश ॥
स राजा सत्यवचनाद्रामं राज्यादहो सुतम् । विवासयामास तदा दुःखेन हतचेतनः॥
शक्तोऽपि राघवस्तस्मिन्राज्यं सन्त्यज्य धर्मतः । दशग्रीववधार्थाय पितुर्वचनहेतुना
वनं जगाम काकुत्स्थो लक्ष्मणेनच सीतया । राजा पुत्रवियोगार्त्तः शोकेनच ममारसः

नियुज्यमानो भरतस्तस्मिन्राज्ये स मन्त्रिभिः ।
नैच्छद्राज्यं स धर्मात्मा सौभ्रात्रमनुदर्शयन् ॥ १८६ ॥

वनमागम्य काकुत्स्थमयाचद्भ्रातरं ततः । रामस्तु पितुरादेशान्नैच्छद्राज्यमरिन्दमः ॥
स्वपादुके ददौ तस्मै भक्त्यासोऽप्यग्रहीत्तथा । रामस्य पादुके राज्यमवाप्य भरतःशुभे!
प्रत्यहं गन्धपुष्पैश्च पूजयन्कैकयीसुतः । तपश्चरणयुक्तेन तस्मिंस्तस्थौ नृपोत्तमः ॥
यावदागमनं तस्य राघवस्य महात्मनः । तावद्व्रतपराः सर्वे बभूवुः पुरवासिनः॥१९३
राघवश्चित्रकूटाद्रौ भरद्वाजाश्रमे शुभे । रमयामास वैदेह्या मन्दाकिन्या जले शुभे ॥
कदाचिदङ्के वैदेह्याः शेते रामो महामनाः । ऐन्द्रिः काकस्समागम्य तस्मिन्नेव चचारह
स दृष्ट्वा जानकीं तत्र कन्दर्पशरपीडितः । विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥
तं दृष्ट्वा वायसं रामः कुशंजग्राह पाणिना । ब्रह्मणोऽस्त्रेण संयोज्य चिक्षेप धरणीधरः
तत्तृणं घोरसङ्काशं ज्वालारचितविग्रहम् । दृष्ट्वा काकः प्रदुद्राव विमुञ्चन्कातरं स्वरम्
तं काकं प्रत्यनुययौ रामस्याऽस्त्रंसुदारुणम् । वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः
यत्रयत्र ययौ काकः शरणार्थी स वायसः । तत्र तत्र तदस्त्रन्तु प्रविवेश भयावहम् ॥
ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । शरणार्थी जगामाऽऽशु वायसः शस्त्रपीडितः
तंदृष्ट्वावायसं सर्वे रुद्राद्या देवदानवाः । न शक्ताः स्मो वयं त्रातुमिति प्राहुर्मनीषिणः

अथ प्रोवाच भगवान्ब्रह्मा त्रिभुवनेश्वरः ॥ २०२ ॥

ब्रह्मोवाच ।

भोभोबलिभुजां श्रेष्ठ ! तमेव शरणं व्रज । सएव रक्षकः श्रीमान्सर्वेषां करुणानिधिः॥
रक्षत्येव क्षमासारो वत्सलश्शरणागतान् । ईश्वरः सर्वभूतानां सौशील्यादिगुणान्वितः
रक्षिता जीवलोकस्य पितामातासखासुहृत् । शरणं व्रज देवेशं नान्यत्र शरणं द्विज !

महादेव उवाच ।

इत्युक्तस्तेन बलिभुग्ब्रह्मणा रघुनन्दनम् । उपेत्य सहसा भूमौ निपपात भयातुरः ॥
प्राणसंशयमापन्नं दृष्ट्वा सीताऽथ वायसम् । त्राहित्राहीति भर्तारमुवाच विनयाद्विभुम्
पुरतः पतितं देवी धरण्यां वायसं तदा । तच्छिरःपादयोस्तस्य योजयामास जानकी
समुत्थाप्य करेणाऽथ कृपापीयूषसागरः । ररक्ष रामो गुणवान्वायसं दययाऽर्दितः ॥
तमाह वायसं रामो माभैरिति दयानिधिः । अभयन्तेप्रदास्यामि गच्छगच्छयथासुखम्
प्रणम्य राघवायाऽथ सीतायैच मुहुर्मुहुः । स्वर्लोकं प्रययावाशु राघवेण च रक्षितः ॥

ततो रामस्तु वैदेह्या लक्ष्मणेन च धीमता ।

उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिः ॥ २१२ ॥

तस्मिन्सम्पूज्यमानस्तु भरद्वाजेन राघवः । जगामात्रेस्सुविपुलमाश्रमं रघुसत्तमः ॥
समागतं रघुवरं दृष्ट्वा मुनिवरोत्तमः । भार्यया सह धर्मात्मा प्रत्युद्गम्य मुदा युतः ॥
आसने सुशुभे मुख्ये निवेश्यसह सीतया । अर्घ्यं पाद्यंतथाऽचामंवस्त्राणिविविधानिच
मधुपर्कं ददौ प्रीत्या भूषणं चाऽनुलेपनम् । तस्य पत्न्यनसूया तु दिव्याम्बरमनुत्तमम्
सीतायै प्रददौ प्रीत्या भूषणानि शुभन्तिच । दिव्यान्नपानभक्ष्याद्यैर्भोजयामासराघवम्
तेन सम्पूजितस्तत्र भक्त्या परमया नृपः । उवास दिवसं तत्र प्रीत्या रामस्सलक्ष्मणः
प्रभाते विमले रामः समुत्थाय महामुनिम् । परिणीय प्रणम्याऽथ गमनायोपचक्रमे ॥
अनुज्ञातस्ततस्तेन रामो राजीवलोचनः । प्रययौ दण्डकारण्यं महर्षिकुलसङ्कुलम् ।

तत्राऽतिभीषणं घोरं विराधं नाम राक्षसम् ।

हत्वाऽथ शरभङ्गस्य प्रविवेशाऽऽश्रमं शुभम् ॥ २२१ ॥

स तु दृष्ट्वाऽथ काकुत्स्थं सद्यःसंक्षीणकल्मषः ।
प्रययौ ब्रह्मलोकं तु गन्धर्वाप्सरसान्वितम् ॥ २२२ ॥

सुतीक्ष्णस्याऽप्यगस्त्यस्यह्यगस्त्यभ्रातुरेवच । क्रमेण प्रययौ रामस्तैश्चसंपूजितस्तथा
पञ्चवट्यां ततो रामो गोदावर्यास्तटे शुभे । उवास सुचिरं कालं सुखेन परमेण च ॥
तत्र गत्वा मुनिश्रेष्ठास्तापसा धर्मचारिणः । पूजयामासुरात्मेशं रामं राजीवलोचनम्

भयं विज्ञापयामासुस्तस्य रक्षोगणोत्थितम् ।
तानाश्वास्य तु काकुत्स्थो ददौ चाऽभयदक्षिणाम् ॥ २२६ ॥

ते तु सम्पूजितास्तेन स्वाश्रमान्सम्प्रपेदिरे । तस्मिंस्त्रयोदशाब्दानि रामस्य परिनिर्ययुः
गोदावर्यास्तटे रम्ये पञ्चवट्यां मनोरमे । कस्यचित्त्वथ कालस्य राक्षसी घोररूपिणी
रावणस्य स्वसा तत्र प्रविवेश दुरासदा । सा तु दृष्ट्वा रघुवरंकोटिकन्दर्पसन्निभम्
इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम् । प्रोन्नतांसं महाबाहुं कम्बुग्रीवं महाहनुम् ॥
सम्पूर्णचन्द्रसदृशसस्मिताननपङ्कजम् । भृङ्गावलिनिभैः स्निग्धैः कुटिलैः शीर्षजैर्वृतम् ॥
रक्तारविन्दसदृशपद्महस्ततलाङ्कितम् । निष्कलङ्केन्दुसदृशनखपङ्क्तिविराजितम् ॥२३२
स्निग्धकोमलदूर्वाभं सौकुमार्यनिधिं शुभम् । पीतकौशेयवसनं सर्वाभरणभूषितम् ॥
युवाकुमारवयसं जगन्मोहनविग्रहम् । दृष्ट्वा तं राक्षसी रामं कन्दर्पशरपीडिता ॥

अब्रवीत्समुपेत्याऽथ रामं कमललोचनम् ॥ २३४ ॥

राक्षस्युवाच ।

कस्त्वं तापसवेषेण वर्तसे दण्डकावने । आगतोऽसि किमर्थं च राक्षसानां दुरासदे

शीघ्रमाचक्ष्व तत्त्वेन नाऽनृतं वक्तुमर्हसि ॥ २३५ ॥

महेश्वर उवाच ।

इत्युक्तः स तदा रामः सम्प्रहस्याऽब्रवीद्वचः ॥ २३६ ॥

राम उवाच ।

राज्ञो दशरथस्याऽहम्पुत्रो रामइतीरितः । असौममाऽनुजोधन्वीलक्ष्मणोनामचाऽनघः
पत्नी चेयं च मे सीता जनकस्याऽऽत्मजा प्रिया । पितुर्वचननिर्देशादहंवनमिहाऽऽगतः

विचरामो महारण्यमृषीणां हितकाम्यया । आगताऽसि किमर्थं त्वमाश्रमंमम सुन्दरि!

का त्वं कस्य कुले जाता सर्वं सत्यं वदस्व मे ॥ २३९ ॥

महेश्वर उवाच ।

इत्युक्ता सा तु रामेण प्राह वाक्यमशङ्किता ॥ २४० ॥

राक्षस्युवाच ।

अहं विश्रवसः पुत्री रावणस्य स्वसा नृप !। नाम्ना शूर्पणखानाम त्रिषुलोकेषु विश्रुता
इदं च दण्डकारण्यं भ्रात्रा दत्तं मम प्रभो !। भक्षयन्त्यृषिसङ्घान्वै विचरामि महावने
त्वां तु दृष्ट्वा मुनिवरं कन्दर्पशरपीडिता । रन्तुकामात्वयासार्धमागताऽस्मिसुनिर्भया
मम त्वं नृपशार्दूल ! भर्ताभवितुमर्हसि । इमां तव सतीं सीतां भक्षयिष्यामि पार्थिव!

वनेषु गिरिमुख्येषु विचरामि त्वया सह ॥ २४५ ॥

महेश्वर उवाच ।

इत्युक्त्वा राक्षसीं सीतां ग्रसितुं वीक्ष्य चोद्यताम् ।

श्रीरामः खड्गमुद्यम्य नासाकर्णौ प्रचिच्छिदे ॥ २४६ ॥

रुदन्ती सभयं शीघ्रं राक्षसीविकृतानना । खरालयं प्रविश्याऽऽह तस्य रामस्यचेष्टितम्
स तु राक्षससाहस्रैर्दूषणत्रिशिरोवृतः । आजगाम भृशं योद्धुं राघवं शत्रुसूदनम् ॥
तान्रामः कानने घोरे बाणैःकालान्तकोपमैः । निजघानमहाकायान्राक्षसांस्तत्रलीलया
खरं त्रिशिरसं चैव दूषणं तु महाबलम् । रणे निपातयामास बाणैराशीविषोपमैः ॥
निहत्य राक्षसान्सर्वान्दण्डकारण्यवासिनः । पूजितः सुरसङ्घैश्च स्तूयमानोमहर्षिभिः
उवास दण्डकारण्ये सीतया लक्ष्मणेन च । राक्षसानांवधं श्रुत्वारावणःक्रोधमूर्च्छितः
आजगाम जनस्थानं मारीचेन दुरात्मना । सम्प्राप्य पञ्चवट्यां तु दशग्रीवः स राक्षसः
मायाविना मारीचेन मृगरूपेण राक्षसः । अपहृत्याऽऽश्रमाद्दूरे तौ तु दशरथात्मजौ॥

जहार सीतां रामस्य भार्यां स्ववधकाङ्क्षया ।

ह्रियमाणां तु तां दृष्ट्वा जटायुर्गृध्रराड्बली ॥ २५५ ॥

रामस्य सौहृदात्तत्र युयुधे तेन रक्षसा । तं हत्वा बाहुवीर्येण रावणः शत्रुवारणः ॥

प्रविवेश पुरीं लङ्कां राक्षसैर्बहुभिर्वृताम् । अशोकवनिकामध्ये निक्षिप्य जनकात्मजाम्
निधनं रामबाणेन काङ्क्षन्स्वगृहमाविशत् । रामस्तु राक्षसं हत्वा मारीचं मृगरूपिणम्
पुनराविश्य तत्राऽथ भ्रात्रासौमित्रिणाततः । राक्षसापहृतां भार्यांज्ञात्वा दशरथात्मजः
प्रभूतशोकसन्तप्तो विललाप महामतिः । मार्गमाणो वने सीतां पथि गृध्रं महाबलम् ॥
विच्छिन्नपादपक्षं च पतितं धरणीतले । रुधिरापूर्णसर्वाङ्गं दृष्ट्वा विस्मयमागतः ॥
पप्रच्छ राघवः श्रीमान्केन किं त्वं जिघांसितः ।
गृध्रस्तु राघवं दृष्ट्वा मन्दम्मन्दमुवाच ह ॥ २६२ ॥

गृध्र उवाच ।

रावणेन हृता राम! तव भार्या बलीयसा । तेन राक्षसमुख्येन सङ्ग्रामेनिहतोऽस्म्यहम्

महेश्वर उवाच ।

इत्युक्त्वा राघवस्याग्रे सोऽभवत्त्यक्तजीवितः । संस्कारमकरोद्रामस्तस्य ब्रह्मविधानतः
स्वपदं च ददौ तस्मै योगिगम्यं सनातनम् । राघवस्य प्रसादेन स गृध्रः परमम्पदम्
हरेः सामान्यरूपेण मुक्तिं प्राप खगोत्तमः । माल्यवन्तं ततो गत्वामतङ्गस्याऽऽश्रमेशुभे
अभ्यगच्छन्महाभागां शबरीं धर्मचारिणीम् ।
सा तु भागवतश्रेष्ठा दृष्ट्वा तौ रामलक्ष्मणौ ॥ २६७ ॥
प्रत्युद्गम्य नमस्कृत्य निवेश्यकुशविष्टरे । पादप्रक्षालनं कृत्वा वन्यैः पुष्पैः सुगन्धिभिः
अर्चयामास भक्त्या वै हर्षनिर्भरमानसा । फलानि च सुगन्धीनि मूलानि मधुराणि च
निवेदयामास तदा राघवाभ्यांदृढव्रता । फलान्यास्वाद्य काकुत्स्थस्तस्यैमुक्तिंददौपराम्
ततः क्रौञ्चवटीं गत्वा राघवः शत्रुसूदनः । जघान राक्षसं तत्र कबन्धं घोररूपिणम् ॥
तं निहत्य महावीर्यो ददाह स्वर्गतश्च सः । ततो गोदावरीं गत्वा रामो राजीवलोचनः
पप्रच्छ सीतां गङ्गे ! त्वं किं तां जानासि मे प्रियाम् ।
न शशंस तदा तस्मै सा गङ्गा तमसावृता ॥ २७३ ॥
शशाप राघवः क्रोधाद्रक्ततोया भवेति ताम् । ततो भयात्समुद्विग्ना पुरस्कृत्यमहामुनीन्
कृताञ्जलिपुटा दीना राघवं शरणं गता । ततो महर्षयस्सर्वे रामं प्राहुस्सनातनम् ॥

ऋषय ऊचुः ।

त्वत्पादकमलोद्भूता गङ्गा त्रैलोक्यपावनी । त्वमेव हि जगन्नाथ तां शापान्मोक्तुमर्हसि

महेश्वर उवाच ।

ततः प्रोवाच धर्मात्मा रामः शरणवत्सलः ॥ २७७ ॥

राम उवाच ।

शबर्याः स्नानमात्रेण संगता शुभवारिणा । मुक्ता भवतु मच्छापाद्गङ्गेयं पापनाशिनी ॥
एवमुक्त्वा तु काकुत्स्थः शबरीतीर्थमुत्तमम् । गङ्गया सङ्गतं चक्रे शार्ङ्गकोत्स्यामहाबलः
महाभागवतानां च तीर्थं यस्योदरेऽभवत् । तच्छरीरं जगद्वन्द्यंभविष्यति न संशयः ॥
एवमुक्त्वा तु काकुत्स्थ ऋष्यमूकं गिरिं ययौ । ततः पम्पासरस्तीरे वानरेण हनूमता
संगतस्तस्य वचनात्सुग्रीवेण समागतः । सुग्रीववचनाद्धत्वा वालिनं वानरेश्वरम् ॥
सुग्रीवमेव तद्राज्ये रामोऽसावभ्यषेचयत् । स तु सम्प्रेषयामासदिदृक्षुर्जनकात्मजाम्
हनुमत्प्रमुखान्वीरान्वानरान्वानराधिपः । स लङ्घयित्वा जलधिं हनूमान्मारुतात्मजः॥
प्रविश्य नगरीं लङ्कां दृष्ट्वा सीतां दृढव्रताम् । उपवासकृशांदीनांभृशंशोकपरायणाम्
मलपङ्केनदिग्धाङ्गीं मलिनाम्बरधारिणीम् । निवेदयित्वाऽभिज्ञानं प्रवृत्तिंच निवेद्यताम्
सप्तमन्त्रिसुतांस्तत्र रावणस्य सुतन्तथा । तोरणस्तम्भमुत्पाट्य निजघान स्वयं कपिः
समाश्वास्यत्र वैदेहीं बभञ्जोपवनं तदा । वनपालान्किङ्करांश्च पञ्चसेनाग्रनायकान् ॥
रावणस्य सुतेनाऽथ निगृहीतो यदृच्छया । दृष्ट्वा च राक्षसेन्द्रन्तु सम्भाष्य तु तथैव च
ददाह नगरीं लङ्कां स्वलाङ्गूलाग्निना कपिः । तया दत्तमभिज्ञानं गृहीत्वा पुनरागमत्
सोऽभिगम्य महातेजा रामं कमललोचनम् । न्यवेदयद्वानरेन्द्रो दृष्टा सीतेति तत्त्वतः॥
सुग्रीवसहितो रामो वानरैर्बहुभिर्वृतः । महोदधेस्तटं गत्वा तत्राऽनीकं न्यवेशयत् ॥
रावणस्याऽनुजो भ्राता विभीषणइतीरितः । धर्मात्मा सत्यसन्धश्च महाभागवतोत्तमः
ज्ञात्वा समागतं रामं परित्यज्य स्वपूर्वजम् । राज्यं सुतांश्चदारांश्च राघवं शरणंययौ
परिगृह्य च तं रामो मारुतेर्वचनात्प्रभुः । तस्मैदत्त्वाऽभयंसौम्यं रक्षोराज्येऽभ्यषेचयत्
ततस्समुद्रं काकुत्स्थस्तर्तुकामः प्रपद्य वै । सुप्रसन्नजलं तं तु दृष्ट्वा रामो महाबलः

शार्ङ्गमादायबाणौघैः शोषयामास वारिधिम् ।
ततस्तु सरितामीशः काकुत्स्थं करुणानिधिम् ॥ २१७ ॥

प्रपद्य शरणं देवमर्चयामास वारिधिः । पुनरापूर्य जलधिं वरुणास्त्रेण राघवः ॥२१८॥
उदधेर्वचनात्सेतुं सागरे मकरालये । गिरिभिर्वानरानीतैर्नलं सेतुमकारयत् ॥२१९॥
ततो गत्वा पुरीं लङ्कां सन्निवेश्य महाबलम् । सम्यगायोधनं चक्रे वानराणांच रक्षसाम्
ततो दशास्यतनयः शक्रजिद्राक्षसो बली । बबन्ध नागपाशैश्च तावुभौ रामलक्ष्मणौ॥
वैनतेयः समागत्य तान्यस्त्राणि प्रमोचयन् । राक्षसा निहतास्सर्वे वानरैश्च महाबलैः॥
रावणस्याऽनुजं वीरं कुम्भकर्णं महाबलम् । निजघान रणे रामो बाणैरग्निशिखोपमैः
ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धः पातयामास वानरान् । हनूमता समानीतो महौषधिमहीधरः ॥
तस्यानीतस्य च स्पर्शात्सर्वेएव समुत्थिताः । ततो रामानुजो वीरः शक्रजेतारमाहवे
निपातयामास शरैर्वृत्रं वज्रधरो यथा । निर्ययावथ पौलस्त्यो योद्धुं रामेण संयुगे ॥
चतुरङ्गबलैः सार्द्धं मन्त्रिभिश्च महाबलः । समन्ततोऽभवद्युद्धं वानराणांच रक्षसाम् ॥
रामरावणयोश्चैव तथा सौमित्रिणा सह । शक्त्या निपातयामासलक्ष्मणं राक्षसेश्वरः
ततःक्रुद्धो महातेजा राघवो राक्षसान्तकः । जघान राक्षसान्वीरान्स्त्रैः कालान्तकोपमैः
प्रदीप्तैर्बाणसाहस्रैः कालदण्डोपमैर्भृशम् । छादयामास काकुत्स्थो दशग्रीवंचराक्षसम्
स तु निर्भिन्नसर्वाङ्गो राघवास्त्रैर्निशाचरः । भयात्प्रदुद्राव रणाल्लङ्काम्प्रतिनिशाचरः
जगद्राममयं पश्यन्निर्वेदाद्गृहमाविशत् । ततो हनूमता नीतो महौषधिमहागिरिः ॥
तेन रामानुजस्तूर्णं लब्धसञ्ज्ञोऽभवत्तदा । दशग्रीवस्ततो होममारेभे जयकाङ्क्षया ॥
ध्वंसितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः । पुनर्युद्धाय पौलस्त्यो रामेण सह निर्ययौ
दिव्यं स्यन्दनमारुह्य राक्षसैर्बहुभिर्युतः । ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् ॥
राघवाय ससूतं हि प्रेषयामास बुद्धिमान् । रथं मातलिनाऽऽनीतं समारुह्य रघूत्तमः ॥
स्तूयमानःसुरगणैर्युयुधे तेन रक्षसा । ततो युद्धमभूद्घोरं रामरावणयोर्महत् ॥ ३१७ ॥
सप्ताहिकमहोरात्रं शस्त्रास्त्रैरतिभीषणम् । विमानस्थाः सुरास्सर्वे ददृशुस्तत्र संयुगम्
दशग्रीवस्य चिच्छेद शिरांसि रघुसत्तमः । समुत्थितानि बहुशो वरदानात्कपर्दिनः ॥

ब्राह्ममस्त्रं महारौद्रं वधायाऽस्य दुरात्मनः । ससर्ज राघवस्तूर्णं कालाग्निसदृशप्रभम्
तदस्त्रं राघवोत्सृष्टंरावणस्य स्तनान्तरम् । विदार्य धरणीं भित्त्वा रसातलतले गतम्
सम्पूज्यमानं भुजगैराघवस्य करं ययौ । सगतासुर्महादैत्यः पपात च ममार च ॥
ततोदेवगणास्सर्वे हर्षनिर्भरमानसाः । ववृषुः पुष्पवर्षाणि महात्मनि जगद्गुरौ ॥
जगुर्गन्धर्वपतयो ननृतुश्चाऽप्सरोगणाः । ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः
तुष्टुवुर्मुनयः सिद्धा देवगन्धर्वकिन्नराः । लङ्कायां राक्षसश्रेष्ठमभिषिच्य विभीषणम् ॥
कृतकृत्यमिवाऽऽत्मानं मेने रघुकुलोत्तमः । रामस्तत्राऽब्रवीद्वाक्यमभिषिच्यविभीषणम्

राम उवाच ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । यावन्मम कथा लोके तावद्राज्यं विभीषणे
गत्वा मम पदं दिव्यं योगिगम्यं सनातनम् । सपुत्रपौत्रः सगणः सम्प्राप्नुहि महाबल!

ईश्वर उवाच ।

एवं दत्त्वा वरं तस्मै राक्षसाय महाबलः । सम्प्राप्य मैथिलीं तत्र परुषं जनसंसदि ॥
उवाच राघवः सीतां गर्हितं वचनं बहु । सा तेन गर्हितासाध्वी विवेश चाऽनलं महत्
ततो देवगणास्सर्वे शिवब्रह्मपुरोगमाः । दृष्ट्वा तु मातरं वह्नौ प्रविशन्तीं भयातुराः ॥
समागम्य रघुश्रेष्ठं सर्वे प्राञ्जलयोऽब्रुवन् ॥ ३३१ ॥

देवाऊचुः ।

राम ! राम ! महाबाहो ! शृणु त्वं चाऽतिविक्रम ! ।
सीताऽतिविमला साध्वी तव नित्याऽनपायिनी ॥ ३३२ ॥

अनन्या हि त्वया सा तु भास्करेण प्रभायथा । सेयं लोकहितार्थाय समुत्पन्नामहीतले
माता सर्वस्य जगतः समस्तजगदाश्रया । रावणः कुम्भकर्णश्च भृत्यौ पूर्वपरायणौ ॥
शापात्तौ सनकादीनां समुत्पन्नौ महीतले । तयोर्विमुक्तये वैदेही गृहीता दण्डके वने॥
तावुभौ वै वधं प्राप्तौ त्वया राक्षसपुङ्गवौ । तौ विमुक्तौ दिवं यातौ पुत्रपौत्रसहानुगौ
त्वं विष्णुस्त्वं परं ब्रह्म योगिध्येयः सनातनः । त्वमेव सर्वदेवानामनादिनिधनोऽव्ययः
त्वं हि नारायणः श्रीमान्सीता लक्ष्मीःसनातनी ।

माता सा सर्वलोकानां पिता त्वं परमेश्वर !॥ ३३८ ॥
नित्यैवैषा जगन्माता तव नित्याऽनपायिनी । यथा सर्वगतस्त्वं हि तथा चेयं रघूत्तम!
तस्माच्छुद्धसमाचारां सीतां साध्वीं दृढव्रताम् ।
गृहाण सौम्य ! काकुत्स्थ ! क्षीराब्धेरिव मा चिरम् ॥ ३४० ॥

ईश्वर उवाच ।

एतस्मिन्नन्तरे तत्र लोकसाक्षी स पावकः । आदाय सीतां रामाय प्रददौ सुरसन्निधौ
अब्रवीत्तत्र काकुत्स्थं वह्निः सर्वशरीरगः ॥ ३४१ ॥

वह्निरुवाच ।

इयंशुद्धसमाचारा सीता निष्कल्मषा विभो !। गृहाण मा चिरं राम!सत्यं सत्यं तवाब्रवम्

ईश्वर उवाच ।

ततोऽग्निवचनात्सीतां परिगृह्य रघूद्वहः । बभूव रामः संहृष्टः पूज्यमानः सुरोत्तमैः ॥
राक्षसैर्निहता ये तु सङ्ग्रामे वानरोत्तमाः । पितामहवरात्तूर्णं जीवमानाः समुत्थिताः
ततस्तु पुष्पकं नाम विमानं सूर्यसन्निभम् । भ्रात्रा गृहीतं सङ्ग्रामे कौबेरं राक्षसेश्वरः
तद्राघवाय प्रददौ वस्त्राण्याभरणानि च । तेन सम्पूजितः श्रीमान्रामचन्द्रः प्रतापवान्
आरुरोह विमानाग्र्यं वैदेह्या भार्यया सह । लक्ष्मणेन च शूरेण भ्रात्रा दशरथात्मजः ॥
ऋक्षवानरसङ्घातैः सुग्रीवेण महात्मना । विभीषणेन शूरेण राक्षसैश्च महाबलैः ॥३४८
यथा विमाने वैकुण्ठे नित्यमुक्तैर्महात्मभिः । तथा सर्वैः समारुह्य ऋक्षवानरराक्षसैः ॥
अयोध्यांप्रस्थितो रामःस्तूयमानः सुरोत्तमैः । भरद्वाजाश्रमंगत्वा रामः सत्यपराक्रमः
भरतस्याऽन्तिकेतत्र हनूमन्तं व्यसर्जयत् । स निषादालयं गत्वागुहं दृष्ट्वाऽथ वैष्णवम्
राघवागमनं तस्मै प्राह वानरपुङ्गवः । नन्दिग्रामं ततो गत्वा दृष्ट्वा तं राघवानुजम् ॥
न्यवेदयत्तथा तस्मै रामस्याऽगमनोत्सवम् । भरतश्चाऽऽगतं श्रुत्वा वानरेण रघूत्तमम्
प्रहर्षमतुलं लेभे सानुजः ससुहृज्जनः । पुनरागत्य काकुत्स्थं हनूमान्मारुतात्मजः ॥
सर्वं शशंस रामाय भरतस्य च वर्तनम् । राघवस्तु विमानाग्र्यादवरुह्य सहाऽनुजः ॥
ववन्दे भार्यया सार्द्धं भरद्वाजं तपोनिधिम् ।

स तु सम्पूजयामास काकुत्स्थं सानुजं मुनिः ॥ ३५६ ॥

पक्वान्नैः फलमूलाद्यैर्वस्त्रैराभरणैरपि । तेन सम्पूजितस्तत्र प्रणम्य मुनिसत्तमम् ॥३५७
अनुज्ञातः समारुह्य पुष्पकं सानुगस्तदा । नन्दिग्रामं ययौ रामः पुष्पकेण सुहृद्वृतः॥
मन्त्रिभिः पौरमुख्यैश्च सानुजः केकयीसुतः । प्रत्युद्ययौ नृपवरैः सबलैः पूर्वजं मुदा ॥
सम्प्राप्य रघुशार्दूलं ववन्दे सोऽनुजैर्वृतः । पुष्पकादवरुह्याऽथ राघवः शत्रुतापनः ॥
भरतं चैव शत्रुघ्नमुपसम्परिषस्वजे । पुरोहितं वसिष्ठं च मातृवृद्धांश्च बान्धवान् ॥
प्रणनाम महातेजाः सीतया लक्ष्मणेन च । विभीषणं च सुग्रीवं जाम्बवन्तं तथाऽङ्गदम् ॥
हनुमन्तं सुषेणं च भरतः परिषस्वजे । भ्रातृभिः सानुगैस्तत्र मङ्गलस्नानपूर्वकम् ॥
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । आरुरोह रथं दिव्यं सुमन्त्राधिष्ठितं शुभम्
संस्तूयमानस्त्रिदशैर्वैदेह्या लक्ष्मणेन च । भरतश्चैव सुग्रीवः शत्रुघ्नश्च विभीषणः ॥
अङ्गदश्च सुषेणश्च जाम्बवान्मारुतात्मजः । नीलो नलश्च सुभगः शरभो गन्धमादनः ॥

अन्ये च कपयः शूरा निषादाधिपतिर्गुहः ।
राक्षसाश्च महावीर्याः पार्थिवेन्द्रा महाबलाः ॥ ३६७ ॥
गजानश्वान्रथान्सम्यगारुह्य बहुशः शुभान् ।
नानामङ्गलवादित्रैः स्तुतिभिः पुष्कलैस्तथा ॥ ३६८ ॥

ऋक्षवानररक्षोभिर्निषादवरसैनिकैः । प्रविवेश महातेजाः साकेतं पुरमव्ययम् ॥३६९॥

आलोक्य राजनगरीं पथि राजपुत्रो राजानमेव पितरं परिचिन्तयानः ।
सुग्रीवमारुतिविभीषणपुण्यपादसञ्चारपूतभवनं प्रविवेश रामः ॥ ३७० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे रामस्याऽयोध्याप्रवेशो नाम द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

# त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः

## रामाभिषेचनपूर्वकंरामदर्शनार्थममहेश्वरंसुराणामागमनं विश्वरूपदर्शनं-शिवकृतासीतारामस्तुतिस्तत्फलवर्णनञ्च

शङ्कर उवाच ।

अथ तस्मिन्दिने पुण्ये शुभलग्ने शुभान्विते । राघवस्याऽभिषेकार्थं मङ्गलं चक्रिरे जनाः
वसिष्ठो वामदेवश्च जाबालिरथ कश्यपः । मार्कण्डेयश्च मौद्गल्यः पर्वतो नारदस्तथा ॥
एते महर्षयस्तत्र जपहोमपुरस्सरम् । अभिषेकं शुभं चक्रुर्मुनयो राजसत्तमम् ॥ ३ ॥
नानारत्नमये दिव्ये हेमपीठे शुभान्विते । निवेश्य सीतया सार्द्धं श्रिया इव जनार्दनम्
सौवर्णकलशैर्दिव्यैर्नानारत्नमयैः शुभैः । सर्वतीर्थोदकैः पुण्यैर्माङ्गल्यद्रव्यसंयुतैः ॥ ५॥
दूर्वाग्रतुलसीपत्रपुष्पगन्धसमन्वितैः । मन्त्रपूतजलैः शुद्धैर्मुनयः संशितव्रताः ॥ ६ ॥
अजपन्वैष्णवान्सूक्तांश्चतुर्वेदमयाञ्छुभान् । अभिषेकंशुभं चक्रुः काकुत्स्थं जगतांपतिम्
तस्मिञ्छुभतमे लग्ने देवदुन्दुभयो दिवि । विनेदुः पुष्पवर्षाणि ववृषुश्च समन्ततः ॥८
दिव्याम्बरैर्भूषणैश्च दिव्यगन्धानुलेपनैः । पुष्पैर्नानाविधैर्दिव्यैर्देव्या सह रघूद्वहः ॥९॥
अलङ्कृतश्च शुशुभे मुनिभिर्वेदपारगैः । छत्रं च चामरं दिव्यं धृतवाँल्लक्ष्मणस्तदा ॥
पार्श्वे भरतशत्रुघ्नौ तालवृन्तौ विरेजतुः । दर्पणं प्रददौ श्रीमान्राक्षसेन्द्रो विभीषणः॥
दधार पूर्णकलशं सुग्रीवो वानरेश्वरः । जाम्बवांश्च महातेजाः पुष्पमालां मनोहराम् ॥
वालिपुत्रस्तु ताम्बूलं सकर्पूरं ददौ हरेः । हनुमान्दीपिकांदिव्यां सुषेणश्च ध्वजं शुभम्
परिवार्य महात्मानं मन्त्रिणः समुपासत । सृष्टिर्जयन्तो विजयः सौराष्ट्रो राष्ट्रवर्द्धनः
अकोपोधर्मपालश्च सुमन्त्रो मन्त्रिणः स्मृताः । राजानश्च नरव्याघ्रा नानाजनपदेश्वराः
पौराश्चनैगमा वृद्धा राजानं पर्युपासत । ऋक्षैश्च वानरेन्द्रैश्च मन्त्रिभिः पृथिवीश्वरैः ॥
राक्षसैर्द्विजमुख्यैश्च किङ्करैश्च समावृतः । परे व्योम्नि यथा लीनो दैवतैः कमलापतिः ॥
तथा नृपवरः श्रीमान्साकेते शुशुभे तदा । इन्दीवरदलश्यामं पद्मपत्रनिभेक्षणम् ॥१८॥

आजानुबाहुं काकुत्स्थं पीतवस्त्रधरं हरिम् । कम्बुग्रीवं महोरस्कं विचित्राभरणैर्युतम्
देव्या सह समासीनमभिषिक्तं रघूत्तमम् । विमानस्थाः सुरगणा हर्षनिर्भरमानसाः ॥
तुष्टुवुर्जयशब्देन गन्धर्वाप्सरसां गणाः । अभिषिक्तस्ततो रामो वसिष्ठाद्यैर्महर्षिभिः ॥
शुशुभे सीतया देव्या नारायण इव श्रिया । अतिमर्त्यतया रूपमुपमातीतमुल्बणम् ॥
दृष्ट्वा तुष्टाव हृष्टात्मा शङ्करो हृष्टमानसः । कृताञ्जलिपुटो भूत्वा सानन्दो गद्गदाकुलः ॥
हर्षयन्सकलान्देवान्मुनीनपि च वानरान् ॥ २३ ॥

महादेव उवाच ।

नमो मूलप्रकृतये नित्याय परमात्मने । सच्चिदानन्दरूपाय विश्वरूपाय वेधसे॥२४॥
नमो निरन्तरानन्दकन्दमूलाय विष्णवे । जगत्त्रयकृतानन्दमूर्त्तये दिव्यमूर्त्तये ॥ २५ ॥
नमो ब्रह्मेन्द्रपूज्याय शङ्कराभयदाय च । नमो विष्णुस्वरूपाय सर्वरूप नमो नमः॥२६
उत्पत्तिस्थितिसंहारकारिणे त्रिगुणात्मने । नमोऽस्तु निर्गतोपाधिस्वरूपायमहात्मने
अनया विद्यया देव्या सीतयोपाधिकारिणे । नमः पुम्प्रकृतिभ्यांच युवाभ्यांजगतां कृते
जगन्मातापितृभ्यां च जनन्यै राघवाय च । नमः प्रपञ्चरूपिण्यै निष्प्रपञ्चस्वरूपिणे ॥
नमो ध्यानस्वरूपिण्यै योगिध्येयात्ममूर्त्तये । परिणामापरिणामशक्तिभ्यां च नमोनमः
कूटस्थबीजरूपिण्यै सीतायै राघवाय च ।
सीता लक्ष्मीर्भवान्विष्णुः सीता गौरी भवाञ्छिवः ॥ ३१ ॥
सीता स्वयं हि सावित्री भवान्ब्रह्मा चतुर्मुखः ।
सीता शची भवाञ्छक्रः सीता स्वाहाऽनलो भवान् ॥ ३२ ॥
सीता संहारिणीदेवी यमरूपधरो भवान् । सीता हि सर्वसम्पत्तिः कुबेरस्त्वं रघूत्तम!
सीतादेवी च रुद्राणी भवान्रुद्रोमहाबलः । सीता तु रोहिणीदेवीचन्द्रस्त्वंलोकसौख्यदः
सीता संज्ञा भवान्सूर्यः सीता रात्रिर्दिवा भवान् ।
सीता देवी महाकाली महाकालो भवान्सदा ॥ ३५ ॥
स्त्रीलिङ्गं तु त्रिलोकेषु यत्तत्सर्वं हि जानकी । पुन्नामलाञ्छितंयत्तुतत्सर्वंहिभवान्प्रभो!
सर्वत्र सर्वदेवेश! सीता सर्वत्रधारिणी । तदा त्वमपि च त्रातुं तच्छक्तिर्विश्वधारिणी

तस्मात्कोटिगुणंपुण्यंयुवाभ्यांपरिचिह्नितम् । चिह्नितंशिवशक्तिभ्यांचरितंतवशान्तिदम्
आवांराम! जगत्पूज्यौमम पूज्यौसदायुवाम् । त्वन्नामजापिनोगौरीत्वन्मन्त्रजपवानहम्
मुमूर्षोर्मणिकर्ण्यां तु अर्द्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मदायकम्
अतस्त्वंजानकीनाथपरंब्रह्माऽसिनिश्चितम् । त्वन्मायामोहितास्सर्वेनत्वांजानन्तितत्त्वतः

ईश्वर उवाच ।

इत्युक्तः शम्भुना रामः प्रसादप्रवणोऽभवत् । दिव्यरूपधरः श्रीमानद्भुताद्भुतदर्शनः ॥
तं तथा रूपमालोक्य नरवानरदेवताः । न द्रष्टुमपि शक्तास्ते तेजसा महदद्भुतम् ॥४३॥
भयाद्वै त्रिदशश्रेष्ठाः प्रणेमुश्चाऽतिभक्तितः । भीता विज्ञाय रामोऽपि नरवानरदेवताः ॥
मायामानुषतां प्राप्य स देवानब्रवीत्पुनः ॥ ४४ ॥

रामचन्द्र उवाच ।

शृणुध्वं देवता यो मां प्रत्यहंस्तोष्यतेबुधः । स्तवेन शम्भुनोक्तेन देवतुल्यो भवेन्नरः ॥
विमुक्तः सर्वपापेभ्यो मत्स्वरूपं समश्नुते । रणे जयमवाप्नोति न क्वचित्प्रतिहन्यते ॥
भूतवेतालकृत्याभिर्ग्रहैश्चाऽपि न बाध्यते । अपुत्रो लभते पुत्रं पतिं विन्दति कन्यका ॥
दरिद्रः श्रियमाप्नोतिसत्त्ववाञ्छीलवान्भवेत् । आत्मतुल्यबलःश्रीमाञ्जायतेनाऽत्रसंशयः
निर्विघ्नं सर्वकार्येषु सर्वारम्भेषु वै नृणाम् । यं यं कामयते मर्त्यः सुदुर्लभमनोरथम्
षण्मासात्सिद्धिमाप्नोति स्तवस्याऽस्य प्रसादतः । यत्पुण्यंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलम्
तत्फलं कोटिगुणितं स्तवेनाऽनेन लभ्यते ॥ ५० ॥

ईश्वर उवाच ।

इत्युक्त्वारामचन्द्रोऽसौविससर्जमहेश्वरम् । ब्रह्मादित्रिदशान्सर्वान्विससर्जसमागतान्
अर्चिता मानवाः सर्वे ऋक्षवानरदेवताः । विसृष्टा रामचन्द्रेण प्रीत्या परमया युताः॥
इत्थं विसृष्टाः खलु ते च सर्वे स्वं स्वं पदं जग्मुरतीवहृष्टाः ।
परं पठन्तः स्तवमीश्वरोक्तं रामं स्मरन्तो वरविश्वरूपम् ॥ ५३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे विश्वदर्शनं नाम त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

# चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः

## उत्तररामचरिते गर्भवत्याःसीतायाःजनापवादभीत्यावाल्मीकेराश्रमे विसर्जनं-कालेनसमयोलक्ष्मणद्वाराद्वाररक्षणं दुर्वाससआगमनमेकान्तेदुर्वासःसमागम-सूचनालक्ष्मणस्यदिव्यदेहधारणं रामस्यजनैःसहदिव्यधामपदार्पणम्

शङ्कर उवाच

अथ रामस्तु वैदेह्या राज्यभोगान्मनोरमान् । बुभुजे वर्षसाहस्रं पालयन्सर्वतो दिशः ॥
अन्तःपुरजनास्सर्वे राक्षसस्यगृहेस्थिताम् । गर्हयन्तिस्म वैदेहीं तथा जानपदा जनाः ॥
लोकापवादभीत्या च रामः शत्रुनिवारकः । दर्शयन्मानुषं धर्ममन्तर्वत्नीं नृपात्मजाम्
वाल्मीकेराश्रमे पुण्ये गङ्गातीरे महावने । विससर्ज महातेजा गर्भिणीं मुनिसंसदि ॥
सा भर्तुः परतन्त्रा हि उवास मुनिवेश्मनि । अर्चिता मुनिपत्नीभिर्वाल्मीकिमुनिरक्षिता
तत्रैवाऽसूत यमलौ नाम्ना कुशलवौ सुतौ । तौ च तत्रैव मुनिना ववृधाते सुसंस्कृतौ
रामोऽपि भ्रातृभिस्सार्द्धं पालयामासमेदिनीम् । यमादिगुणसम्पन्नस्सर्वभोगविवर्जितः
अर्चयन्सततं विष्णुमनादिनिधनं हरिम् । ब्रह्मचर्यपरो नित्यं शशास पृथिवीं नृपः ॥
शत्रुघ्नो लवणं हत्वा मथुरां देवनिर्मिताम् । पालयामास धर्मात्मा पुत्राभ्यां सहराघवः

गन्धर्वान्भरतो हत्वा सिन्धोरुभयपार्श्वतः ।
स्वात्मजौ स्थापयामास तस्मिन्देशे महाबलौ ॥ १० ॥

पश्चिमे मद्रदेशे तु मद्रान्हत्वा च लक्ष्मणः । स्वसुतौ च महावीर्यावभिषिच्य महाबलः
गत्वा पुनरयोध्यां तु रामपादावुपास्पृशत् । ब्राह्मणस्य मृतं बालं कालधर्ममुपागतम्
जीवयामास काकुत्स्थः शूद्रं हत्वा चतापसम् । ततस्तु गौतमीतीरे नैमिषेजनसंसदि
इयाज वाजिमेधेन राघवः परवीरहा । काञ्चनीं जानकीं कृत्वा तया सार्द्धं महाबलः ॥
चकार यज्ञान्बहुशो राघवः परमार्थवित् । अयुतान्यश्वमेधानि वाजपेयानि च प्रभुः ॥

अग्निष्टोमं विश्वजितंगोमेधंवैष्णवंक्रतुम् । चकार विविधान्यज्ञान्परिपूर्णान्सदक्षिणान्
एतस्मिन्नन्तरे तत्र वाल्मीकिः सुमहातपाः । सीतामानीयकाकुत्स्थमिदं वचनमब्रवीत्

वाल्मीकिरुवाच ।

अपापां मैथिलीं राम त्यक्तुं नाऽर्हसिसुव्रत !। इयंतुविरजाःसाध्वीभास्करस्यप्रभायथा
अनन्या तव काकुत्स्थ कस्मात्त्यक्ता त्वयाऽनघ ! ॥ १८ ॥

राम उवाच ।

अपापां मैथिलीं ब्रह्मञ्जानामि वचनात्तव । रावणेन हृता साध्वी दण्डके विजने पुरा॥
तं हत्वासमरेसीतांशुद्धामग्निमुखागताम् । पुनर्यातोऽस्म्ययोध्यायां सीतामादायधर्मतः
लोकापवादःसुमहानभूत्पौरजनेषु च । त्यक्ता मया शुभाचारा तद्भयात्तव सन्निधौ ॥
तस्माल्लोकस्य सन्तुष्ट्यै सीता मम परायणा ।
पार्थिवानां महर्षीणां प्रत्ययं कर्तुमर्हति ॥ २२ ॥

महेश्वर उवाच ।

एवमुक्ता तदा सीता मुनिपार्थिवसंसदि । चकार प्रत्ययं देवी लोकाश्चर्यकरं सती ॥
दर्शयन्त्यस्य लोकस्यरामस्याऽनन्यतां सती । अब्रवीत्प्राञ्जलिः सीता सर्वेषांजनसंसदि

सीतोवाच ।

यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे धरणी देवी विवरं दातुमर्हति ॥
मनसाकर्मणावाचा यथा रामं समर्चये । तथा मे धरणी देवी विवरं दातुमर्हति ॥२६
यथैव सत्यमुक्तं मे वेद्मि रामात्परं नच । तथा मे धरणी देवी विवरंदातुमर्हति॥२७॥

महेश्वर उवाच ।

एवं शपन्त्यां वैदेह्यां धरणी सहसाऽभिनत् ॥ २८ ॥

ततो रत्नमयं पीठं पृष्ठे धृत्वा खगेश्वरः । रसातलादाविरभूद्विस्मयं जनयन्नृणाम् ॥२९
ततस्तु धरणीदेवीहस्ताभ्यांगृह्यमैथिलीम् । स्वागतेनाऽभिनन्द्यैनामासने संन्यवेशयत्
तामासनगतां दृष्ट्वा दिविदेवगणाभृशम् । पुष्पवृष्टिमविच्छिन्नांदिव्यांसीतामवाऽकिरन्
साऽपि दिव्याप्सरोभिस्तु पूज्यमाना सनातनी ।

वैनतेयं समारुह्य तस्मान्मार्गाद्दिवं ययौ ॥ ३२ ॥
दासीगणैः पूर्वभागे सम्वृता जगदीश्वरी । सम्प्राप परमं धाम योगिगम्यं सनातनम्
रसातलप्रविष्टां तु तां दृष्ट्वा सर्वमानुषाः । साध्वीसाध्वीतिसीतेयमुच्चैःसर्वे प्रचुक्रुशुः
रामः शोकसमाविष्टः संगृह्य तनयावुभौ । मुनिभिः पार्थिवेन्द्रैश्च साकेतं प्रविवेश ह ॥
अथ कालेन महता मातरः संशितव्रताः । कालधर्मं समापन्ना भर्त्रा स्वर्गं प्रपेदिरे ॥३६
दशवर्षसहस्राणि दशवर्षशतानि च । चकार राज्यं धर्मेण राघवः संशितव्रतः ॥३७॥
कस्यचित्त्वथ कालस्य राघवस्यनिवेशनम् । कालस्तापसरूपेण सम्प्राप्तोवाक्यमब्रवीत

काल उवाच ।

रामरामहाबाहो! धात्रा सम्प्रेषितोऽस्म्यहम् । यद्ब्रवीमि रघुश्रेष्ठ! तच्छृणुष्व महामते!
द्वन्द्वमेवहि कार्यं स्यादावयोःपरिभाषितम् । तदन्तरे प्रविष्टो यस्स वध्योहि भविष्यति

महेश्वर उवाच ।

तथेति च प्रतिश्रुत्य रामो राजीवलोचनः । द्वाःस्थं कृत्वा तुसौमित्रिं कालेनसमभाषत
वैवस्वतोऽब्रवीद्वाक्यं रामं दशरथात्मजम् ॥ ४१ ॥

काल उवाच ।

शृणु राम! यथावृत्तं ममाऽऽगमनकारणम् । दशवर्षसहस्राणि दशवर्षशतानि च॥४२॥
वसाऽस्मिन्मानुषे लोके हत्वा राक्षसपुङ्गवान् । एवमुक्तः सुरगणैरवतीर्णोऽस्मि भूतले
तदयं समयः प्राप्तः स्वर्लोकं गमितुं त्वया । सनाथाहि सुराःसर्वे भवन्त्वद्यत्वयाऽनघ!

महेश्वर उवाच ।

एवमस्त्विति काकुत्स्थो रामःप्राह महाभुजः । एतस्मिन्नन्तरे तत्रदुर्वासास्तुमहातपाः
राजद्वारमुपागम्य लक्ष्मणं वाक्यमब्रवीत् ॥ ४५ ॥

दुर्वासा उवाच ।

मां निवेदय काकुत्स्थं शीघ्रं गत्वा नृपात्मज ! ॥ ४६ ॥

महेश्वर उवाच ।

तमब्रवील्लक्ष्मणस्तु असांनिध्यमितिद्विज !। ततः क्रोधसमाविष्टः प्राह तं मुनिसत्तमः॥

दुर्वासा उवाच ।

शापं दास्यामि काकुत्स्थं रामं न यदि दर्शयेः ॥ ४८ ॥

महेश्वर उवाच ।

तस्माच्छापभयात्क्षिप्रं राघवाय न्यवेदयत् । तत्रैवाऽन्तर्दधे कालः सर्वभूतभयावहः॥४६
पूजयामास तं प्राप्तमृषिं दुर्वाससं नृपः । अग्रजस्य प्रतिज्ञां तु विज्ञाय रघुसत्तमः ॥
तत्याज मानुषं रूपं लक्ष्मणः सरयूजले । विसृज्य मानुषं रूपं प्रविवेश स्वकां तनुम् ॥
फणासहस्रसंयुक्तं कोटीन्दुसमवर्चसम् । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥
नागकन्यासहस्रैस्तु सम्वृतः समलङ्कृतः । विमानं दिव्यमारुह्य प्रययौ वैष्णवं पदम्
लक्ष्मणस्यगतिंसम्यग्विदित्वारघुसत्तमः । स्वयमप्यथकाकुत्स्थः स्वर्गं गन्तुमभीप्सितः

अभिषिच्याऽथ काकुत्स्थः स्वात्मजौ च कुशीलवौ ।

विभज्य रथनागाश्वं सधनं प्रददौ तयोः ॥ ५५

कुशवत्यां कुशं तं च शरवत्यां लवं तथा । स्थापयामास धर्मेण राज्ये स्वं रघुसत्तमः
अभिप्रायं तु विज्ञाय रामस्य विदितात्मनः । आजग्मुर्वानराःसर्वेराक्षसाः सुमहाबलाः
विभीषणोऽथ सुग्रीवो जाम्बवान्मारुतात्मजः । नीलो नलःसुषेणश्च निषादाधिपतिर्गुहः
अभिषिच्य सुतौ वीरौ शत्रुघ्नश्च महामनाः । सर्वएते समाजग्मुरयोध्यां रामपालिताम्

ते प्रणम्य महात्मानमूचुः प्राञ्जलयस्तथा ॥ ६० ॥

वानरप्रभृतयऊचुः ।

स्वर्लोकं गन्तुमुद्युक्तं ज्ञात्वा त्वां रघुसत्तम !। आगताः स्मो वयंसर्वेनवाऽनुगमनं प्रति

न शक्ताः स्मः क्षणं राम जीवितुं त्वां विना प्रभो ! ।

तस्मात्त्वया विशालाक्ष ! गच्छामस्त्रिदशालयम् ॥ ६२ ॥

महेश्वर उवाच ।

तैरेवमुक्तः काकुत्स्थो बाढमित्यब्रवीत्ततः । अथोवाच महातेजा राक्षसेन्द्रं विभीषणम्

राम उवाच ।

राज्यं प्रशाधि धर्मेण मा प्रतिज्ञां वृथा कृथाः । यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी

तावद्रमस्व सुप्रीतः काले मम पदं व्रज ॥ ६४ ॥

महेश्वर उवाच ।

इत्युक्त्वाऽथ स काकुत्स्थः स्वार्चां विष्णुं सनातनम् ।
श्रीरङ्गशायिनं सौम्यमिक्ष्वाकुकुलदैवतम् ॥ ६५ ॥
सम्प्रीत्या प्रददौ तस्मै रामो राजीवलोचनः । हनुमन्तमथोवाच राघवः शत्रुसूदनः ॥

राम उवाच ।

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर ! । तावद्रमस्व मेदिन्यां काले मां व्रज सुव्रत!

महेश्वर उवाच ।

तमेवमुक्त्वा काकुत्स्थो जाम्बवन्तमथाऽब्रवीत् ॥ ६८ ॥

राम उवाच ।

द्वापरे समनुप्राप्ते यदूनामन्वये पुनः । भूभारस्य विनाशाय समुत्पत्स्ये त्वहं भुवि ॥
करिष्ये तत्र संग्रामं त्वया भल्लूकसत्तम ! ॥ ७० ॥

महेश्वर उवाच ।

तमेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् । उवाच वाचा गच्छध्व मिति रामो महाबलः
मन्त्रिणो नैगमाश्चैव भरतः कैकयीसुतः । राघवस्यानुगमने निश्चितास्ते समाययुः ॥
ततः शुक्लाम्बरधरो ब्रह्मचारी ययौ परम् । कुशान्गृहीत्वा पाणिभ्यामाच्म्य प्रययावथ
रामस्य दक्षिणेपार्श्वे पद्महस्ता रमा गता । तथैव धरणी देवी दक्षिणेतरगा तथा ॥
वेदाः साङ्गाःपुराणानिसेतिहासानिसर्वतः । ॐकारोथवषट्कारःसावित्रीलोकपावनी
अस्त्रशस्त्राणि च तदा धनुराद्यानि पार्वति !। अनुजग्मुस्तथा रामं सर्वे पुरुषविग्रहाः ॥
भरतश्चैव शत्रुघ्नः सर्वे पुरनिवासिनः । सपुत्रदाराः काकुत्स्थमनुजग्मुः सहानुगाः ॥
मन्त्रिणो भृत्यवर्गाश्च किङ्करा नैगमास्तथा । वानराश्चैव ऋक्षाश्च सुग्रीवसहितास्तदा
सपुत्रदाराः काकुत्स्थमन्वगच्छन्महामतिम् । पशवः पक्षिणश्चैवसर्वे स्थावरजङ्गमाः
अनुजग्मुर्महात्मानं समीपस्था नरोत्तमाः । ये च पश्यन्तिकाकुत्स्थंस्वपथानुगतं प्रभुम्
ते तथाऽनुगता रामं निवर्त्तन्ते न केचन । अथ त्रियोजनं गत्वा नदींपश्चान्मुखींस्थिताम्

सरयूं पुण्यसलिलां प्रविवेश सहानुगः । ततः पितामहो ब्रह्मा सर्वदेवगणावृतः ॥८२॥
तुष्टाव रघुशार्दूलमृषिभिः सार्द्धमक्षरैः । अब्रवीत्तत्र काकुत्स्थं प्रविष्टं सरयूजले ॥८३॥

ब्रह्मोवाच ।

आगच्छ विष्णो ! भद्रं ते दिष्ट्या प्राप्तोऽसि मानद ! ।
भ्रातृभिस्सहदेवाभैः प्रविशस्व निजां तनुम् ॥ ८४ ॥

वैष्णवीन्तां महातेजां देवाकारांसनातनीम् । त्वं हि लोकगतिर्देव!नत्वां केचित्तुजानते
त्वामचिन्त्यं महात्मानमक्षरं सर्वसंग्रहम् । यमिच्छसि महातेजस्तां तनुं प्रविशस्व भोः

महेश्वर उवाच ।

तस्मिन्सूर्यकराकीर्णे पुष्पवृष्टिनिपातिते । उत्सृज्य मानुषं रूपं स्वां तनुम्प्रविवेश ह ॥
अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ । प्रपेदाते महात्मानौ दिव्यतेजस्समन्वितौ
शङ्खचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः । दिव्याभरणसम्पन्नो दिव्यगन्धानुलेपनः ॥ ८६ ॥
दिव्यपीताम्बरधरः पद्मपत्रनिभेक्षणः । युवा कुमारः सौम्याङ्गः कोमलावयवोज्ज्वलः॥
सुस्निग्धनीलकुटिलकुन्तलः शुभलक्षणः । नवदूर्वाङ्कुरश्यामः पूर्णचन्द्रनिभाननः ॥९१॥

देवीभ्यां सहितः श्रीमान्विमानमधिरुह्य च ।
तस्मिन्सिंहासने दिव्ये मूलेकल्पतरोःप्रभुः ॥ ९२ ॥

निषसाद महातेजाः सर्वदेवैरभिष्टुतः । राघवानुगता ये च ऋक्षवानरमानुषाः ॥९३॥
स्पृष्ट्वैव सरयूतोयं सुखेन त्यक्तजीविताः । रामप्रसादात्ते सर्वे दिव्यरूपधराः शुभाः
दिव्यमाल्याम्बरधरा दिव्यमङ्गलवर्चसः । आरुरुहुर्विमानं तदसङ्ख्यास्तत्र देहिनः ॥
सर्वैःपरिवृतः श्रीमान्रामो राजीवलोचनः । पूजितः सुरसिद्धौघैर्मुनिभिस्तु महात्मभिः
आययौ शाश्वतं दिव्यमक्षरं स्वपदं विभुः । यः पठेद्रामचरितं श्लोकं श्लोकार्धमेव वा

शृणुयाद्वा तथा भक्त्या स्मरेद्वा शुभदर्शने ! ।
कोटिजन्मार्जितात्पापाज्ज्ञानतोऽज्ञानतः कृतात् ॥ ९८ ॥

विमुक्तो वैष्णवं लोकं पुत्रदारैश्चबान्धवैः । समाप्नुयाद्योगगम्यमनायासेन वै नरः ॥
एतत्ते कथितंदेवि! रामस्यचरितंमहत् । धन्योऽस्म्यहंत्वया देवि! रामचन्द्रस्यकीर्त्तनात्

किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि वरानने ! ॥ १०० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे श्रीरामचरितकथनं नाम चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

---

# पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः

## श्रीकृष्णावतारकथाप्रसङ्गे कंसजरासन्धादिराक्षसानांसमुत्पातस्त्रस्तायाःपृथिव्या-ब्रह्मसमीपेगमनं देवैःसहब्रह्मणोविष्णुसमीपेप्रार्थनं भुवोभारापहरणाय-विष्णुनाऽऽश्वासनं कारावासस्थवसुदेवगृहेजन्मवृन्दावनेकृष्ण-नयनं कंसात्याचारवर्द्धनं पूतनादिमारणं कृष्णेन-नानादिव्यलीलाप्रदर्शनं कंसवधश्च

श्रीपार्वत्युवाच ।

रघुनाथस्य चरितं साधूक्तं हि त्वया विभो ! ।
श्रुत्वा धन्याऽस्मि देवेश ! त्वत्प्रसादान्महेश्वर ! ॥ १ ॥
वसुदेवसुतस्याऽस्यकृष्णस्य चरितंमहत् । श्रोतुमिच्छामि देवेश! चरितं कल्मषापहम्

रुद्र उवाच ।

शृणु देवि! प्रवक्ष्यामिकृष्णस्याऽस्य महात्मनः । चरितंवासुदेवस्य सर्वेषांफलदंनृणाम्
यदूनामन्वये देवि ! वसुदेवइतीरितः । देवमीढस्य पुत्रोऽभूत्सर्वधर्मविदांवरः ॥ ४ ॥
देवकस्याऽऽत्मजां देवि देवकीं देववर्णिनीम् । उपयेमे विधानेन मथुरायां नृपात्मजः ॥
उग्रसेनस्य पुत्रोऽभूत्कंसः शूरो महाबलः । तयोरथ वरं तत्र चोदयामास सारथिः ॥
समागतेषु तेष्वेवं पथि रम्ये शुभावहे । अन्तरिक्षेऽशरीरा वाक्प्राह गम्भीरया गिरा॥

आकाशवागुवाच ।

अस्यास्तवाऽष्टमो गर्भः कंस प्राणान्हरिष्यति ॥ ८ ॥

रुद्र उवाच ।

तच्छ्रुत्वा हन्तुमारेभे कंसोऽपि भगिनीं तदा । तमब्रवीत्सुसंरब्धं वसुदेवः सुबुद्धिमान्

वसुदेव उवाच ।

नहन्तव्या महाभाग ! भगिनी धर्मतस्त्वया । गर्भानिवसमुत्पन्नाअहि राजन्महाबल !॥

रुद्र उवाच ।

तथेत्याह तदा कंसो वसुदेवं च देवकीम् । निबध्य स्वगृहे रम्ये सर्वभोगे न्यवेशयत्
एतस्मिन्नन्तरे देवि! भूमिभारप्रपीडिता । जगाम धरणी देवी सहसा ब्रह्मणोऽन्तिकम्
समेत्य जगतामीशं ब्रह्माणं परमेष्ठिनम् । प्राह गम्भीरया वाचा धरणी लोकधारिणी॥

धरण्युवाच ।

प्रजापते ! न शक्ताऽस्मि भर्तुं लोकानिमान्प्रभो ! ।

राक्षसाः पापकर्माणः संस्थिता मयि सुव्रत ! ॥ १४ ॥

जगतः सकलान्धर्मान्विध्वंसन्तो महाबलाः । अधर्मवर्तिनः सर्वे नराः पापविमोहिताः
स्वल्पमल्पतरं धर्मं लोकेऽस्मिन्न च दृश्यते । धर्मेणैव धृता देव! सत्यशौचयुतेन च ॥

तस्मादधर्मसम्भूतं न लोकं धर्तुमुत्सहे ॥ १६ ॥

रुद्र उवाच ।

इत्युक्त्वा धरणी देवी तत्रैवाऽन्तरधीयत । ततः सुरगणाः सर्वे ब्रह्मरुद्रपुरोगमाः ॥१७
क्षीराब्धेरुत्तरं कूलमधिगम्य जगत्पतिम् । तुष्टुवुः स्तुतिभिर्दिव्यैर्मुनयश्च महौजसः ॥

ततः प्रसन्नः प्राहेशः सर्वांस्तान्मुनिसत्तमान् ॥ १८ ॥

श्रीभगवानुवाच ।

भोभो ! देवगणास्सर्वे किन्निमित्तमिहाऽऽगताः ॥ १९ ॥

रुद्र उवाच ।

ततः पितामहः प्राह देवदेवं जनार्दनम् ॥ २० ॥

ब्रह्मोवाच ।

देवदेव ! जगन्नाथ ! पृथिवी भारपीडिता । राक्षसा बहवो लोके समुत्पन्ना दुरासदाः
जरासन्धश्च कंसश्च प्रलम्बो धेनुकादयः । दुरात्मानः प्रबाधन्ते सर्वलोकान्सनातनान्
भारावतरणं कर्तुं पृथिव्यास्त्वमिहाऽर्हसि ॥ २२ ॥

रुद्र उवाच ।

एवमुक्तोहृषीकेशो ब्रह्मणा परमेष्ठिना । प्राह गम्भीरया वाचा जगतीपतिरव्ययः ॥२३॥

श्रीभगवानुवाच ।

अवतीर्याऽथ लोकेऽस्मिन्यदूनामन्वये सुराः ! अवनीभारमव्यग्रमपास्यामि महाबलाः

रुद्र उवाच ।

एवमुक्ताः सुरास्सर्वे नमस्कृत्य जनार्दनम् ।
स्वान्स्वाँल्लोकान्समासाद्य परेशं तेऽन्वचिन्तयन् ॥
ततो नारायणीं मायां परमेशः समब्रवीत् ॥ २५ ॥

श्रीभगवानुवाच ।

हिरण्याक्षस्य षट्पुत्रान्समानीयाऽवनीतले । वसुदेवस्य पत्न्यान्तु देवक्यां सन्निवेशय
अनन्तांशःसप्तमोऽत्र सम्प्रविष्टस्तुमात्रिरम् । तस्याःसपत्न्यां रोहिण्यांददस्व शुभदर्शने
ततोऽष्टमेममांशस्तु देवक्यांसम्भविष्यति । नन्दगोपस्य पत्न्यान्तु यशोदायां सनातनी
तेंऽशभूतामहानिद्रा विन्ध्यं गत्वा महाचलम् । तत्रसम्पूज्यमाना हि देवैरिन्द्रपुरोगमैः
हन्याद्दैत्यान्महावीर्याञ्छुम्भासुरपुरोगमान् ॥ २६ ॥

रुद्र उवाच ।

तथेत्युक्त्वामहामाया हिरण्याक्षसुतांस्तदा । पर्यायेण च देवक्यापड्गर्भान्संन्यवेशयत्
ताञ्जघान तदा कंसो जातमात्रान्महाबलः । ततस्तु सप्तमो गर्भो ह्यनन्तांशेन चोदितः॥
वर्धमानं तु गर्भं तं रोहिण्यां समुपानयत् । गर्भसङ्कर्षणात्तस्यां जातः सङ्कर्षणोऽव्ययः
कृष्णाष्टम्यान्तु रोहिण्यां प्रौष्ठपद्यां शुभोदये । रोहिणी जनयामास पुत्रं सङ्कर्षणंप्रभुम्
ततस्तुदेवकीगर्भमापेदे भगवान्हरिः । आपन्नगर्भां तां दृष्ट्वा कंसो भयनिपीडितः ॥ ३४

ततः सुरगणाः सर्वे हर्षनिर्भरमानसाः । तुष्टुवुर्देवकीं तत्र विमानस्था नभस्तले ॥३५॥
ततस्तु दशमे मासि कृष्णे नभसि पार्वति !। अष्टम्यामर्द्धरात्रे च तस्यां जातो जनार्दनः
इन्दीवरदलश्यामः पद्मपत्रायतेक्षणः । चतुर्भुजः सुन्दराङ्गो दिव्याभरणभूषितः ॥३७॥
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । वसुदेवस्यजातोऽसौ वासुदेवः सनातनः
तं दृष्ट्वा जगतां नाथं कृष्णमानकदुन्दुभिः । उवाचप्राञ्जलिर्भूत्वा नमस्कृत्य जगन्मयम्

वसुदेव उवाच ।

जातोऽस्मि मे जगन्नाथ! भक्तकल्पतरो प्रभो !। त्वमेव सर्वदेवानामनादिः पुरुषोत्तमः॥
त्वमचिन्त्यं महद्भूतं योगिध्येयः सनातनः । मम पुत्रत्वमापन्नो धरण्यां धरणीधर !
दृष्ट्वैतदद्भुतं रूपमैश्वरं पुरुषोत्तमः । दानवाः पापकर्माणो न सहन्ते महौजसः ॥४२॥

रुद्र उवाच ।

इत्यर्थित. स्तुतस्तेन पद्मनाभः सनातनः । उपसंहृतवान्रूपं चतुर्भुजसमन्वितम् ॥ ४३॥
मानुषेणैव भावेन द्विभुजेन व्यरोचत । ये चाऽङ्गरक्षकाः सर्वे दानवास्तत्र संस्थिताः॥
ते चापि मायया तस्या मोहितास्तमसावृताः । एतस्मिन्नन्तरे देवमादायानकदुन्दुभिः
प्रययौ नगरात्तूर्णं सर्वदेवैरभिष्टुतः । पयोधरे वर्षमाने नागराजो महाबलः ॥ ४६ ॥
फणासहस्रेणाच्छाद्य भक्त्यादेवं समन्वगात् । तौ गोपुरकपाटौतु तत्पादस्पर्शनात्तदा

भिद्यमानौ सुविवृतौ तत्रस्थाश्च विमोहिताः ।

स्रोतस्विनी सुपूर्णा या यमुनाऽपि महात्मनः ॥ ४८ ॥

प्रवेशाज्जानुमात्रन्तु जलंसा चाप्युपावहत् । उत्तीर्यंयमुनां सोऽथाव्रजत्तत्तीरसंस्थितम्
संस्तूयमानस्त्रिदशैः प्रविवेश यदूत्तमः । तत्र नन्दस्य पत्नी सा प्रसूता गोव्रजे शुभे ॥
विमोहिता माययैव सुषुप्ता तमसावृता । तस्यास्तु शयने देवं विनिक्षिप्य स यादवः
तां कन्यां समुपादाय प्रययौ मथुराम्पुनः । पत्न्यै दत्वाऽथ तां बालामुवासस्रुसमाहितः
रुरोद बालभावात्सा देवकीशयनंगता । अथ बालध्वनिं श्रुत्वा तद्गृहस्याऽङ्गरक्षकाः
कंसायाऽऽवेदयामासुर्देवकीप्रसवं शुभम् । कंसस्तूर्णमुपेत्यैनां जग्राह बालिकां तदा॥

चिक्षेप च शिलापृष्ठे साऽपि तूर्णं वियत्स्थिता ।

तस्योत्तमाङ्गे स्वपदं दत्त्वा तूर्णं खमास्थिता ॥
उवाचाऽष्टभुजादेवी तदा राक्षसपुङ्गवम् ॥ ५५ ॥

देव्युवाच ।

किं मया क्षिप्तया मन्द! जातोयस्त्वां हनिष्यति । सर्वस्यजगतः स्त्रष्टाधर्ताहर्ताचयःप्रभुः
अस्मिँल्लोके समुत्पन्नः स ते प्राणान्हरिष्यति ॥ ५६ ॥

रुद्र उवाच ।

इत्युक्त्वा तेजसा देवी सहसा पूरयन्नभः । जगाम देवगन्धर्वैः स्तूयमाना हिमाचलम्
कंसस्तदोद्विग्नमनाः समाहूय स्वदानवान् । प्रलम्बचाणूरमुखानुवाच भयपीडितः ॥

कंस उवाच ।

अस्माद्भयात्सुरगणा उपेत्य क्षीरसागरम् । आचचक्षुर्हरेः सर्वं रक्षोविध्वंसनम्प्रति ॥
तेषान्तु वचनंश्रुत्वा धरण्यां धरणीधरः । मानुषेणैव भावेन समुत्पन्नो हि सोऽव्ययः
तदत्र सर्वे यूयं वै राक्षसाः कामरूपिणः । समुद्रिक्तबलान्बालान्मारयध्वमशङ्किताः ॥

रुद्र उवाच ।

इत्यादिश्यततःकंसो वसुदेवंचदेवकीम् । आश्वास्य मोचयित्वाऽथ स्ववेश्मान्तर्विवेशह
वसुदेवस्ततो गत्वा नन्दव्रजमनुत्तमम् । तेन सम्पूजितस्तत्र निरीक्ष्य तनयं मुदा ॥
उवाच नन्दपत्नी तां यशोदां यदुनन्दनः ॥ ६३ ॥

वसुदेव उवाच ।

सुभगे! मत्सुतमिमं रोहिणीजठरोद्भवम् । स्वपुत्रमिव रक्षस्व भिया कंसादिहागतम् ॥

रुद्र उवाच ।

तथेत्याह तदा तन्वी नन्दपत्नी दृढव्रता । लब्ध्वैव पुत्रयुगलमुत्पुपोषमुदान्विता ॥६५
निक्षिप्य तनयौ गेहे नन्दगोपस्य यादवः । विश्रब्धः प्रययौतूर्णं मथुरां कंसपालिताम्
ततो गर्गः शुभदिने वसुदेवेन नोदितः । नन्दगोपव्रजं गत्वा तत्रस्थैः पूजितो द्विजः ॥
विधिना जातकं कर्मकृत्वा देवस्य गोकुले । नाम चात्राऽकरोद्दिव्यं पुत्रयोर्वासुदेवयोः
सङ्कर्षणो रौहिणेयो बलभद्रो महाबलः । रामइत्यादिनामानि पूर्वजस्याऽकरोद्द्विजः॥

श्रीधरः श्रीकरः श्रीमान्कृष्णोऽनन्तो जगत्पतिः । वासुदेवो हृषीकेशइत्याद्यवरजस्य च रामकृष्णाविति ख्यातिमस्मिँल्लोके गमिष्यतः । एवमुक्त्वा द्विजश्रेष्ठः सम्पूज्यपितृदेवताः सम्पूज्यमानो गोपालैर्ययौ मथुरां पुनः । कंसेन प्रेषिता रात्रौ पूतना बालघातिनी॥

विषलिप्तं स्तनं प्रादात्कृष्णायाऽमिततेजसे ।
कृष्णस्तु राक्षसीं ज्ञात्वा पपौ गाढं स्तनं भृशम् ॥ ७३ ॥

प्राणैः सह महातेजा राक्षस्या यदुपुङ्गवः । सा विह्वलाङ्गी सहसा विच्छिन्नस्नायुबन्धना पपात वेपमाना सा ममार च महास्वना । तस्याः शब्देन महता पूरितं च नभस्तलम् त्रस्ताःसर्वे ततो गोपा दृष्ट्वातां पतितांभुवि । कृष्णंचक्रीडमानन्तं राक्षस्यास्तु महोरसि समुद्विग्नास्ततस्तूर्णमादाय तनयं तदा । रक्षोभिया तदा तस्मिन्गोपुरीषेण मूर्द्धनि ॥ सम्मार्जयामास तदा गोवालेन तदाननम् । नन्दगोपः समभ्येत्य सुतमादाय भामिनी भगवन्नामभिस्तस्य सर्वाङ्गेषुप्रमार्जनम् । कृत्वातांतामसीं भीमां बहिर्विन्यस्यगोव्रजात् ददाह गोपवृन्दैश्च त्रासितैस्तत्र गोव्रजे । कदाचिच्छकटस्याऽधः शयानो भगवान्हरिः प्रसार्य चरणौ तत्र रुरोद मधुसूदनः । तस्य पादप्रहारेण शकटं परिवर्तितम् ॥८१ ॥ विध्वस्तकुम्भभाण्डं तद्विपरीतं पपात वै । ततोगोप्यश्च गोपाश्च दृष्ट्वा तच्छकटं महत् विस्मयं परमं जग्मुः किमेतदितिशङ्किताः । यशोदा च तदा तूर्णं बालं जग्राह विस्मिता अल्पेनैव हि कालेन बालकौ तौ यदूत्तमौ । वर्द्धमानौ यशोदायाः स्तनपानेन पोषितौ जानुभ्यामथहस्ताभ्यां रिङ्गमाणौविरेजतुः । तृणावर्तस्तमादाय गोविन्दं वियतिस्थितः तं जघान जगन्नाथस्स पपात महासुरः । हत्वा तं राक्षसं घोरं तत्रैवाऽऽस्ते जगत्पतिः विचचार ततः सर्वं गोव्रजं मधुसूदनः । नवनीतं जहाराऽऽशु गोपीनां च गृहे गृहे ॥ तदा यशोदा कुपिता दाम्नामध्ये उलूखले । निबध्य कृष्णं प्रययौ विक्रेतुंगोरसादिकम् कर्षमाणस्ततः कृष्णो दाम्ना बद्धउलूखले । यमलार्जुनयोर्मध्ये जगाम धरणीधरः ॥८६ उलूखलेन गोविन्दः पातयामास तौ द्रुमौ । भग्नस्कन्धौ निपतितौ स्वरेण धरणीतले तेन शब्देन महताऽऽजग्मुस्तत्र महौजसः । गोपवृद्धास्ततो दृष्ट्वा विस्मयं परमं गताः ॥ यशोदाऽपि समुद्विग्नाविमुच्यधरणीधरम् । तं विस्मितं समादायस्तनंप्रादान्महात्मने

यस्मान्निबध्यमानस्तु दाम्ना मात्रा जगत्पतिः ।
तस्मान्महर्षिभिः सर्वैर्दामोदरइतीरितः ॥ ६३ ॥

तौ तु किन्नरतां प्राप्तौ विमुक्तौ यमलार्जुनौ । गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः महोत्पातमिमं ज्ञात्वा स्थानान्तरमुपाययुः । वृन्दावने मनोरम्ये यमुनायास्तटे शुभे ॥ निवासं चक्रिरे रम्यं गवां गोपीजनस्य च । तत्र तौ रामकृष्णौतु वर्द्धमानौ महाबलौ वत्सपालयुतौ वत्सान्पालयामासतुस्तदा । गोवत्समध्यगं कृष्णं बको नाम महासुरः बकरूपेण तं हन्तुमुद्युक्तोऽत्र यदूत्तमम् । तं दृष्ट्वा वासुदेवोऽपि लोष्टमुद्यम्य लीलया ॥ ताडयामास पक्षान्ते पपातोर्व्यां महासुरः । ततः कतिपयाहस्सु गोवत्सान्पालयन्वने छायायां जम्बुवृक्षस्य प्रसुप्तौ पल्लवे मृदौ । एतस्मिन्नन्तरे देवो ब्रह्मादेवगणैर्वृतः ॥ द्रष्टुं कृष्णं समागम्य सुप्तौ दृष्ट्वा यदूत्तमौ । वत्सान्गोपशिशून्हृत्वा जगामत्रिदिवंपुनः

प्रबुद्धौ तौ समालोक्य विनष्टाञ्छिशुवत्सकान् ।
गोवत्सा गोपबालाश्च क गताइति विस्मितौ ॥ १०२ ॥

ज्ञात्वा कृष्णस्तु तत्कर्म प्रजापतिकृतं तदा । तथैव ससृजे बालान्गोवत्सांश्च सनातनः यथावर्णं यथारूपं तथैव मधुसूदनः । ससर्ज वत्सान्गोपालानविता जगताम्प्रभुः ॥ दृष्ट्वा सायाह्नसमये गावस्त्वेषांच मातरः । स्वान्स्वान्वत्सानुपागम्य यथापूर्वं प्रवर्तिताः एवं सम्वत्सरेकाले गते तत्र महात्मनः । प्रजापतिः पुनस्तस्मै ददौवत्सान्सबालकान् कृताञ्जलिपुटो भूत्वा परिणीय प्रणम्य च । भयादुवाच गोविन्दं ब्रह्मा त्रिभुवनेश्वरः॥

ब्रह्मोवाच ।

नमो नमस्ते सर्वात्मंस्तत्त्वज्ञानस्वरूपिणे । नित्यानन्दस्वरूपाय प्रयतात्मन्महात्मने ॥ अणुवृहत्स्थूलतररूपसर्वगताव्यय !। अनादिमध्यान्तरूप स्वरूपात्मन्नमोऽस्तु ते॥१०६॥ नित्यज्ञानबलैश्वर्य वीर्यतेजोमयाय च । महाशक्ते! नमस्तुभ्यं पूर्णषाड्गुण्यमूर्तये॥११०॥ त्वं वेदपुरुषो ब्रह्मन्महापुरुषएव च । शरीरपुरुषस्त्वं च छन्दःपुरुष एव च ॥ १११ ॥ चत्वारः पुरुषास्त्वं च पुराणः पुरुषोत्तमः । विभूतयस्तव ब्रह्मन्पृथिव्यग्न्यनिलादयः ॥ तव वाचा समुद्भूतौ क्ष्मावह्नी जगदीश्वर !। अन्तरिक्षं च वायुश्च सृष्टौ प्राणेनतेविभो!

चक्षुषा तव संसृष्टौ द्यौश्चादित्यस्तथाऽव्यय !। दिशश्चचन्द्रमाःसृष्टाःश्रोत्रेणतवचाऽनघ
अपां स्रावश्च वरुणो मनसा ते महेश्वर !। उक्ते महति मीमांसे एवं ब्रह्म प्रचक्षते ॥
एतमेवाग्निमध्वर्युरेतमेव महाव्रते । छन्दोगा एतमप्येतं दिव्येतं वायुरेवतत् ॥ ११६ ॥
आकाशएतमप्स्वेतमोषधीष्वेतमेव च । तथावनस्पतिष्वेतं चन्द्रमस्येतमेव च ॥११७॥
नक्षत्रेषु च सर्वेषु ग्रहेष्वेतं दिवाकरे । सर्वभूतेष्वेतमेव ब्रह्मेत्याख्याति च श्रुतिः ॥
तदेव परमं ब्रह्म प्रज्ञातं परितोऽमृतम् । हिरण्मयोऽव्ययो यज्ञः शुचिः शुचिषदित्यपि ॥
वैदिकान्यभिधेयानि तत्रैवान्यस्य न क्वचित् । चक्षुर्मयं श्रोत्रमयं छन्दोमयमनोमयम्
वाङ्मयं परमात्मानं परेशं शंसति श्रुतिः । इति सर्वोपनिषदामर्थस्त्वं कमलेक्षण ! ॥

स्तोतुं न शक्तोऽहं त्वां तु सर्ववेदान्तपारगम ।
महापराधमेतत्ते वत्सापहरणं मया ॥
कृतं तत्क्षम्यतां नाथ ! शरणागतवत्सल ! ॥ १२२

महेश्वर उवाच ।

एवं स्तुत्वा हरिं वेधाः प्रणम्य चपुनःपुनः । वत्सान्दत्त्वा पुनस्तस्मैप्रययौस्वयमालयम्
हृदि कृत्वा सदा देवि! बालरूपं हरिं विधिः । उवास त्रिदशैःसार्द्धं हृष्टपुष्टो महातपाः॥
कृष्णेनसृष्टा वत्सा वै पूर्व वत्सास्तथार्भकाः । अचापुरेकतां तत्र पश्यतां त्रिदिवौकसाम्
कृष्णस्तु वत्सपालैर्वै प्रययौ नन्दगोकुलम् । ततः कतिपयाहस्तु गोपालैर्यदुपुङ्गवः ॥
ह्रदं गत्वाऽथ कालिन्द्यास्तत्रस्थं सुमहाविषम् । सहस्रशीर्षंचलिनंनागराजमथाऽच्युतः
निष्पिष्य फणसाहस्रं पादेनैकेन लीलया । प्राणसंशयमापन्नं चकार मधुसूदनः ॥१२८
स कालियो लब्धसञ्ज्ञस्तमेव शरणं ययौ । ररक्ष भगवान्कृष्णो नागं त्यक्तविषं तदा
वैनतेयभयाद्भीतं स्वपदेनाङ्क्यमूर्द्धसु । ह्रदाद्विवासयामास कालिन्द्या यदुपुङ्गवः॥१३०

त्यक्त्वा स तं ह्रदं तूर्णं पुत्रदारसमन्वितः ।
नमस्कृत्याऽथ गोविन्दं प्रययौ कालियस्तदा ॥ १३१ ॥

विषदग्धास्तुयेपूर्वंतत्तीरस्थाश्चशाखिनः । कृष्णेनवीक्षितास्तूर्णंफलिनःपुष्पिणोऽभवन्
अथ कालेन कौमारमवाप्य मधुसूदनः । गोवृन्दं पालयामास सर्वदेवमयः प्रभुः॥१३३

स्वसमानवयोभिस्तु गोपालैस्तु यदूत्तमः । वृन्दावने मनोरम्ये स रामो विचचार ह॥
तत्र हत्वा महाघोरं सर्परूपं महासुरम् । अपहत्य महाकायं मेरुमन्दरगौरवम् ॥१३५॥
धेनुकस्य वनं प्राप्य तालहिन्तालगह्वरम् । धेनुकं पर्वताकारं खगरूपधरं सदा ॥१३६॥

पादौ गृह्य समुत्क्षिप्य तालेन विजघान ह ।
तत्क्षणादेव तत्पालास्तदन्ते रेमिरे तदा ॥ १३७ ॥

निष्क्रम्य तद्वनात्तूर्णं भाण्डीरं वटमागताः । तत्र ते रामकृष्णाभ्यांचिक्रीडुर्बाललीलया
गोपवेषेण तत्राऽगात्प्रलम्बो नाम राक्षसः । रामं स्वपृष्ठमारोप्य ययौ तूर्णं नभस्तलम्

मत्वा तं राक्षसं रामो मुष्टिना तस्य मूर्द्धनि ।
ताडयामास रोषेण विह्वलाङ्गस्ततोऽपतत् ॥ १४० ॥

राक्षसेनैव रूपेण विनदन्भैरवं स्वनम् । भिन्नशीर्षतनुस्तत्र ममार रुधिरोक्षितः ॥
ततः प्रदोषसमये गोव्रजेनन्दनन्दनः । उवास गोपकन्याभिः क्रीडन्कौमोदवर्चसि ॥
अरिष्टनामा दैत्येशो गत्वा तत्र वृषाकृतिः । कृष्णं हन्तुं समागत्य जगर्जचमहास्वनम्
तं दृष्ट्वा विद्रुताःसर्वे गोपालाभयपीडिताः । कृष्णोऽपि दृष्ट्वातं रौद्रमागतंदनुजाधिपम्
तालवृक्षं समुत्पाट्य शृङ्गमध्ये व्यपीडयत् । स तु भग्नशिरःशृङ्गो वमन्वैरुधिरं बहु ॥
पपात भीमवेगेन निर्दद्गंस्त्यक्तजीवितः । इत्थं हत्वा महाकायमरिष्टं दनुजाधिपम् ॥
आहूय गोपबालांश्च तत्रैवोवास गोव्रजे । ततः कतिपयाहस्सु केशीनाम महासुरः ॥
हयकायेन गोविन्दं हन्तुं व्रजमुपाययौ । स गत्वा गोव्रजं रम्यमुच्चैर्हेषामथाकरोत् ॥
तेन शब्देन महता पूरितं भुवनत्रयम् । भीताः सर्वे सुरगणाः शङ्कमाना युगक्षयम् ॥

तत्रस्था मोहिताः सर्वे गोपा गोप्यश्च विह्वलाः ।
लब्धसञ्ज्ञास्तु ते सर्वे विद्रुताश्च समन्ततः ॥ १५० ॥

गोप्यस्तु शरणं जग्मुः कृष्णं त्राहीति चाब्रुवन् । नभेतव्यंनभेतव्यमित्याहभक्तवत्सलः
समाश्वास्य ततस्तूर्णं मुष्टिनावासवानुजः । ताडयामास शिरसितस्य दैत्यस्य लीलया
विभिन्नदन्तनेत्रोऽसौ विननाद महास्वनम् । महाशिलांसमुत्क्षिप्यतस्याङ्गेवैन्यपातयत्
सतुचूर्णितसर्वाङ्गो निनदन्भैरवं स्वनम् । पपात सहसा भूमौ ममार च महासुरः ॥

केशिनं निहतं दृष्ट्वा दिवि देवगणा भृशम् । मुमुचुः पुष्पवर्षाणि साधुसाध्विति चाऽब्रुवन् ।
इत्थं शिशुत्वे वै दैत्यान्हरिर्हत्वा बलोत्कटान् ।
स मुमोद सुखेनैव बलरामसमन्वितः ॥ १५६ ॥
इन्दीवरदलश्यामः पद्मपत्रनिभेक्षणः । पीताम्बरधरः स्रग्वी वनमालाविभूषितः ॥१५७॥
कौस्तुभोद्भासितोरस्कश्चित्रमाल्यानुलेपनः । विचित्राभरणैर्युक्तः कुण्डलाभ्यां विराजितः
आमुक्ततुलसीमालः कस्तूरीतिलकाञ्चितः । सुस्निग्धनीलकुटिलकबरीकृतकेशवान् ॥
बर्हैर्नानाविधैः पुष्पैर्बर्हिबर्हावतंसकः । रक्तारविन्दसदृशहस्तपादतलाधरः ॥ १६० ॥
वक्त्रमध्यगशीतांशुकलङ्कभ्रूलताननः । हारनूपुरकेयूरैः कटकाभ्यां विराजितः ॥१६१ ॥
वृन्दावने महारम्ये फलपुष्पविराजिते । रम्यं निनादयन्वेणुं तत्राऽऽस्ते यदुनन्दनः ॥
अतर्क्यामितकन्दर्पकोटिलावण्यमच्युतम् । सर्वा गोपस्त्रियो दृष्ट्वा मन्मथास्त्रेणपीडिताः
पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन्सुविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूतास्तु गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ॥ १६५ ॥
क्रोधेनैव यथा दैत्याः समेत्य मधुसूदनम् । निधनं प्राप्य सङ्ग्रामे हता मुक्तिमवाप्नुयुः
कामक्रोधौ नृणां लोके निरयस्यैव कारणम् । हरिं समेत्य भावेन मुक्ता गोप्यः सुरद्विषः
कामाद्भयाद्वा द्वेषाद्वा ये भजन्ति जनार्दनम् । ते प्राप्नुवन्ति वैकुण्ठं किम्पुनर्भक्तियोगतः
तस्य वेणुध्वनिं श्रुत्वा रजन्यां बल्लवाङ्गनाः । शयनादुत्थिताः सर्वा विकीर्णाम्बरमूर्द्धजाः
त्यक्त्वा पतीन्सुतान्बन्धूंस्त्यक्त्वा लज्जां कुलं स्वकम् ।
जगत्पतिं समाजग्मुः कन्दर्पशरपीडिताः ॥ १७० ॥
समेत्य गोप्यः सर्वास्तु भुजैरालिङ्ग्य केशवम् । बुभुजुश्चाधरं देव्यः सुधामृतमिवाऽमराः
ताभिः सर्वाभिरात्मेशः क्रीडयामास गोव्रजे । तेनाऽपि ताः स्त्रियः सर्वा रेमिरे निर्भया व्रजे
इत्येवं रमयामासुरहन्यहनि केशवम् । वृन्दावने मनोरम्ये कालिन्दीपुलिने तथा ॥१७३॥

पार्वत्युवाच ।

धर्मसंरक्षणार्थाय जगत्यामवतीर्य सः । परदाराभिगमनं कथं कुर्याज्जनार्दनः ॥१७४ ॥

रुद्र उवाच ।

स्वशरीरपरिष्वङ्गाद्रतिर्नास्ति शुभानने !। सर्वं जगच्च तस्याऽङ्गं पृथगत्र न विद्यते ॥
स्त्रीपुम्भेदो न वै तस्य पुरुषस्य महात्मनः । निसर्गात्सर्वभर्तृत्वादात्मेशत्वाज्जगत्पतेः॥
तथाऽपहतपाप्मत्वसामर्थ्याद्व्यापिनःप्रभोः । दोषोऽत्र नास्तिसुभगेदेवस्यपरमात्मनः

वसिष्ठ उवाच ।

एवमुक्त्वातु गिरिजां रुद्रः श्रीत्रिपुरान्तकः । कृष्णस्य शेषं चरितमाख्यातुंसम्प्रचक्रमे

रुद्र उवाच ।

शरत्काले तु सम्प्राप्ते नन्दगोपपुरोगमाः । गोपामहोत्सवं कर्तुमारब्धास्त्रिदशेशितुः ॥
तदुत्सवं तु गोविन्दो निवार्याऽथ शतक्रतोः । गोवर्द्धनाद्रिराजस्य कारयामासवीर्यवान्
ततः क्रुद्धः सहस्राक्षो नन्दगोपस्य गोव्रजे ।
ववर्ष च महावृष्टिं सप्तरात्रं निरन्तरम् ॥ १८१ ॥
गोवर्द्धनं समुत्पाट्य महाशैलं जनार्दनः । तेषां संरक्षणार्थाय धारयामास लीलया ॥
तस्यच्छायां गिरेः प्राप्य गोपागोप्यश्च सुव्रते !। अवसंश्च सुखेनैव हर्म्यान्तरगताइव
ततः शक्रः सहस्राक्षो भीतःसम्भ्रान्तचेतसा । वारयामास तद्वर्षंयर्यौ नन्दस्य तद्व्रजम्
कृष्णोऽपि तं महाशैलं यथापूर्वं न्यवेशयत् । गोपवृद्धाश्च ते सर्वे नन्दगोपपुरोगमाः॥
परिपूज्य च गोविन्दं परं विस्मयमाययुः । ततः शतक्रतुर्देवं समेत्य मधुसूदनम् ॥
तुष्टाव प्राञ्जलिर्भूत्वा हर्षगद्गदया गिरा ॥ १८६ ॥

इन्द्र उवाच ।

नमस्ते पुण्डरीकाक्ष! सर्वज्ञाऽमितविक्रम !। त्रिगुणातीतसर्वेश विश्वस्यात्मन्नमोऽस्तुते
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः क्रतुर्हविः ।
त्वमेव सर्वदेवानां पिता माता च केशव ! ॥ १८८ ॥
अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्त्तत । त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः ॥
पृथिवीं द्यामिमां देव! त्वमेव धृतवानसि । आत्मदः फलदो यश्च स्यादेवं जगदीश्वर!
अवाप्तं तच्च त्रिदशैः प्रकाशं जगताम्पतेः । अमृतं चैव मृत्युश्च छाया तव सनातन ॥

तस्मै देवाय भवते विधेमहविषा वयम् । हेमवन्तइमे यस्य समुद्भूता हिरण्मयाः! ॥
समुद्रा रसना यस्य वाहस्तस्यैव केशव !। इमा दिशः प्रतिदिशो वायुर्यस्य तवाव्यय
तस्मै देवाय भवते विधेमहविषावयम् । येन त्वया समारूढा पृथिवी वर्द्धिता पुनः ॥

स्वर्लोकः स्तम्भितो येन त्वया ब्रह्मन्महेश्वर ! ।
त्वमन्तरिक्षे रजसोऽवसानः सर्वगोऽव्ययः ॥ १६५ ॥

तस्मै देवाय भवते विधेम हविषा वयम् । यं क्रन्दसी राजमाने तपभासे गुणान्विते॥
अभ्यैक्षेतां च मनसा अवश्यं श्रीश्च सर्वदा । यत्राऽस्मि सूर उदितो विभाति परमे पदे
तस्मै देवाय भवते विधेम हविषा वयम् । यदापो बृहतीर्ब्रह्म विश्वमायं जनार्दनः ॥
गर्भन्दधानाः सर्गेऽत्र जनयन्तीरघौघकृत् । समवर्तत देवानामसुरैकोऽव्ययो विभुः ॥
तस्मै देवाय भवते विधेम हविषा वयम् । य आपो महिनादक्षं पर्यपश्यत्प्रजापतिम् ॥

यज्ञं दधानास्तत्राऽदौ जनयन्तीर्हविः पुमान् ।
योदेवेष्वेकएवासीदधिदेवः परात्परः ॥ २०१ ॥

तस्मै देवाय भवते विधेम हविषावयम् । मा नो हिंसीज्जनितायःपृथिव्याअव्ययःपुमान्
यो वा दिवं सत्यधर्मा जजानाव्ययईश्वरः । यश्चन्द्रो बृहतीरपो जजान सकलं जगत् ॥
तस्मै देवाय भवते विधेम हविषा वयम् । एतानि विश्वजातानि वभूव परिताप्रभ !

त्वदुत्पन्नप्रजाध्यक्षभविष्यद्भूतमच्युतः ।
यजामस्त्वां च यत्कामास्तन्नो अस्तु समासतः ॥ २०५ ॥

रयीणां पतयः स्यामतवकारुण्यवीक्षणात् । हिरण्याख्यः सपुरुषो हिरण्यश्मश्रुकेशवान्

आप्रणखात्सर्वं हिरण्य सविता तु हिरण्यभाक् ।
असौ सर्वगतो ब्रह्मा यस्त्वादित्ये व्यवस्थितः ॥ २०७ ॥

यथाकप्यासम्पुण्डरीकमक्षिणी तस्यनान्यतः । तद्देवस्यसवितुर्वरेण्यंभर्ग उत्तमम् ॥

सदा धीमहि ते रूपं धियोयोनःप्रभातिहि ॥ २०८ ॥

नमस्ते पुण्डरीकाक्ष श्रीश सर्वेश केशव ! । वेदान्तवेद्य यज्ञेश यज्ञरूप! नमोऽस्तुते ॥
नमस्ते वासुदेवाय गोपवेषाय ते नमः । तत्सर्वध्वंसनादेव अपराधं मया कृतम् ॥

तत्क्षम्यतां जगन्नाथ! घृणाब्धे पुरुषोत्तम !। अल्पेनैव हि कालेन जहि कंसं दुरासदम्
देवानां हि हितं कृत्वा सुखे स्थापय मेदिनीम् ॥ २११ ॥

महादेव उवाच ।

इतिसंस्तुत्य गोविन्दं सर्वदेवेश्वरो हरिः । सुधामृतेनाभ्यषिञ्चद्दिव्याम्बरविभूषणैः ॥
अर्चयित्वा तु देवेशं जगाम त्रिदिवं पुनः । गोपवृद्धाश्च गोप्यश्च दृष्ट्वा तत्र शतक्रतुम्
तेन ते पूजिताश्चैव प्रहर्षमतुलं ययुः । रामकृष्णौ महावीर्यौ दिव्याभरणभूषितौ ॥
नन्दस्य गोव्रजे रम्ये सुसुखेनैव तस्थतुः । एतस्मिन्नन्तरे देवि ! नारदो मुनिसत्तमः ॥
सहसा मथुरां गत्वा कंसस्यान्तिकमाविशत ।
राज्ञा सम्पूजितस्तत्र समासीनः शुभासने ॥२१६ ॥

सर्वं विज्ञापयामास चेष्टितं शार्ङ्गिणस्तदा । देवनानां समुद्योगं जन्म वै केशवस्य च॥
तथा च वसुदेवेन पुत्रनिक्षेपणं व्रजे । निधनं राक्षसानां च सर्पराजविवासनम् ॥
धारणं गिरिवर्यस्य शतक्रतुसमागमम् । निवेदयित्वा कंसस्य सर्वं निरवशेषतः ॥
प्रययौ ब्रह्मभवनं पूजितस्तेन रक्षसा । कंसः समुद्विग्नमना मन्त्रिभिः परिवेष्टितः ॥
मन्त्रयामास तैः साकमात्मनो निधनं प्रति । तत्र बुद्धिमतांश्रेष्ठमक्रूरं धर्मवत्सलम् ॥
उवाचाऽऽत्महितं कार्यं दानवेन्द्रो महाबलः ॥ २२१ ॥

कंस उवाच ।

मद्भयात्त्रिदशाः सर्वे शतक्रतुपुरोगमाः । विष्णोः समीपमागत्य भयार्त्ताः शरणं गताः॥
स तेषामभयं दत्वा भगवान्भूतभावनः । उत्पन्नो देवकीगर्भे मां हन्तुंमधुसूदनः ॥२२३
वसुदेवोऽपिदुष्टात्मा वञ्चयित्वातु मां निशि । पुत्रंनिक्षिप्तवान्गेहे नन्दस्य सुदुरात्मनः
बाल्येनैव दुराधर्षो विजघान महासुरान । मां हन्तुमपि सन्नद्धो भवेदेव न संशयः ॥
स तु हन्तुं न वै शक्तः सेन्द्रैरपि सुरासुरैः । उपायेनैव हन्तव्यः समानीय मया तदा॥
मदोत्कटैस्तु मातङ्गैर्मल्लैश्च वरवाजिभिः । येन केनाऽप्युपायेन हन्तुं शक्यमिहैव तु॥
तस्मात्त्वं गोव्रजंगत्वा कृष्णं रामंच यादव !। सर्वान्गोपालवृद्धांश्च नन्दगोपपुरोगमान्
उपभोक्तुं धनुर्यागमिहाऽऽनय यदूत्तम ! ॥ २२८ ॥

महादेव उवाच ।

तथेत्युक्त्वा यदुश्रेष्ठो रथमारुह्य वीर्यवान् । प्रययौ गोकुलं रम्यं कृष्णसन्दर्शनोत्सुकः
महाभागवतश्रेष्ठो गवां मध्ये व्यवस्थितम् । ददर्श कृष्णमक्लिष्टमक्रूरो विनयान्वितः ॥
नीलनीरदसंकाशं सर्वाभरणभूषितम् । पद्मपत्रविशालाक्षं दीर्घबाहुमनामयम् ॥२३१॥
पीतवस्त्रेणसम्वीतं सर्वावयवसुन्दरम् । कौस्तुभोद्भासितोरस्कं रत्नकुण्डलशोभितम्
हरिचन्दनलिप्ताङ्गं कस्तूरीतिलकाञ्चितम् । तुलसीवनमालाढ्यं वन्यपुष्पावतंसकम् ॥
गोपकन्यापरिवृतं दृष्ट्वा तत्र जनार्दनम् । पुलकाङ्कितसर्वाङ्गो हर्षाश्रुप्लुतलोचनः ॥
अवरुह्य रथात्तस्मात्प्रणनाम यदूद्वहः । हर्षात्समेत्य गोपालं परिणीय प्रणम्य च ॥
रक्तारविन्दसदृशे वज्रचक्राङ्कचिह्निते । स्वमूर्ध्नि धृत्वा पादाब्जे प्रणनाम पुनःपुनः ॥
कैलासशिखराभासं नीलाम्बरधरं प्रभुम् । शरत्पूर्णेन्दुसदृशं मुक्तादामविभूषितम् ॥
बलरामं ततो दृष्ट्वा प्रणनाम स यादवः । हर्षेणोत्थाप्य तौ वीरौ परिगृह्य यदूत्तमौ ॥
गृहमाजग्मतुर्वीरौ तेनाक्रूरेण वृष्णिना । नन्दगोपस्तु तं दृष्ट्वा यदुश्रेष्ठं समागतम् ॥
अभिगम्य महातेजा निवेश्य परमासने । अर्चयामासविधिवदर्घ्यपाद्यादिभिर्मुदा ॥
वस्त्रैः समर्हणैर्दिव्यैरर्चयामास भक्तितः । अक्रूरो रामकृष्णाभ्यां वस्त्राण्याभरणानि च
प्रददौ नन्दगोपाय यशोदायै च यादवः । पृष्ट्वा कुशलमव्यग्रमासीनस्तु कुशासने ॥
राजकार्याणि सर्वाणि सम्पृष्टः प्राह बुद्धिमान् ॥ २४२ ॥

अक्रूर उवाच ।

रामकृष्णो महातेजास्साक्षान्नारायणोऽव्ययः । देवतानां हितार्थाय साधूनां रक्षणाय च
भूभारकविनाशाय धर्मसंस्थापनाय च । कंसादीनां तु दैत्यानां सर्वेषां निधनाय च ॥
सम्प्रार्थितः सुरगणैर्मुनिभिश्च महात्मभिः । देवकीजठरे जातः प्रावृट्काले महानिशि
भयात्कंसस्य देवेशमानीयानकदुन्दुभिः । तत्र गेहे तदा रात्रौ पुत्रं निक्षिप्तवान्हरिम्
तस्मिन्नेव तु कालेऽपि यशोदातु यशस्विनी । कन्यां मायांशसंभूतांप्रासूततनुशुभाननाम्
तया सम्मोहितं सर्वमिदं व्रजकुलं शुभम् । मूर्च्छितायाा यशोदायाः शयने यदुपुङ्गवम्
कृष्णं निक्षिप्य तां कन्यामादाय स्वगृहं ययौ ।

तां तु निक्षिप्य देवक्याः शयने बहिरागमत् ॥ २४६ ॥

सा रुरोद ततः क्षिप्रं देवकीशयनेस्थिता । तच्छ्रुत्वा सहसा कंसः कन्यामादाय सुव्रत!

भ्रामयित्वा शिलापृष्ठे चिक्षेपोत्पत्य वीर्यवान् ।

समुत्थाय च सा कन्या सायुधाऽष्टभुजान्विता ॥

गगनस्था रुषा कंसं प्राह गम्भीरया गिरा ॥ २४७ ॥

कन्योवाच ।

योऽनन्तः सर्वदेवानामीश्वरः पुरुषोत्तमः । जातस्तव वधार्थाय गोव्रजे दानवाधम !॥

अक्रूर उवाच ।

इत्युक्त्वा सा महामाया हिमवन्तं समाययौ । तदाप्रभृति दुष्टात्मा भयादुद्विग्नमानसः
दानवान्प्रेषयामास निधनाय महात्मनः । बालेनैव हताः सर्वे लीलयाऽनेन धीमता ॥
अत्यद्भुतानि कर्माणि कृतवान्परमेश्वरः । गोवर्द्धनाद्रिधरणं नागराजविवासनम् ॥
समागमं महेन्द्रस्य निधनं सर्वरक्षसाम् । श्रुत्वा देवर्षिणा ख्यातमतीवभयपीडितः ॥
इतो नीत्वा महाबाहू रामकृष्णौ दुरासदौ । मदोत्कटैर्महानागैर्मल्लैर्वा हन्तुमुद्यतः ॥
कृष्णस्याऽऽनयनार्थाय प्रेरयामास मामिह । वसुदेवस्य दुष्टात्मा निग्रहं कृतवानसौ
एतत्सर्वं समाख्यातं चेष्टितं सुदुरात्मनः । उपभोक्तुं धनुर्यागं यूयं सर्वे व्रजौकसः ॥
दध्याज्यादिगृहीत्वावै श्वोभूतेगन्तुमर्हथ । सहितारामकृष्णाभ्यां गोपाःसर्वेतदन्तिकम्
कृष्णेन निहतः कंसो भविष्यतिन संशयः । परित्यज्य भयं तस्माद्गमिष्यध्वं नृपाज्ञया

ईश्वर उवाच ।

इत्युक्त्वास तदा क्रूरस्तूष्णीमासीत्सुबुद्धिमान् । तस्यतद्वचनं श्रुत्वादारुणंरोमहर्षणम्
नन्दगोपमुखाः सर्वे गोपवृद्धा भयातुराः । जग्मुस्ते च महादुःखसागरं शोकमोहिताः
तानाश्वास्य हरिस्तत्र दृष्टाकमललोचनः । नभीःकार्येति सम्प्राह राक्षसं प्रति वीर्यवान्
विनाशाय प्रयास्यामि कंसस्यास्य दुरात्मनः । मथुरां सह रामेण भवद्भिः सह सङ्गतः
तत्रहत्वा दुरात्मानं कंसंदानवपुङ्गवम् । सर्वांश्च राक्षसान्हत्वा पालयिष्यामिमेदिनीम्

तस्माल्लोकं परित्यज्य गच्छध्वं मथुरां पुरीम् ।

एवमुक्तास्तु हरिणा गोपा नन्दपुरोगमाः ॥ २६७ ॥

मुहुर्मुहुः परिष्वज्य मूर्ध्न्याघ्राणं प्रचक्रिरे । अप्रमेयानि कर्माणि विचार्य सुमहात्मनः॥
अक्रूरवचनाच्चैव गोपाःसर्वे गतव्यथाः । दुग्धदध्याज्ययुक्तानि शुर्नानि विविधानि च
पक्वान्नानि सुहृद्यानि स्वादूनि मधुराणि च । अक्रूराय ददौ सौम्यं यशोदा भोजनं बहु
सहितो रामकृष्णाभ्यां नन्दाद्यैर्गोपसत्तमैः । सुहृद्भिर्बालवृद्धैश्च भवने समलङ्कृते ॥
दत्तं यशोदया सौम्यं भोजनं कलुषापहम् । बुभुजे यादवश्रेष्ठो ह्यन्नं गोपापहं शुभम्॥
भोजयित्वा यथान्यायं दत्त्वाऽऽचमनमम्भसा । सकर्पूरं सताम्बूलं ददौ तस्मै दृढव्रता

अस्तं याते दिनकरे सन्ध्यामन्वास्य यादवः ।

सहितो रामकृष्णाभ्यां भुक्त्वा श्रीरान्नमुत्तमम् ॥ २७४ ॥

ताभ्यामेव तदाऽक्रूरः शयनं समुपाविशत् । तस्मिंस्तु भवने श्रेष्ठे रम्ये दीपविराजिते
श्लक्ष्णेविचित्रपर्यङ्के नानापुष्पविराजिते । तस्मिञ्छेते हरिःकृष्णः शेषे नारायणोयथा
तं दृष्ट्वा सहसाऽक्रूरो हर्षाश्रुपुलकाङ्कितः । विहाय तामसीं निद्रां सुश्रेयः समुदीक्ष्य वै

पादसम्वाहनं विष्णोश्चक्रे भागवतोत्तमः ।

एतावता मे साफल्यं जीवितंत्वसुर्जीवितम् ॥ २७८ ॥

इदं त्रैलोक्यमैश्वर्यमिदं च सुखमुत्तमम् । इदं राज्यमिदं धर्म्यमिदं मोक्षसुखं परम् ॥
न शक्यं मनसा स्मर्तुं शिवब्रह्मादिदैवतैः । सनकाद्यैर्मुनीन्द्रैस्तु वसिष्ठाद्यैर्महर्षिभिः ॥
तत्क्रोशस्यपदद्वन्द्वं शरदम्बुरुहोज्ज्वलम् । संस्पृष्टमिन्दिराश्लक्ष्णकराभ्यां सुसुखंपरम्

दिष्ट्या लब्धं मया विष्णोः श्रीपादाब्जयुगं शुभम् ।

इत्येवं वदतस्तस्य हरिपादाब्जसङ्गिनः ॥ २८२ ॥

व्यतीता साक्षणाद्रात्रिस्तद्ब्रह्मानन्दगौरवान् । ततःप्रभाते विमले दिवि देवगणोत्तमैः
संस्तूयमानो बुबुधे तस्मात्तु शयनाद्धरिः । उपस्पृश्य यथान्यायं सह रामेण धीमता॥
पपात पादयोर्मातुः प्रयाणं चाभ्यरोचयत् । समुत्थाप्य यशोदा तु दुःखहर्षसमन्विता
अश्रुपूर्णमुखी पुत्रौ प्रेम्णा सम्परिषस्वजे । आशिषं प्रददौ देवी तनयाभ्यां दृढव्रता ॥
विससर्ज महावीरौ समालिङ्ग्य मुहुर्मुहुः । अक्रूरोऽपि यशोदायै प्रणम्य प्राह साञ्जलिः



अक्रूर उवाच ।

प्रयास्यामि महाभागे प्रसादं कुरुष्वेऽनघे ॥ एष कृष्णो महाबाहुः कंसं हत्वा महाबलम्
सर्वस्य जगतो राजा भविष्यति न संशयः । तस्माच्छोकं परित्यज्य सुखीभव वरानने ।

ईश्वर उवाच ।

इत्युक्त्वा तयाऽक्रूरो विसृष्टो यदुसत्तमः । सहितो रामकृष्णाभ्यामारुरोह रथोत्तमम्
प्रययौ मथुरां शीघ्रं स्तूयमानोऽप्सरोगणैः । नन्दगोपमुखाः सर्वे गोपवृद्धास्तमन्वयुः
पुनर्गृहीत्वा दध्याज्यं फलानि विविधानि च । तं प्रयान्तं हरिं दृष्ट्वा गोकुलाद्गोपयोषितः
अनुजग्मुर्विनिष्क्रान्तं रथस्थं मधुसूदनम् ।निवर्त्तयामास हरिस्ताः सर्वा गोपयोषितः ॥
शोकसन्तप्तहृदया विलेपुः कमलेक्षणम् । हा कृष्णकृष्णकृष्णेति गोविन्देत्यरुदन्मुहुः
अश्रुपूर्णेक्षणा दीना रुदन्त्यस्तत्र संस्थिताः । अथाऽक्रूरो रथं दिव्यं चोदयामास गोव्रजात्
सहितो रामकृष्णाभ्यां मथुरां प्रति यादवः । उत्तीर्य यमुनां शीघ्रं कूले स्थाप्य रथोत्तमम्
अवरुह्य रथात्तस्मात्स्नातुं तत्रोपचक्रमे । तथाचाऽऽवश्यकं कर्तुं निमज्ज्याऽथ जले शुभे
तत्राऽघमर्षणं सम्यग्जपन्भागवतोत्तमः । ददर्श तौ जले तत्र रामकृष्णौ शुभान्वितौ
शरत्कोटीन्दुसङ्काशं नीलाम्बरधरं प्रभुम् । दिव्यचन्दनदिग्धाङ्गं मौक्तिकाभरणच्छविम्
रक्तारविन्दनयनं पुण्डरीकावतंसकम् । रामं ददर्श कृष्णंच नीलनीरदसन्निभम् ॥३००
दिव्यपीताम्बरधरं पुण्डरीकायतेक्षणम् । हरिचन्दनलिप्ताङ्गं नानारत्नविभूषितम् ॥
दृष्ट्वा तत्र यदुश्रेष्ठो विस्मयं परमं गतः । उत्थाय स्यन्दने तत्र तौ ददर्श महाबलौ ॥
पुनरप्यत्र निर्मज्ज्य जपन्मन्त्रद्वयं हरिम् । सुधाब्धौ शेषपर्यङ्के रमया सहितं हरिम् ॥
सनकाद्यैः स्तूयमानं सर्वैर्देवैरुपासितम् । दृष्ट्वा तस्मिञ्जले देवं विस्मयं परमं ययौ ॥
तुष्टावाऽथ यदुश्रेष्ठो हरिं सर्वगमीश्वरम् ॥ ३०४ ॥

अक्रूर उवाच ।

कालात्मने नमस्तुभ्यमनादिनिधनाय च । अव्यक्ताय नमस्तुभ्यमविकाराय ते नमः ॥
भूतभर्त्रे नमस्तुभ्यं भूतव्याभाय ते नमः । नमस्ते सर्वभूतानां नियन्त्रे परमात्मने ॥
विकारायाविकाराय प्रत्यक्षपुरुषाय च । गुणभर्त्रे नमस्तुभ्यं नियमाय नमोनमः ॥

देशकालादिनिर्भेदरहिताय परात्मने । अनन्ताय नमस्तुभ्यमच्युताय नमोनमः ॥
गोविन्दाय नमस्तुभ्यं त्रयीनाथाय शार्ङ्गिणे । नारायणाय विश्वाय वासुदेवाय ते नमः
विष्णवे पुरुरूपाय शाश्वताय नमोनमः । पद्मनेत्राय नित्याय शङ्खचक्रधराय च ॥३१०
उद्यत्कोटिरविप्रख्यभूषणाञ्चितवर्चसे । हरये सर्वलोकानामीश्वराय नमोनमः ॥३११॥
सवित्रे सर्वजगतां बीजाय परमात्मने । सङ्कर्षणाय कृष्णाय प्रद्युम्नाय नमोनमः ॥
अनिरुद्धाय धात्रे च विधात्रे विश्वयोनये । सहस्रमूर्त्तये तुभ्यं बहुमूर्द्धाङ्घ्रिबाहवे ॥
सहस्रनाम्ने नित्याय पुरुषाय नमोनमः । नमस्ते नागपर्यङ्कशायिने सौम्यरूपिणे ॥
केशवाय नमस्तुभ्यं पीतवस्त्रधराय च । लक्ष्मीघनकुचाश्लेषविमर्दोज्ज्वलवक्षसे ॥
श्रीधराय नमस्तुभ्यं श्रीशायाऽनन्तरूपिणे ॥ ३१९ ॥

ईश्वर उवाच ।

स्नानकाले पठेद्यस्तु देवं ध्यायन्सनातनम् । इमं स्तवं नरो भक्त्या महद्भिर्मुच्यते ह्यघैः
सर्वतीर्थफलं प्राप्य विष्णुसायुज्यमाप्नुयात् । एवमन्तर्जले देवं स्तुत्वा भागवतोत्तमः
अर्चयामास सजलैः कुसुमैश्च सुगन्धिभिः । कृतकृत्यस्तदाऽक्रूरो निर्गत्ययमुनाजलात्
समेत्य रामकृष्णौ तु प्रणनामशुभान्वितः । तं दृष्ट्वा प्राह गोविन्दोविनीतंविस्मितंहरिः

श्रीकृष्ण उवाच ।

किमाश्चर्यं जले तस्मिन्दृष्टवानसि यादव ! ॥ ३२० ॥

ईश्वर उवाच ।

अक्रूरस्तु यदुश्रेष्ठं प्राह कृष्णं सुतेजसम् ॥ ३२१ ॥

अक्रूर उवाच ।

तव सर्वगतस्येश! महिम्नो जगतः प्रभो !। किमाश्चर्यं हृषीकेश! जगत्सर्वं त्वमेव हि ॥
त्वमापस्त्वं नभो वह्निस्त्वं भूमिरनिलस्तथा । चतुर्विधमिदं सर्वं जगत्स्थावरजङ्गमम्
त्वत्तो नान्यद्वासुदेवजीमूतादमृतं यथा । त्वं यज्ञस्त्वंवषट्कारस्त्वमोंकारोहविस्तथा
त्वमेवसर्वदेवानामीश्वरः शाश्वतोऽव्ययः । नाकारणात्कारणाद्वा कारणाकारणात्परः
धर्मत्राणाय देवेश ! शरीरग्रहणं तव । मत्स्यकूर्मवराहादिवैभवत्वमुपागतः ॥

पासि सर्वमिमं लोकं त्वमेव त्वन्मयं विभो ! ॥ ३२६ ॥

ईश्वर उवाच ।

इतिसंस्तुत्य गोविन्दं प्रणम्य जगतां पतिम् । आरुरोह रथं दिव्यं ताभ्यां सह यदूत्तमः
ततस्तूर्णं समासाद्य मथुरां देवनिर्मिताम् । रामकृष्णौ पुरद्वारि निवेश्याऽन्तःपुरं ययौ
तयोरागमनं तस्य निवेद्य नृपतेस्तदा । राज्ञा सम्पूजितस्तेन ततः स्वगृहमाविशत् ॥
अथ सायाह्नसमये रामकृष्णौ महाबलौ । परस्परं करौ गृह्य मथुरायां समागतौ ॥
गच्छन्तौ च महावीर्यौ राजमार्गे यदूत्तमौ । ददृशतुर्महात्मानौ रजकं वस्त्ररञ्जकम् ॥
दिव्यवस्त्रवृतं राजगेहमायान्तमच्युतः । ययाचे तानि वस्त्राणि सह रामेण वीर्यवान् ॥
न दत्तवांस्तदा तस्मै रुषा वै वस्त्ररञ्जकः । बहूनि कटुवाक्यानि प्राह तत्राध्वनि स्थितः
ताडयामास तं कृष्णस्तलेनैव महाबलः । तत्रैव निहतो मार्गे वमन्वै रुधिरं बहु ॥

तानि वस्त्राणि रम्याणि गोपालैः सह बान्धवैः ।
धारयामासतुर्वीरौ यथार्हं रामकेशवौ ॥ ३३५ ॥

मालाकारगृहं प्राप्य तेन दृष्टौ नमस्कृतौ । सुगन्धिभिर्दिव्यपुष्पैःपूज्यमानौ मुदान्वितौ
ददतुस्तौ वरं तस्मै वाञ्छितं यदुपुङ्गवौ । समागतौ पुनर्वीथ्यामायान्तीच शुभाननाम्
कुब्जां स्त्रियं महाभागौ धृतचन्दनभाजनाम् । वक्राङ्गपृष्ठां वनितां दृष्ट्वागन्धमयाचताम्
प्रहसन्ती तदा ताभ्यां ददौ चन्दनमुत्तमम् । आदाय चन्दनं दिव्यमुपलिप्य यथेच्छया

तस्यैकान्ततरं रूपं दत्त्वाऽध्वनि समागतौ ।
निरीक्ष्यमाणौ योषिद्भिः सुकुमारौ शुभाननौ ॥ ३४० ॥

विविशतुर्महात्मानौ यज्ञशालां सहानुगैः । दृष्ट्वा समर्चितं दिव्यं कार्मुकं तत्र केशवः ॥
लीलयैव गृहीत्वाऽथ बभञ्ज मधुसूदनः । विभज्यमानं तच्चापं श्रुत्वा कंसः सुविह्वलः ॥
आहूय मल्लान्सतांस्तु प्रमुखान्दैत्यपुङ्गवान् । विमृश्य मन्त्रिभिःप्राह चाणूरं दैत्यपुङ्गवः

कंस उवाच ।

रामकृष्णौ समायातौ सर्वदैत्यविनाशकौ । प्रभाते मल्लयुद्धेन हन्येतामविशङ्कया ॥
येनकेनाप्युपायेन हन्तव्यौ बलदर्पितौ । मदोत्कटैर्गजैर्वाऽपि मल्लमुख्यैश्च यततः ॥

ईश्वर उवाच ।

इत्यादिश्य ततो राजा सानुजः सचिवैःसह । आरुरोह भयात्तूर्णं दिव्यप्रासादमूर्द्धनि
द्वारेषु सर्वमार्गेषु गजान्मत्तानयोजयत् । मल्लान्मदोत्कटान्नागान्स्थापयामास सर्वतः ॥

ज्ञात्वा कृष्णोऽपि तत्सर्वं सह रामेण धीमता ।

उवास रजनीं तत्र यज्ञगेहे सहानुगैः ॥ ३४८ ॥

ततो रजन्यां व्युष्टायां प्रभाते विमलेऽसति । शयनादुत्थितौ वीरौ रामकृष्णौकृतोदकौ

स्वलङ्कृतौ च तौ भुक्त्वा संग्रामाभिमुखोत्सुकौ ।

विनिर्गतौ गृहात्तस्मात्सिंहाविव गुहामुखात् ॥ ३५० ॥

राजद्वारि स्थितं नागं हिमाद्रिशिखरोपमम् । नाम्ना कुवलयापीडं कंसस्य जयवर्द्धनम्
दैवकुञ्जरदर्पघ्नं महाकायं मदोत्कटम् । दृष्ट्वा तं च महानागं पञ्चास्य इव केशवः ॥
करेणैव करं गृह्य समयगुत्प्लुत्य लीलया । भ्रामयित्वाऽस्य निक्षेप धरण्यां धरणीधरः
स तु चूर्णितसर्वाङ्गो निनदन्भैरवं स्वनम् । पपात सहसा भूमौ ममार च महागजः ॥
हत्वा दन्तौ समुत्पाट्य गृहीत्वा रामकेशवौ । मल्लेरायोधनं कर्तुं रङ्गं विविशतुस्तदा
तत्रस्था दानवा दृष्ट्वा गोविन्दस्य पराक्रमम् । भीताः प्रविद्रुताःसर्वेराजोऽन्तःपुरमाययुः
कपाटौ सुदृढौ बद्ध्वा तत्रतस्थुःसहस्रशः । दृढबन्धकपाटांस्तु दृष्ट्वा कृष्णस्तु लीलया

ताडयित्वा पदैनैव पातयामास वीर्यवान् ।

तौ भग्नौ पातितौ तत्र सेनानीके व्यवस्थिते ॥ ३५८ ॥

तत्रस्था निहताःसर्वे चूर्णिताङ्गशिरोऽधराः । ततः प्रविश्य भवनं कंसस्यास्य महाबलौ
भ्रामयन्तौ महानागश्रृङ्गौ पीनौ रणोत्सुकौ । ददृशाते महात्मानौमल्लौ चाणूरमुष्टिकौ
कंसोऽपि दृष्ट्वा गोविन्दं रामं च सुमहाबलम् । भयमाविश्य चाणूरं प्राह मल्लवरं तदा

कंस उवाच ।

अस्मिन्नवसरे मल्ल! जहि गोपालबालकौ । विभज्य तव राज्यार्द्धमहं दास्याम्यसंशयः



ईश्वर उवाच ।

तस्मिन्नवसरे कृष्णो मल्लाभ्यां दृश्यते महान् । मध्ये वने च संग्रामे महामेरुरिवापरः॥

कंसस्य दृष्टिविषये सम्वर्त्ताग्निरिवाऽच्युतः । स्त्रीणां च साक्षान्मदनः पित्रोः शिशुरिवाक्षरः
त्रिदशानां हरिरिव गोपालानां सखा यथा । बहुरूपेण ददृशुस्तत्र सर्वगतं हरिम् ॥
वसुदेवस्तथाऽक्रूरो नन्दगोपो महामतिः । अन्यं प्रासादमारुह्य ददृशुः कदनं महत् ॥
स्त्रीभिरन्तःपुरस्थाभिर्देवकी तत्र संस्थिता । मुखं पुत्रस्य ददृशे साश्रुपूर्णेक्षणा शुभा
ताभिराश्वासिता देवी भवनान्तरमाविशत् । ततो देवगणाः सर्वे विमानस्था नभस्तले
तुष्टुवुर्जयशब्देन पुण्डरीकाक्षमच्युतम् । जहि कंसमिति प्राहुरुच्चैर्देवा मरुद्गणाः ॥
एतस्मिन्नन्तरे तत्र तूर्यघोषनिनादिते । आसेदतुर्महामल्लौ यदुसिंहौ महाबलौ ॥ ३७०॥
चाणूरेण तु गोविन्दो मुष्टिकेन हलायुधः । युयुधाते महात्मानौ नीलश्वेताद्रिसन्निभौ
मल्लयुद्धविधानेन मुष्टिभिः पादताडनैः । बभूव कदनं घोरं देवानां च भयावहम् ॥

चाणूरेण चिरं कालं क्रीडित्वाऽथ जनार्दनः ।
निष्पिष्य गात्रं मल्लस्य पातयामास लीलया ॥ ३७३ ॥

स पपात महीपृष्ठे सम्वमन्रुधिरं बहु । ममार च महामल्लो देवदानवदुःखदः ॥ ३७४ ॥
मुष्टिकेन तथा रामश्चिरकालमयुध्यत । मुष्टिभिस्ताडयामास तस्य वक्षसि वीर्यवान्
भिन्नास्थिस्नायुबन्धोऽसौ पपात धरणीतले । ततस्तु दुद्रुवुः सर्वे मल्ला दृष्ट्वा पराक्रमम्
कंसो महद्भयं तीव्रमाविशद्वेदनातुरः । एतस्मिन्नन्तरे वीरौ रामकृष्णौ दुरासदौ ॥
आरुह्य तु महात्मानौ चैत्यप्रासादमूर्जितम् । ताडयित्वा तलेनैव कंसं मूर्ध्नि जनार्दनः
अपातयद्धरापृष्ठे प्रासादशिखराद्धरिः । स तु निर्भिन्नसर्वाङ्गो धरण्यां त्यक्तजीवितः॥
कृष्णेन निहते कंसे रामोऽपि सुमहाबलः । तस्याऽनुजं सुनामानं मुष्टिनैव जघान ह॥
धरण्यां पातयामास सानुजं धरणीधरः । हत्वा कंसं दुरात्मानं सानुजं रामकेशवौ
पित्रोः समीपमागम्य भक्त्या चैव प्रणेमतुः । देवकीवसुदेवश्च परिष्वज्य मुहुर्मुहुः ॥
स्नेहेन मूर्ध्न्युपाघ्राणं चक्रतुः पुत्रलालसौ । तयोरुपरि देवक्याः स्तनौ क्षीरं ववृषतुः॥
तत आश्वास्य पितरौ रामकृष्णौ बहिर्गतौ । एतस्मिन्नन्तरे देवि! देवदुन्दुभयो दिवि॥
विनेदुः पुष्पवर्षाणि ववृषुस्त्रिदशेश्वराः । स्तुत्वा मरुद्गणैर्दिव्यैर्नमस्कृत्य जनार्दनम् ॥
परं हर्षमनुप्राप्य लोकान्स्वान्स्वान्प्रपेदिरे । नन्दगोपं नमस्कृत्य गोपवृद्धांश्च केशवः॥

रामेण सह धर्मात्मा मुदा सम्परिषस्वजे । बहुरत्नधनं तस्मै ददौ प्रीत्या जनार्दनः ॥
सर्वांस्तान्गोपवृद्धांश्च वस्त्रैराभरणादिभिः ।
बहुभिर्धनधान्यैश्च पूजयामास केशवः ॥ ३८८ ॥
विसृष्टास्तेन कृष्णेन नन्दगोपपुरोगमाः । प्रययुर्गोव्रजं दिव्यं हर्षशोकसमन्विताः ॥
मातामहं समासाद्य रामकृष्णौ दुरासदौ । बन्धाच्च मोक्षयित्वाऽथ समाश्वास्य मुहुर्मुहुः
चक्रे तस्याभिषेकं तु तद्राज्ये मधुसूदनः । अकारयद्द्विजश्रेष्ठैः स कंसस्यौर्ध्वदैहिकम्
अक्रूरप्रमुखान्राज्ये संस्थाप्य यदुपुङ्गवान । राजानमुग्रसेनं तु कृत्वा धर्मेण मेदिनीम् ॥
पालयामास धर्मात्मा वसुदेवसुतो हरिः ॥ ४९२ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
श्रीकृष्णचरिते कंसवधो नाम पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५॥

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः

श्रीकृष्णचरिते रामकृष्णयोरुपनयनंसान्दीपनेर्गृहेतयोर्विद्याध्ययनं जरासन्धेन-
युद्धं तस्मै जीवनदानं कालयवनेनयुद्धं लीलांकुर्वतः कृष्णस्यगुहायाम्प्रवेशः
कालयवनंदृष्ट्वामुचुकुन्दस्यजागरणंकालयवनमृत्युर्मुचुकुन्दस्यमोक्षणम्

महेश्वर उवाच ।

अथोपनयनं नाम चकाराऽऽनकदुन्दुभिः । पुत्रयोर्वेदविधिना तस्मिन्वै रामकृष्णयोः
आचार्येण हि गर्गेण संस्कृतौ रामकेशवौ । पण्डितैर्वैष्णवैर्दिव्यैः स्नापनैर्विमलैः शुभैः
कृतसंस्कारकर्माणौ रामकृष्णौ महाबलौ । सान्दीपनेर्गृहं गत्वा नमस्कृत्य महात्मनः
अधीत्यवेदशास्त्राणि तस्मात्तौद्विजपुङ्गवात् । मृतं पुत्रं समानीय ददतुस्तस्यदक्षिणाम्
आशिषो वचनं लब्ध्वा गुरोस्तस्मान्महात्मनः । तस्मै प्रणम्य मथुरां जग्मतुर्यदुपुङ्गवौ



अथ कृष्णेन निहतं श्रुत्वा कंसं दुरासदम् । श्वशुरस्तस्य नृपतेर्जरासन्धो महाबलः ॥
अक्षौहिणीसहस्रैस्तु सेनानीकैर्महाबलैः । कृष्णं हन्तुं समागत्य रुरोध मथुरां पुरीम् ॥
रामकृष्णौ महावीर्यौ निर्विगत्य पुरोत्तमात् । गजवाजिसमाकीर्णं तद्बलौघमपश्यताम्
सस्मार वासुदेवस्तु पूर्वरूपं सनातनम् । तस्यस्मरणमात्रेण दारुको विष्णुसारथिः ॥
सुग्रीवपुष्पकं नाम समानीय महारथम् । वाजिभिर्दिव्यपुष्पाद्यैरुह्यमानं सनातनम् ॥
दिव्यायुधैरुपेतं तं शङ्खचक्रगदादिभिः । वैनतेयपताकेन शोभितं देवदुर्जयम् ॥ ११ ॥
अवनीं प्राप्य गोविन्दं प्रणम्य हरिसारथिः । प्रददौ स्यन्दनं शुभ्रं सायुधाश्वसमन्वितम्
दृष्ट्वा हर्षेण कृष्णोऽपि परिणीय महारथम् । आरुरोहाऽग्रजेनैव स्तूयमानो मरुद्गणैः ॥
चतुर्भुजवपुर्भूत्वा शङ्खचक्रगदासिभृत् । किरीटी कुण्डली स्रग्वी संग्रामाभिमुखं ययौ
बलदेवोऽपि मुशलं लाङ्गलं गृह्य वीर्यवान् । तत्सैन्यं हन्तुमारेभे महेश्वरइवापरः ॥१५
दारुकश्च रथं शीघ्रं नोदयामास तद्रणे । तृणगुल्मलताक्रान्ते कानने ऽग्निमिवानिलः ॥
ततोगदाभिःपरिघैःशक्तिभिर्मुद्गरैस्तथा । तद्रथं छादयामासुर्जरासन्धस्य सैनिकाः ॥१७
चक्रेणैव हरिस्तूर्णं तानि चिच्छेद लीलया । बहूनि तृणकाष्ठानि महावह्निरिवार्चिषा ॥
ततः शार्ङ्गं समादाय सायकैरक्षयैः शितैः । चिच्छेद तानि सैन्यानि न प्राज्ञायत किञ्चन
चक्रच्छिन्नास्यकमलाः केचित्तत्र महाबलाः । गदयाचूर्णिताः केचित्केचिदन्यैर्महारणे
केचिच्चैवासिनाछिन्नास्तथाऽन्ये शरताडिताः । लाङ्गलाग्रहतग्रीवा मुशलाहतमस्तकाः
क्षणेन तद्बलं सर्वं निहत्य मधुसूदनः । शङ्खं दध्मौ यदुश्रेष्ठो लयाशनिनिभस्वनम् ॥

शङ्खरावविनिर्भिन्नहृदयास्ते महाबलाः ।
योधाः साश्वाः सनागाश्च पतितास्त्यक्तजीविताः ॥ २३ ॥

अक्षौहिणीसहस्रं तु साश्वं सरथकुञ्जरम् । कृष्णेनैकेन निहतं निःशेषं तदभूद्बलम् ॥
निहतं वासुदेवेन प्रहरार्द्धेन शार्ङ्गिणा । ततो देव गणाः सर्वे हर्षनिर्भरचेतसः ॥२५॥
ववृषुः पुष्पवर्षाणि साधुसाध्विति चाऽब्रुवन् । सर्वमप्यवनीभारं विमुच्य धरणीधरः
संस्तूयमानस्त्रिदशैर्बभौ संग्राममूर्द्धनि । निहतं स्वबलं दृष्ट्वा जरासन्धोऽतिवीर्यवान् ॥
योद्धुमभ्याययौ तूर्णं बलदेवेन दुर्मतिः । तयोर्युद्धमभूद्घोरं संग्रामेष्वनिवर्तिनोः ॥२८ ॥

रामो लाङ्गलमादाय रथं तस्य ससारथिम् ।
विनिपात्य रणे शूरो गृहीत्वा तं महाबलम् ॥ २६ ॥

उद्यम्य मुशलं तूर्णं तं हन्तुमुपचक्रमे । प्राणसंशयमापन्नं जरासन्धं नृपोत्तमम् ॥३०॥
कृतं रामेण बलिना सिंहेनेव महागजम् । दृष्ट्वा कृष्णोऽग्रजं प्राह न हन्तव्यइतिप्रभुः ॥
मोचयामासधर्मात्मा जरासन्धंमहामतिः । विमुच्यकृष्णवाक्येन शत्रुंसंकर्षणोऽव्ययः
सानुजो रथमारुह्य मथुरां प्रविवेश ह । विनिर्जितो महावीरो रामेण मगधाधिपः ॥
परां व्रीडामुपागम्य पुरं स्वं न विवेश ह । स कालयवनं प्राप्य महावीर्यं बलान्वितम्
पुत्रयोर्वसुदेवस्य समाचष्ट पराक्रमम् । दानवानां वधं चैव कंसस्य निधनन्तथा ॥३५

अक्षौहिणीनां च वधं तथा स्वस्य पराजयम ।
सर्वं निवेदयामास कृष्णस्य चरितं महत् ॥ ३६ ॥

तच्छ्रुत्वा यवनः क्रुद्धो महाबलपराक्रमैः । म्लेच्छकोटिसहस्रैस्तु सम्वृतो मदसंयुतः ॥
मगधाधिपतेस्तस्य सहायार्थं महाबलः । तेनैव सहितस्तूर्णं जगाम मथुरां पुरीम् ॥
बलैराच्छाद्य पृथिवीं नानाजनपदान्विताम । संनिवेश्य महासैन्यं रुरोध मथुरां पुरीम्

कृष्णोऽपि चिन्तयित्वाऽथ पौराणां कुशलं तदा ।
ययाचे सागरं भूमिं निवासार्थं जलस्य च ॥ ४० ॥

त्रिंशद्योजनविस्तीर्णं ददौ कृष्णस्य सागरः । अम्बुजलपयसां मध्ये तत्र द्वारवतींपुरीम्
बहुप्रासादसंयुक्तां हेमप्राकारतोरणाम् । नानामणिमयैर्दिव्यैर्गृहपङ्क्तिभिरावृताम् ॥
उद्यानैश्च तथा रम्यैस्तडागैर्बहुभिर्युताम् । अम्बुजपुण्डरीकाक्षोयथेन्द्रस्याऽमरावतीम्
सुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारवत्यां न्यवेशयत्
प्रबुद्धास्ते जनाःसर्वे पुत्रदारसमन्विताः । हेमहर्म्यतले विप्रा विस्मयं परमं ययुः ॥
बहुभिर्धनधान्यैश्च दिव्यवस्त्रविभूषणैः । परिपूर्णैर्निरातङ्कैर्गृहमुख्यैः समावृताः ॥४६ ॥

तस्मिन्प्रहृष्टाः सन्तस्थुर्दिवि देवगणा इव ।
यवनेन तदा योद्धुं रामकृष्णौ महाबलौ ॥ ४७ ॥

विनिर्ययतुरात्मेशौ मथुराया बहिस्तदा । रामो लाङ्गलमादाय मुशलं च महारथः ॥

जघान समरे क्रुद्धो यवनानां महद्बलम् । कृष्णस्तु शार्ङ्गमासज्य बाणैरग्निशिखोपमैः
निर्ददाह बलं सर्वं म्लेच्छानां देवकीसुतः । निहतं स्वबलं दृष्ट्वा सकालयवनो बली ॥
युयुधे वासुदेवेन गदया यवनेश्वरः । कृष्णोऽपि कदनं तेन कृत्वा चिरमनामयः ॥५२॥
विमुखःप्राद्रवत्तस्मात्सङ्ग्रामात्कमलेक्षणः । सोऽनुयातोऽतिवेगेनतिष्ठतिष्ठेति चाब्रवन्
वेगात्कृष्णो गिरिगुहां प्रविवेश महामतिः । तत्र प्रसुप्तोराजाऽसौ मुचुकुन्दोमहामुनिः

अदृश्यस्तस्य नृपतेः संस्थितो भगवान्हरिः ।
यवनोऽपि महावीरो गदामुद्यम्य पाणिना ॥ ५४ ॥

कृष्णं हन्तुं समारब्धो गुहां तां प्रविवेश ह । दृष्ट्वा शयानं राजानंमत्वाकृष्णंजनार्दनम्
पादेन ताडयामास मुचुकुन्दं महामुनिम् । ततः प्रबुद्धो भगवान्मुचुकुन्दो महामुनिः ॥
क्रोधात्संरक्तनयनो हुङ्कारं कृतवानसौ । तस्य हुङ्कारशब्देन तथा क्रोधनिरीक्षणात् ॥
निर्दग्धो भस्मतां प्राप यवनस्त्यक्तजीवितः । ततस्तु कृष्णो ददृशे राजर्षेः पुरतः प्रभुः
नीलोत्पलदलश्यामः पुण्डरीकनिभेक्षणः । शङ्खचक्रगदापाणिः पीतवासा जनार्दनः ॥
दृष्ट्वा तं सहसोत्थाय राजर्षिरमितौजसम् । अहोभाग्यमहोभाग्यमित्युवाच महामुनिः

पुलकाङ्कितसर्वाङ्गः सानन्दाश्रुजलाकुलः ।
स्तुवन्वै जयशब्देन प्रणनाम मुहुर्मुहुः ॥ ६२ ॥

मुचुकुन्द उवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि दर्शनात्परमेश्वर ! । अद्यमेसफलं जन्म जीवितंसफलं मम
नमस्ते वासुदेवाय जगन्नाथाय शार्ङ्गिणे । दामोदराय देवाय तेजसां निधये नमः ॥
अधोक्षजाय हरये नृसिंहवपुषे नमः । राघवाय नमस्तुभ्यं पुण्डरीकेक्षणाय च ॥६४॥
अच्युताय विकाराय तथानन्तायतेनमः । गोविन्दाय नमस्तुभ्यं विष्णवेजिष्णवे नमः
नारायणाय श्रीशाय कृष्णाय परमात्मने । मुकुन्दाय नमस्तुभ्यं चतुर्व्यूहाय ते नमः ॥
नमःपरमकल्याण ! नमस्ते परमात्मने । वासुदेवाय शान्ताय यदूनाम्पतये नमः ॥६७॥

महेश्वर उवाच ।

एवं स्तुत्वा तु गोविन्दं प्रणनाम पुनःपुनः । सन्तुष्टो भगवान्प्राह मुचुकुन्दंमहामुनिम्

श्रीभगवानुवाच ।

वरं वृणीष्व राजर्षे ! यत्ते मनसि वर्त्तते ॥ ६१ ॥

महेश्वर उवाच ।

सोऽपि मुक्तिमयाचेऽथपुनरावृत्तिवर्जिताम् । तस्मैददौ तदाकृष्णोदिव्यंलोकंसनातनम्
राजा तु मानुषं रूपं विहायाऽथ महामतिः । समानं रूपमास्थाय देवस्य परमात्मनः ॥
वैनतेयं समारुह्य शाश्वतं पदमाविशत् ॥ ७१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरिते मुचुकुन्दमोक्षो नाम षट्चत्वारिंश-
दधिकद्विशततमोऽध्यायः ॥ २४६ ॥

# सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः

## सजरासन्धपराजयं द्वारकांगत्वानानाराजकन्याभिःकृष्णस्यविवाहो रुक्मिणी-स्वयम्वरेरुक्मिविरोधेनविदर्भसेनाविध्वंसनम्

रुद्र उवाच ।

हत्वाऽथ यवनं तत्र मुचुकुन्देन धीमता । दत्त्वा तस्मै वरं मुक्तिं निष्क्रान्तो यदुनन्दनः
हतं च यवनं श्रुत्वा जरासन्धःसुदुर्मतिः । युयुधे रामकृष्णाभ्यां स्वबलेन समावृतः ॥
कृष्णेन निहतं सैन्यं सर्वं तस्य दुरात्मनः । सोऽपि रामेण सङ्ग्रामेद्वन्द्वयुद्धं चकारह
मुसलेनाहनद्रामो वक्षस्यस्य दुरात्मनः । स पपात महीपृष्ठे मूर्च्छितो मगधाधिपः ॥
चिरेण लब्ध्वा सञ्ज्ञां तु विह्वलाङ्गो भयातुरः । न शशाक रणे योद्धुं रामेणमगधेश्वरः
विमुखः प्राद्रवत्तूर्णं हतशेषबलानुगः । अजेयाविति तौ मत्वा रामकृष्णौ महाबलौ ॥
तयोर्विरोधं त्यक्त्वाऽथ नगरीं स्वां विवेश ह ।

अथ तौ वसुदेवस्य तनयौ सह सेनया ॥ ७ ॥
मथुरां त्यज्य नगरीं प्रविष्टौद्वारिकां पुरीम् । इन्द्रेण प्रेषितोवायुःसभांतत्र दिवौकसाम्
कृष्णाय प्रददौ प्रीत्या निर्मितां विश्वकर्मणा । वज्रवैदूर्यरचितां वह्वासनविचित्रिताम्
नानारत्नमयैर्दिव्यैः स्वर्णच्छत्रैर्विराजिताम् । तां प्राप्य रम्यांतु सभामुग्रसेनादयोनृपाः
मोदन्ते नैगमैः सार्द्धं दिविदेवगणा इव । इक्ष्वाकुवंशसम्भूतो रैवतो नाम पार्थिवः ॥
कन्यां दुहितरं स्वस्य सर्वलक्षणसंयुताम् । रामाय प्रददौ प्रीत्या रैवतीं नामनामतः॥
उपयेमे विधानेन स रामस्तां च रेवतीम् । रमयामास च तया शच्येव तु सुरेश्वरः ॥
विदर्भराजो धर्मात्मा भीष्मको नाम धार्मिकः ।
वभूवुस्तस्य पुत्रास्तु रुक्मप्रभृतयः शुभाः ॥ १४ ॥
तेषामवरजा कन्या रुक्मिणी वरवर्णिनी । कमलांशेन सम्भूता सर्वलक्षणसंयुता ॥
राघवत्वेऽभवत्सीतारुक्मिणीकृष्णजन्मनि । अन्येष्वेवावतारेषुविष्णोरेषासहायिनी ॥
हिरण्यकहिरण्याक्षौ सम्भूतौ द्वापरे पुनः । शिशुपालो दन्तवक्र इतिनाम समन्वितौ ॥
चैद्यान्वये समुद्भूतौ महाबलपराक्रमौ । रुक्मिणीं शिशुपालाय दातुमैच्छत्तदात्मजः
तं तु नैच्छत्पतिं सा तु शिशुपालं शुभानना । बाल्यात्प्रभृति वै विष्णुमनुरक्ता दृढव्रता
उद्दिश्य कृष्णम्भर्त्तारं सुराणामर्चनंसदा । चकाररुक्मिणीकन्या दानानिविविधानि च
व्रतचर्यापरा भूत्वा ध्यायन्ती पुरुषोत्तमम् । आत्मेशं स्वस्य भर्त्तारमुवास पितृमन्दिरे
कर्त्तुं तां शिशुपालाय विवाहं पार्थिवोत्तमः । चकार यत्नं पुत्रेण रुक्मणा सह धीमता
पुरोहितसुतं विप्रं प्रेषयामास रुक्मिणी । उद्दिश्य कृष्णं भर्त्तारं स तूर्णं द्वारकां ययौ
समेत्य कृष्णं रामं च ताभ्यां विधिवदर्चितः ।
एकान्ते सर्वमाचष्ट रुक्मिणीभाषितं तयोः ॥ २४ ॥
तच्छ्रुत्वा रामकृष्णौ तु सह विप्रेण धीमता । सर्वशस्त्रास्त्रसम्पूर्णं रथमाकाशगंप्रभू ॥
आरुह्य सूतमुख्येन दारुकेण महात्मना । विदर्भनगरीं तूर्णं जग्मतुः पुरुषोत्तमौ ॥२६॥
राजानःसर्वराष्ट्रेभ्यो विवाहं द्रष्टुमागताः । जरासन्धमुखाः सर्वे शिशुपालस्यधीमतः
तस्मिन्नुद्वाहसमये रुक्मिणी रुक्मभूषणा । निःसृताऽर्चयितुं दुर्गां सखीभिर्नगराद्बहिः

एतस्मिन्नेव काले तु संप्राप्तो देवकीसुतः। रथस्थां तां च जग्राह बलवान्मधुसूदनः ॥
सहसा रथमारोप्य ययौ तूर्णं स्वमालयम्। ततः क्रोधसमाविष्टा जरासन्धमुखान्नृपाः
रुक्मिणा राजपुत्रेण युद्धाय समुपस्थिताः। अनुयाता हरिं क्रुद्धाश्चतुरङ्गबलान्विताः॥
बलभद्रो महाबाहुरवरुह्य रथोत्तमात्। लाङ्गलं मुशलं गृह्य निजघान क्षणादरीन ॥३२
रथानश्वान्महानागांस्तथा पादचरानपि। लाङ्गलमुशलाभ्यां वै निजघान बलाद्रणे ॥
तस्य लाङ्गलपातेन चूर्णिता रथपङ्क्तयः। नागाश्च पतिता भूमौ वज्रेणेव महीधराः॥
निर्भिन्नमस्तकाः सर्वे वमन्तो रुधिरं बहु। क्षणेनैव हतं सैन्यं बलरामेण वै तदा॥३५
साश्वं सनागं सरथं सपदाति महारणे। समन्तात्समरे तत्र सुस्रुवुः शोणितापगाः ॥
प्रभग्नाः पार्थिवाः सर्वे दुद्रुवुर्भयपीडिताः। कृष्णेन कदनं चक्रे रुक्मी क्रोधवशाद्बली

अनुरुध्यस्यबाणौघैस्ताडयामास शार्ङ्गिणम्।

ततः प्रहस्य गोविन्दः शार्ङ्गमादाय लीलया ॥ ३८ ॥

जघानैकेन बाणेन रथाश्वांस्तस्य सारथिम्। रथं ध्वजं पताकां च चिच्छेद धरणीधरः
विरथः खड्गमादाय धरण्यां स उपस्थितः। कृष्णस्तु खड्गं चिच्छेद बाणेनैकेन वीर्यवान्
ततः स मुष्टिमुद्यम्य कृष्णं वक्षस्यताडयत्। तं जग्राह रणे वीरं निबध्य निबिडं हरिः
तीक्ष्णं क्षुरप्रमादाय प्रहसन्मधुसूदनः। शिरसोमुण्डनं कृत्वा मुमोच च जनार्दनः ॥
स तु शोकसमाविष्टो निःश्वसन्नुरगो यथा। आविवेशपुरंस्वीयं स तु तत्रैवचाऽवसत्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरिते विदर्भसेनाविध्वंसनं नाम
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

---

# अष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः

## श्रीकृष्णचरिते रुक्मिणीविवाहवर्णनम्

रुद्र उवाच ।

अथ कृष्णस्तु रामेण रुक्मिण्या दारुकेण च ।

दिव्यं स्यन्दनमारुह्य ययौ तूर्णं स्वमालयम् ॥ १ ॥

ततः प्रविश्य नगरीं द्वारकां देवकीसुतः । शुभेऽह्नि शुभलग्ने वै वेदोक्तविधिना हरिः ॥
उपयेमे नृपसुतां रुक्मिणीं रुक्मभूषिताम् । तस्मिन्नुद्वाहसमये देवदुन्दुभयो दिवि ॥३
विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः । वसुदेवोग्रसेनौ च तथाऽक्रूरो यदूत्तमः ॥४॥
बलभद्रो महातेजा ये चान्ये यदुपुङ्गवाः । चक्रुः कृष्णस्य रुक्मिण्या विवाहं सुसुखं यथा
नन्दगोपोऽथ गोपालैर्गोपवृन्दैः समागतः । स्वलङ्कृताभिर्योषाभिर्यशोदा च समागता
वसुदेवस्त्रियः सर्वा देवकीप्रमुखास्तथा । रेवतीरोहिणी देवी याश्चान्याः पुरयोषितः
सर्वाण्युद्वाहकर्माणि चक्रुर्हर्षसमन्विताः । सुराणामर्चनं प्रीत्या कर्त्तव्यं तत्र देवकी ॥
वृद्धाभिर्नृपयोषिद्भिश्चकार विधिना तदा । सर्वमौद्वाहिकं कर्म उत्सवं हि द्विजोत्तमैः॥
ब्राह्मणान्भोजयामास वस्त्रैराभरणैः शुभैः । उग्रसेनादयस्तत्र राजानश्च सुपूजिताः ॥

नन्दगोपादयो गोपा यशोदाद्याश्च योषितः ।

बहुभिः स्वर्णरत्नाद्यैर्वासोभिः सविभूषणैः ॥ ११ ॥

पूजिताः सम्प्रहृष्टास्ते तद्विवाहमहोत्सवे । तौ दम्पती समाश्लिष्य प्रणतौ जातवेदसम्
वेदविद्भिर्विप्रमुख्यैराशीभिरभिनन्दितौ । तस्यां विवाहवेद्यां तु शुशुभाते वधूवरौ ॥
ब्राह्मणेभ्योऽथ वृद्धेभ्यो राजन्यः सह भार्यया । ववन्दे देवकीपुत्रो ज्येष्ठस्य भ्रातुरेव च
एवमौद्वाहिकं सर्वं निर्वर्त्य मधुसूदनः । व्यसर्जयन्नृपान्सर्वान्ये च तत्र समागताः ॥१५
प्रस्थिता हरिणा तत्र पूजिता नृपपुङ्गवाः । ब्राह्मणाः सुमहात्मानो निर्ययुः स्वकमालयम्
रुक्मिण्या सह धर्मात्मा देवकीनन्दनोऽव्ययः । उवास सुसुखेनैव दिव्यहर्म्यतले शुभे

तया वै रमयामास नारायणश्च श्रिया । संस्तूयमानो मुनिभिर्दिवि देवगणैरपि ॥१८
अहन्यहनि हृष्टात्मा सुखेनैव जनार्दनः । अथोवास सुशोभायां द्वारवत्यां सनातनः ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे श्रीकृष्णचरिते रुक्मिणीविवाहकथनं नामाष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

---

# एकोनपञ्चाशदधिकद्विशततमोऽध्यायः

सत्यभामाविवाहपूर्वकंस्यमन्तकमण्युपाख्यानं सत्राजितपुत्रस्यप्रसेनस्यवने-सिंहद्वारामृत्युः स्यमन्तकमणिहरणञ्च जाम्बवता सिंहवधोमणिप्रापणञ्च मणि-हरणायकृष्णोपरिजनापवादस्तमपाकर्त्तुं मण्यनुसन्धित्सोःकृष्णस्यजाम्बवता-युद्धं जाम्बवतःपराजयःपूर्वजन्मनिरामकृतांप्रतिज्ञांस्मारंस्मारं जाम्बवताकृष्ण-प्रार्थनं जाम्बवतीपरिणयः, मद्रराजसुतानांकृष्णेनविवाहोनरकासुरवधः सत्य-भामायाःशचीकृतापमानवर्णनं तत्प्रतिशोधयितुंगरुडोपरिकृष्णद्वाराकल्पवृक्षा-नयनमिन्द्रद्वाराकृष्णप्रार्थनं शचीकृतंसत्यासम्मानम्

श्रीरुद्र उवाच ।

सत्राजितस्य तनया नाम्ना सत्या यशस्विनी ।
पृथिव्यंशेन सम्भूता भार्या कृष्णस्य चाऽपरा ॥ १ ॥

वैवस्वतीमहाभागा कालिन्दीनामनामतः । तृतीया तस्य भार्या सा नीलांशेनसमुत्थिता
विन्दानुविन्दस्यसुतां मित्रविन्दां शुचिस्मिताम् । स्वयम्वरस्थितांकन्यामुपयेमेजनार्दनः
पाशेनैकेन बद्ध्वा तान्नृपभान्समदुर्मदान् । तां वीर्यशुल्कां जग्राह पद्मपत्रायतेक्षणः ॥
सत्राजितो महारत्नं स्यमन्ताख्यं महीपतिः । अनुजाय ददौ सोऽयं प्रसेनाय महात्मने
ययाचे तं मणिवरं कदाचिन्मधुसूदनः । उवाच वासुदेवं तं प्रसेनः प्रसभं तदा ॥ ६ ॥

प्रसेन उवाच ।

भारानष्टसुवर्णानां नित्यं प्रसवते मणिः । तस्मात्कस्य न दातव्यं स्यमन्ताख्यमिदं मया

महादेव उवाच ।

कृष्णस्तु तदभिप्रायं ज्ञात्वा तूष्णीमुवासह । कदाचिन्मृगयां कर्त्तुं कृष्णः सवयसोत्तमैः
प्रविवेश महारण्यं प्रसेनाद्यैर्महाबलैः । प्रत्येकं वै मृगान्हन्तुमनुयाताः सहस्रशः ॥९॥
एकाएत्रमहारण्ये प्रसेनो दूरमागतः । तं सिंहो द्रुममासाद्य हत्वा रत्नं जहार सः ॥१०
तं सिंहं जाम्बवान्हत्वा मणिं गृह्य महाबलः ।
प्रविवेश बिलं तूर्णं दिव्यस्त्रीभिर्निषेवितम् ॥ ११ ॥
तस्मिन्नस्तं गते सूर्ये वासुदेवः सहानुगः । चतुर्थ्यामुदितं चन्द्रं दृष्ट्वा स्वं पुरमाविशत
ततः सर्वे पुरजनाः कृष्णं प्रोचुःपरस्परम् । हत्वा प्रसेनं गोविन्दो मृगव्याजेन कानने
स्यमन्तकं मणिवरमग्रहीदविशङ्कया । तदाकर्ण्य हरिस्तस्मिन्नपवादं जनभाषितम् ॥
अवलोकभयात्सर्वैर्यदुभिर्गहनं ययौ । दर्शयामास तान्सर्वान्सिंहेन निहतं वने ॥१५ ॥
लब्धाऽऽत्मशुद्धिस्तत्रैव संस्थाप्य महतीं चमूम् ।
एकः शार्ङ्गगदापाणिर्जगाम गहनं वनम् ॥ १६ ॥
तस्मिन्गुहामुखे सिंहं हतं जाम्बवता तदा । दृष्ट्वा महाबिलं कृष्णःप्रविवेशाऽविशङ्कितः
तत्र नानामणिवरद्योतिते विमले गृहे । सुतं जाम्बवतो धात्री दोलामारोप्य लीलया॥
दोलामुखे मणिं धृत्वा दोलयन्गायतीमुदा । सिंहःप्रसेनमवधीत्सिंहो जाम्बवता हतः॥
सुकुमारकमारोदीस्तव ह्येष स्यमन्तकः । तच्छ्रुत्वावासुदेवोऽथ शङ्खंदध्मौप्रतापवान्
तेन नादेन महता निर्जगामाऽत्र जाम्बवान् । तयोर्युद्धमभूद्घोरं दशरात्रं निरन्तरम् ॥
मुष्टिभिर्वज्रकल्पैश्च सर्वभूतभयावहम् । कृष्णस्य बलवृद्धिं च तथाऽऽत्मबलसंक्षयम् ॥
अवेक्ष्य पूर्ववचनं बुबुधे परमात्मनः । सोऽयं रामोऽवतीर्णोऽत्र धर्मत्राणाय वै पुनः
सआगतो मम स्वामी दातुं मम मनोरथम् । एवं ज्ञात्वाऽथ ऋक्षेशो निर्वर्त्य रणकर्मतत्
प्राञ्जलिः प्राह गोविन्दं को भवानिति विस्मयात् ।
निर्वर्त्य कदनं शौरिः प्रोचे गम्भीरया गिरा ॥२५ ॥

श्रीकृष्ण उवाच ।

पुत्रोऽहं वसुदेवस्य वासुदेव इतीरितः । ममरत्नं स्यमन्ताख्यं हृतवांस्त्वं सुनिर्भयः ॥
तद्दीयतां च शीघ्रं मे अन्यथा वधमेष्यसि ॥ २६ ॥

महादेव उवाच ।

तच्छ्रुत्वा जाम्बवान्हृष्टः प्रणनामाऽथदण्डवत् । परिणीय नमस्कृत्य विनयात्प्राहकेशवम्

जाम्बवानुवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि तवसन्दर्शनात्प्रभो ! । दासोऽहंपूर्वभावेन तव देवकिनन्दन !
हतवानसि गोविन्द ! कदनं पूर्वकाद्भुतम् । मयेदं कदनं मोहाद्यत्कृतं स्वामिना त्वया
तत्क्षम्यतां जगन्नाथ ! करुणाकर ! शाश्वत ! ॥ २८ ॥

महादेव उवाच ।

इत्युक्त्वा प्रणतो भूत्वा नमस्कृत्य पुनःपुनः । नानारत्नमये पीठे निवेश्य विनयात्प्रभुम्
शारदाब्जनिभौ पादौ प्रक्षाल्य शुभवारिणा । मधुपर्कविधानेन पूजयित्वा यदूद्वहम् ॥
वस्त्रैराभरणैर्दिव्यैः पूजयित्वा विधानतः । पुत्रीं जाम्बवतीं नामकन्यांलावण्यसंयुताम्
कन्यारत्नं ददौतस्मैभार्यार्थमसितौजसे । अन्यैश्च मणिमुक्तैश्चस्यमन्ताख्यंददौमणिम्
तत्रैवोद्वाह्य तां कन्यां प्रहृष्टः परवीरहा । ददौ तस्मै परां मुक्तिं प्रीत्या जाम्बवते हरिः
गृहीत्वा तनयांतस्यकन्यां जाम्बवतीम्मुदा । विनिर्गत्यबिलात्तस्मात्प्रययौद्वारकांपुरीम्
सत्राजिते ददौ रत्नं स्यमन्ताख्यं यदूत्तमः । दुहित्रे प्रददौ सोऽपिकन्यायैमणिमुत्तमम्
मासि भाद्रपदे शुक्ले चतुर्थ्यांचन्द्रदर्शनम् । मिथ्याभिदूषणंप्राहुस्तस्मात्तत्परिवर्जयेत्
तत्प्राप्य दर्शनं तत्र चतुर्थ्यां शीतगोर्नरः । स्यमन्तस्यकथाश्रुत्वामिथ्यावादात्प्रमुच्यते
सुलक्षणा नाग्नजिती सुशीला च यशस्विनी ।
मद्रराजसुतास्तिस्रः कन्यकास्ताः शुभाननाः ॥ ३६ ॥
स्वयम्वरस्थास्ताः कृष्णं वरयामासुरुज्ज्वलाः । एकस्मिन्दिवसे तास्तु उपयेमे यदूद्वहः
अष्टौमहिष्यस्ताः सर्वा रुक्मिण्याद्या महात्मनः ।
रुक्मिणी सत्यभामा च कालिन्दी च शुचिस्मिता ॥ ४१ ॥

मित्रविन्दा जाम्बवती नाग्नजित्यः सुलक्षणा । सुशीला नाम तन्वङ्गी महिष्योऽष्टौ प्रकीर्तिताः स्मृता
भूमिपुत्रो महावीर्यो नरको नाम राक्षसः । जित्वा देवपतिं शक्रं सर्वांश्चैव सुरान्रणे॥
अदित्या देवमातुश्च कुण्डले च सुवर्चसी । बलाज्जग्राह देवानां रत्नानि विविधानि च
ऐरावतं महेन्द्रस्य तथैवोच्चैःश्रवो हयम् । माणिक्यादि धनेशस्य शङ्खपद्मनिधिं तथा
स्त्रियश्चाप्सरसश्चैव हृतवान्क्षितिनन्दनः । वज्रादिहेतीस्तेषां च बलाद्धृत्वा दिवौकसाम्
तैरेव ससुरान्हत्वा सभां मयविनिर्मिताम् । उवास व्योमगे दिव्ये नगरे विमलेऽम्बरे
ततो देवगणाः सर्वे पुरस्कृत्य शचीपतिम् । भयार्ताः शरणं जग्मुः कृष्णमक्लिष्टकारिणम्
कृष्णोऽपि तदुपश्रुत्य सर्वं नरकचेष्टितम् । देवानामभयं दत्त्वा वैनतेयं व्यचिन्तयत् ॥
तस्मिन्क्षणे हरेस्तस्य वैनतेयो महाबलः । प्राञ्जलिः पुरतस्तस्थौ सर्वदेवनमस्कृतः ॥
तमारुह्य द्विजश्रेष्ठं सत्यया सह केशवः । संस्तूयमानो मुनिभिः प्रययौ राक्षसालयम्

प्रदीप्यमानमाकाशे यथा सूर्यस्य मण्डलम् ।
राक्षसैर्बहुभिर्युक्तं दिव्यैराभरणैर्युतम् ॥ ५९ ॥

ददर्श तत्पुरं कृष्णो दुर्भेद्यं त्रिदशैरपि । तदावरणजालानि वीक्ष्य चक्रेण वीर्यवान् ॥
चिच्छेद तेजसा दीप्त्या तमांसीव दिवाकरः । ततस्ते राक्षसाः सर्वे शतशोऽथ सहस्रशः
उद्यम्य शूलानि तदा युद्धायाऽभिमुखं ययुः । ततस्तु तोमरैर्दिव्यैर्भिण्डिपालैः सुपट्टिशैः
केशवं ताडयामासुः पलालैरिव पावकम् । ततस्तु शार्ङ्गमादाय भगवान्गरुडध्वजः ॥
दिव्यशस्त्राणि चिच्छेद बाणैरग्निशिखोपमैः । तेषां शिरांसि नागानश्वांश्चैव तरस्विनः
चक्रेणैव प्रचिच्छेद वीर्यवान्पुरुषोत्तमः । केचिच्चक्रेण संछिन्नास्तथाऽन्ये शरताडिताः
गदयाभिहताः केचिद्राक्षसास्तद्रणाजिरे । एवं ते राक्षसाः सर्वे पातिता धरणीतले ॥
शक्रोत्सृष्टेन वज्रेण निर्भिन्ना इव भूधराः । निहत्य दानवान्सर्वान्पुण्डरीकायतेक्षणः

पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ।
ततः स नरको दैत्यो धनुरादाय वीर्यवान् ॥ ६१ ॥

दिव्यं स्यन्दनमारुह्य ययौ युद्धाय केशवम् । तयोर्युद्धमभूद्घोरं तुमुलं लोमहर्षणम् ॥
बहुभिर्बाणसाहस्रैर्मेघयोरिव वर्षतोः । ततोऽर्द्धचन्द्रबाणेन वासुदेवः सनातनः ॥६३ ॥

तस्य राक्षसमुख्यस्य धनुश्चिच्छेद वीर्यवान । ससर्जास्त्रं महादिव्यं नरकस्यमहोरसि
स तेन भिन्नहृदयः पपातोर्व्यां महासुरः । शक्रवज्रेण निर्भिन्नो महाचल इवोन्नदन् ॥
उपगम्य ततः कृष्णः समीपं तस्य रक्षसः । भूम्या सम्प्रार्थितःप्राह वरंवृणिवतिराक्षसम्
स चाऽऽह राक्षसः कृष्णं गरुडोपरि संस्थितम् ॥ ६६ ॥

नरक उवाच ।

न मे कृत्यं वरेणाऽस्ति नरकोऽहं तथापि च । अन्यलोकहितार्थाय वृणेऽहं वरमुत्तमम्
मृताहनि तु मे कृष्ण सर्वभूतेश्वरेश्वर !। ये नरा मङ्गलस्नानं कुर्वन्ति मधुसूदन ! ॥
न तेषां निरयप्राप्तिर्भवन्त्वेवं भयापह ! ॥ ६८ ॥

महादेव उवाच ।

एवमस्त्विति गोविन्दो ददौ तस्मै वरं प्रभुः । ततःपश्यन्हरेः साक्षात्करदम्बुजसन्निभौ
चरणौ वज्रवैडूर्यनूपुराभ्यां विराजितौ । अर्चितौ विधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा ॥
त्यक्त्वा प्राणान्महासुरः सारूप्यमगमद्धरेः । ततो देवगणाःसर्वे हर्षनिर्भरमानसाः ॥
ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महर्षयः । प्रविश्य नगरं तस्य कृष्णः कमललोचनः ॥
बलात्तेन गृहीतानि रत्नानि त्रिदिवौकसाम् । कुण्डले देवमातुश्च तथैवोच्चैःश्रवोहयम्
ऐरावतं गजश्रेष्ठं प्रदीप्तं मणिपर्वतम् । सर्वमेतद्यदुश्रेष्ठो ददौ शक्राय वज्रिणे ॥ ७४ ॥
पार्थिवान्सर्वराष्ट्रेभ्यो जित्वाऽसौनरकोबली । कन्याषोडशसाहस्रं हृतवान्नरकस्तदा॥
सन्निरुद्धास्तु ताः सर्वा नरकान्तःपुरे तदा । दृष्ट्वा कृष्णं महावीर्यं कन्दर्पशतसन्निभम् ॥
भर्तारंवव्रिरे सर्वाः पतिं विश्वस्य सर्वगम् । एतस्मिन्नेवकालेतुगोविन्दोऽनन्तरूपवान्
तासां करग्रहं चक्रे विधिना पुरुषोत्तमः । नरकस्य सुताः सर्वे पुरस्कृत्य महीं तदा ॥
गोविन्दं शरणं जग्मुस्तानरक्षद्दयानिधिः ।
तद्राज्ये स्थाप्य तान्सर्वान्पृथिव्या वाक्यगौरवात् ॥ ७६ ॥
ऐन्द्रं विमानमारोप्य ताश्च सर्वावरस्त्रियः । देवदूतैर्महाभागैर्द्वारवत्यां न्यवेशयत ॥८०
वैनतेयं समारुह्य सत्यया सह केशवः । स्वर्लोकं प्रययौ तूर्णं द्रष्टुं तां देवमातरम् ॥
प्रविश्य नगरीं तत्र देवराजो जनार्दनः । अवरुह्य द्विजश्रेष्ठात्पत्न्या सह महाबलः ॥८२

ववन्दे मातरं देवीमदितिं त्रिदिवौकसाम् । सम्परिष्वज्य बाहुभ्यामदितिःपुत्रवत्सला
निवेश्यासनमुख्ये तु पूजयामास भक्तितः । आदित्या वसवो रुद्राः शतक्रतुपुरोगमाः॥
तत्र सम्पूजयामासुर्यथार्हं परमेश्वरम् । शचीगृहं समागम्य सत्यभामायशस्विनी ॥
तया समर्चिता देव्या समासीना सुखासने ।
तस्मिन्काले सुपुष्पाणि पारिजातस्य किङ्कराः ॥ ८६ ॥
शच्यै देव्यै ददुः प्रीत्या सहस्राक्षेणचोदिताः । प्रगृह्यतानि पुष्पाणि शचीदेवीसुमध्यमा
नीलनिर्मलकेशे च ववन्ध स्वयमूर्धनि । अवमान्य शची तत्र सत्यभामां यशस्विनीम्
अनर्हामानुषी चेयं देवार्हं कुसुमं शुभम् । इतिकृत्वा मतिं तस्यै न ददौ कुसुमानि सा
विनिष्क्रम्य पुरात्तस्मात्सत्या कोपसमन्विता । समेत्य कृष्णंभर्त्तारमुवाचकमलेक्षणा

सत्योवाच ।

एषा शची यदुश्रेष्ठ! पारिजातेन गर्विता । अदत्त्वा मम गोविन्द! ववन्ध स्वस्य मूर्द्धनि

महादेव उवाच ।

सत्याया भाषितं श्रुत्वा वासुदेवो महाबलः । उत्पाट्य पारिजातं तु निवेश्यगरुडोपरि
आरुह्य सत्यया तूर्णं वैनतेयं महाबलम् । प्रययौ द्वारकां रम्यां नगरीं देवकीसुतः ॥
ततः कोपसमाविष्टो देवराजः शतक्रतुः । रुद्रैर्वसुभिरादित्यैः साध्यैश्च मरुतांगणैः ॥
ऐरावतं समारुह्य ययौ युद्धाय केशवम् । ततो देवगणाः सर्वे परिवार्य जनार्दनम् ॥
ववृषुः शस्त्रवर्षाणिमेघाइव महाचलम् । कृष्णश्चिच्छेद चक्रेणतान्यस्त्राणिदिवौकसाम्
वैनतेयस्तु संक्रुद्धः पक्षपातेन वीर्यवान् । पातयामास तान्देवांस्तालानिव महानिलः॥
ततः क्रुद्धः सहस्राक्षो देवानामीश्वरः प्रभुः । मुमोच सहसा दीप्तं वज्रं कृष्णजिघांसया
जग्राह कृष्णस्तं वज्रं हस्तेनैकेन लीलया । ततो भीतः सहस्राक्षो नागेन्द्रादवरुह्य सः
प्राञ्जलिः पुरतः स्थित्वा नमस्कृत्य जनार्दनम् ।
प्राह गद्गदया वाचा स्तुत्वा स्तुतिभिरेव च ॥ १०० ॥

इन्द्र उवाच ।

देवयोग्यमिदं कृष्ण! पारिजातं त्वयापुरा । दत्तं मम सुराणां च कथं स्थास्यति मानुषे

महादेव उवाच ।

ततः प्रोवाच भगवान्सहस्राक्षमुपस्थितम् । शच्यावमानिता सत्या तव गेहे सुरेश्वर!
अदत्त्वा पारिजातानि सत्यायै सा पुलोमजा । स्वयमेव स्वशिरसि धारयामास ते प्रिया
अस्या निमित्तं देवेन्द्र! पारिजातो हृतो मया । अस्यै प्रतिश्रुतं दातुं मया सुरगणेश्वर !
तव गेहे पारिजातं स्थापयामीति वासव !। तस्मादद्य न दातव्यः पारिजातः सुरेश्वर!
देवतानां हितार्थाय प्रार्थयिष्यामि भूतले । तावत्तिष्ठतु देवेन्द्र! पारिजातो ममाऽऽलये
मयि स्वर्गगते शक्र ! गृहाण त्वं यथेच्छया ॥ १०९ ॥

महादेव उवाच ।

एवमुक्त्वा यदुश्रेष्ठस्तस्मै वज्रं ददौ स्वयम् । एवमस्त्विति गोविन्दं नमस्कृत्य स वज्रभृत्
प्रययौ स्वपुरं दिव्यं सह देवगणैर्वृतः । कृष्णोऽपि सत्यया देव्या गरुडोपरि संस्थितः
संस्तूयमानो मुनिभिर्द्वारवत्यां विवेश ह । सत्याया निकटे स्थाप्य पारिजातं सुरद्रुमम्
रमयामास भार्याभिः सर्वाभिः सर्वगो हरिः । निशासु तासां सर्वासां गृहेषु मधुसूदनः
विश्वरूपधरः श्रीशो न्यवास समुत्सुकः ॥ ११० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरिते श्रीवासुदेवविवाहकथनं नाम
एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

---

# पञ्चाशदधिकद्विशततमोऽध्यायः

## बाणासुरसङ्ग्रामप्रसङ्गे उषानिरुद्धयोःप्रणयप्रसङ्गे बाणेनाऽनिरुद्धरोधनं नारद-सूचनया कृष्णेनाऽऽक्रमणं तत्र वैष्णवमाहेश्वरास्त्रैर्युद्धं ज्वरोत्पत्तिः कृष्णद्वारा महादेवमूर्च्छनं पार्वतीप्रार्थनयामूर्च्छाहरणं शङ्करकृताकृष्णस्तुतिः

श्रीरुद्र उवाच ।

रुक्मिण्यां कृष्णस्य प्रद्युम्नो मदनांशेन जज्ञे । असौ मदनसम्भूतो महाबलः शम्बर-

जघ्निवान्। तस्य रुक्मिणः सुतायामनिरुद्धो जज्ञे। सोऽपि बाणपुत्रीमुषां नाम कन्यामुपयेमे। सा तु स्वप्ने नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणं महाबाहुं विचित्राभरणोपेतं षोडशसमवयस्कं रक्तारविन्दवक्त्रं यथावदुपभुज्य प्रबुध्य तं पुरतो न दृष्ट्वा मदनेन पीडिता भ्रान्तचित्ता मां त्यक्त्वा काऽसि क्वाऽसीति बहुधा विललाप। ततस्तस्याः सखी चित्रलेखेति नाम कन्यां तादृशीमवस्थां गतां विलोक्य किंनिमित्तं विभ्रान्तचित्ताऽसीति पप्रच्छ। साऽपि स्वप्नलब्धं पतिं यथावदाचष्ट। साऽपि सकलदेवमानुषादिश्रेष्ठान्पटे विलिख्य तस्यै दर्शयामास। यदुवंशसम्भूतान्कृष्णसंकर्षणप्रद्युम्नानिरुद्धादीनपि सम्यङ्निवेदयामास। सा तेषां कृष्णमनुमान्य प्रद्युम्नानन्तरमनिरुद्धं दृष्ट्वा स इत्येव इत्यालिलिङ्ग। अथ चित्रलेखा बह्वीभिर्मायावतीभिर्दैत्यस्त्रीभिर्द्वारवतीं गत्वा रात्रावन्तःपुरे सुप्तमनिरुद्धं दृष्ट्वा गृहीत्वा मोहयित्वा माहिष्मत्यां बाणस्यान्तःपुरे स्वन्यप्रासादादियुक्ते तस्या बाणपुत्र्याः शय्यायां चिक्षेप। सोऽपि प्रबुद्धोऽतिरम्ये श्लक्ष्णे पर्यङ्के संस्थितामुषां सर्वलक्षणलक्षितां विचित्राभरणवसनगन्धमाल्यालङ्कृतां काञ्चनवर्णां सुकेशीं सुजातस्तनीं दृष्ट्वा गाढमालिङ्ग्य करिण्या गजेन्द्र इव तयाऽतिप्रीतिसंयुक्तया यथासुखं रमयामास। एवं मासमात्रं निरन्तरं तयाऽनिरुद्धं रममाणं कदाचिदन्तःपुरनिवासिन्यो वृद्धा दैत्यस्त्रियो ज्ञात्वा राज्ञे निवेदयामासुः। स राजा क्रोधताम्राक्षः परं विस्मयं गत्वा तमिहानयतेति पुरः किङ्करान्प्रेषयामास। तेऽपि तूर्णं नृपप्रासादमारुह्य राजपुत्र्याः शयने संस्थितमनिरुद्धं ग्रहीतुमाजग्मुः। स तान्समारब्धान्दृष्ट्वा प्रासादस्तम्भमेकं हेलयोत्पाट्य निगृतसङ्ख्याकान्किङ्करान्मुहूर्तमात्रेणैव स्तम्भेन चूर्णितगात्रांश्चकार। अथ दैत्यपतिर्निहितान्किङ्करान्दृष्ट्वा कौतूहलं गत्वा असौ श्रीकृष्णपौत्र इति देवर्षिणा प्रोक्तो धनुरादाय स्वयमेवाऽनिरुद्धं ग्रहीतुं तत्समीपमाजगाम। अनिरुद्धोऽपि योद्धुमायान्तं सहस्रबाहुं राजानं दृष्ट्वा तत्परिघं भ्रामयित्वा बाणस्योपरि चिक्षेप। स तु स्वचापनिर्मुक्तेन बाणेन तं परिघं चिच्छेद। अनन्तरमुरगास्त्रेणअनिरुद्धं निबिडं बद्ध्वा स्वान्तःपुरे निवेशयामास। अथ कृष्णोऽप्येवंविधमेव देवर्षिणा ज्ञात्वा बलदेवप्रद्युम्नसहितः स्वसेनया

विहङ्गमेन्द्रमारुह्य तस्य बाणस्य भुजवनं छेत्तुमाजगाम । बलिपुत्रेण पुरा शङ्करोऽर्चितः प्रसन्नो वरं वृणीष्वेत्युवाच । तमीश्वरं बाणो मम पुरद्वारि रक्षार्थं सर्वदोपविश्य समागतं परसैन्यं जहीत्येवं वरमयाचत । तं तथेत्युक्त्वा शङ्करोऽपि तस्य पुरद्वारि सायुधः सपुत्रः सगणः समासीनस्तस्मिन्नेव काले रुषा स्वसेनया समागतं वासुदेवं दृष्ट्वा वृषमारुह्य सर्वायुधोपेतः स्वपुत्रगणसंवृतो योद्धुं निश्चक्राम । कृष्णोऽपि तं भूतपतिं गजचर्मकपालभस्मधरं ज्वलितोरगाकल्पं पिङ्गलं त्रिलोचनं त्रिशूलधरं सर्वभूतगणसंहृतिकर्त्तारं सर्वभूतभयावहं संवर्त्ताग्निप्रभं पुत्रद्वयसमन्वितं समस्तगणावृतं त्रिपुरान्तकं दृष्ट्वा सेनां सुदूरे पृष्ठतो निवेश्य बलभद्रप्रद्युम्नसहितस्तेन रुद्रेण सह प्रहसन्निव योद्धुमारेभे ॥

प्रथमं तदभूद्युद्धं कृष्णशङ्करयोस्तयोः । पिनाकशार्ङ्गनिर्मुक्तैर्बाणैः संवर्त्तकोपमैः ॥१॥ रामोऽपि गजवक्त्रेण प्रयुद्धः षण्मुखेन च । युयुधाते महावीर्यौ सिंहाविव बलोत्कटौ विनायकः स्वदन्ताभ्यां जघानोरसि यादवम् । रामो मुशलमादाय तस्य दन्तमताडयत् निर्भिन्नदन्तः सहसा प्रदुद्रावाऽऽखुवाहनः । तदाप्रभृति लोकेऽस्मिन्हतदन्तो गणेश्वरः देवदानवगन्धर्वैरेकदन्त इतीरितः । प्रद्युम्नेन समं युद्धं चकार शिखिवाहनः ॥ ५ ॥

गणान्विद्रावयामास मुशलेन हलायुधः ।
कृष्णेन सुचिरं कालं युद्ध्वाऽसौ नीललोहितः ॥ ६ ॥

तापज्वरं महाद्रास्तस्मिन्संयोज्य सायके । कोपान्मुमोच तदसौ भृशं संरक्तलोचनः॥ तदस्त्रं वारयामास कृष्णःशीतज्वरेण तु । ताभ्यां हरिहराभ्यां तु विसृष्टौताविमौज्वरौ विशतुर्मानुषेलोकेतयोरेवाऽऽज्ञया भृशम् । हरिशङ्करयोर्युद्धं येतुशृण्वन्ति मानवाः ॥ ते सर्वे ज्वरनिर्मुक्ताः प्राप्नुवन्ति निरामयम् । ततःस्तु हृषीकेशोमोहनास्त्रं दुरासदम् नियुज्य बाणं भूतेशे मुमोच मधुसूदनः । मुहुर्मुहुर्व्यजृम्भद्धे तेनास्त्रेण विमोहितः॥११ पपात मूर्च्छितो भूमौ शङ्करस्त्रिदशेश्वरः । पितरं मोहितं दृष्ट्वा शक्तिमुद्यम्य वीर्यवान ॥

योद्धुमभ्याययौ कृष्णं षण्मुखः शिखिवाहनः ।
हुङ्कारेणैव तं कृष्णश्चकाराऽत्र पराङ्मुखम् ॥ १३ ॥

एवंजित्वा यदुश्रेष्ठः शूलपाणिंत्रिलोचनम् । महास्वनंपाञ्चजन्यं शङ्खंदध्मौप्रतापवान
कृष्णेननिर्जितं श्रुत्वा स्वात्मजं शङ्करं तदा । बाणः स्यन्दनमास्थाय ययौ युद्धायकेशवम्
सदृष्ट्वा सहसाकृष्णं गरुडोपरि संस्थितम् । छादयामास गोविन्दं बहुशस्त्रास्त्रवृष्टिभिः
गदाभिः परिघैः शूलैः शक्तिभिस्तोमरैरपि । भिण्डिपालैश्च खड्गैश्च चक्रैर्बाणैर्निरन्तरम्
तानि सर्वाणि चिच्छेद चक्रेणैव जनार्दनः । ससर्ज तस्य बाहूनां छेदनार्थं सुदर्शनम्॥
मुक्तं दनुजराजस्य सहस्रारं सुदर्शनम् । सहस्रबाहुकाननं तूर्णं छित्त्वा चक्रे सहस्रधा ॥२
एतस्मिन्नन्तरं देवि पार्वती संशितव्रता । हरेः सन्निधिमागत्य कृताञ्जलिरभाषत ॥ २०॥

पार्वत्युवाच ।

कृष्णकृष्णजगन्नाथ नारायण! दयानिधे !। दास्यस्मि तव देवेश! पूर्वशापे सुरोत्तम !॥
त्वया दत्तं वरं मह्यं तदा कौशल्यवर्द्धने । सौभाग्यं शाश्वतं सौम्य! प्रसन्नेन महात्मना॥
तव मुख्यं सहस्रस्य नाम्नामन्यतमं विभो!।
गौरीसौभाग्यदात्रीति मुनिभिः परिकीर्तितम् ॥ २१ ॥
तत्सत्यं कुरु गोविन्द! गरुडध्वज शाश्वत !। तस्मान्मम पतिं देव! त्वं जीवयितुमर्हसि

रुद्र उवाच ।

एवमुक्तस्ततो देव्या! कृष्णः कमललोचनः । अस्त्रंसंहारयामास येनाऽसौ मोहितःपतिः
कृष्णास्त्रेण विनिर्मुक्तः सर्वभूतपतिःशिवः । उत्थायप्राञ्जलिर्भूत्वा तुष्टाव जगतांपतिम्

शङ्कर उवाच ।

कृष्णकृष्णजगन्नाथ ! जाने त्वां पुरुषोत्तमम । परेशं परमात्मानमनादिनिधनं परम् ॥
अवतीर्ण मनुष्येषु शरीरग्रहणात्मिका । लीलेयं सर्वलोकस्य तव चेष्टोपलक्षणा ॥२८
प्रसीद मे नमस्तुभ्यं प्रसीद मम शाश्वत !। प्रसीद मे जगत्स्वामिन्प्रसीदाऽच्युत केशव!
त्वमेव जगतां स्रष्टा धाता हर्त्ता जगद्गुरुः । त्वमेव चिदचिद्वस्तु रूपं ब्रह्म सुरेश्वरः ॥
त्वमादिस्त्वमनादिस्त्वमीश्वरः शेष एव च । त्वं महत्त्वं परं ब्रह्म प्रत्यगात्मा त्वमेवहि
समस्तामरवर्यस्त्वममर्त्यस्त्वं सुरेश्वर !। त्वं मर्त्येन समानश्च सौशील्येन तव प्रभो!॥
तौ शाश्वतौ विषूचीनौ परजीवौ सनातनौ ।

तथा पञ्चाऽपि भूतानि तव वात्सल्यगौरवात् ॥ ३३ ॥

क्षराक्षरे पारेधाम्निरुचोनित्यं सुराश्रये । अधिविश्वेनिवेशि त्वं दास्यकर्मणि नान्यथा
यस्त्वां न वेदलोकेऽस्मिन्स मूढः सर्वभावनः । परावरेश्वरं धाम विदुर्दास्ये मर्तापिणः
ते वै समासते युक्तास्तत्पदे त्रिदशैः समम् । समान्यो भजते दूरेगन्तुं नित्यं पदं तव॥
तथतुर्जागरूकेऽस्मिन्व्यसारो युवती इव । मिथुनानि तवाऽध्यक्ष युवते यदशाश्वत ! ॥
तव नामानि कर्माणि गुणानि शाश्वतानि च । ऐश्वर्याणि गुणातीत प्रवते चोत्तमेऽस्मै
कर्मज्ञानमये रूपे इमे पूर्वोत्तरे श्रुते । स्वसारौ युवती प्रोक्ते स्तोतारो तव केशव ! ॥३८
त्वं प्रज्ञानं परं ब्रह्म त्वया प्राणित शाश्वत ! जीवयैतेन प्राणेन परेणैवात्मना त्वया ॥

तस्मात्कर्मरागान्मुक्तस्य कृपया तव केवलम् ।

आमुष्मिके पर स्वर्गे त्वया दत्तात्मबोधवान् ॥ ४१ ॥

प्रज्ञानं चैव विज्ञानं मेधां दृष्टिं तथा धृतिम् । सर्वान्कामानवाप्नोति अमृतं स भवेत्तदा
एतत्संज्ञानमात्मानं यदेतद्धृदि यन्मनः । मनीषा चैव युक्तिश्च स्मृतिः संकल्पएव च ॥
तपश्च क्रतवः कामो वशइत्यादि ते प्रभो ! भवन्ति नामधेयानि प्रज्ञानस्यगुणाभिधैः॥
एष त्वं परमं ब्रह्म एष त्वं वै प्रजापतिः । एष त्वमिन्द्रो रुद्रश्च एष त्व सर्वदेवताः ॥
एतानि सर्वभूतानि त्वमेव परमेश्वर ! सुतमित्राणिर्जीवायुस्तथाऽन्यानि सनातन ! ॥

जरायुजाण्डजातानि स्वेदजान्युद्भिजानि च ।

अश्वा गावश्च पुरुषा हस्तिनश्चेतराणि च ॥ ४७ ॥

यत्किञ्चित्प्राणिजातं च जङ्गमाश्चैव जन्तवः । स्थावरायेचवैनाथसर्वेत्वत्तोभवन्ति च
त्वां हि सर्वगतं चेत्थं वदन्ति श्रुतयो हरिम् । त्वयैवप्रेरितालोकाश्चेष्टन्ते साध्वसाधुषु
तस्मात्मया कृतं यच्च अपराधमिदं प्रभो ! क्षमस्व करुणासिन्धो ! गुणैः शुभतमैस्तव
नमस्ते पुण्डरीकाक्ष!गोविन्दाऽच्युतमाधव ! वासुदेव जगद्वन्द्य नारायण!नमोऽस्तु ते
नमस्यामि जगत्स्वामिन्नृसिंह करुणाकर ! श्रीशसर्वगतश्रीमन्परमात्मन्नमोऽस्तु ते ॥
निजावसथवैकुण्ठनित्यमुक्तार्चितप्रभो ! त्र्यीनाथ! नमस्तुभ्यं राम राजीवलोचन!॥
भूभारकविनाशाय कृष्णानन्दस्वरूपिणे । विष्णवे जिष्णवे तुभ्यं नमस्ते यदुनन्दन !

एवं स्तुत्वाऽथ गोविन्दं प्रणिपत्यउमापतिः ।
प्राञ्जलिः प्राह भूतेशो वाक्यं गम्भीरया गिरा ॥ ५५ ॥

रुद्र उवाच ।

मया दत्तवरो ह्येष वाणो वलिसुतः प्रभो ! ॥ अहं च दत्तवांस्तस्मैपुराऽनेनाऽर्थितोवरम्
अमरत्वं यदुश्रेष्ठ सर्वं कर्त त्वमर्हसि । तस्मादेनं वलिसुतं त्रातुमर्हसि मे प्रियम् ॥
तथेत्युक्त्वा च भगवान्वाणं वलिसुतं तदा । प्राणसंशयमापन्नंच्छिन्नवाहुमसृक्स्त्रिवतम्
संहृत्य चक्रं गोविन्दो मुमोच करुणानिधिः । मोचयित्वावलिसुतंशंकरः संशितव्रतः
वृषमेन्द्रं समारुह्य पार्वत्या सहितः प्रभुः । ययौ च वसतिस्थानं कैलाशं धरणीधरम्
स तु वाणो नमस्कृत्य रामकृष्णौ महावलौ ।
तास्यां वै नगरीं गत्वा मुमोच मदनात्मजम् ॥ ६१ ॥
वस्त्रैराभरणैर्दिव्यैः पूजयित्वा यथार्हतः । उषां सम्प्रददौ तस्मै कृष्णपौत्राय शौरये ॥
उद्वाह्य रामकृष्णौ तमनिरुद्धं यथाविधि । वाणेन पूजितौ तत्र प्रद्युम्नसहितौ तदा ॥
उषया सहितं तत्राऽनिरुद्धं वै जनार्दनः । आरोप्य स्यन्दने दिव्ये ययौ द्वारवतीं तदा
रामप्रद्युम्नसहितस्सैन्यया सहितो हरिः । प्रविवेश पुरीं रम्यां त्रिदशैर्मघवानिव ॥६५॥
अनिरुद्धो वाणपुत्र्या नानारत्नमये गृहे । अनिशं रमयामास नानाभोगैर्मुदान्वितः ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे वाणासुरसङ्ग्रामकथनं नाम पञ्चाशदधिकद्विशततमोऽध्यायः ॥२५० ॥

— —

## एकपञ्चाशदधिकद्विशततमोऽध्यायः

### श्रीकृष्णचरित्रे काशिराजपौण्ड्रकवासुदेवतत्पुत्रदण्डपाणिकृत्याविध्वंसनवर्णनम्

श्रीरुद्र उवाच ।

अथ पौण्ड्रकवासुदेवः काशिराजो वाराणस्यां विविक्ते द्वादशवर्षमहेशमर्चयन्निराहारः पञ्चाक्षरं जजाप । पौरश्चरणिकान्ते शङ्करं स्वनेत्रकमलेन पूजयामास । ततः शूलपाणिरुमापतिः प्रसन्नो वरं वृणीष्वेति तमाह । असौ पञ्चवक्त्रं सर्वभूतपतिं शिवं प्रसन्नं वरदं मम वासुदेवसमानरूपं प्रयच्छेत्युवाच । शिवस्तस्मै शङ्खचक्रगदापद्मयुतचतुर्भुजं पुण्डरीकदलनिभलोचनं वासुदेवसमानकिरीटललितकुन्तलं पीतवस्त्रकौस्तुभाभरणादिचिह्नान्यपि महां देहानि याचितः शिवः सर्वमपि तस्मै प्रददौ । स तु वासुदेवोऽहमिति सर्वलोकान्मोहयामास । कदाचित्स्वर्गतो मदबलोत्कटं तं काशिपतिं नारदोऽभ्येत्य वसुदेवसुतं कृष्णमजित्वा वासुदेवत्वं न विद्यत इत्युवाच । स तु तस्मिन्नेव क्षणे कृष्णं जेतुं गरुडपताकायुतं रथमारुह्य चतुरङ्गाक्षौहिणीबलेन द्वारकामवाप । तत्र पुरद्वारि स्वर्णयाने संस्थितो वासुदेवोऽहं युद्धार्थं सम्प्राप्तोऽस्मि मामजित्वा तव वासुदेवत्वं नास्तीति दूतं प्रेषयामास । विष्णुरपि तच्छ्रुत्वा वैनतेयमारुह्य पौण्ड्रकेण योद्धुं पुरद्वाराद्विनिष्क्रम्याऽक्षौहिणीबलेन स्यन्दने समासीनं शङ्खचक्रगदापद्महस्तं पौण्ड्रकं ददर्श । कृष्णोऽथ शार्ङ्गमादाय सम्वर्ताग्निप्रभैर्बाणैस्तस्य रथाश्वगजपदातियुक्तं महदक्षौहिणीबलं मुहूर्तमात्रेण निःशेषं ददाह । शरेणैकेन तस्य । हस्तावसक्तशङ्खचक्रगदादिहेतीरपि लीलयैव चिच्छेद । पवित्रेण सुदर्शनेन किरीटकुण्डलयुतं तस्य शिरःकमलं छित्त्वा वाराणस्यामन्तःपुरे निपातयामास । तद्दृष्ट्वा सर्वे काशीनिवासिनः किमेतदित्याशङ्क्य विस्मिता बभूवुः । तस्य पौण्ड्रकस्य सुतो दण्डपाणिरिति वासुदेवेन भगवता निहतं स्वपितरं श्रुत्वा महता मन्युना समाविष्टः स्वपुरोहितेनाऽभियुक्तो माहेश्वरेण क्रतुना शङ्करमियाज । स तु प्रसन्नः कृष्णजिघां-

सायां समर्थां माहेश्वरीं कृत्यां तस्मै सम्प्रीत्या च दत्तवान्। स काशिराजस्तां माहेश्वरीं ज्वालाकुलोपचितविग्रहां सन्दीप्तसटाकलापां पिङ्गलनेत्रां ज्वलत्करालवदनां त्रिशूलहस्तां भस्माङ्गरागलिप्तां नरमुण्डमालाविभूषितां सर्वदेवभयङ्करीं रुद्रदत्तां नग्नां कृत्यां समीक्ष्य पुत्रदारबान्धवसहितं कृष्णं जहीति प्रेरयामास। सा तु सर्वलोकभयावहा सर्वां पृथ्वीं स्वतेजसा निर्दहन्ती प्रलयाशनिनिर्भरस्वनं नदन्ती द्वारकामवाप। तत्रत्याः सर्वे जनास्तां दृष्ट्वा महाप्रलयोऽयमिति मत्वा हाहाकारं कुर्वन्तः कृष्णं निवेदयाञ्चक्रुः। कृष्णोऽपि तान्सर्वान्न भेतव्यमित्युक्त्वा प्राकारतोरणेस्थितां महारौद्रां कृत्यां तथाविधां दृष्ट्वा सकलशस्त्रास्त्रनिवारणसमर्थं सहस्रारं सुदर्शनं तस्यां कृत्यायां सहसा मुमोच। सा तु कल्पान्तार्ककोटिसमवर्चसा शतयोजनोन्नतं सकलदीप्तास्त्रयुतं हिरण्मयं प्रभापूर्णं सकलजगत्प्रलयस्थितिसमर्थं सहस्रारं सर्वदेवनमस्कृतं जगच्छरणभूतं महासुदर्शनं विलोक्य विनष्टतेजा भयार्त्ता क्रोशन्ती वाराणसीं प्रति दुद्राव। सुदर्शनोऽपि तां कृत्यां भृशमन्वगात्। साऽपि भयार्त्ता क्रोशन्ती काशिपतेस्तस्याऽन्तःपुरं प्रविवेश। सुदर्शनोऽपि तां वाराणसीं पुरीं प्राप्य सभृत्यबलवाहनं पौण्ड्रकसुतं दण्डपाणिं नाम काशिराजं बहुप्रासादहर्म्यमालिनीं पुरीं माहेश्वरीमपि भस्मावशेषां कृत्वा सकलदेवमहर्षिभिःपूज्यमानः पुनरेव द्वारवत्यां कृष्णहस्तं सुसौम्यं कल्पमिव आविदेश॥

॥ अत्रच श्लोकागीयन्ते॥

शस्त्रास्त्रमोक्षमजरं दग्ध्वा तद्बलमोजसा। कृत्या भस्मावशेषांतांततोवाराणसींपुरीम्
प्रभूतरथमातङ्गां साश्वां पुंस्त्रीसमन्विताम्। साशेषकोषकोष्ठां ता दुर्निरीक्ष्या सुरैरपि
द्वारोपलक्षिताशेषगृहप्राकारचत्वराम्। प्रददाह हरेश्चक्रं सकलामेव तां पुरीम्॥
अक्षीणगतिसामर्थ्यमसाध्यकृतसाधनम्। तच्चक्रं प्रस्फुरद्दीप्तं विष्णोरभ्याययौ करम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे श्रीकृष्णचरितेपौण्ड्रकपुत्रकृत्याविध्वंसनंनामैकपञ्चाशदधिकद्विशततमोऽध्यायः॥ २५१॥

# द्विपञ्चाशदधिकद्विशततमोऽध्यायः

## श्रीकृष्णचरित्र जरासन्धवधपूर्वकं कृष्णद्वारासुदाम्नः सतीर्थस्य सादरंसम्मानं तस्मैधनपतित्वदानं महाभाग्याख्यानञ्च

श्रीरुद्र उवाच ।

अथ मगधाधिपः कंसवधानन्तरं द्विरष्टैव यादवान्सदा पीडयामास । ते दुःखिताः कृष्णमूचुः । स च भीमार्जुनावाहूय सम्मन्त्रयामास । कृष्णोऽनेन रुद्रः पूजितस्तत्प्रसादाच्छस्त्रैरवध्यः परं केनाऽपि प्रकारेण हन्तव्य इति । अथ विचार्य भीममाह, एनं प्रति मल्लयुद्धं कुरु तत्तेन प्रतिज्ञातम् । अथ सकलचराचरजगद्वन्द्यो वासुदेवो भीमार्जुनसहितो जरासन्धस्य पुरीं गत्वा विप्रवेषेण तस्याऽन्तःपुरमवाप । सोऽपि महावीर्यान्क्षत्रियान्युद्धे निर्जित्य बलाद्गृहीत्वा स्ववेश्मनि निरुध्य मासि मासि कृष्णाचतुर्दश्यामेकैकं हत्वा तद्रक्तेनैव बलिं भैरवायाऽकरोत् । एवम्विधं सकलजनपार्थिववधं कुर्वतो जरासन्धस्य वधे समुद्यच्छन्भीमार्जुनसहितस्तस्य गृहे विप्रवेषेणैव विवेश । स तु तान्दृष्ट्वा दण्डवत्प्रणतो भूत्वा यथोचितासनेषु निवेश्य मधुपर्कविधानेन सम्पूज्य धन्योऽस्मि कृतकृत्योऽस्मि किमर्थं भवन्तो मे समीपमागतास्तद्वक्तव्यम् तत्सर्वं भवद्भ्यो दास्यामीत्युवाच । तेषां वासुदेवः प्रहसन्पार्थिवं तमुवाच । कृष्णभीमार्जुना युद्धार्थमागताः स्मोऽस्माकमन्यतमं द्वन्द्वयुद्धार्थं वृणीष्वेत्यवदन् । सोऽपि तथेत्यवदत्ततो द्वन्द्वयुद्धार्थं मारुतिं वरयामास । ततो भीमजरासन्धयोरभितो भयङ्करं मल्लयुद्धं निरन्तरं पञ्चविंशतिवासरमभूत् । ततः कृष्णेनैव सञ्चोदितो वायुपुत्रस्तस्य शरीरं द्विधाकृत्य भूमौ निपातयामास । एवं जरासन्धं पाण्डुपुत्रेण हत्वा ताञ्जरासन्धनिरुद्धान्वासुदेवोऽपि पार्थिवान्मोचयामास ॥

॥ अत्र श्लोकौ भवतः ॥

निहत्य वायुपुत्रेण जरासन्धं यदूद्वहः । तद्गृहेसन्निरुद्धांस्तु मोचयामासपार्थिवान् ॥

ते च तत्र नमस्कृत्य स्तुत्वा च मधुसूदनम् ।
स्वान्स्वाञ्जनपदान्सर्वे जग्मुः कृष्णेन रक्षिताः ॥ २ ॥
अथ ताभ्यामिन्द्रप्रस्थं गत्वा वासुदेवस्तत्र महाक्रतुं राजसूयं युधिष्ठिरं कारयामास । तत्र समाप्ते क्रतौ अग्रपूजां भीष्मानुमतेन कृष्णाय दत्तवान् । तत्र शिशुपालः कृष्णं बहून्याक्षेपवाक्यान्युक्तवान् । कृष्णोऽपि सुदर्शनेन तस्य शिरश्चिच्छेद । असौ जन्मत्रयावसाने हरेः सारूप्यमगमत् । अथ शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः कृष्णेन योद्धुं मथुरामाजगाम । कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुरामाययौ । दन्तवक्त्रवासुदेवयोरहोरात्रं मथुरापुरद्वारि यमुनातीरे संग्रामः समवर्त्तत । कृष्णस्तु गदया तं जघान । स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नमहीधर इव गतासुरवनितले पपात । सोऽपि हरेःसायुज्यं योगिगम्यं नित्यानन्दसुखं शाश्वतं परमं पदमवाप । इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृताववतीर्य जन्मत्रयेऽपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ । कृष्णोऽपि तंहत्वा यमुनामुत्तीर्य नन्दव्रजं गत्वा प्राक्तनौ पितरावभिवाद्य आश्वास्य ताभ्यां साश्रुकण्ठमालिङ्गितः सकलगोपवृद्धान्प्रणम्याऽऽश्वास्य रत्नाभरणादिभिस्तत्रस्थान्संतर्पयामास ॥
कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमावृते । गोपनारीभिरनिशं क्रीडयामास केशवः ॥
रम्यकेलिसुखेनैव गोपवेशधरो हरिः । बद्धप्रेमरसेनाऽत्र मासद्वयमुवास ह ॥ ४ ॥
अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेवप्रसादेन दिव्यरूपधरा विमानमारूढाः परमं वैकुण्ठलोकमवापुः । कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूयमानो द्वारवतीं श्रीमतीं विवेश । तत्र वसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः प्रत्यहं सम्पूजितः षोडशसहस्रभार्याभिरष्टाभिर्दिव्यमहिषीभिश्च विश्वरूपधरोदिव्यरत्नमयनानागृहान्तरेषु सुरतरुकुसुमाञ्चितश्लक्ष्णतरपर्यङ्केषु रमयामास । अथ रामकृष्णसतीर्थ्यो विप्रो बालसखा सदाऽत्यन्तदारिद्र्यपीडितः कुचेलो मुष्टिमात्रान्याचनाप्तपृथुकाञ्जीर्णवाससिनिबध्य वासुदेवं द्रष्टुं श्रीमतीं द्वारकानगरीमाजगाम । स तु रुक्मि-

ण्यन्तःपुरद्वारि क्षणं तूष्णीं तस्थौ। कृष्णोऽपि समागतं ब्राह्मणं ज्ञात्वा प्रत्युद्गम्य नमस्कृत्य करं गृहीत्वा गृहान्तरे स्वासने निवेश्य भयाद्वेपमानं तं रुक्मिणीहस्तगतसुवर्णकलशजलेन पादौ प्रक्षाल्य मधुपर्केण पूजयामास। सुधामृतोपमैरन्नपानाद्यैस्तर्पयित्वा तस्य जीर्णवस्त्रान्तरे याचनाप्तपृथुकान्स्वयमेव हस्तेन गृहीत्वा प्रहसञ्जग्रास। कृष्णेन पृथुके भक्षिते तस्मिन्नेव क्षणे तस्य बहुधनधान्ययुतंवस्त्राभरणसम्भृतं महदैश्वर्यमभूत्। स तु कृष्णेन विसृष्टो मम किञ्चिद्वस्त्रं वा धनं वा कृष्णेन न दत्तमिति मन्यमानः स्वपुरं विवेश। अथ बहुधनधान्ययुतं स्वगृहं दृष्ट्वा तत्प्रसादादिदं लब्धमिति वदन्प्रहृष्टेनाऽन्तरात्मना दिव्यवस्त्राभरणादिना भार्यया सह सर्वान्कामान्भुक्त्वा हरिसन्तुष्ट्यै बहुयज्ञानिष्ट्वा तत्प्रसादेन परमं नित्यं स्वर्गसुखमवाप। अथ धृतराष्ट्रतनयो दुर्योधनः पाण्डुतनयान्कपटद्यूतव्याजेन राज्यमपहृत्य स्वराष्ट्राद्विवासयामास। ते तु युधिष्ठिरभीमार्जुननकुलसहदेवाः स्वपत्न्या द्रौपद्या सह महारण्यं गत्वा तत्र द्वादशाब्दान्स्थित्वा संवत्सरपर्यन्तमज्ञाताः सर्वे मत्स्यदेशाधिपतेर्विराटस्य निवेशने स्थित्वा वासुदेवेन सहायेन धार्तराष्ट्रान्योद्धुमाजग्मुः। तेषां धार्तराष्ट्रपाण्डुपुत्राणां नानादेशाधिपनृपैः कुरुक्षेत्रे महापुण्ये देवानामपि भयङ्करो महान्सङ्ग्रामोऽभवत्। अथ श्रीकृष्णोऽप्यर्जुनसारथ्यं कुर्वन्नर्जुने स्वशक्तिमावेश्य तेन दुर्योधनभीष्मद्रोणप्रमुखान्सर्वान्पार्थिवानेकादशाक्षौहिणीबलसहितान्कुरुक्षेत्रे हत्वा पाण्डवान्राज्ये स्थापयित्वा निःशेषेण सर्वभूभारमपास्य स्वां पुरीं प्रविवेश। कस्यचित्त्वथ कालस्य कतिपयाहनि वैदिको ब्राह्मणो मृतं पञ्चवार्षिकं बालमादाय राजद्वारि निधाय बहुशो विलपन्बहून्याक्रोशवाक्यानि कृष्णं जगाद। कृष्णस्तमाक्रोशं श्रुत्वा तूष्णीमुवास। स तु ममपञ्चपुत्राः पूर्वं हता अयं तु षष्ठः एनं कृष्णो न जीवयिष्यति तर्हि राजद्वारि मरिष्यामीत्युवाच। तस्मिन्काले अर्जुनः कृष्णं द्रष्टुमागतस्तथाविधं तं पुत्रशोकेन विलपन्तं ददर्श। अर्जुनोऽपि कालधर्ममुपागतं पञ्चवार्षिकं बालकं दृष्ट्वा कृपयाविष्टस्तव पुत्रमहं जीवयिष्यामीति। ब्राह्मणायाऽभयं दत्त्वा प्रतिश्रुतवान्। ब्राह्मणस्तु तेनाऽऽश्वासितो हृष्टवान्। अथैतं ब्राह्मणशिशुं बहुभिः सञ्जीव-

नास्त्रैरभिमन्त्र्य अलब्धजीवितं दृष्ट्वा वृथाप्रतिज्ञामवाप्य बहुशोकसमन्वितस्तेनैव प्राणांस्त्यक्तुमैच्छत्। कृष्णस्तु तत्सर्वं ज्ञात्वाऽन्तःपुराद्विनिष्क्रम्य तं वैदिकं प्राह तव पुत्रान्सर्वानहं दास्यामीत्युक्त्वाऽऽश्वास्य वैनतेयमारुह्याऽर्जुनसहितो वैष्णवं-लोकमाजगाम। तत्र दिव्यमणिमण्डपोद्देशे देव्या सह समासीनं नारायणं दृष्ट्वा कृष्णार्जुनौ नमश्चक्रतुः। स तौ बाहुभ्यां परिष्वज्य किमर्थमागतावित्युवाच। कृष्णश्च भगवन्वैदिकस्य तनयान्मम देहीत्युवाच। स तु नारायणस्तादृग्वयसि-संस्थितान्ब्राह्मणपुत्रान्कृष्णाय सन्ददौ। श्रीकृष्णोऽपि तान्वैनतेयस्कन्धे समारोप्य हर्षसमन्वितोऽर्जुनसहितः स्वयमप्यारुह्य दिवि देवगणैः संस्तूयमानो द्वारवतीमा-विवेश। तस्मै ब्राह्मणाय पञ्चवर्षवयःस्थान्पुत्रान्ददौ। सोऽप्यत्यन्तहर्षसमन्वितः कृष्णं वर्द्धस्वेत्याशिषं प्रायच्छत्। अर्जुनस्तु सफलां प्रतिज्ञामवाप्य कृष्णं नमस्कृत्य युधिष्ठिरपालितां स्वां पुरीमाजगाम। कृष्णस्य षोडशसहस्रभार्यास्वयुतसाहस्रपुत्रा जज्ञिरे तेषां पुत्रपौत्रसङ्ख्या वक्तुं न शक्यते॥

॥ अत्राऽपि श्लोकः ॥

अष्टौ शतानि पुत्राणां सहस्राण्ययुतं तथा।
प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः॥ ५॥

असङ्ख्यैस्तैर्यादवैरियं पृथिवी सम्भृताऽभवत्। पुनरप्यवनीभारशङ्कया कृष्णस्तु तान्विप्रशापव्याजेन संहर्तुमैच्छत्। कदाचित्सर्वे कुमारा नर्मदायां विहर्तुमाजग्मुः। तत्र तपन्तं कण्वं महर्षिं दृष्ट्वा जाम्बवत्याः पुत्रं योषिद्वेषं कृत्वा तस्योदरे कार्ष्णाय-सं मुसलं बद्ध्वा सर्वे जनाः समागत्य तत्र नमस्कृत्य पप्रच्छुः। मुने कुमारं तस्य पुरतो निधाय अस्या गर्भे स्त्री वा पुरुषो वा भविष्यतीति ब्रूहीत्यूचुः। स तु मनसा तद्विज्ञाय तानमर्षमाणः अनेनैव मुसलेन यूयं सर्वे निहता भवतेत्युवाच। सर्वे समुद्विग्नमनसः कृष्णं समेत्य महर्षिणोक्तं तत्कर्म निवेदयामासुः। कृष्णोऽपि तदा-यसं मुसलं चूर्णीभूतं हृदे निपातयामास। तदयश्चूर्णीभूतं जलमुद्भूता वज्रसन्निभा महाकाशाः संबभूवुः। तत्र तं मुसलावशिष्टं कनिष्ठाङ्गुलिमात्रं मत्स्यो जग्रास। तं

मत्स्यं निषादो गृहीत्वा तदुदरस्थं मुशलखण्डमादाय बाणाग्रे फलकमकरोत्। कदाचित्सर्वे यादवा रामकृष्णप्रद्युम्नादयो महाबलास्तिस्रः कोट्यो महोत्सवयात्रां कर्त्तुं तन्महाह्रदसमीपं जग्मुः। तत्र च बहुमद्यमांसानि भुक्त्वा सर्वे मत्ताः क्रीडार्थं तन्महाह्रदसमुद्भूतान्महाकाशानुत्पाट्य तैर्वज्रधारासन्निभैः परस्परं जघ्नुः। तेन सर्वे प्रद्युम्नादयो यादवा निःशेषं त्यक्तजीविता बभूवुः। ते सर्वे स्वानस्वांस्त्रिदशान्प्रतिपेदिरे। एवं मुशलेन संहृत्य सर्वं स्वयमेको देवो बहुगुल्मसमाकीर्णमहाद्रुमच्छायायां भुतश्चतुर्विधव्यूहगतं वासुदेवात्मकमात्मानं चिन्तयञ्जानूपरि पदं निधायाऽऽत्मनो मानुषं वपुस्त्यक्तुमनुनिषसाद। एतस्मिन्नन्तरे मृगयाजीविको हरेः स तदा कालप्रभावेण चक्रवज्रध्वजांकुशादिचिह्नितमतिरक्ततमं हरेः पादकमलं दृष्ट्वा तन्मृगपोतं मत्वा सकलयदुवंशहरमुसलशकलनिर्मितसायकेन जघान। तदनन्तरं श्रीकृष्णं ज्ञात्वा सुमहाभयार्त्तः प्रवेपमानः कृताञ्जलिपुटो महापराधो मया कृत इतिवदंस्तं प्रणनाम। श्रीकृष्णस्तथाभूतं दृष्ट्वा सुधामयकराभ्यां तमुत्थाप्य भवता नाऽपराधः कृत इतिवदन्महाभयपीडितमाश्वासयन्नुवाच। ततो योगिगम्यमपुनरावृत्तिशाश्वतं सर्वोपनिषन्मयं वैष्णवं लोकं प्रददौ। असौ तस्मिन्नेव मुहूर्त्ते मानुषं रूपं विहाय पञ्चोपनिषन्मयं सकलपुत्रदारसहितो दीप्तिमयं वैष्णवं लोकं दिव्यं विमानमास्थाय सहस्रार्कद्युतिसदृशं दिव्याप्सरोगणाकीर्णं हिरण्मयं वासुदेवलोकं जगाम। तस्मिन्काले दारुको रथमारुह्य विष्णोः समीपं विवेश। कृष्णोऽपि मत्स्वरूपमर्जुनं पूर्वमानयस्वेति प्रेषयामास। स तु मनोजवस्यन्दनमारुह्याऽर्जुनसमीपमाजगाम। एतस्मिन्नन्तरे देवयर्जुनस्तदारुह्य परिणीय नमस्कृत्य किंकरोमीति पुटाञ्जलिरुवाच। कृष्णस्तु तमाह पार्थ! अहं स्वलोकं यास्यामि त्वं तु द्वारवतीं गत्वा तत्रस्था रुक्मिण्याद्यष्टभार्या आनीय मम शरीरे प्रेषय। स दारुकेण सहितो नगरीमाजगाम। एतस्मिन्नन्तरे देवा विमानस्था नभसि संस्थिताःस्वर्लोकं यियासन्तं कृष्णं दृष्ट्वा ऋषिभिः सार्द्धं स्तुत्वा पुष्पवर्षाणि ववृषुः। कृष्णोऽपि मानुषदेहं संन्यस्य सकलजगत्स्थितिसंहारहेतुभूतं सकलक्षेत्रज्ञान्तर्यामियोगिध्येयमनामयं वासुदेवात्मकं देहं धृत्वा वैनतेयमारुह्य

महर्षिभिः स्तूयमानो जगाम। अर्जुनो वसुदेवोग्रसेनाभ्यां रुक्मिण्यादिमहिषीभ्यस्त-न्सर्वं कथयामास। तच्छ्रुत्वा सर्वे पौरजनाः स्त्रियश्च द्वारवतीमुत्सृज्याऽन्तःपुराद्बहिर्निष्क्रम्य सर्वास्ताः कृष्णवल्लभा वसुदेवोग्रसेनसहिताः शीघ्रमेव हरेः समीपं जग्मुः। ते सर्वे वसुदेवोग्रसेनाक्रूरादयो यदुवृद्धास्तान्निहतान्रामकृष्णप्रद्युम्नानिरुद्धादीन्सर्वान्यादवान्दृष्ट्वा महता शोकेन सन्तप्ताःस्वदारैस्सहिता महान्तमग्निं प्रज्वाल्य तस्मिन्प्रविश्य निर्दग्धास्त्यक्तजीविता बभूवुः। तत्सुरतरुचन्दनागरुकाष्ठैश्चितिं कारयित्वा तस्मिन्वैदिकाग्निं प्रज्वाल्य तस्मिन्कृष्णस्य शरीरं निक्षिप्य वेदोक्तविधिना संस्कारमर्जुनश्चकार। कृष्णपत्न्यो रुक्मिणीसत्यभामाकालिन्दीमित्रविन्दाजाम्बवती नाग्नजित्सुशीलासुलक्षणा एताः सर्वामहिष्यस्तमग्निं प्रविश्य च भर्तृशरीरं परिष्वज्य तेनाग्निनानिर्दग्धाः स्वान्स्वानंशान्संमन्त्य दिव्यविमानाधिरूढाः सकलदेवगणसम्पूज्यमाना दिव्याऽप्सरोगणसंकुला वासुदेवलोकमाजग्मुः। रेवती च बलभद्रशरीरं परिष्वज्याऽग्निं प्रविश्य तस्मिन्देहं त्यक्त्वा दिव्यं देहं प्राप्य दिव्यविमानारूढा भर्तुः स्थानं संकर्षलोकं दिव्यमवाप। तथैव प्रद्युम्नेन सह रुक्मिपुत्री तथाऽनिरुद्धेनोषाऽपि सर्वाश्च यादवस्त्रियः स्वस्वभर्तुः शरीराणि परिष्वज्याऽग्निप्रवेशं चक्रुः। तेषां सर्वेषामर्जुनऔर्ध्वदैहिकं कृतवान। तस्मिन्काले दिव्यवाजिसमायुक्तं सुग्रीवाख्यकं सर्वरत्नोपेतं दिव्यं स्यन्दनमारुह्य दारुकोऽपि वैष्णवं लोकं जगाम। पारिजाततरुर्देवसभासुधर्मा च त्रिदशेन्द्रलोकमयाताम्। तस्मिन्समये द्वारवतीपुरी महोदधौ निमग्नाऽभूत। ततः सर्वाः षोडशसहस्रस्त्रियः कृष्णभार्या अर्जुनो गृहीत्वा स्वां पुरीमगच्छत्। तस्मिन्नध्वनि एकेनाऽर्जुनेन समानीतं स्त्रीधनं दस्यवो दृष्ट्वा तदपहर्तुं सत्त्वरमाययुः। तान्समागतान्म्लेच्छान्दृष्ट्वाऽर्जुनोऽपि नैर्योद्धुं धनुरादाय तज्ज्या रोपितुमपि शक्तो नाऽभूत्। धनुर्ग्रहणेऽप्यशक्तमर्जुनं दस्यवो दृष्ट्वा सर्वा योषितो जगृहुः। ताः पूर्वं देवगन्धर्वयोषितो ह्यष्टावक्रं महामुनिं दृष्ट्वा जहसुस्ततस्तेन शप्ता वेश्या भविष्यथेति ततस्ताभिः प्रसादितः पूजितश्च तत्प्रसादात्सर्वलोकैश्च नमस्कृतं वासुदेवं भर्तारमवाप्याऽपि तेनैव दस्युहस्तंगता अभवन। अर्जुनोऽपि दस्युभिर्निर्जितः शोक-

ममाधिष्ठो मम भुजबलं सर्वाय कृष्णेनैव सह सर्वमैश्वर्यं निर्यातमिति मत्वा अद्य मम भाग्यक्षय इतिवदन्सायं सन्ध्यारविरिव निःशेषविनष्टतेजाः स्वां पुरीं समाजगाम। एवं हितार्थाय सर्वदेवानां समस्तभूभारविनाशाय च यदुवंशेऽवतीर्य सकलराक्षसविनाशं कृत्वा महान्तमपि चोर्वीभारं नाशयित्वा नन्दव्रजद्वारकामथुरानिवासिनः सर्वान्स्थावरजङ्गमान्कालभवबन्धैर्मोचयित्वा परमैश्वर्ये शाश्वते योगिगम्ये हिरण्मये रम्ये सात्त्विके संस्थाप्य नित्यं दिव्यमहिष्यादिसंसेव्यमानो वासुदेवउवास॥

अत्र श्लोकाः।

अन्ये सर्वेऽवताराःस्युः कृष्णस्य चरितं महत्। भूभारक्षयविनाशाय प्रादुर्भूतो रमापतिः
एतत्कृष्णस्य चरितं दुष्टानां नाशहेतवे। श्रीकृष्णः करुणासिन्धुर्वैकुण्ठे मोदते सदा।
अत्यद्भुतमिदं देवि! कृष्णस्य चरितं शुभम्। संग्रहेण मयैवोक्तं नव सर्वफलप्रदम्॥८॥
वासुदेवस्य चरितं यः पठेद्धरिसंनिधौ। स्मरेद्वा शृणुयाद्भक्त्या स याति परमं पदम्॥
महापातकयुक्तो वा तथोपपातकसंयुतः। बालकृष्णस्य चरितं श्रुत्वा पापैः प्रमुच्यते
द्वारवत्यां समासीनं रुक्मिणीसहितं हरिम्। स्मरन्वै महदैश्वर्यमनेनाऽऽप्नोत्यसंशयम्
संग्रामे सङ्कटे दुर्गे शत्रुभिः परिवेष्टिते। नेतारं सर्वदेवानां ध्यात्वा सुविजयी भवेत्

यः स्मरेद्गोपकन्याभिः क्रीडन्तं गोव्रजे शुभे।
सर्वकामानवाप्नोति सौभाग्यं चैव विन्दति॥ १३॥

महोपसर्गरोगाद्यैर्युक्तो यस्तु सनातनम्। जेतारं च महारौद्रीं कृत्यां काशीपुरे स्थिताम्
किमत्र बहुनोक्तेन सर्वकालेषु चाप्युमे!। कृष्णाय नमइत्येवं मन्त्रमुच्चारयेद्बुधः॥
कृष्णाय वासुदेवाय हरये परमात्मने। प्रणतक्लेशनाशाय गोविन्दाय नमोनमः॥१६॥
इमं मन्त्रं जपन्देवि! भक्त्या प्रतिदिनं नरः। सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात्
सर्वेषामेव देवानामीश्वरोऽसौ जनार्दनः। रक्षणाय च लोकानामवस्थान्तरमेति वै॥
त्रिपुरं हन्तुकामेन मया सम्पूजितो हरिः। बुद्धरूपधरः श्रीमान्मोहयामास तद्रिपून्॥
मोहितास्तेन शास्त्रेण सर्वधर्मविवर्जिताः। नारायणास्त्रेण मया निहता देवशत्रवः॥
अवतीर्य कलावन्ते ब्राह्मणस्य निवेशने। हनिष्यति तथा रौद्रान्म्लेच्छान्सर्वाञ्जनार्दनः

तैस्तैर्भावैर्मयाऽवस्थाः सर्वाः प्रोक्ता जगत्पतेः ।
किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि शुभानने ! ॥ २२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरित्रे श्रीकृष्णस्वधामगमननिरूपणं नाम
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

### उमामहेश्वरसम्वादे सविष्णुपूजाविधानं वैष्णवाचारकथनम्

श्रीपार्वत्युवाच ।

भगवन्सर्वमाख्यातं वैभवावस्थितं हरेः । एतस्मिन्रामकृष्णाभ्यां चरित्रमतिविस्मितम्
अहो रामस्य चरितं कृष्णस्य च महात्मनः । शृण्वन्त्या मम देवेश! कल्पान्तरशतैरपि
तृप्तिं नैवैति भूतेश ! चेतो हरिकथामृतम् ।
अधुना श्रोतुमिच्छामि विष्णोर्माहात्म्यमुत्तमम् ॥
तत्पूजनविधिं देव ! श्रोतुमिच्छाम्यहं तथा ॥ ३ ॥

श्रीरुद्र उवाच ।

शृणु देवि! प्रवक्ष्यामि हरेश्च सुमहात्मनः । स्थापनं च स्वयंव्यक्तं द्विविधंतत्प्रकीर्त्तितम्
शिलामृद्दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः । श्रौतस्मार्तागमप्रोक्तक्रियासंस्थापनं हि यत्
तत्स्थापनमिति प्रोक्तं स्वयं व्यक्तं हि मे शृणु ।
यस्मिन्संनिहितो विष्णुः स्वयमेव नृणां भुवि ॥ ६ ॥
पाषाणदार्वोरात्मेशः स्वयं व्यक्तंहितत्स्मृतम् । स्वयं व्यक्तंस्थापितम्वापूजयेन्मधुसूदनम्
देवतानां महर्षीणामर्चनार्थं सनातनः । स्वयमेव जगन्नाथः सान्निध्यं याति केशवः ॥

यस्य यद्विग्रहे भोग्यं तद्देवाऽऽविरभूद्भुवि । तद्देव पूजयेन्नित्यं तस्मिन्नेव रमेत्सदा ॥ ६॥
श्रीरङ्गशायीदेवेशोविधिनाऽर्च्यः सुरोत्तमः । सएवेक्ष्वाकुनाथानां तपसाऽऽविरभूद्भुवि
ममाऽपि काश्यां सम्पूज्यो माधवःकलुषापहः । यत्रयत्र गृहे रम्ये स्वयं व्यक्तः सनातनः
तत्रतत्र समागम्य रमेऽहंसम्यवस्थितः । नाऽष्टाङ्गयोगे यज्ञेशस्त्वर्चायांविन्दते नृणाम्
चक्षुषोर्विषयं प्राप्य ददाति वरमीप्सितम् । सर्वावस्थासु सौलभ्यमर्चायां लभ्यते जनैः
अज्ञानामपि सान्निध्यं सर्वदा पृथिवीतले । जम्बूद्वीपे महापुण्ये वर्षे वै भारते शुभे ॥
अर्चायां सन्निधौ विष्णुर्नेतरेषु कदाचन । तत्तस्माद्भारते वर्षे मुनिभिस्त्रिदशैरपि ॥ १५
सेवित सततं देवि! तपोयज्ञक्रियादिभिः । भारतेऽस्मिन्महावर्षे नित्यं सन्निहितो हरिः
रङ्गशृङ्गे तथा कौर्मे सिंहाद्रौ करवीरके । काश्यां प्रयागे सौम्ये च शालग्रामाचलेतथा
द्वारवत्यां नैमिषे च तथा बदरिकाश्रमे । कृतशौचे हरेत्पारंपौण्डरीके च दण्डके ॥
माथुरे वेङ्कटाद्रौ च श्वेताद्रौ गरुडाचले । काञ्च्यामानन्तशयने श्रीरङ्गे वासवाचले ॥
नारायणाचले सौम्ये वाराहे वामनाश्रमे । एवमाद्याःस्वयं व्यक्ताः सर्वकामफलप्रदाः

स्वयमेव हि सान्निध्यं यस्मिन्याति जनार्दनः ।
तस्मिन्नेव स्वयं व्यक्तं वदन्ति मुनयः शुभाः ॥ २१ ॥

महाभागवतश्रेष्ठो विधिनास्थाप्यकेशवम् । मन्त्रेणाकुर्यात्सांनिध्यं स्थापनंतद्विशिष्यते
तस्मिन्संपूजयेद्देवं ग्रामेषु च गृहेषु च । शालग्रामशिलायां तु गृहार्चा सद्भिरिष्यते ॥
अर्चनं मन्त्रपठनं यागयोगो महात्मनः । नामसङ्कीर्तनं सेवा तच्चिह्नैरङ्कनं यथा ॥ २४॥
तदीयाराधनं च स्यान्नवधा भिद्यते शुभे । नवकर्मविधानेज्या विप्रस्य सततं स्मृता॥
महाभागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् । सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः
तापादिपञ्चसंस्कारी नवेज्याकर्मकारकः । अर्थपञ्चकविद्विप्रो महाभागवतः स्मृतः ॥
नवकर्मविधानेज्या क्षत्रियस्य विधीयते । तच्चिह्नैरङ्कनं सेवा तदीयानां च पूजनम् ॥
मन्त्रवर्णस्य जपनं नामसङ्कीर्तनं हरेः । वन्दनं च विशां प्रोक्तं षट्कर्मेज्या विधानतः
नामसङ्कीर्तनं सेवा पूजनं वन्दनं तथा । अर्चनं च तदीयानां पञ्चेज्या शूद्रजन्मनः॥ ३०
साधारणेन सर्वेषां मानसेज्यानृणांप्रिये !। स्वाधिकारानुरूपंच कार्यान्वेज्या जगत्पतेः

अनन्यदेवताभक्तैरनन्यफलसाधकैः । वेदविद्ब्रह्मतत्त्वज्ञैर्वीतरागैर्मुमुक्षुभिः ॥ ३२ ॥
गुरुभक्तिसमायुक्तैः सुप्रसन्नैः सुसाधुभिः । ब्राह्मणैरितरैश्चाऽपि पूजनीयो हरिः सदा॥

यथोचिता च वर्णस्य कार्या इज्या हरेर्नृणाम् ।
वर्णाश्रमानुरूपं च कर्त्तव्यं वैष्णवैः शुभैः ॥ ३४ ॥

श्रुतिस्मृत्युदितंसम्यङ्नित्यमत्रसमाचरेत् ।श्रुतिस्मृत्युक्तकर्माणिनातिक्रामेतबुद्धिमान्
श्रुतिस्मृत्युक्तमाचारं यो न सेवेत वैष्णवः । स च पाखण्डमापन्नो रौरवे नरके वसेत्
तस्माद्वर्णानुरूपां वै कुर्यादिज्यां जगत्पतेः । तस्मात्स्मृत्युक्तमाचारं कुर्याद्धीमानवः सदा
साधारणं हि सर्वेषां मानसेज्या शुभे नृणाम् । स्वाधिकारं निरीक्ष्यैवकर्मकुर्यादतन्द्रितः
शमो दमस्तपः शौचं सत्यमामिषवर्जनम् । अस्तेयमेवाऽहिंसा च सर्वेषां धर्मसाधनम्
तस्माद्वर्णानुरूपेण पूजयेन्मधुसूदनम् । रात्रावन्ते समुत्थाय उपस्पृश्य यथाविधि ॥
नमस्कृत्य गुरुंस्तस्य संस्मरेदच्युतं हृदि । सहस्रनामभिर्भक्त्या कीर्तयेद्वाग्यतः शुचिः
बहिर्ग्रामात्समुत्सृज्य मलमूत्रं यथाविधि । शौचं कृत्वा यथान्यायमाचम्यप्रयतःशुचिः
दन्तधावनपूर्वं तु स्नानं कुर्याद्यथाविधि । आदाय तुलसीमूलमृदं तत्पत्रसंयुताम् ॥४३

मूलमन्त्रेणाऽभिमन्त्र्य गायत्र्या च शुभानने ! ।
मन्त्रेणैवाऽनुलिप्ताङ्गः स्नायात्कृत्वाऽघमर्षणम् ॥ ४४ ॥

हरिपादोद्भवां गङ्गां तत्राऽऽवाह्य सुनिर्मले । निमज्ज्याऽऽशु जपेत्सूक्तमघमर्षणमुत्तमम्
आचम्य मार्जनं कुर्यात्सौरूपोक्तक्रमादथ । पश्चादप्सु निमज्ज्याऽथ मूलमन्त्रंजपेद्बुधः
अष्टाविंशतिवारं वा शतमष्टोत्तरं च वा । प्रार्थयेदभिमन्त्र्याऽथ जलं मन्त्रेण वैष्णवः॥
आचम्यतर्पयेद्देवानृषींश्चैव पितॄंस्तथा । निर्पीड्य वस्त्रमाचम्य धौतवस्त्रेण वेष्टितः ॥

विमलां मृत्तिकां रम्यामादाय द्विजसत्तमः ।
मन्त्रेणैवाऽभिमन्त्र्याऽथ ललाटादिषु वैष्णवः ॥ ४६ ॥

धारयेदूर्ध्वपुण्ड्राणियथासङ्ख्यमतन्द्रितः। उपास्यविधिवत्सन्ध्यांसावित्रीचजपेद्बुधः
संयतात्मा गृहंगत्वा पादौप्रक्षाल्यवाग्यतः । आचम्यैकाग्रमनसा पूजामण्डपमाविशेत्
रम्ये शुभ्रतरे पीठे पुष्पोपचयशोभिते । तस्मिन्निवेश्य देवं तं लक्ष्मीनारायणं प्रभुम् ॥

पूजयेद्विधिना सम्यग्गन्धपुष्पाक्षतादिभिः । स्थापने वा स्वयंव्यक्ते गृहार्चायांविधानतः
श्रौतस्मार्तागमोक्तानामर्चनं विधिनाद्विजः । कुर्याद्भक्त्यायथार्हंचविष्णोःप्रयतमानसः
यथोपदिष्टं गुरुणा तथाकुर्वीत वैष्णवः । श्रौतं वैखानसप्रोक्तंवासिष्ठंस्मार्तमुच्यते
पाञ्चरात्रविधानं च दिव्यागममितीरितम् । क्रियालुप्तं न कर्त्तव्यंविष्णोराराधनं परम्
आवाहनासनार्घ्याद्यैर्गन्धपुष्पाक्षतादिभिः । धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलाद्यैर्नमस्कृतैः ॥
कुर्यादाराधनं विष्णोर्यथाशक्ति मुदान्वितः । प्रत्यृचं पुरुषसूक्तेन मूलमन्त्रेण वैष्णवः
मन्त्रद्वयेन कुर्वीत षोडशैरुपचारकैः । भूयः प्रत्युपचारेषु दद्यात्पुष्पाञ्जलिं ततः ॥६०॥
आवाहयेज्जगन्नाथं मुद्रया चैव वैष्णवः । आसनं तु यथा दद्यात्पुष्पकेण च मुद्रया ॥
पाद्यार्घ्याचमनं स्नानं पात्रस्थैर्विमलैर्जलैः । मङ्गलद्रव्यसंयुक्तैस्तुलसीदलमिश्रितैः ॥६१॥
दद्यात्प्रत्युपचारं तु मूलमन्त्रद्वयेन च । सुवासितेन तैलेन कुर्यादभ्यञ्जनं ततः ॥६२॥

कस्तूर्या चन्दनेनाऽपि कुर्यादुद्वर्त्तनादिकम् ।
सुगन्धवासितैस्तोयैः स्नाप्य मन्त्रयुतैः शुभैः ॥ ६३ ॥

वस्त्रैराभरणैर्दिव्यैरलङ्कृत्य यथाविधि । मधुपर्कं ततो दद्याद्गन्धं दद्यात्सुवासितम् ॥
सुरभीणि सुपुष्पाणि भक्त्या सम्यङ्निवेदयेत् । धूपं दशाङ्गमष्टाङ्गं दीपं च सुमनोहरम्
नैवेद्यं विविधं दद्यात्पायसापूपमिश्रितम् । कर्पूरं तु सताम्बूलं भक्त्या चैव निवेदयेत्
दीपैर्नीराजनं कृत्वा पुष्पमालां समर्पयेत् । परिणीय प्रणम्याऽथ स्तुत्वास्तोत्रैरनुत्तमैः
गरुडाङ्के शाययित्वा मङ्गलार्घ्यं निवेदयेत् । संकीर्त्यनामभिःपुण्यैःपश्चाद्धोमंसमाचरेत्
हरेर्नैवेद्यशेषेण जुहुयाद्वह्निमण्डले । प्रत्यृचं पौरुषं सूक्तं श्रीसूक्तं मङ्गलाह्वयम् ॥ ६८ ॥
होतव्यमाज्यसंमिश्रं हविषा वैदिकानले । प्रोक्तेन मन्त्ररत्नेन जुहुयाद्भक्तिसंयुतम् ॥
अष्टोत्तरशतवारमष्टाविंशतिमेव च । यज्ञरूपं महाविष्णुं ध्यायन्वै जुहुयाद्धविः ॥७१॥
शुद्धजाम्बूनदनिभं शङ्खचक्रगदाधरम् । समस्तवेदवेदान्तसाङ्गोपाङ्गयुतं प्रभुम् ॥ ७२ ॥

देव्या श्रिया समासीनं ध्यात्वा होमं समाचरेत् ।
एकैकामाहुतिं पश्चान्नामभिर्जुहुयाद्धविः ॥ ७३ ॥

नित्यान्भक्तान्समुद्दिश्य महाभागवतोत्तमः । भूनीला विमलाद्याश्च शक्तयःप्रथमं क्रमात्

अनन्तविहगेन्द्रादिदेवतास्तदनन्तरम् । वासुदेवादयः पश्चात्तथा शक्त्यादिदेवताः ॥७७॥
मूर्तयः केशवाद्याश्च तथा संकर्षणादयः । मत्स्यकूर्मादयश्चैव तथा चक्रादिहेतयः ॥
कुमुदादयश्च त्रिदशास्तथा चन्द्रादिदेवताः । इन्द्रादिलोकपालाश्च तथा धर्मादिदेवताः

होतव्याः क्रमशस्तस्मिन्सम्पूज्याश्च विशेषतः ।
एतद्वैकुण्ठहोमं तु महाभागवतोत्तमः ॥ ७८ ॥

नित्यार्चनविधौ नित्यं कुर्वीत सुसमाहितः । गृहार्चने गृहद्वारि पञ्चयज्ञविधानतः ॥
दत्त्वा बलिं विधानेन पश्चादाचमनं चरेत् । उपविश्याऽऽसने शुभ्रे कृष्णाजिनकुशोत्तरे
मन्त्रयोगं प्रकुर्वीत भोगार्थं सुखमात्मनः । सम्यक्पद्मासनासीनो भूतशुद्धिं समाचरेत्
प्राणायामत्रयं कुर्यान्मन्त्रेण विजितेन्द्रियः । उदङ्मुखं ततः कृत्वा हृत्पङ्कजमनुत्तमम्
विकासं तस्य कुर्वीत विज्ञानरविणा हृदि । तत्कर्णिकायां वह्न्यर्कशशिबिम्बान्यनुक्रमात्
त्रयं त्रयीमये तस्मिश्चिन्तयेद्ब्राह्मणोत्तमः । नानारत्नमयं पीठं तेषामुपरि चिन्तयेत् ॥
तस्मिन्हृत्पद्ममूलान्ते बालार्कसदृशद्युति । अष्टैश्वर्यदलं पद्मं मन्त्राक्षरमयं चरेत् ॥८०॥

तस्मिन्देव्या समासीनं कोटिशीतांशुसन्निभम् ।
चतुर्भुजं सुन्दराङ्गं शङ्खचक्रगदाधरम् ॥ ८१ ॥

पद्मपत्रविशालाक्षं सर्वलक्षणलक्षितम् । श्रीवत्सकौस्तुभोरस्कं पीतवस्त्रधरं प्रभुम् ॥
विचित्राभरणैर्युक्तं दिव्यमण्डनमण्डितम् । दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पोपशोभितम्
तुलसीकोमलदलवनमालाविभूषितम् । बालार्ककोटिसदृशं कान्त्या देव्या श्रिया सह
सर्वलक्षणलक्षण्या समाश्लिष्टतनुं शिवम् । एवं ध्यात्वा जपेन्मन्त्रं समाहितमनाःशुचिः
सहस्रं शतवारं वा यथाशक्त्यथवाऽपि च । मनसैवाऽर्चनं कृत्वा विरमेत्तत्र भक्तितः

तदीयानर्चयेद्भक्त्या तस्मिन्काले समागतान् ।
तर्पयित्वाऽन्नपानाद्यैरनुव्रज्य विसर्जयेत् ॥८२॥

अर्चयित्वा पितृन्देवांस्तर्पयेच्च विधानतः । सम्पूज्याऽतिथिभृत्यांश्च भुञ्जीयातां च दम्पती
यक्षराक्षसभूतानामर्चनं वर्जयेत्सदा । यो मोहात्कुरुते विप्रः स चाण्डालो भवेद्ध्रुवम्
यक्षाणां च पिशाचानां मद्यमांसभुजां तथा । दिवौकसां तु भजनं सुरापानसमंस्मृतम्

ब्रह्मराक्षसवेतालयक्षभूतार्चनं नृणाम् । कुम्भीपाकमहाघोरनरकप्राप्तिसाधनम् ॥९६ ॥
कोटिजन्मकृतं पुण्यं यज्ञदानक्रियादिकम् । सद्यः सर्वं लयं याति यक्षभूतादिपूजनात्

नारी वा पुरुषो वाऽपि यक्षभूतादिकार्चनात् ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ९८ ॥
कृमिर्भूत्वाऽथ विष्ठायां पितृभिः सह मज्जति ।
यक्षाणां च पिशाचानां तामसानां दिवौकसाम् ॥ ९९ ॥

निवेदितान्नंयोऽश्नातिपूयशोणितभुग्भवेत् । यक्षान्भूतगणांश्चान्यान्क्रूरान्वैब्रह्मराक्षसान
उद्दिश्य भुङ्क्तेयोविप्रः सद्यश्चाण्डालएव सः । यानारीपूजयेद्यक्षान्पिशाचोरगराक्षसान
सा याति नरकं घोरं कालसूत्रमधोमुखी । पतिना सह कल्पान्तमुषित्वा तत्र दारुणे॥
लिह्यान्मूत्रपुरीषं वै कृच्छ्रात्सुचिमुखैस्तथा । कृमिभिर्भक्ष्यमाणाङ्गीयावदाभूतसम्प्लवम्
पश्चाद्भूमौ दशाहेषु जायते शतसंख्यया । तस्माद्यक्षादिकानां च देवानामर्चनं त्यजेत
स्वतन्त्रपूजनं यत्र वैदिकानामपि त्यजेत् । अर्चयित्वा जगद्वन्द्यं देवं नारायणं हरिम्
तदावरणसंस्थानं देवस्य परितोऽर्चयेत् । हरेर्भुक्तावशेषेण बलिं तेभ्यो विनिक्षिपेत् ॥
होमं चैव प्रकुर्वीत तच्छेषेणैव वैष्णवः । हरेर्निवेदितं सम्यग्देवेभ्यो जुहुयाद्धविः ॥
पितृभ्यश्चाऽपि तद्दद्यात्सर्वमानन्त्यमाप्नुयात् । प्राणिनांपीडनंयत्तद्धिदूषां निरयाय वै
अदत्तं चैव यत्किञ्चित्परस्वं गृह्यते नरैः । स्तेयं तद्विद्धि गिरिजे! नरकस्यैव कारणम
लशुनं मद्यपानादिमूलकं गृञ्जनं तथा । तिलपिष्टं शिग्रुबिल्वं तथा कोशातकीं तथा ॥

अलाबुं चैव वार्ताकं वांजालीं कवचानि च ।
एवमन्यान्यभक्ष्याणि शास्त्रदुष्टानि वै नरः ॥ १११ ॥

खादन्नरकमाप्नोति विचित्रमशिवं तथा । अवैष्णवानां यच्चाऽन्नं पतितानां तथैव च ॥
अनर्पितं तथा विष्णोः श्वमांससदृशं भवेत् । यक्षराक्षसभूतान्नं सुरामद्यञ्च गृञ्जनम् ॥
योऽश्नाति निरयं याति पूयशोणितभोजनम् । एतैः संस्थापनस्पर्शसहवासादिभिर्नरः
येऽपि यान्त्येव निरयं विण्मूत्रकृमिभोजनम् । पतितानांच संसर्गात्पाखण्डानांतथैव च
सर्वयज्ञस्य भोक्तारं पुराणं पुरुषोत्तमम् । ज्ञात्वासर्वं प्रकुर्वीतनित्यनैमित्तिकाः क्रियाः

यक्षराक्षसभूताश्च कूष्माण्डगणभैरवाः । नाऽर्चनीयाःसदा देवि!स्वर्गलोकमभीप्सुभिः
यक्षराक्षसभूतानामर्चनं वर्जयेद्द्विजः । पैशाचत्वमवाप्नोति कल्पकोटिशतत्रयम ॥११८
तस्माद्राक्षसभूतानामर्चनं प्रतिषिध्यते । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥
रौरवं नरकं याति यक्षभूतगणार्चनात । शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः॥१२०

रहितः सर्वधर्मेभ्यः प्रच्युतो नरकंव्रजेत् ।
अगम्यागमनाद्धिंसापरद्रव्यापहारणात् ॥ १२१ ॥

अभक्ष्यभक्षणात्सद्योनरकंसमवाप्नुयात् । यस्तुपाणिगृहीतांचहित्वान्यांऽयोषितंव्रजेत
अगम्यागमनं तद्धि सद्यो नरककारकम् । पतितानां च संसर्गात्पाखण्डानां तथैव च॥
विकर्मस्थानां च तथा यात्येव निरयं नरः । संसर्गिणां च संसर्गतत्संसर्गमपित्यजेत
वैष्णवः कुलमेकं तु वर्जयेत्पापसंयुतम । एकान्ती सन्त्यजेद्ग्रामं महापातकमिश्रितम
तथैव परमैकान्ती तद्देशमपि वर्जयेत् । स्वकर्मज्ञानभक्त्यादिसाधनं वैष्णवं स्मृतम् ॥
हरेराज्ञानुरूपेण कर्मज्ञानादि यश्चरेत् । स एकान्ती भवेद्विप्रो वासुदेवपरायणः ॥१२७

अकृत्यं वैष्णवः पापबुद्ध्या सम्यक्परित्यजेत ।
एकान्ती सन्त्यजेच्छास्त्रं दूषणान्मनसाऽपि च ॥ १२८ ॥

तथैव परमैकान्तीहेयबुद्ध्यापरित्यजेत् । नित्यं नैमित्तिकं काम्यं कृत्यंतुत्रिविधंस्मृतम
ज्ञानंतथैवलोकेऽस्मिन्मुनिभिःसम्प्रकीर्त्तितम् । कृत्याकृत्यविवेकश्चपरलोकस्यचिन्तनम
तत्प्राप्तिसाधनं विष्णोः स्वरूपज्ञानमेव च । भक्तियुक्तो भवेद्भक्तो नवधा सा प्रकीर्त्तिता
सुदर्शनोर्द्ध्वपुण्ड्रादितच्चिह्नैरङ्कनं शुभम् । सद्गुरोर्मन्त्रपठनमर्चनं विधिना हरेः॥१३२
स्मरणं कीर्त्तनं विष्णोः सेवा च परमात्मनः । प्रणामस्तस्यपुरतस्तदीयानाञ्च पूजनम्
प्रसादतीर्थसेवा च भक्तिर्नवविधा स्मृता । यस्मात्प्रपद्यते देवं शरणं वैष्णवो हरिम

प्रपत्तिः सा तु विज्ञेया त्रिविधा सम्प्रकीर्त्तिता ।
तामसी राजसी चैव सात्त्विकी त्रिविधा स्मृता ॥ १३५ ॥

सापित्रिधाकृतासिद्धिःसामान्यासर्वदेहिनाम् । एतच्चतुष्टयं देवि! हेयं सन्त्यज्य वैष्णवः
उपायभूतं ब्रह्मैवमवलम्बेत वैष्णवम् । उपायभावात्सन्त्यज्य कर्मज्ञानादिकं नरः ॥

कुर्वीत भगवत्प्रीत्यै महाभागवतोत्तमः । त्रिकालमर्चयेद्विष्णुं भक्त्या वै पुरुषोत्तमम् ॥
नैमित्तिके विशेषेण पूजयेद्विधिना शुभे । प्रत्यहं कार्त्तिके मासि जातीपुष्पैः समर्च्चयेत्
दद्यादखण्डदीपं च नियतात्मा दृढव्रतः । ब्राह्मणान्भोजयित्वाऽन्ते हरिसायुज्यमाप्नुयात्
धनुष्युषसि देवेशं मासमेकं निरन्तरम् । अर्चयेदुत्पलैर्देवि! करवीरैः सितासितैः ॥४१
धूपदीपैश्च नैवेद्यैर्यथाशक्त्या निवेदयेत् । समाप्तौ भोजयेद्विप्रान्महाभागवतोत्तमान् ॥
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयम् । तपोमास्युदिते भानौ स्नात्वा नद्यां विशेषतः
अर्चयेन्माधवं पुष्पैरुत्पलैश्च शुभानने ॥ पायसं सघृतं दिव्यं भक्त्या तत्र निवेदयेत् ॥
स्नात्वा सम्पूजयेद्विष्णुं मासमेकं निरन्तरम् । शर्कराम्बुयुतं नित्यमुद्यानं विनिवेदयेत्
वैष्णवान्पूजयेद्भक्त्या मासान्ते शुभदर्शने ॥ मधुमासि तथा नित्यं बकुलैश्चम्पकैरपि॥
पूजयेज्जगतामीशं गुडान्नञ्च निवेदयेत् । मासान्ते वैष्णवान्विप्रान्भोजयेत्सुसमाहितः
सहस्रवार्षिकीं पूजां प्रति नित्यमवाप्नुयात् । माधवे पूजयेद्देवं शतपत्रैर्महोत्पलैः॥१४८
पूजयित्वा विधानेन दध्यन्नं फलसंयुतम् । गुडोदकं भक्त्या वै तस्मिन्देवि! निवेदयेत्
लक्ष्म्या युक्तो जगन्नाथः प्रीतो भवति पार्वति ॥ शुक्रे तु शुक्लकमलैः पाटलैः कुमुदोत्पलैः
अर्चयित्वा हृषीकेशमन्नं चूतफलैर्युतम् । निवेदयित्वा भक्त्या वै गवां कोटिप्रदो भवेत्

वैष्णवान्भोजयित्वाऽथ सर्वमानन्त्यमाप्नुयात् ।
आषाढे देवदेवेशं लक्ष्मीभर्तारमच्युतम् ॥ १५२ ॥

श्रीपुष्पैरर्चयेन्नित्यं पायसान्नं निवेदयेत् । मासान्ते भोजयेद्विप्रान्महाभागवतोत्तमान्
षष्टिवर्षसहस्रस्य पूजां प्राप्नोत्यसंशयम् । नभोमास्यर्चयेद्विष्णुं पुन्नागैः केतकीदलैः ॥

अर्चयित्वाऽच्युतं भक्त्या न भूयो जन्मभाग्भवेत् ।
दद्यादपूपान्भक्त्याऽथ शर्करामृतमिश्रितान् ॥१५५ ॥

ब्राह्मणान्भोजयेत्तद्वत्सर्वमानन्त्यमाप्नुयात् । नभस्येऽप्यर्चयेद्देवेशं कुन्दैः कुरवकैरपि ॥
क्षीरान्नं गुडसम्मिश्रं भक्त्या तत्र निवेदयेत् । गवां कोटिप्रदानस्य प्रत्यहं फलमाप्नुयात्
नीलोत्पलैरिषे मासि पूजयेन्मधुसूदनम् । भक्त्या निवेदयेत्तस्मिन्क्षीरमापूपमिश्रितम्
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वैष्णवं लोकमाप्नोति मुदितः स्वजनैर्वृतः

ऊर्जे मासि तथा देवि ! कोमलैस्तुलसीदलैः ।

पूजयित्वाऽच्युतं भक्त्या तत्सायुज्यमवाप्नुयात् ॥१६८ ॥

क्षीराज्यशर्करोपेतमन्नं वै पायसं तथा । अपूपं च करेणैव भक्त्या सम्यङ्निवेदयेत् ॥

अमायां मन्दवारे च वैष्णवर्क्षे तथैव च । रविसंक्रमे व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ॥

विशेषेणार्चयेद्विष्णुं यथाशक्त्या वरानने !। गुरोरुत्क्रान्तिदिवसे जन्मर्क्षेषु तथा हरेः॥

इष्टिं च वैष्णवीं कुर्याच्छ्रद्धया वै द्विजसत्तमः । दद्यात्पुष्पाञ्जलिं तत्र प्रत्यृचं वेदसंमितम्

पारणञ्चाऽपि कुर्वीत चरुणा पायसेन वा ।

वैष्णवान्भोजयेद्विप्राञ्छ्रद्धया दद्याच्च दक्षिणाम् ॥ १६९॥

कुलकोटिं समुद्धृत्य वैष्णवं पदमाप्नुयात् । सर्ववेदैरशक्तश्चेदष्टुं भागवतोत्तमः ॥

वैष्णवैरनुवाकैर्वा समग्रान्नं निरन्तरम् । पुष्पाञ्जलिसहस्रन्तु होमं च प्रत्यहं चरेत् ॥

प्रीतये वा भगवतः प्रतिश्लोकं यजेद्बुधः । अथवा मन्त्ररत्नं हि समग्रं निरन्तरम् ॥

अष्टोत्तरसहस्रं तु जुहुयाद्धविषा यजेत् । विशेषेणाऽर्चयेद्विद्वान्महाभागवतोत्तमान् ॥

अन्ते चाऽवभृथं कुर्याद्यथाविभवसारतः । वैष्णवैरनुवाकैश्च कुर्यादवभृथं द्विजः॥१७०

अत्र स्नात्वा विधानेन यथाशक्त्या द्विजोत्तमः । शुभेपात्रान्तरैरम्ये पादौप्रक्षाल्यभक्तितः

अर्चयेद्गन्धपुष्पाद्यैर्वस्त्रैराभरणादिभिः । ताम्बूलेन फलैर्वाऽपि यथाशक्त्या समर्चयेत्

भोजयित्वाऽन्नपानाद्यैः प्रणम्य च पुनःपुनः । आसीमान्तमनुव्रज्य नमस्कृत्यविसर्जितम

पुनः प्रणम्य भक्त्याऽथ शनैस्तत्रनिवर्तितः । गृहं प्रविश्य देवेशं पूजयेत्प्रयतात्मवान् ॥

एवमभ्यर्चयेद्विष्णुं यावज्जीवमतन्द्रितः । तदीयाश्च विशेषेण पूजयन्सर्वदा शुभे ! ॥

आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात्परतरं देवि ! तदीयानां समर्चनम्

अर्चयित्वाऽपि गोविन्दं तदीयान्नाऽर्चयेत्पुनः ।

न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः ॥ १७१ ॥

पुमांस्तस्मात्प्रयत्नेन वैष्णवान्पूजयेत्सदा । सर्वं तरति दुःखौघं महाभागवतार्चनात्

एवमुक्तं मया देवि! विष्णोराराधनं परम् । नित्यनैमित्तिकं चैव तदीयानां च पूजनम्

पौरुषं तस्य याथात्म्यं फलसाधनमेव च । तस्याऽऽवसथभेदं च कर्माद्यपि चतुष्टयम्

तव प्रोक्तं मया देवि ! किमन्यच्छ्रोतुमिच्छसि ॥ १८० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे विष्णुपूजाविधानवैष्णवाचारकथनं नाम त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३॥

# चतुष्पञ्चाशदधिकद्विशततमोऽध्यायः

## पार्वत्यै वामदेवर्षिणा श्रीविष्णोर्दिव्यसहस्रनाम्नामुपदेशः श्रीरामशब्दनिर्वचने महादेवद्वारा सहस्रनामतुल्यताप्रतिपादनं श्रीरामचन्द्राष्टोत्तरशतनामकथनञ्च

वसिष्ठ उवाच ।

एवमुक्ता तु सा देवी पतिना शूलपाणिना । प्रणिपत्य महात्मानमुवाच प्राञ्जलिस्तदा

पार्वत्युवाच ।

साधूक्तं हि त्वया नाथ वैष्णवं धर्ममुत्तमम् । गुह्याद्गुह्यतरं विष्णोः स्वरूपं परमात्मनः

धन्याऽस्मि कृतकृत्याऽस्मि सर्वदेवनमस्कृत !। तव प्रसादाद्देवेशमर्चयामि सनातनम्

वसिष्ठ उवाच ।

ततस्तद्वचनं श्रुत्वा स भवस्त्रिपुरान्तकः । समाश्लिष्याऽवदद्देवीं प्रहृष्टेनाऽन्तरात्मना

रुद्र उवाच ।

साधुसाधु महादेवि! साधु साधु वरानने !। अर्चयस्व हृषीकेशं लक्ष्मीभर्त्तारमच्युतम्

कृतकृत्योऽस्म्यहं भद्रे! वैष्णव्या भार्यया त्वया । गुरुणा तव चार्वङ्गि! वामदेवेन धीमता

अनुज्ञाताऽर्चयस्वेशं पुराणं पुरुषोत्तमम् । गुरूपदेशमार्गेण पूजयित्वैव केशवम् ॥

प्राप्नोति वाञ्छितं सर्वं नाऽन्यथा भूधरात्मजे ! ॥ ७ ॥

वसिष्ठ उवाच ।

एवमुक्ता तदा देवी वामदेवान्तिकं नृप !। जगाम सहसा हृष्टा विष्णुपूजनलालसा ॥

समेत्य तं गुरुं देवी पूजयित्वा प्रणम्य च । विनीताप्राञ्जलिर्भूत्वा उवाच मुनिसत्तमम्

पार्वत्युवाच ।

भगवंस्त्वत्प्रसादेन सम्यगाराधनं हरेः । करिष्यामि द्विजश्रेष्ठ ! त्वमनुज्ञातुमर्हसि ॥

वसिष्ठ उवाच ।

इत्युक्तस्तु तया देव्या वामदेवो महामुनिः । तस्यै मन्त्रवरं श्रेष्ठं ददौ स विधिनागुरुः

नाम्नां सहस्रं विष्णोश्च प्रोक्तवान्मुनिसत्तमः । निवेदयित्वापूजायाविधानमपि देशिकः

उवाच परमप्रीत्या पार्वतीं संशितव्रताम् ॥ १२ ॥

वामदेव उवाच ।

अर्चयित्वा हृषीकेशं प्रातर्नित्यं वरानने ! । सहस्रनामपठनं कुरुष्व तदनन्तरम् ॥ १३ ॥

वसिष्ठ उवाच ।

इत्युक्ता तेन गुरुणा प्रहृष्टेनाऽन्तरात्मना । पूजयित्वा नमस्कृत्य पुनरागात्स्वमालयम्

शिक्षिता गुरुणा तेन वामदेवेन पार्वती । तथा समर्चयामास नित्यं भक्त्या सनातनम्

जपन्ती नामसाहस्रं प्रतिनित्यमतन्द्रिता । उवास सुसुखेनैव पतिना संशितव्रता ॥१६

ततः कतिपयाहस्तु द्वादश्यां वृषभध्वजः । कैलासशिखरे रम्ये विष्णुमाराध्य शङ्करः॥

उपविष्टस्ततो भोक्तुं पार्वतीं शङ्करोऽब्रवीत् ॥ १७ ॥

शङ्कर उवाच ।

पार्वत्येहि मया सार्द्धं भोक्तुं भुवनवन्दिते ! ॥ १८ ॥

वसिष्ठ उवाच ।

तमाह पार्वती देवी जप्त्वानामसहस्रकम् । ततो भोक्ष्याम्यहंदेव भुज्यतां भवता प्रभो!

ततस्तां पार्वतीं प्राह प्रहसन्परमेश्वरः ॥ १९ ॥

शङ्कर उवाच ।

धन्याऽसि कृतकृत्याऽसि विष्णुभक्ताऽसि पार्वति ! ।

दुर्लभा वैष्णवी भक्तिर्भागधेयं विनेश्वरि ! ॥ २० ॥

रमन्तेयोगिनोऽनन्ते सत्यानन्दे चिदात्मनि । तेन रामपदेनाऽसौ परं ब्रह्माऽभिधीयते

रामरामेति रामेति रमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ! ॥ २२ ॥
रकारादीनि नामानि शृण्वतो मम पार्वति । मनः प्रसन्नतां याति रामनामाभिशङ्कया॥
रामेत्युक्त्वा महादेवि ! भुङ्क्ष्व सार्धं मयाऽधुना ॥ २३ ॥

वसिष्ठ उवाच ।

ततो रामेति नामोक्त्वासहभुक्त्वाऽथपार्वती । रामेत्युक्त्वामहादेवीशम्भुनासहसंस्थिता
पप्रच्छ शङ्करं देवं प्रीतिप्रवणमानसा ॥ २४ ॥

पार्वत्युवाच ।

सहस्रनामभिस्तुल्यंरामनामत्वयोदितम् । तस्याऽपराणिनामानि सन्तिचेद्रावणद्विषः
कथ्यतां मम देवेश! तत्र मे भक्तिरुत्थिता ॥ २५ ॥

श्रीमहादेव उवाच ।

शृणु नामानि वक्ष्यामि रामचन्द्रस्य पार्वति ! ।
लौकिका वैदिकाः शब्दा ये केचित्सन्ति पार्वति ! ॥ २६ ॥
नामानि रामचन्द्रस्य सहस्रन्तेषुचाधिकम् । तेषुचात्यन्तमुख्यं हि नाम्नामष्टोत्तरंशतम्
विष्णोरेकैकनामैव सर्ववेदाधिकं मतम् । तादृङ्नामसहस्राणि रामनामसमानि च ॥
यत्फलं सर्ववेदानां मन्त्राणां जपतःप्रिये !। तत्फलं कोटिगुणितं रामनाम्नैव लभ्यते
नामानि शृणु रामस्यमुख्यानि शुभदर्शने !। ऋषिभिःपरिगीतानितानिवक्ष्यामितेप्रिये!
ॐश्रीरामो रामचन्द्रश्च रामभद्रश्च शाश्वतः । राजीवलोचनःश्रीमान्राजेन्द्रो रघुपुङ्गवः
जानकीवल्लभो जैत्रो जितामित्रो जनार्दनः । विश्वामित्रप्रियो दान्तः शरणागतवत्सलः
वालिप्रमथनो वाग्मी सत्यवाक्सत्यविक्रमः । सत्यव्रतो व्रतफलः सदा हनुमदाश्रयः
कौशलेयः खरध्वंसी विराधवधपण्डितः । विभीषणपरित्राता दशग्रीवशिरोहरः ॥३४
सप्ततालप्रभेत्ता च हरकोदण्डखण्डनः । जामदग्न्यमहादर्पदलनस्ताडकान्तकृत् ॥ ३५॥
वेदान्तपारो वेदात्मा भवबन्धैकभेषजम् । दूषणत्रिशिरोऽरिश्च त्रिमूर्त्तिस्त्रिगुणात्मकः
त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्त्तनः ।
त्रिलोकरक्षको धन्वी दण्डकारण्यवासकृत् ॥ ३७ ॥

अहल्यापावनश्चैव पितृभक्तो वरप्रदः। जितेन्द्रियो जितक्रोधो जितलोभो जगद्गुरुः
ऋक्षवानरसङ्घाती चित्रकूटसमाश्रयः। जयन्तत्राणवरदः सुमित्रापुत्रसेवितः ॥ ३९ ॥
सर्वदेवाधिदेवश्च मृतवानरजीवनः। मायामारीचहन्ता च महाभागो महाभुजः ॥४०॥
सर्वदेवस्तुतः सौम्यो ब्रह्मण्यो मुनिसत्तमः। महायोगी महोदारः सुग्रीवस्थिरराज्यदः
सर्वपुण्याधिकफलः स्मृतः सर्वाघनाशनः। आदिपुरुषो महापुरुषः परमः पुरुषस्तथा॥
पुण्योदयो महासारः पुराणपुरुषोत्तमः। स्मितवक्त्रो मितभाषी पूर्वभाषी च राघवः
अनन्तगुणगम्भीरो धीरोदात्तगुणोत्तरः। मायामानुषचारित्रो महादेवाधिपूजितः ॥
सेतुकृज्जितवारीशः सर्वतीर्थमयो हरिः। श्यामाङ्गः सुन्दरः शूरः पीतवासा धनुर्द्धरः ॥
सर्वयज्ञाधिपो यज्वा जरामरणवर्जितः। शिवलिङ्गप्रतिष्ठाता सर्वाघगणवर्जितः ॥४६ ॥
परमात्मापरब्रह्मसच्चिदानन्दविग्रहः। परं ज्योतिः परं धाम पराकाशः परात्परः ॥४७॥
परेशः पारगः पारः सर्वभूतात्मकः शिवः। इति श्रीरामचन्द्रस्य नाम्नामष्टोत्तरं शतम्
गुह्याद्गुह्यतरं देवि! तव स्नेहात्प्रकीर्त्तितम्। यः पठेच्छृणुयाद्वाऽपि भक्तियुक्तेन चेतसा
सर्वैः प्रमुच्यतेपापैःकल्पकोटिशतोद्भवैः। जलानि स्थलतांयान्तिशत्रवोयान्तिमित्रताम्

राजानो दासतां यान्ति वह्नयो यान्ति सौम्यताम्।

आनुकूल्यं च भूतानि स्थैर्यं यान्ति चलाः श्रियः ॥ ५१ ॥

अनुग्रहं ग्रहा यान्ति शान्तिमायान्त्युपद्रवाः। पठतो भक्तिभावेन नरस्य गिरिसम्भवे!
यः पठेत्परया भक्त्या तस्य वश्यं जगत्त्रयम्। यं यं कामं प्रकुरुतेतन्तमाप्नोति कीर्त्तनात्
कल्पकोटिसहस्राणि कल्पकोटिशतानि च। वैकुण्ठे मोदते नित्यं दशपूर्वैर्दशापरैः ॥
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम्। स्तुवन्ति नामभिर्दिव्यैर्नतेसंसारिणोजनाः
रामाय रामभद्राय रामचन्द्राय वेधसे। रघुनाथाय नाथाय सीतायाः पतये नमः ॥
इमं मन्त्रं महादेवि! जपन्नेव दिवानिशम्। सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात्
इति ते रामचन्द्रस्य माहात्म्यं वेदसम्मितम्। कथितंवैमयासुभ्रूस्तवप्रीत्या शुभाह्वयम्

वसिष्ठ उवाच।

तच्छ्रुत्वा शङ्करेणोक्तं माहात्म्यं परमात्मनः। प्रहर्षमतुलं लेभे आनन्दाश्रुजलाप्लुता ॥

प्रणम्य प्राह देवेशं भर्तारं वृषभध्वजम् ॥ ५९ ॥

पार्वत्युवाच ।

अहो माहात्म्यमतुलं रामस्य परमात्मनः । श्रोत्रतृप्तिर्हि मे न स्यात्कल्पायुतशतैरपि॥
धन्याऽहंकृतकृत्याऽस्मिसर्वमुक्तंत्वयाऽनघ !। त्वत्प्रसादाद्धरेभक्तिर्जन्मजन्मनिचाऽस्तुमे

वसिष्ठ उवाच ।

एवमुक्त्वा स्वभर्तारं गौरी भागवतोत्तमा ॥ ६२ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥
जपन्तीमं मन्त्ररत्नं सर्वावस्थासु पार्वती । उवास च सुखेनैव कैलासे शम्भुना सह ॥
एतत्ते सर्वमाख्यातं गुह्याद्गुह्यतमं नृप !। साक्षाद्रुद्रेणकथितं शुद्धसत्त्वतरं महत् ॥६५
रुद्रप्रोक्तानि शास्त्राणि तामसान्येवपार्थिव !। सम्मोहनार्थंलोकानांप्रोक्तवान्वृषभध्वजः
रहसि प्रोक्तवान्देव्या इदमेकं हरः प्रभुः । यथार्थमर्थं गुह्यं च सारं मन्त्रस्य भूपते ! ॥

देव्याः प्रीत्यै महादेवः कथयामास तत्परः ।
औमामहेश्वरं राजन्सम्वादमिममद्भुतम् ॥ ६८ ॥

यः पठेच्छृणुयाद्वाऽपि भक्तियुक्तेनचेतसा । स सर्ववन्द्यः सर्वज्ञो महाभागवतो भवेत्
सर्वधर्मविनिर्मुक्तः प्राप्नोति परमम्पदम् । धन्यः खलुभवाँल्लोके पार्थिवेन्द्र! महाबल !॥
त्वदन्वये हरिः श्रीमान्पुराणः पुरुषोत्तमः । उत्पत्स्यते दाशरथिः सर्वलोकहिताय वै॥

तस्मादिक्ष्वाकवः पूज्याः सुराणामपि पार्थिव ! ।
येषां जातो हि भगवान्रामो राजीवलोचनः ॥ ७२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे रामचन्द्राष्टोत्तरशतनामकथनं नाम चतुष्पञ्चाश-
दधिकद्विशततमोऽध्यायः ॥ २५४ ॥

---

# पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः

## वशिष्ठदिलीपसम्वादे भृगुणा महर्षीणामनुरोधेन ब्रह्मविष्णुमहेशानांसात्त्विकत्वे-परीक्षाकरणं श्रीविष्णोश्चश्रेष्ठत्वप्रतिपादनं पद्मपुराणश्रवणफलञ्च

दिलीप उवाच ।

कथितं भवता ब्रह्मन्सर्वधर्ममशेषतः । सामान्यं च विशिष्टं च स्वरूपं परजीवयोः ॥
स्वर्गापवर्गौ कथितौ साधनंच तयोरपि । धन्योऽस्म्यहं द्विजश्रेष्ठत्वत्प्रसादात्सदागुरो!
एकस्तुसंशयश्चित्ते ममाऽस्ति द्विजसत्तम !। कथामन्यांद्विजश्रेष्ठपृच्छामित्वांकुतूहलात्

कथयस्व यथातथ्यमपि वात्सल्यगौरवात् ।
महाभागवतश्रेष्ठो रुद्रस्त्रिपुरघातकः ॥ ४ ॥

कस्माद्विगर्हितं रूपं प्राप्तवान्सह भार्यया । योनिलिङ्गस्वरूपं च कथंस्यात्सुमहात्मनः
पञ्चवक्त्रश्चतुर्बाहुः शूलपाणिस्त्रिलोचनः । कथं विगर्हितं रूपं प्राप्तवान्द्विजपुङ्गव ! ॥

एतत्सर्वं समाचक्ष्व मित्रावरुणनन्दन ! ॥ ६ ॥

वसिष्ठ उवाच ।

शृणु राजन्प्रवक्ष्यामि यन्मांपृच्छसि गौरवात् । विशुद्धेहृदयेपुंसां बुद्धिः श्रेयसि जायते
स्वायम्भुवो मनुः पूर्वं मन्दरे पर्वतोत्तमे । जगाम मुनिभिः सार्द्धं दीर्घसत्रमनुत्तमम् ॥
तस्मिन्समागताः सर्वे मुनयः संशितव्रताः । नानाशास्त्रविदः श्रेष्ठा बालसूर्यानलप्रभाः
सर्ववेदविदो विप्राः सर्वधर्मपरायणाः । वर्तमाने महासत्रे मुनयः क्षीणकल्मषाः॥१०॥
अन्वेष्टुं देवतातत्त्वं मिथः प्रोचुस्तपोधनाः । विप्राणां वेदविदुषां कः पूज्यो देवतावरः

ब्रह्मविष्णुमहेशानां कः स्तुतो मुक्तिदो नृणाम् ।
कस्य पादोदकं सेव्यं भुक्तोच्छिष्टं च पावनम् ॥ १२ ॥

कोऽव्ययः परमं धाम परमात्मा सनातनः । कस्य प्रसादं तीर्थं च पितृणांतृप्तिदंभवेत्
तेषां समुपविष्टानामिति वादो महानभूत् । रुद्र एक इति प्रोचुः केचिदत्र महर्षयः ॥

ब्रह्मैव पूज्यइत्यन्ये वदन्ति मुनिसत्तमाः । सूर्य एवात्मनां पूज्यइत्यन्ये प्राहुरुत्तमाः ॥
योऽसौ सर्वगतःश्रीमाञ्छ्रीपतिःपुरुषोत्तमः । अव्ययः पुण्डरीकाक्षो वासुदेवःपरात्परः
अनादिनिधनो विष्णुः सएव परमेश्वरः । सम्पूज्यो देवताश्रेष्ठ इत्यन्ये चोचिरे द्विजाः
तेषां विवदतांतत्रमनुःस्वायम्भुवोऽब्रवीत् । शुद्धसत्त्वमयो योऽसौकल्याणगुणवान्प्रभुः
पुण्डरीकेक्षणः श्रीमाञ्छ्रीपतिः पुरुषोत्तमः । विप्राणां वेदविदुषामेकएवार्चितः प्रभुः॥
विप्राणां नेतरे पूज्या रजस्तमोविमिश्रिताः ॥ १६ ॥

वसिष्ठ उवाच ।

इतितस्य वचः श्रुत्वा सर्व एव महर्षयः । भृगुं तपोनिधिं विप्रं प्रोचुः प्राञ्जलयस्तथा ॥

ऋषयऊचुः ।

अस्माकं संशयं छेत्तुं त्वं समर्थोऽसिसुव्रत !। ब्रह्मविष्णुमहेशानामन्तिकं व्रज सुव्रत !
गत्वा तेषां समीपं तु तथा दृष्ट्वा तु विग्रहान् । शुद्धसत्त्वगुणंतेषांयस्मिन्सम्विद्यते मुने!
सएवपूज्यो विप्राणां नेतरस्तु कदाचन । शुद्धसत्त्वमयः साक्षाद्ब्रह्मण्यःस भविष्यति
तीर्थप्रसादवाँल्लोके विप्राणां स भविष्यति । देवतानांपितृणांचतस्योच्छिष्टंसुपावनम्
तस्माद्याहि मुनिश्रेष्ठ ! विबुधानां निवासनम् ।
क्षिप्रं कुरु मुनिश्रेष्ठ ! सर्वलोकहितं प्रभो! ॥ २५ ॥

वसिष्ठ उवाच ।

एवमुक्तो भृगुस्तूर्णं कैलासं मुनिसत्तमः । जगाम वायुमार्गेण यत्राऽऽस्ते वृषभध्वजः
गृहद्वारमुपागम्य शङ्करस्य महात्मनः । शूलहस्तं महारौद्रं नन्दिनं चाऽब्रवीद्द्विजः ॥
सम्प्राप्तोऽहं भृगुर्विप्रो हरं द्रष्टुं सुरोत्तमम् । निवेदयस्व मां शीघ्रं शङ्कराय महात्मने
तस्य तद्वचनं श्रुत्वा नन्दी सर्वगणेश्वरः । उवाच परुषं वाक्यं महर्षिममितौजसम् ॥
असान्निध्यं प्रभोस्तस्य देव्या क्रीडति शङ्करः । निवर्त्तस्वमुनिश्रेष्ठ! यदिजीवितुमिच्छसि

वसिष्ठ उवाच ।

एवं निराकृतस्तेन तत्राऽतिष्ठन्महातपाः । बहूनि दिवसान्यस्मिन्गृहद्वारि महेशितुः ॥
तत्र क्रोधसमाविष्टो भृगुः शापमदान्मुनिः ॥ ३१ ॥

भृगुरुवाच ।

निविष्टस्तमसा मूढो मां न जानाति शङ्करः । नारीसङ्गममत्तोऽसौ यस्मान्मामवमन्यते
योनिलिङ्गस्वरूपं वै तस्मात्तस्य भविष्यति । ब्राह्मणं माऽवजानाति तमसासमुपागतः
अब्रह्मण्यत्वमापन्नो ह्यपूज्योऽसौद्विजन्मनाम् । तस्मादन्नंजलंपुष्पंतस्मै दत्तं हविस्तथा
निर्माल्यमस्य तत्सर्वं भविष्यति न संशयः ॥ ३४ ॥

वसिष्ठ उवाच ।

एवं शप्त्वा महातेजाः शङ्करंलोकपूजितम् । उवाच गणमत्युग्रं नन्दिनं शूलपाणिकम्

भृगुरुवाच ।

रुद्रभक्ताश्च ये लोके भस्मलिङ्गास्थिधारिणः । ते पाखण्डत्वमापन्ना वेदबाह्या भवन्तु वै

वसिष्ठ उवाच ।

इतितस्य वचःश्रुत्वा रुद्रस्त्रिपुरघातकः । भृगुं हन्तुं समारेभे महता तमसावृतः ॥३७॥
शूलं हस्ते प्रगृह्याऽथ पार्वती विनयान्विता । न्यवर्तयन्महादेवं प्रणिपत्य कृताञ्जलिः ॥
ततो ललाटनयनं कोटिसूर्याग्निसन्निभम् । भृगुः पश्यन्महातेजाः स्थितोगौर्यानिवारितः
मुनिस्तु पादे नयनं प्रदर्श्य प्रहसन्ययौ । अमोघो मम शापस्तु कुरूपी त्वं न संशयः॥
ततः प्रभृति विप्राणां तस्य पादोदकादिकम् । अग्राह्यमभवद्राजन्सर्वभूताधिपस्य तु ॥
पाषण्डैः पूज्यमानस्तु लिङ्गरूपधरः शिवः । एवं शप्त्वा मुनिस्तत्र रुद्रं त्रिपुरघातकम्
जगाम ब्रह्मलोकं वै सर्वलोकनमस्कृतम् । तत्र देवैः सहासीनं ब्रह्माणं परमेष्ठिनम् ॥
दृष्ट्वा प्राञ्जलिना देवं प्रणनाम महामतिः । प्रणम्य पुरतस्तस्य तूष्णीमास्ते महातपाः॥
तं दृष्ट्वा मुनिशार्दूलं रजोगुणसमावृतः । नाऽर्चयामास धाताऽसौ महर्षि समुपागतम्
प्रत्युत्थानं प्रियं वाक्यं न कृतं तस्य वेधसा ।
ऐश्वर्येणैव महता तस्थौ तत्राऽम्बुजासनः ॥ ४६ ॥
तं दृष्ट्वा रजसोद्रिक्तं महर्षिः पङ्कजासनम् । व्याजहार महातेजा वाक्यं लोकपितामहम्

भृगुरुवाच ।

रजसा महतोद्रिक्तो यस्मान्मामवमन्यसे । तस्मात्त्वं सर्वलोकानामपूज्यत्वंसमाप्नुहि

वसिष्ठ उवाच ।

एवं शप्त्वा महात्मानं ब्रह्माणं लोकपूजितम् । जगाम सहसा विप्रो भगवन्मन्दिरंभृगुः
तस्माद्देवैर्मनुष्यैश्च राक्षसैर्मुनिसत्तमैः । अपूज्यत्वमवाप्यैव स्थितवान्स पितामहः ॥
प्रविश्य वैष्णवं लोकं क्षीराब्धेरुत्तरे तटे । तत्रस्थितैर्महाभागैः पूज्यमानो यथार्हतः ॥
तत्रानिवार्यमाणस्तु प्रविष्टोऽन्तःपुरं द्विजः । प्रविश्य तस्मिन्विमले विमाने रविसन्निभे
शयानं नागपर्यङ्के ददर्श कमलापतिम् । लक्ष्मीकरसरोजाभ्यां मृज्यमानपदद्वयम् ॥५३
तं दृष्ट्वा मुनिशार्दूलो भृगुः कोपसमन्वितः । सव्यं पादं प्रचिक्षेप विष्णोर्वक्षसिशोभने!

तूर्णमुत्थाय भगवान्धन्योऽस्मीति वदन्मुदा ।
हस्ताभ्यां चरणं तस्य पीडयामास हर्षितः ॥ ५५ ॥

शनैर्मर्दित्वा तत्पादं मधुरंवाक्यमब्रवीत् । धन्योऽस्म्यद्य विप्रर्षे कृतकृत्योऽस्मिसर्वदा
त्वत्पादस्पर्शनाद्देहे मङ्गलं मे भविष्यति ॥ ५६ ॥
समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ५७ ॥

विप्रपादरजो यस्य देहे तिष्ठति सर्वदा । गङ्गादिसर्वतीर्थानि तस्य तिष्ठन्त्यसंशयम् ॥
इत्युक्त्वासहसोत्थाय रेमयासार्धंजनार्दनः । भक्त्यासमर्चयामासदिव्यस्रक्चन्दनादिभिः
तं दृष्ट्वा मुनिशार्दूलो हर्षपूर्णाश्रुलोचनः । उत्थायासनमुख्यात्तं प्रणनाम दयानिधिम् ॥

कृताञ्जलिपुटो भूत्वा हर्षात्प्राह महातपाः ॥ ६० ॥

श्रीभृगुरुवाच ।

अहोरूपमहोशान्तिरहोज्ञानमहो दया । अहो सुनिर्मला शान्तिरहो सत्त्वगुणं हरेः॥६१
नैसर्गिकंशुभं सत्त्वंतथैव गुणवारिधेः । नाऽन्येषां विद्यते किञ्चित्सर्वेषांत्रिदिवौकसाम्
ब्रह्मण्यश्चशरण्यश्च त्वमेव पुरुषोत्तमः । ब्राह्मणानां त्वमेवेशो नान्यः पूज्यःसुरः क्वचित्
येऽर्चयन्ति सुरानन्यांस्त्वांविनापुरुषोत्तम !। तेपाखण्डत्वमापन्नाः सर्वलोकविगर्हिताः
विप्राणां वेदविदुषां त्वमेवेज्यो जनार्दनः। नान्यः कश्चित्सुराणांतु पूजनीयः कदाचन
अनर्च्याब्रह्मरुद्राद्या रजस्तमोविमिश्रिताः । त्वंशुद्धसत्त्वगुणवान्पूजनीयोऽग्रजन्मनाम्

त्वत्पादसलिलं सेव्यं पितॄणां च दिवौकसाम् ।
सर्वेषां भूसुराणां च मुक्तिदं कल्मषापहम् ॥ ६७ ॥
त्वद्भुक्तोच्छिष्टशेषं वै पितॄणांच दिवौकसाम् । सर्वेषां भूसुराणांचमुक्तिदं कल्मषापहम्
भूसुराणां च सेव्यं स्यान्नाऽन्येषां तु कदाचन ॥ ६८ ॥
इतरेषां तु देवानामन्नंपुष्पंजलं तथा । अस्पृश्यं तु भवेत्सर्वं निर्माल्यं सुरया समम् ॥
तस्माद्वै ब्राह्मणो नित्यं पूजयित्वा सनातनम् । त्वत्तीर्थं भुक्तमन्नञ्च भजेतैवाऽनिशंबुधः
नान्यं देवं तु वीक्षेत ब्राह्मणो न च पूजयेत् । नान्यप्रसादं भुञ्जीत नान्यस्यायतनं विशेत्
न ददातीह यो विप्रः पितॄणां श्राद्धकर्मणि । त्वद्भुक्तमन्नं तीर्थं च तत्सर्वं निष्फलंभवेत्
कल्पकोटिसहस्राणि कल्पकोटिशतानि व । पतन्ति पितरस्तस्य नरके पूयशोणिते ॥
निवेदितं तव विभो! यो जुहोति ददाति वा । देवतानां पितॄणां च तृप्तिरानन्त्यमश्नुते
तस्मात्त्वमेव विप्राणां पूज्यो नान्योऽस्ति कश्चन ।
मोहाद्यः पूजयेदन्यान्स पाखण्डी भविष्यति ॥ ७५ ॥
त्वंहिनारायणःश्रीमान्वासुदेवः सनातनः । विष्णुः सर्वगतो नित्यः परमात्मा महेश्वरः
त्वमेव सेव्यो विप्राणां ब्रह्मण्यः शुद्धसत्त्ववान् ।
पूज्यत्वाद्ब्राह्मणानां वै शुद्धसत्त्वगुणादपि ॥७७ ॥
सर्वेषामेव देवानां ब्राह्मणत्वमवाप्नुहि । त्वामेवहि सदा विप्रा भजन्ति पुरुषोत्तमम् ॥
ब्राह्मणास्ते बभूवुस्तु नान्ये तत्र न संशयः । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः॥
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युतः ।
ब्रह्मण्योभगवान्कृष्णो वासुदेवोऽच्युतो हरिः ॥ ८० ॥
ब्रह्मण्योनारसिंहःस्यात्तथानारायणोऽव्ययः। ब्रह्मण्यःश्रीधरःश्रीशोगोविन्दोवामनस्तथा
ब्रह्मण्यो यज्ञवाराहः केशवः पुरुषोत्तमः । ब्रह्मण्यो राघवः श्रीमान्रामो राजीवलोचनः
ब्रह्मण्यः पद्मनाभः स्यात्तथा दामोदरःप्रभुः । ब्रह्मण्यो माधवो यज्ञस्तथा त्रिविक्रमःप्रभुः
ब्रह्मण्यश्च हृषीकेशः पीतवासा जनार्दनः । नमो ब्रह्मण्यदेवाय वासुदेवाय शार्ङ्गिणे ॥
नारायणाय श्रीशाय पुण्डरीकेक्षणाय च । नमो ब्रह्मण्यदेवाय वासुदेवाय विष्णवे ॥

कल्याणगुणपूर्णाय नमस्ते परमात्मने । नमो ब्रह्मण्यदेवाय सर्गस्थित्यन्तहेतवे ॥८६॥
वाराहवपुषे नित्यं त्रयीनाथाय तेनमः । नमो ब्रह्मण्यदेवाय नागपर्यङ्कशायिने ॥ ८७ ॥
राजीवदलनेत्राय राघवाय नमोनमः । मायया मोहिताः सर्वे देवाश्च ऋषयस्तव ॥
न जानन्ति महात्मानं सर्वलोकेश्वरं प्रभो !। त्वां न जानन्ति भगवन्सर्ववेदविदोऽपिहि
नामरूपगुणैः श्रीशचारित्रैरपि दुष्कृतैः । परत्वसूचकं सत्त्वं तव वेदितुमीश्वरः ॥६०॥
महर्षिभिः प्रेषितोऽहमागतोऽस्मितवाऽन्तिकम् । तव शीलगुणाञ्ज्ञातुं चरणं मम केशव
दत्तं वक्षसि गोविन्दतत्क्षन्तव्यं कृपानिधे !। एवमुक्त्वा भृगुर्देवं प्रणम्य च मुहुर्मुहुः ॥
दिव्यैर्महर्षिभिस्तत्र पूज्यमानो महात्मभिः । पुनर्जगाम हृष्टात्मा यज्ञभूमिं शुभाह्वयाम्
समागतं महात्मानं तत्र दृष्ट्वा महर्षयः । प्रत्युत्थाय नमस्कृत्य पूजां चक्रुर्विधानतः ॥
तेषां विज्ञापयामास तत्सर्वं मुनिपुङ्गवः । रजस्तमोगुणोद्रिक्तौ विधीशानौ सुरोत्तमौ
शप्तौ मया न पूज्यौ तौ विप्राणामृषिसत्तम !। अब्रह्मण्यत्वमापन्नो गर्हितं रूपमास्थितः
शप्तः कैलासशिखरे शङ्करस्तमसावृतः । शुद्धसत्त्वमयो विष्णुः कल्याणगुणसागरः ॥
नारायणः परंब्रह्म विप्राणां दैवतं हरिः । ब्रह्मण्यः श्रीपतिर्विष्णुर्वासुदेवो जनार्दनः ॥
ब्रह्मण्यः पुण्डरीकाक्षो गोविन्दोहरिरच्युतः । सएव पूज्यो विप्राणां नेतरः पुरुषर्षभः

मोहाद्यः पूजयेदन्यं स पाखण्डी भविष्यति ।
स्मरणादेव कृष्णस्य विमुक्तिः पापिनामपि ॥ १०० ॥

तस्य पादोदकं सेव्यं भुक्तोच्छिष्टं च पावनम् । स्वर्गापवर्गदं नॄणां ब्राह्मणानांविशेषतः
विष्णोर्निवेदितंनित्यं देवेभ्यो जुहुयाद्धविः । पितृभ्यश्चैव तद्दद्यात्सर्वमानन्त्यमश्नुते
योनदद्याद्धरेर्भुक्तं पितॄणां श्राद्धकर्मणि । अश्नन्ति पितरस्तस्य विण्मूत्रं सततंद्विजाः

तस्माद्विष्णोः प्रसादो वै सेवितव्यो द्विजन्मनाम् ।
इतरेषां तु देवानां निर्माल्यं गर्हितं भवेत् ॥ १०४ ॥

सकृदेवहि योऽश्नाति ब्राह्मणोज्ञानदुर्बलः । निर्माल्यंशङ्करादीनांसचाण्डालोभवेद्ध्रुवम्
कल्पकोटिसहस्राणि पच्यते नरकाग्निना । निर्माल्यंभोद्विजश्रेष्ठा रुद्रादीनांदिवौकसाम्
रक्षोयक्षपिशाचान्नं मद्यमांससमं स्मृतम् । तद्ब्राह्मणैर्न भोक्तव्यं देवानामर्पितं हविः

तस्मादन्यं परित्यज्य विष्णुदेवं सनातनम् । पूजयध्वं द्विजश्रेष्ठा यावज्जीवमतन्द्रिताः
तद्विष्णोः परमं धाम यास्यन्त्येव न संशयः । तापादिपञ्चसंस्कारैरन्विष्टाः शुभचेतसः
अप्राकृतं हरिं सम्यगर्चयध्वं द्विजर्षभाः ॥ चक्राङ्कितभुजा विप्रा भवन्त्यप्राकृताःशुभाः
चक्रलाञ्छनहीनास्तु प्राकृतास्तामसाः स्मृताः । तस्मात्प्राकृतसंसर्गपापौघदहनं हरेः
प्रतप्तंबिभृयाच्चक्रंशङ्खंच भुजमूलयोः । उद्र्ध्वपुण्ड्राणि चाङ्गेषु धृत्वाशास्त्रोक्तमार्गतः
अर्चयेन्मन्त्ररत्नेन विधिना पुरुषोत्तमम् । तस्य प्रसादसेवां च कुर्यान्नित्यमतन्द्रितः ॥
तस्याऽऽवरणपूजायां त्रिदशानर्चयेत्सदा । तमेव सर्वयज्ञानां भोक्तारं परमेश्वरम् ॥
ज्ञात्वा वै जुहुयाद्दद्याज्जपेद्वै सततं द्विजाः ॥ ११४ ॥

वसिष्ठ उवाच ।

एवमुक्तास्तु ते सर्वे ऋषयः क्षीणकल्मषाः । नमस्कृत्य भृगुं सम्यगूचुः प्राञ्जलयस्तदा

ऋषयऊचुः ।

भगवन्संशयच्छेत्ता त्वमेव द्विजसत्तम ! । अन्धे तमसि मज्जन्ति ब्राह्मणास्तमसावृताः
त्वत्प्रसादाद्वयंविष्णुं जानीमः पुरुषोत्तमम् । सर्वे सनाथास्सुखिनो भवेम द्विजसत्तम!
त्वं वै लोकगतिर्ब्रह्मंस्त्वमेव परमागतिः । त्वमेव परमो धर्मस्त्वमेव परमं तपः ॥
त्वत्प्रसादाद्वयं विप्र! भविष्यामो हि नान्यथा ॥ ११८ ॥

वसिष्ठ उवाच ।

एवं स्तुत्वा भृगुं विप्रं सर्वएव महर्षयः । तस्मात्सम्प्राप्तमन्त्रा वै पूजयामासुरच्युतम्
एतत्ते सर्वमाख्यातं प्रसङ्गात्पार्थिवोत्तम !। भृगुशापान्महेशस्य योनिलिङ्गस्वरूपता ॥
रामस्य हस्तकमलस्पर्शनाद्वै नृपोत्तम !। भविष्यत्यमलं तच्च रूपं लोकविगर्हितम् ॥
राघवः सर्वदेवानां पावनः पुरुषोत्तमः ॥ १२१ ॥
स्पृष्टा दृष्टाश्च तेनैव विमलाः शङ्करादयः । सर्वेषामपि देवानां पिता माता जनार्दनः ॥
त्राता च सर्वलोकानां वात्सल्यगुणसागरः । तमेव शरणं गच्छ यदीच्छसि परं पदम्
एतत्ते सर्वमाख्यातं पुराणं वेदसम्मितम् । ब्रह्मणा कथितं राजन्मनोः स्वायम्भुवोऽन्तरे
विष्णुभक्तिविनीतस्य शुद्धसत्त्वस्य नान्यथा ।

तस्य संश्रावयेन्नित्यं विमुक्ता सा हरेः कथा ॥ १२५ ॥
शङ्खचक्रोर्द्ध्वपुण्ड्रादिविहितो वाचकः पुमान् ।
तन्मुखाच्छ्रूयतां नित्यं पुत्रीभवसि नान्यथा ॥ १२६ ॥
यस्त्विदं श्रावयेन्नित्यं पठेद्वा सुसमाहितः । अनन्यभक्तिःश्रीशस्य जायते तस्य सर्वदा
विद्यार्थीलभतेविद्यांधर्मार्थी धर्ममाप्नुयात् । मोक्षार्थीलभतेमोक्षं कामार्थीलभतेसुखम्
द्वादश्यां श्रवणार्के च सङ्क्रान्तौ ग्रहणेतथा । अमायां पौर्णमास्याञ्चपठेद्भक्तिसमन्वितः
श्लोकार्द्धं श्लोकपादम्वा पठेद्यस्तु समाहितः । अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयम्
इत्येतत्कथितं गुह्यं पुराणं संहितात्मकम् । अर्चयस्व हृषीकेशं यदीच्छसि परं पदम्

सूत उवाच ।

एवमुक्तो वसिष्ठेन गुरुणा नृपसत्तमः । प्रणम्य च गुरुं राजा पूजयित्वा यथार्हतः ॥
तस्मात्संप्राप्तमन्त्रोऽसौ विधिनाद्विजसत्तमम् । अर्चयित्वाहृषीकेशं यावज्जीवमतन्द्रितः
काले हरिपदं प्राप योगिगम्यं सनातनम् ॥ १३३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां वैयासिक्यामुत्तर खण्डे
भृगुपरीक्षाकथनं नाम पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
सम्पूर्णमिदमादिखण्डापरनामकमाद्युत्तरखण्डं उत्तरखण्डं वा

* शुभमस्तु । श्रीरस्तु *

* श्रीगणेशायनमः *

* श्रीवेदव्यासायनमः *

श्रीमन्महर्षिवेदव्यासप्रणीतम्

# पाद्मपुराणम्

## अथ सप्तमं क्रियायोगसारखण्डम्

### प्रथमोऽध्यायः

जैमिनिव्यासससम्वादपूर्वकं क्रियायोगसारपीठिकावर्णनम्

लक्ष्मीनाथपदारविन्दयुगलं ब्रह्मेश्वराद्यामर-
श्रेणीनम्रशिरोलिमालममलं वन्दामहे सन्ततम् ।
भक्त्या योगिमनस्तडागसुषमासन्दोहपुण्यत्तमं
गङ्गाम्भोमकरन्दबिन्दुनिकरं संसारदुःखापहम् ॥ १ ॥
योमूर्तीर्बहुधाविधायभगवान्रक्षत्यशेषं जग-
द्यत्पादार्चनतत्परानहिपुनर्मज्जन्तिविश्वार्णवे ।
सर्वप्राणिहृदम्बुजेषु वसतिर्यस्य प्रभोःसन्ततं
रम्यक्रोडवपुर्धराय हरये देवाय तस्मै नमः ॥ २ ॥
वेदेभ्य उद्धृत्य समस्तधर्मान्योऽयं पुराणेषु जगाद देवः ।
व्यासस्वरूपेण जगद्धिताय वन्दे तमेतं कमलासमेतम् ॥ ३ ॥

एकदा मुनयः सर्वे सर्वलोकहितैषिणः । सुरम्ये नैमिषारण्ये गोष्ठीं चक्रुर्मनोरमाम् ॥४

तत्रान्तरे महातेजा व्यासशिष्यो महायशाः । सूतः शिष्यगणैर्युक्तः समायातो हरिंस्मरन्
तमायान्तंसमालोक्य सूतं शास्त्रार्थपारगम् । नेमुःसर्वेसमुत्थाय शौनकाद्यास्तपोधनाः
सोऽपि तान्सहसाभक्त्या मुनीन्परमवैष्णवान् । ननाम दण्डवद्भूमौसर्वधर्मविदाम्वरः
वरासने महाबुद्धिस्तैर्दत्ते मुनिसत्तमैः । उवास ह मुनिर्मध्ये सर्वैः शिष्यगणैर्वृतः ॥
तत्रोपविष्टं तं सूतं शौनको मुनिसत्तमः । बद्धाञ्जलिरिमां वाचमुवाच विनयान्वितः

शौनक उवाच ।

महर्षे सूत सर्वज्ञ! कलिकाले समागते । केनोपायेन भगवन्भूरिभक्तिर्भवेन्नृणाम् ॥१०॥
कलौ सर्वे भविष्यन्ति पापकर्मरता जनाः । वेदविद्याविहीनाश्च तेषां श्रेयः कथं भवेत्

कलावन्नगताः प्राणा लोकाः स्वल्पायुषस्तथा ।
निर्धनाश्च भविष्यन्ति नानादुःखप्रपीडिताः ॥ १२ ॥

प्रयाससाध्यंसुकृतं शास्त्रेषुक्रियतेद्विज !। तस्मात्केऽपिकरिष्यन्ति कलौनसुकृतंजनाः
सुकृतेषु विनष्टेषु प्रवृत्ते पापकर्मणि । सवंशाः प्रलयं सर्वे गमिष्यन्ति दुराशयाः ॥
स्वल्पश्रमैरल्पवित्तैरल्पकालैश्च सत्तम !। यथा भवेन्महापुण्यं तद्वै कथय सूत नः॥१५॥
यस्योपदेशतः पुण्यं पापं वा कुर्वते जनाः । स तद्भागी भवेन्मर्त्यइतिशास्त्रेषु निश्चितम्
पुण्योपदेशः सदयः कैतवैश्च विवर्जितः । पापमार्गविरोधी च चत्वारः केशवोपमाः ॥
ज्ञानं सम्प्राप्य संसारे यः परेभ्यो न यच्छति । ज्ञानरूपी हरिस्तस्मै प्रसन्नइव नेक्षते॥
ज्ञानरत्नैश्च रत्नैश्च परसन्तोषकृन्नरः । स ज्ञेयः सुमतिर्नूनं नररूपधरो हरिः ॥ १६ ॥
त्वमेव मुनिशार्दूल! वेदवेदाङ्गपारगः । त्वदृते नहि वक्ताऽन्यो यतस्त्वं व्यासशासितः

सूत उवाच ।

धन्योऽसि त्वं मुनिश्रेष्ठ ! त्वमेव वैष्णवाग्रणीः ।
यतः समस्तलोकानां हितं वाञ्छसि सर्वदा ॥ २१ ॥

शृणुशौनक!वक्ष्यामियत्त्वयाश्रोतुमिच्छितम् । सर्वलोकहितार्थाय वैष्णवानांविशेषतः
पृष्टो जैमिनिना सर्वं यदुवाच शृणुष्व तत् । महर्षिर्जैमिनिर्नाम योगाभ्यासरतः सदा

प्रणम्य शिरसा व्यासं पप्रच्छ मुनिसत्तमः ॥ २४ ॥

जैमिनिरुवाच

भगवन्सर्वधर्मज्ञव्यास ! सत्यवतीसुत !। कलौ कस्माद्भवेन्मोक्षस्तन्ममाऽऽचक्ष्वमूलतः

सूत उवाच।

जैमिनेर्वचनं श्रुत्वा व्यासः सन्तुष्टमानसः। प्रारेभे मुनिशार्दूल ! कथां मङ्गलसंयुताम्

व्यास उवाच।

जैमिने! मुनिशार्दूल धन्योऽसि त्वं महामते !। नारायणकथां श्रोतुं यतोवाञ्छसिसर्वदा

सत्कथाश्रवणे बुद्धिर्यस्ययस्य प्रवर्तते। तस्य तस्य भवेज्ज्ञानं ज्ञानं मोक्षप्रदं विदुः ॥

न वैष्णवकथां यस्मै रोचते पापिने भुवि। वृथैव सृष्टा विधिना भूमिर्भारवती कृता॥

कथा यैर्जगतीचक्रे श्लाघ्यते वैष्णवैर्जनैः। तांमिथ्यामिव यो वक्ति सज्ञेयःपापिनांवरः

यस्मिन्दिने मुनिश्रेष्ठ श्रूयते न हरेः कथा। तद्दिनं दुर्दिनं मन्ये घनच्छन्नं न दुर्दिनम् ॥

यत्र यत्र महीभागे वैष्णवी वर्तते कथा। सान्निध्यं तत्र भगवान्न जहाति कदाचन ॥

यो वैष्णवकथारम्भे विघ्नकृन्मानवो भवेत्। तमेव शप्त्वा भगवान्दैवतैः सह गच्छति

प्रभावं वासुदेवस्य श्रुत्वा हृष्यन्ति ये जनाः।
ज्ञेयास्त एव देवांशाः पूज्या दृश्याश्च सत्तमाः ॥ ३४ ॥

नारायणप्रभावं ये श्रुत्वा चोपहसन्ति वै। ते विज्ञेया दानवांशा नरा नरकभागिनः ॥

तत्र तीर्थानि सर्वाणि गङ्गादीनि द्विजोत्तम !। देवर्षयश्च देवाश्च मुनयश्च तपोधनाः ॥

शृण्वतां लोकसङ्घानां पापव्याधिविनाशनाः। नारायणकथा यत्र वर्तते प्रतिवासरम्

मुने क्रियायोगसारं बह्वर्थं पापनाशनम्। नारायणकथोपेतं सेतिहासं निशामय ॥३८

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे जैमिनि-
व्याससम्वादे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः

जैमिनिव्याससम्वादे विष्णुप्रकृतिवर्णनपुरःसरंपञ्चमहाभूतोत्पत्तिपूर्वकंसृष्ट्यादौ-योगनिद्रागतेनविष्णुनाब्रह्मप्रार्थनयाप्रबुध्यमधुकैटभवधवर्णनं ब्रह्मकृता विष्णु-स्तुतिःप्रसन्नेनविष्णुनाब्रह्मणेसृष्टिकरणायवरदानं वैष्णवलक्षणकथनं विष्णो-रन्तर्धानवर्णनं ब्रह्मणासृष्टिकरणमध्यायपठनफलश्रुतिश्च

व्यास उवाच

सृष्टेरादौमहाविष्णुः सिसृक्षुःसकलं जगत् । स्रष्टापाताच संहर्ता त्रिमूर्तिरभवत्स्वयम्
सृष्ट्यर्थमस्य जगतः ससर्ज ब्रह्मसञ्ज्ञकम् । दक्षिणाङ्गतआत्मानमात्मना श्रेष्ठपूरुषः ॥
ततस्तु पालनार्थाय जगतो जगतीपतिः । विष्णुः ससर्ज वामांशान्निजांशं केशवं मुने!
अथ संहरणार्थाय जगतो रुद्रमव्ययम् । मुने ससर्ज मध्याङ्गात्कृतपद्मालयः प्रभुः ॥४॥
रजःसत्त्वंतमश्चेति पुरुषं त्रिगुणात्मकम् । वदन्तिकेचिद्ब्रह्माणं विष्णुं केचिच्चशङ्करम्

एको विष्णुस्त्रिधा भूत्वा सृजत्यत्ति च पाति च ।
तस्माद्भेदो न कर्त्तव्यस्त्रिषु लोकेषु सत्तमैः ॥ ६ ॥

आद्या प्रकृतिरेतस्य महाविष्णोः परात्मनः । निदानं भूतविश्वस्य विद्याविद्येति गीयते
भावाभावस्वरूपासा जगद्धेतुःसनातनी । ब्राह्मीलक्ष्मीरम्बिकेति त्रिमूर्त्तिःसहसाऽभवत्
सृष्टिस्थितिविनाशेषु यां नियोज्यततो मुने !। आद्यां चैवाऽऽद्यपुरुषस्तत्रैवाऽन्तरधीयत
यस्याऽऽज्ञयाततो ब्रह्मा महाभूतान्ससर्जह । पृथिव्याकाशवाय्वम्बुवह्नीन्पञ्चसमाधिना
भूर्भुवःस्वस्तथा चैव महश्चैव जनस्तथा । तपश्च सत्यमित्यादीन्सृष्टवान्कमलासनः ॥
अतलं सृष्टवान्ब्रह्मा ततोऽधो वितलं द्विज !। ततोऽधः सुतलंचैव ततोऽधश्च तलातलम्
महातलमधस्तस्मात्ततोऽधश्च रसातलम् । तस्मादधश्च पातालं लोकानेवं यथाक्रमम्
देवतानां निवासार्थं रत्नसानुं महागिरिम् । सृष्टवान्पृथिवीमध्ये जाम्बूनदसमुज्ज्वलम्

मन्दरं चरमं चैव त्रिकूटमुदयाचलम् । अन्यांश्च पर्वतांश्चैव सृष्टवान्विविधानपि ॥१५
लोकालोकस्ततश्चैव तन्मध्ये सप्त सागराः । सप्तद्वीपाश्च विप्रेन्द्र! परमेशस्वयम्भुवा॥
जम्बूद्वीपो द्विजश्रेष्ठ! द्वीपश्चप्लक्षसञ्ज्ञितः । विज्ञेयो द्विगुणस्तस्माच्छाल्मलो द्विगुणस्ततः
ते च प्लक्षादयो द्वीपाः सर्वभागसमन्विताः । समस्तगुणसंयुक्ता देवदेवर्षिभूषिताः ॥
सप्तद्वीपा इमे विप्र सप्तसागरवेष्टिताः । तेषां नामानि वक्ष्यामि सागराणां निशामय
लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः । एते समुद्रा देवर्षे! पूर्वस्माच्च परःपरः ॥२० ॥

विज्ञेया द्विगुणाः सर्वआलोकालोकपर्वतात् ।
द्वीपे द्वीपे ततो ब्रह्मा वृक्षगुल्मलतादिकान् ॥ २१ ॥

तिर्यग्योनिगताञ्जन्तून्सृष्टवान्द्विजसत्तम !। अथ देवान्मनुष्यांश्च नागान्विद्याधरांस्तथा

क्रमात्ससर्ज पुत्रांश्च ततो दक्षादिकान्मुनीन् ।
ब्रह्मक्षत्रियविट्छूद्रानन्यांश्चैवान्त्यजांस्तथा ॥
तेषां च वर्तनादीनि सृष्टवान्स प्रजापतिः ॥ २३ ॥

हिमाद्रिदक्षिणं यद्वै विन्ध्याद्रेरुत्तरं तथा । आहुस्तद्भारतं वर्षं शुभाशुभफलप्रदम् ॥२४
आसाद्य भारते वर्षे ये जन्म तु नरोत्तमाः । धर्मकर्माणि कुर्वन्ति ते सर्वे केशवोपमाः
कर्मभूमौ कृतं कर्म शुभं वाऽशुभमेव वा । तत्फलं भुञ्जते लोका भोगभूमिषु सत्तम !॥
कर्मभूमिं समागत्य यो धर्मकर्मसूद्यतः । न च तेन समः कोऽपि त्रिषु लोकेषु विद्यते
तस्य स्यात्सफलं जन्म जीवितं च सुजीवितम् । श्रीनारायणसेवायां मतिर्यस्यत्रविद्यते
जन्मकोट्यर्जितैः पुण्यैः संसारैकाधिनायके । नारायणेदेवदेवेभक्तिःस्यात्सुदृढानृणाम्

समस्तसुखदश्चाऽपि स श्लाघ्यो निर्भयोऽपि च ।
त्याज्यः स देशः सहसा न तिष्ठेद्यत्र वैष्णवः ॥ ३० ॥

जन्मान्तरार्जितं पापं स्वल्पं वा यदि वा बहु । तत्क्षणात्क्षयमाप्नोतिभगवद्भक्तदर्शनात्
वैष्णवाङ्घ्रिजलंयस्तुसमस्तपातकापहम् । वहेत्स्वशिरसाभक्त्यागङ्गास्नानेनतस्यकिम्
मुहूर्तमपि यः कुर्यात्सङ्गं भागवतैः सह । स मुच्यते सर्वपापैर्ब्रह्महत्यामुखैरपि ॥३३॥
धर्मकर्माणि विप्रेन्द्र! क्रियन्ते यानि कानि च । भगवद्भक्तपुरतस्तानि स्युरक्षयाणि च

मुहूर्त्तं वा मुहूर्त्तार्द्धं यत्र तिष्ठन्ति वैष्णवाः । सत्यं सत्यं पुनःसत्यं तत्तीर्थं तत्तपोवनम्
अन्नं वा सलिलम्वाऽपि फलम्वा वैष्णवाय च । यत्किञ्चिद्दीयते विप्र! तद्दानमक्षयंभवेत्
समस्तदेवतारूपो वैष्णवः परिकीर्त्तितः । स चेत्सन्तोषितस्तेन तोषिताः सर्वदेवताः॥
संसारेऽस्मिन्महाघोरे नानादुःखसमन्विते । भगवद्भक्तपुरुषः कदाचिन्नाऽवसीदति ॥
तस्मात्त्वमपिविप्रेन्द्र! क्रियायोगेनकेशवम् । समाराध्यसदाभक्त्याव्रजविष्णोःपरम्पदम्

सूत उवाच ।

तदेतद्वचनं श्रुत्वा कानीनस्य महात्मनः । शिरस्यञ्जलिमाधाय जैमिनिः पर्यपृच्छत ॥

जैमिनिरुवाच ।

भगवद्भक्तमाहात्म्यं त्वया प्रोक्तं पुनःपुनः । गुरो! किंलक्षणं तेषां तत्सर्वं ब्रूहि साम्प्रतम्
कथं वा वैष्णवालोका ज्ञातव्या मुनिसत्तम !। आदितो ब्रूहि तत्सर्वं यदि तेमय्यनुग्रहः

व्यास उवाच ।

मधुकैटभयोः पूर्वं हतयोर्वेधसा स्वयम् । पृष्टो यदाह भगवांस्तन्निशामय वेद्म्यहम् ॥
कल्पान्ते रुद्ररूपेण संहृत्य सकलं जगत् । स्वयमेकश्च भगवान्सुष्वाप योगमायया ॥
सुप्ते तस्मिन्भगवति योगनिद्राविमोहिते । अभवत्पृथिवी सर्वा सलिलौघपरिप्लुता ॥
अतो ब्रह्मा जगत्स्रष्टा तन्नाभिकमलोपरि । तमादिपुरुषं ध्यात्वा तस्थौ तद्गतमानसः॥

तस्मिन्काले महाघोरे विष्णोः कर्णमलाद्द्विज ! ।
जातौ महासुरौ घोरौ मधुकैटभसञ्ज्ञितौ ॥ ४७ ॥

अन्तरिक्षे भ्रमन्तौ तौ दानवावतिदारुणौ । श्रीविष्णोर्नाभिकमलेब्रह्माणं समपश्यताम्
तं हन्तुमथ दैत्यौ तौ महाबलपराक्रमौ । उद्यमं चक्रतुर्विप्र ! क्रोधसंरक्तलोचनौ ॥४६
ततो ब्रह्मा जगत्स्रष्टा विचिन्त्य तद्वधं हृदा । योगनिद्रां भागवतींतुष्टावश्लक्ष्णयागिरा
तस्य स्तवं समाकर्ण्य ब्रह्मणः परमेष्ठिनः । उवाचेतिवचःप्रीत्याकिन्तेऽभिमतमुच्यताम्

ब्रह्मोवाच ।

अत्युग्रौ दानवावेतौ हन्तुं मां कृतनिश्चयौ । मायया मोहय क्षिप्रं त्रातारमच्युतं त्यज

ततो भागवती निद्रा महाविष्णुं तमत्यजत् ।

दानवाभ्यां ततस्ताभ्यामन्तरिक्षे कृपामयः ॥ ५३ ॥
युयुधे बाहुयुद्धेन शरणागतवत्सलः । पञ्चवर्षसहस्राणि कृत्वा युद्धं सुदारुणम् ॥५४॥
विजयं नाऽगमत्कोऽपि न च कोऽपि पराभवम् ।
अथ तौ दानवौ तत्र महामायाविमोहितौ ॥ ५५ ॥
वरंवृणिवति चास्मत्तोऽगदतां केशवम्प्रति । ततः प्रहस्य देवेश उवाचेति वचो द्विज !
यदि तुष्टौ युवां दैत्यौ मद्वध्यौ भवतं द्रुतम् । ततस्तौ दानवौघोरौ भगवन्तं जनार्दनम्
इत्यूचतुर्महामायौ महामायाविमोहितौ । अयमेव वरो दत्तो भवने नाऽत्रसंशयः ॥५८
मारयाऽऽवां विना वारि मही यत्र जनार्दन !। महासुरौततस्तौ तु आनीय जघनम्प्रति
निहतौ सहसा विप्र चित्रया चक्रधारया । चक्रिणा निहतौ दृष्ट्वा दानवौ मधुकैटभौ॥
तुष्टाव देवदेवेशं ब्रह्मा विगतसाध्वसः ॥ ६० ॥

ब्रह्मोवाच ।

नमो नमस्ते परमेश्वराय प्रपन्नसर्वार्त्तिविनाशनाय ।
नमो नमस्ते त्रिगुणात्मकाय नारायणायाऽमितविक्रमाय ॥ ६१ ॥
त्वत्पादपाथोजयुगं प्रपन्ना जनाः क्वचिन्नो विपदं प्रपन्नाः ।
एतन्मयाज्ञातमनन्तकीर्ते ! सद्यो हृतेयं महती ममाऽऽपत् ॥ ६२ ॥
योगेश्वरोऽसि सदयोऽसि जगत्त्रयेश त्वं देवदेवशरणागतपालकेश ! ।
त्वं निर्दयोऽरिनिकरस्य विनाशनेषु यद्रक्षितोऽहमसुरौ निहतौ त्वयैतौ ॥
यद्यप्यतीवकठिनौ मधुकैटभौ तौ मन्ये तथापि स्वजनाविह चेतसाऽहम् ।
यस्मात्स्वजीवनविनाशवरप्रदानैः सन्तोषितोऽखिलशुभप्रद ईश्वरस्त्वम् ॥
रम्यं जगत्त्रयमिदं पुरुषस्य तस्य नश्यन्ति सर्वरिपवः स्वकुलैः समेताः ।
वृद्धिं व्रजन्ति सुहृदोऽखिलबान्धवाश्च यं पश्यसि त्वममरेश ! दयाभिरत्र॥
लक्ष्मीमुखाम्बुजमधुव्रतदेवदेव ! संसारिलोकभयशोकविनाशकारिन् ।
त्वच्चारुपादकमलद्वयमाश्रयन्तं मां पाहि नाथ! कृपया सततं नमस्ते ॥६६॥
प्रसीद पुण्डरीकाक्ष प्रसीद कमलेश्वर ! । प्रसीद सर्वभूतेश विश्वम्भर! नमोस्तु ते॥

नमस्ते भक्ततुष्टाय नमस्ते भक्तिदायिने । नमस्ते ज्ञानरूपाय शरणं मे भवाऽनघ !॥६८
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः । परित्राहि परित्राहि परित्राहि जगन्मय !॥

व्यास उवाच ।

एतैरन्यैरपि स्तोत्रैर्ब्रह्मणा लोककारिणा । स्तुतः स देवो भगवान्परमां प्रीतिमाययौ

श्रीभगवानुवाच ।

स्तोत्रेणाऽनेन ते भक्त्या तुष्टोऽस्मि कमलासन ! ।
किमस्त्यभिमतं ब्रूहि तत्ते दास्याम्यहं भुवि ॥ ७१ ॥

ब्रह्मोवाच ।

यदि तुष्टोऽसि देवेश करुणाब्धे जगन्मय !। नापदस्तव भक्तानां भवन्त्विति वरो मम

श्रीभगवानुवाच ।

एवमस्तु सुरश्रेष्ठ ! दत्तोऽयं ते मया वरः । मद्भक्तस्य कदाप्यापन्न भवेत्क्षितिमण्डले
वैष्णवानां शरीरेषु सततं निवसाम्यहम् । लभन्ते नापदस्तस्मात्कदाचिद्वैष्णवा नराः

ब्रह्मोवाच ।

सर्वमेव जगन्नाथ! त्वया दत्तं न संशयः । यदेतौ च महादैत्यौ सङ्ग्रामे विनिपातितौ
कियत्कालं समासाद्य स्तोत्रेणाऽनेन वै प्रभो ! ।
स्तौति त्वां परया भक्त्या तस्य त्राता भविष्यसि ॥ ७६ ॥

अहो ध्यानैरपि ध्यातुं देवैस्त्वंनहि शक्यसे । स त्वं वैष्णवदेहेषु भ्रमसीत्यद्भुतंमहत्
क्षणमात्रमपि स्वामिंस्त्वयि तुष्टेन किंभवेत् । स त्वं वैष्णवसङ्गेन भ्रमसीत्यद्भुतंमहत्
के वैष्णवाः कैटभारे किंवा तेषांच लक्षणम् । कथं ज्ञेयास्तुते सर्वे तन्मे कथयकेशव!

श्रीभगवानुवाच ।

वैष्णवानांलक्षणानिकल्पकोटिशतैरपि । सम्यग्वक्तुंनशक्तोऽस्मि सङ्क्षेपाच्छृणुसत्तम!
संसारो वैष्णवाधीनो देवा वैष्णवपालिताः ।
अहं च वैष्णवाधीनस्तस्माच्छ्रेष्ठाश्च वैष्णवाः ॥८१ ॥

क्षणमात्रमपि ब्रह्मन्विहाय वैष्णवं जनम् । तिष्ठामि नाऽहमन्यत्र वैष्णवाममबान्धवाः

कामक्रोधविहीना ये हिंसादम्भविवर्जिताः । लोभमोहविहीनाश्च ज्ञेयास्तेवैष्णवाजनाः
अमत्सराद्ययायुक्ताः सर्वभूतहितैषिणः । सत्योक्तिभाषिणश्चैव विज्ञेयास्तेच वैष्णवाः
धर्मोपदेशिनश्चैव धर्माचारपरास्तथा । गुरुशुश्रूषिणश्चैव विज्ञेयास्ते च वैष्णवाः ॥
समानं ये च पश्यन्ति त्वां च मां च महेश्वरम् । कुर्वन्ति पूजामतिथेर्ज्ञेयास्ते वैष्णवाजनाः
वेदविद्यानिरुक्ता ये विप्रभक्तिरताः सदा । नपुंसकाः परस्त्रीषु ज्ञेयास्ते वैष्णवा जनाः
एकादशीव्रतं ये च भक्तिभावेन कुर्वते । गायन्ति मम नामानि ज्ञेयास्ते वैष्णवाजनाः
देवायतनकर्तारस्तुलसीमाल्यधारकाः । पद्माक्षधारिणो ये च ज्ञेयास्ते वैष्णवा जनाः
शङ्खचक्रगदापद्मैरङ्कितानि ममाऽऽयुधैः । ब्रह्मन्येषां शरीराणि ज्ञेयास्ते वैष्णवा जनाः
धात्रीफलस्रजो येषां गलेषु कमलासन !। मां पूजयन्ति तत्पत्रैर्ज्ञेयास्ते वैष्णवा जनाः
तुलसीमूलमृद्भिश्च तिलकानि नयन्ति ये । तुलसीकाष्ठपङ्कैश्च ज्ञेयास्ते वैष्णवा जनाः॥
गङ्गास्नानरता ये च गङ्गानामपरायणाः । गङ्गामाहात्म्यवक्तारो ज्ञेयास्ते वैष्णवाजनाः
शालग्रामशिला येषां गृहे वसति सर्वदा । शास्त्रं भागवतं चैव ज्ञेयास्ते वैष्णवाजनाः

सम्मार्जयन्ति ये नित्यं मम स्थानानि सत्तम ! ।
दीपं यच्छन्ति तत्रैव ज्ञेयास्ते वैष्णवा जनाः ॥ ६५ ॥

शीर्णं मन्मन्दिरं ये च कुर्वन्ति नूतनंपुनः । तत्राऽऽयतनशोभांच ज्ञेयास्ते वैष्णवाजनाः
अभयंयेच यच्छन्ति भीरुभ्यश्चतुरानन !। विद्यादानंच विप्रेभ्योज्ञेयास्ते वैष्णवाजनाः
मत्पादसलिलैर्येषां सिक्तानि मस्तकानिच । ममनैवेद्यमश्नन्ति ज्ञेयास्ते वैष्णवाजनाः
क्षुत्तृट्प्रपीडितेभ्यश्चये यच्छन्त्यन्नमम्बु च । कुर्युर्ये योगशुश्रूषां ज्ञेयास्ते वैष्णवाजनाः

आरामकारिणो ये च पिप्पलारोहिणोऽपि च ।
गोसेवां ये च कुर्वन्ति ज्ञेयास्ते वैष्णवा जनाः ॥ १०० ॥

अत्यन्तभक्ता ये ब्रह्मन्पितृयज्ञं प्रकुर्वते । कुर्वन्ति दीनशुश्रूषां ज्ञेयास्ते वैष्णवा जनाः
तडागग्रामकर्तारः कन्यादानरताश्च ये । सेवन्ते पितरौ ये च ज्ञेयास्ते वैष्णवा जनाः
सेवन्ते ज्येष्ठभगिनीं ज्येष्ठभ्रातरमेव च । परनिन्दां न कुर्वन्ति ज्ञेयास्ते वैष्णवा जनाः
वैष्णवेषु गुणाःसर्वे दोषलेशो न विद्यते । तस्माच्चतुर्मुखत्वं च वैष्णवोभव! साम्प्रतम्

समाराधय मां नित्यं क्रियायोगैः प्रजापते!। सर्वमेवाऽऽशु भद्रं ते भविष्यतिनसंशयः
देवस्वं ब्राह्मणद्रव्यं परस्वंच चतुर्मुख!। पश्यन्ति विषवद्द्ये च ज्ञेयास्ते वैष्णवाजनाः
बहुनाऽत्र किमुक्तेन भाषितेन पुनःपुनः। ममाऽर्चांग्येचकुर्वन्ति विज्ञेयास्ते च वैष्णवाः
भूयः पूर्वस्थितमिव सृज्यतां सकलं जगत्। इत्युक्त्वाऽन्तर्दधे देवस्तत्रैव परमेश्वरः॥
ततस्तु पूर्ववद्ब्रह्मा सृष्टवान्सकलं जगत्। क्रियायोगैर्हरिं चेष्ट्वा जगाम परमं पदम्॥
ये पठन्तीममध्यायं भक्त्या नारायणाग्रतः। सर्वपापविनिर्मुक्ता अन्ते यान्ति हरेर्गृहम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे
वैष्णवलक्षणं नाम द्वितीयोऽध्यायः॥ २॥

# तृतीयोऽध्यायः

## सगङ्गामाहात्म्य गृध्रद्वारा मनाभद्रराजपुत्रयोःपूर्वजन्मकथावर्णनं गृध्रदम्पत्योर्मुक्तिश्च

जैमिनिरुवाच।

क्रियायोगस्य तत्त्वं मे ब्रूहि व्यास! महामते!।
क्रियायोगमहं ज्ञातुमिच्छामि भवतो मुखात्॥ १॥

व्यास उवाच।

शरीरं मानुषं विप्र! दुर्लभं चाऽत्र भूतले। धीरः शरीरमासाद्य मोक्षार्थं योगमभ्यसेत्
क्रियायोगध्यानयोगावुभौयोगौप्रकीर्त्तितौ। तयोराद्यःक्रियायोगः कुर्वतांसर्वकामदः
गङ्गाश्रीविष्णुपूजा च दानानि द्विजसत्तम!। ब्राह्मणानां तथा भक्तिर्भक्तिरेकादशीव्रते
धात्रीतुलस्योर्भक्तिश्च तथा चाऽतिथिपूजनम्।
क्रियायोगाङ्गभूतानि प्रोक्तानीति समासतः॥ ५॥

क्रियायोगादृतेविप्र! ध्यानयोगान्नसिद्ध्यति । क्रियायोगरतोयाति तद्विष्णोःपरमंपदम्

जैमिनिरुवाच ।

क्रियायोगाङ्गभूतानियानि प्रोक्तानिभोःप्रभो !। तन्माहात्म्यानिकथययदिभोमय्यनुग्रहः

गङ्गायाः के गुणा ब्रह्मन्विष्णुपूजाफलं च किम् ।
श्रेष्ठानि कानि दानानि का वा भक्तिर्द्विजन्मनाम् ॥ ८ ॥
एकादश्याः फलं किं वा धात्रीभक्तिश्च कीदृशी ।
तुलस्याः कीदृशी भक्तिः किं वा चाऽतिथिपूजनम् ॥ ९ ॥

एतत्सर्वं मुने! ब्रूहिश्रोतुमस्तिममाऽऽदरः । त्वत्तोऽन्यःकथितुंकोऽपिन शक्नोतिजगत्त्रये

व्यास उवाच ।

साधुसाधु द्विजश्रेष्ठ! मनस्ते विमलंध्रुवम् । यतो गुह्यकथामेतां श्रोतुंश्रद्धाच कौतुकम्
भागीरथ्या गुणं सम्यक्कथितुं नहि शक्यते । तस्मात्समासतो वक्ष्ये श्रूयतामेकचेतसा
गङ्गेत्यक्षरयुग्मं च जपत्यत्यन्तकोमलम् । मन्ये व्रजेत्तथाप्येनो महन्नास्त्यत्रसंशयः ॥
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥
सत्रासवाः सुराः सर्वे गङ्गाद्वारं मनोरमम् । समागत्य प्रकुर्वन्ति स्नानदानादिकं मुने!
दैवयोगान्मुने ! तत्र ये त्यजन्ति कलेवरम् । मनुष्यपशुकीटाद्या लभन्ते परमम्पदम् ॥
अत्रेतिहासं विप्रर्षे ! कथ्यमानं मया शृणु । सम्यक्छ्रवणमात्रेण सर्वपापैः प्रमुच्यते॥
मनोभद्रोनाम राजा सोमवंशसमुद्भवः । पूर्वमासीज्जगत्यस्मिन्बलवान्सर्वधर्मवित् ॥
तस्य हेमप्रभा नाम महिषी प्रियवादिनी । पतिव्रता महाभागा सर्वलक्षणसंयुता॥१९॥

स राजा समरे हत्वा सकलानेव शात्रवान् ।
शशास पृथिवीं कृत्स्नां साब्धिद्वीपां महाबलः ॥ २० ॥

स एकदा महीपालः समाहूय स्वमन्त्रिणः । उवाचेदं वचःप्रीत्या सभामध्ये महायशाः

मनोभद्र उवाच ।

अमात्याः ! पृथिवी सर्वा मयेयं परिपालिता । निहता रिपवः सर्वे सपुत्रबलवाहनाः॥
पालितानि स्वगोत्राणि दानैर्विप्राश्चतोषिताः । शिष्टाश्च त्रिदशाःसर्वे सपुत्रबलवाहनाः

पालितानि स्वगोत्राणि यज्ञैः सर्वैः सदक्षिणैः ।

इदानीं जरया सर्वं महत्या मे बलं हृतम् ॥ २४ ॥

कर्माणि कानिचित्कर्त्तुं न हि शक्नोमि दुर्बलः । सामर्थ्यहीनेपुरुषेराजश्रीर्नहि शोभते सर्वाभरणसंयुक्ता जराजीर्णेव कामिनी । तावद्बिभ्यति सर्वेऽपि शत्रवः पृथिवीतले यावद्धि गतसामर्थ्यं नेच्छन्ति चारुचक्षुषा । समस्तगुणसम्पन्नमपि तद्गतमानसम् ॥ पृथ्वी त्यजेन्नृपं वृद्धं स्वैरिणी पालिता यथा । भक्तिलभ्यागुणाःसर्वेगुणलभ्यंमहद्यशः निःश्रेयसं दानलभ्यं बललभ्या तु मेदिनी । सामर्थ्यहीनः कृपणो निश्चितो रिपुशासने मूर्खमात्रवचोग्राही स नृपः शत्रुनन्दनः । ततोऽहं सकलं राज्यं विभज्य वरमन्त्रिणः॥

दातुमिच्छामि पुत्राभ्यां युष्माभिर्यदि मन्यते ॥ ३० ॥

मन्त्रिणऊचुः ।

यदेतद्वचनं प्रोक्तं त्वया नीतिविदा नृप !। तदेव मतमस्माकं सन्देहो नाऽत्र विद्यते ॥ अथाऽऽयातौ नृपादेशात्संसदं प्रति सत्तमौ । वीरभद्रयशोभद्रनामानौ तनयावुभौ ॥ तौ च सर्वगुणोपेतौ कुमारौ प्रियवादिनौ । पितृभक्तौ सदा शान्तौबलिनौधर्मतत्परौ ततः स भूपः सहसा राजनीतिविदाम्वरः । विभज्य सकलंराज्यंददौ ताभ्यांकुतूहलात् अत्राऽन्तरे गृध्र एकः स्वकीयस्त्रीसमन्वितः । आगत्य तत्सभामध्येउपविष्टोद्विजोत्तमाः

तावागतौ समालोक्य पक्षिणावतिहर्षितौ ।

राजाऽऽह युवयोः कस्माच्छुभागमनमुच्यताम् ॥ ३६ ॥

गृध्र उवाच ।

गृध्रोऽहं पृथिवीपाल! ममेयं स्त्री परन्तप !। आगतोऽस्मि मुदाद्रष्टुं सम्पदं पुत्रयोस्तव एतयोर्महती दृष्टा विपत्तिः पूर्वजन्मनि । इह जन्मनि सम्पत्तिं द्रष्टुमावां समागतौ ॥ तस्यैतद्वचनं श्रुत्वा गृध्रस्य परमाद्भुतम् । राजोवाच पुनर्विप्र ! विस्मयाविष्टमानसः ॥

राजोवाच ।

अत्यद्भुतं वचो गृध्र! त्वत्तः श्रुतमिदं मया । एतयोः पूर्ववृत्तान्तो भवता ज्ञायते कथम् यदि जानासि तत्त्वेन पूर्ववृत्तान्तमेतयोः । ब्रूहि तर्हि खगश्रेष्ठ! सर्वमेतदशेषतः ॥ ४१॥

गृध्र उवाच ।

नृपतेविपलावेतौ युगे द्वापरसञ्ज्ञके । गरसङ्करनामानौ सत्यघोषसुतौ स्थितौ ॥४२॥
एककाले च भूपाल! मृतौ निजगृहान्तरे । ततो नेतुमिमौ भूप! दंष्ट्रिणो यमकिङ्कराः॥
पाशहस्ताः समायाताः कोटिकोटिसहस्रशः । बबन्धुर्धर्मपाशेन द्वावेतौ तु मदोद्धतौ
निन्युश्च निलयं मृत्योरतिदुर्गमवर्त्मना । इमौ दृष्ट्वा धर्मराजश्चित्रगुप्तमुवाच ह ॥४५॥
एतयोः सकलं वृत्तं चित्रगुप्त! विचार्यताम् ॥४६ ॥

गृध्र उवाच ।

तस्याऽऽज्ञया चित्रगुप्तः सर्वं कर्म शुभाशुभम् । मूलाद्विचारयामासततइत्याहचान्तकम्

चित्रगुप्त उवाच ।

सत्यमेतौ महाबाहो! पुण्यव्रतमहाशयौ । अस्ति चेद्दुष्कृतंकिञ्चित्तदेवंकर्मविलोकितम्
स्वयं दानं समुत्सृज्य नहि दत्तं द्विजातये । तेनैव कर्मणा राजन्निमौ नरकगामिनौ ॥
दाता दानं समुत्सृज्य यो न दद्याद्द्विजातये । सयाति नरकं घोरं सर्वभूतभयावहम्
दाता हि न स्मरेद्दानं प्रतिग्राही न याचते । उभयोर्नरके वासो यावच्चन्द्रदिवाकरौ॥
तस्मादिमौ महापापौ ब्रह्मस्वाहारिणौप्रभो !। नयन्तु किङ्कराःशीघ्रंनरकम्प्रतिदारुणम्
यमाज्ञया ततो दूताः सन्दष्टौष्ठपुटाःक्रुधा । चिक्षिपुर्नरके घोरे तावेतौ पृथिवीपते ! ॥
तस्मिन्नेव दिने राजन्नन्या भार्यया सह । यमदूतैः समागत्य नीतोऽहं यममन्दिरम् ॥
मयाऽपि यत्कृतं कर्म तदाकर्णय भूपते !। मूलात्सर्वं प्रवक्ष्यामि शृण्वतां विस्मयप्रदम्
पुराऽऽसं सर्वगो नाम ब्राह्मणोऽहं महाकुलः ।
सौराष्ट्रदेशवासी च वेदवेदाङ्गपारगः ॥ ५६ ॥
इयं मञ्जूकषानाम मम पत्नी यशस्विनी । पतिव्रता महाभागा पवित्रकुलसम्भवा ॥
प्रमत्तोऽहं महाभाग! विद्यया वयसा धनैः । अवज्ञां मनसा पित्रोश्चकाराऽहं युवैकदा
अहं भूरिसभाश्लाघ्यो वनस्थः सर्वकर्मकृत् । धनवान्सुन्दरो ज्ञानी ज्ञातिपोषणतत्परः
ममैव पुंसः पितरौ तौ च पापपरायणौ । मुखरौ दयया हीनौ पाखण्डिसङ्गलोलुपौ॥
पौरुषं जीवनंचैव धनञ्चैव कुलं तथा । विद्याकीर्तिश्च सर्वस्वं पितृभ्यांविफलीकृतम्

एतद्विचिन्त्य मनसा मया नृप! मुहुर्मुहुः । अवज्ञया परित्यक्ता पित्रोः सेवा शुभप्रदा
अनेन कर्मणा राजन्सदारोऽहं यमाज्ञया । विक्षिप्तो नरके दूतैर्यत्र तौ पापिनाम्वरौ ॥

एताभ्यां सह पापाभ्यां सदारेण मया नृप ! ।
स्थितं च नरके घोरे यावत्कालं शृणुष्व तत् ॥ ६४ ॥

युगकोटिसहस्राणि युगकोटिशतानि च । अनुभूतं महादुःखं नरकस्य नृपोत्तम ! ॥
नरकान्ते ततः सोऽहं कान्ता च मम भूपते !। गृध्रपक्षिकुलेजातौ मृतमांसाशनौ तथा
एतावपि च तौ राजन्नरकान्तगतैषिणौ । जातौ शलभयोर्वंशे फलं भोक्तुं स्वकर्मणः
यदेताभ्यां कृतं कर्म राजञ्छलभजन्मनि । तदाकर्णय वक्ष्यामि श्रोतॄणां विस्मयप्रदम्
एकदा सुमहान्वायुः समायातो महीपते !। उड्डीय पातितौ तेन गङ्गागर्भे सुनिर्मले ॥
निपत्य गङ्गासलिले कोमलाङ्गाविमौतथा । जग्मतुःपञ्चतां सद्यः समस्तकलुषापहम्
ततोनेतुमिमौदूता आयाताश्चारुचक्षुषः । आयातानि विमानानि सर्वभोगान्वितानिच
विमुक्तौ सर्वपापेभ्यस्तुलसीमाल्यशोभितौ । दिव्यं विमानमारुह्य गतौ विष्णुपुरं प्रति
तावत्कालं स्थितौ राजन्ब्रह्मणोऽव्यक्तजन्मनः । ब्रह्माज्ञया समायातौ तत इन्द्रपुरं प्रति
भुक्तवन्तौ सुखंतत्रदुर्लभं यत्सुरैरपि । तावत्कालंस्थितौ राजन्भोक्तुं कृत्स्नांवसुन्धराम्
पवित्रे भवतो वंशे जातावेतौ महाशयौ । गङ्गायां त्यजतो देहं भूयो जन्म न विद्यते

तथापि वसुधां भोक्तुं जातौ पुण्यतमाविमौ ।
चिरं भुक्त्वा महीं कृत्स्नां पुत्रपौत्रसमन्वितौ ॥ ७६ ॥

गङ्गामरणमासाद्य योगिनामपिदुर्लभम् । नारायणस्य सायुज्यमिमौभूप! गमिष्यतः
एतत्सव मया प्रोक्तं पूर्ववृत्तान्तमेतयोः । जातिस्मरप्रभावेण नृपवर्गशिरोमणी ॥७८॥
गङ्गामरणमासाद्य गतावेतौदशामिमाम् । आवयोःकःपरित्राणं करिष्यतिदुरात्मनोः
मित्रावज्ञा मनुष्याणां नरकक्लेशदायिनी । ममैव पृथिवीपाल! दृष्टा केवलमेव तत् ॥
पित्रभक्तिर्द्विजश्रेष्ठ! इहाऽमुत्र च दुःखदा । इह सम्पद्विनाशाय परत्र नरकाय च ॥८१
वरं मन्ये महीपाल ब्रह्महत्यादिपातकम् । कदाचिन्निष्कृतिस्तस्मादियं भवति शाश्वती
दुःखार्जितंपुण्यवृक्षं सर्वक्लेशविनाशनम् । पित्रवज्ञाकुठारेण च्छिन्दन्ति भुवि मानवाः

यत्किञ्चिद्दीयते राजन्पित्र्ये वक्त्रे परन्तप !। तदश्नाति स्वयं विष्णुः पितृरूपो हरिर्यतः
प्रत्यक्षदेवौ पितरौ सेवन्ते ये त्वहर्निशम् । सर्वसिद्धिर्भवेत्तेषां प्रसादाज्जगतीपतेः ॥
पितृभक्तिविहीना ये दिनं तिष्ठन्ति मानवाः । तावत्कल्पसहस्रं तु तिष्ठन्ति नरके जनाः

तस्मादिदं महादुःखं बभूव मम साम्प्रतम् ।
मोक्षं कदा गमिष्यामि सदारोऽहं न वेद्मि तत् ॥ ८७ ॥

व्यास उवाच ।

एतत्तस्य वचः श्रुत्वा प्रगृह्य द्विजसत्तम ! बभूव हर्षितो राजा विस्मितश्च पुनःपुनः ॥

राजोवाच ।

आश्चर्यं हि वचो गृध्र ! श्रुतमेतन्मुखात्तव । मम चैषां च हृदये प्रतीतिर्नहि जायते ॥
अथाऽन्तरिक्षे वागुच्चैरिति जातानृपोत्तम !। सत्यंसत्यं सत्यमिदं सन्देहोनाऽत्रविद्यते
ततः स पक्षी विप्रर्षे! सहसा भार्यया सह । गङ्गामाहात्म्यकथनात्पूर्वस्थित इवाऽभवत्
दिवि दुन्दुभयो नेदुर्जगुर्गन्धर्वसत्तमाः । ननृतुश्चाप्सरोवर्गा ह्यपतत्पुष्पवर्षणम् ॥९२
विमानमागतं दिव्यं सर्वभोगसमन्वितम् । समायाता दूतगणाः प्रेषिताः कैटभद्विषा॥
अथाऽसौ सर्वगो विप्र! प्रियया सह भार्यया । सद्योविमानमारुह्य जगाम भवनं हरेः
एतच्छ्रुत्वाऽद्भुतं कर्म सराजा द्विजसत्तम !। सपुत्रदारः सेवायां गङ्गायास्तत्परोऽभवत्
भागीरथ्या समं तीर्थं नास्ति वै भुवनत्रये । यन्नामोच्चरणादेव सर्वगो मोक्षमाप्तवान्

गङ्गाद्वारस्य माहात्म्यं कथितं ते द्विजोत्तम ! ।
समस्तपापविध्वंसि किमन्यच्छ्रोतुमिच्छसि ॥ ९७ ॥
अध्यायमेतत्परमादरेण पठन्ति ये देवगृहे मनुष्याः ।
शृण्वन्ति ये च द्विजवर्गभक्ता नश्यन्ति तेषां दुरितानि सद्यः ॥ ९८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे गङ्गाद्वारमाहात्म्यं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः

### व्यासजैमिनिसम्वादे प्रयागमाहात्म्येप्रणिधिवैश्यकथावर्णनम्

जैमिनिरुवाच ।

गङ्गाद्वारस्य माहात्म्यं त्वत्प्रसादाच्छ्रुतं मया ।
प्रयागस्यच माहात्म्यमिदानीं श्रोतुमिष्यते ॥ १ ॥
गङ्गाब्धिसङ्गमस्याऽपि माहात्म्यं कथ्यतां मुने ! ।
न सम्यक्कथितुं कोऽपि शक्नोति त्वदृते क्षितौ ॥२॥

व्यास उवाच ।

प्रयागस्य फलं वत्स! गङ्गाब्धिसङ्गमस्यच । सम्यग्वक्तुं न शक्नोमिसङ्क्षेपाच्छ्रूयतां द्विज!
कोटिब्रह्माण्डमध्येषु यानितीर्थानिवैमुने !। प्रयान्तितानि सर्वाणिप्रयागप्रतिमांतुकिम्
गङ्गाया यमुनायाश्च सरस्वत्याश्च सङ्गमम् । प्रशंसन्तिसुराः सर्वे ब्रह्मविष्णुशिवादयः
मकरस्थे रवौ माघे स्नानं ये तत्र कुर्वते । तेषामागमनं नास्ति विष्णुलोकात्कदाचन
गवांकोटिसहस्राणि वाजिमेधमुखाध्वराः । मेरुतुल्यसुवर्णानि दानान्यन्यानिच द्विज!
कुरुक्षेत्रे पुष्करे च प्रभासेच गयासु च । हुत्वा दत्त्वा च विप्रेभ्यो यत्फलं प्राप्यतेबुधैः
माघेस्नात्वाप्रयागेतु तस्मात्कोटिगुणंभवेत् । तस्मात्समस्ततीर्थानांप्रयागःपरमःस्मृतः
सिंहराशिस्थिते सूर्ये गोदावर्यां द्विजोत्तम !। चिरमुग्रं तपस्तप्त्वा स्नानदानव्रतादिभिः॥
वेदागमपुराणोक्तं यत्पुण्यमक्षयं भवेत् । माघे स्नात्वा प्रयागे तु तत्पुण्यं नाऽत्रसंशयः
फाल्गुने कृष्णपक्षे तु चतुर्दश्यामुपोषितः । काश्यां यत्फलमाप्नोति तन्मे निगदतः शृणु
कोटिजन्मार्जितैः पापैर्विमुक्तः सर्वरूपधृत् ।उद्धृत्य कोटिपुरुषाञ्छिवेन सह मोदते ॥

माघे मासे प्रयागे तु स्नात्वा सकृदपि द्विज ! ।
कल्पकोटिशतं विष्णुं सम्पूज्याऽन्यत्र यत्फलम् ॥ १४ ॥

एकाहमपि सम्पूज्य मकरस्थे दिवाकरे । सत्यं सत्यमहं वच्मि सर्वमेवाऽक्षयं भवेत्

यावद्दिनं माघमासे तत्र तिष्ठति मानवः। तावत्कल्पशतं विप्र! मोदते विष्णुना सह॥
गङ्गायमुनयोस्तोये स्नानं येन कृतं सकृत्। सद्यस्तद्दर्शनात्पापैर्मुच्यते सर्वपातकैः॥

तर्तुं यदीच्छन्ति जनाः संसाराब्धि सुदुस्तरम्।
गङ्गायमुनयोः स्नात्वा भक्त्या पश्यन्तु माधवम्॥ १८॥

त्यजन्ति मानवास्तत्र यदिच्छन्तः कलेवरम्। सद्यो लभन्ते विप्रर्षे! तत्तदेव न संशयः
इतिहासमिहैवाऽहं कथयामि निशामय। यच्छ्रुत्वा सर्वपापेभ्यो मुक्तो भवति मानवः
प्रणिधिर्नाम तत्राऽऽसीद्वैश्यएको महाधनी। विप्रभक्त्येकनिरतो देवतातिथिपूजकः॥
तस्य पद्मावती नाम धर्मपत्नी पतिव्रता। चार्वङ्गी शीलयुक्ता च कुलजा प्रियवादिनी
स्त्रीणां योग्यागुणा ये ये सृष्टाःश्रीपरमेष्ठिना। तच्छरीरेगुणास्तेते निवसन्तिद्विजोत्तम!
अथाऽसौ प्रणिधिर्वैश्यः समादायधनंवहु। वाणिज्यार्थे गतो विप्र! शुभेलग्नेशुभेतिथौ
धनाद्धर्मः प्रभवति धनाच्च विपुलं यशः। धनात्कुलमवाप्नोति भवेत्कि वा धनादृते॥
धनहीनं जनं दृष्ट्वा सखाऽपि वा पलायते। मेघः शरद्यम्बुहीनः खण्डं खण्डं नयेन्महत्
खादितुं प्राप्यते यावत्तावदेव हि बान्धवाः। धनंयस्य कुलंतस्यबुद्धिस्तस्य स पण्डितः
अर्थैर्विहीनः पुरुषो जीवन्नपि मृतोपमः। धर्मार्थविद्यार्जनतो मतिर्यस्य निवर्तते॥२८॥

ज्ञेयः स मूर्खः सुतरामधिकस्याऽधिकम्फलम्।
कर्त्तव्यः सततं धर्मश्चाऽर्जितव्यं सदा धनम्॥ २९॥

शिक्षितव्या सदा विद्या पुम्भिरेवं विचक्षणैः। दानाद्धनंचविद्या च वर्धते प्रतिवासरम्
धर्मस्तु वर्धते दानान्नधनेनविनानृणाम्। काष्ठं तृणं तुषं वाऽपिसम्प्राप्यनपरित्यजेत्
पुमान्सञ्चयशीलोहि कदाचिन्नाऽवसीदति। ततोऽसौप्रणिधिर्वैश्योनियोज्यस्त्रियमालये
गृहव्यापारनिष्णातो वाणिज्येन जगाम ह। अथैकदा तस्य पत्नी गृहीत्वोद्वर्तनादिकम्
सखीभिः सह विप्रर्षे! जगाम स्नानहेतवे। ततो धनुर्ध्वजो नाम स्वयं च पातकाश्रयः
निजेच्छया प्रकुर्वन्तीं स्नानकर्म ददर्श ताम्। विकसत्स्वर्णपुष्पाढ्यांप्रफुल्लकमलाननाम्
मृगशावदृशं चारुपीनोन्नतपयोधराम्। तां वैश्यपत्नीमालोक्य श्वपचोऽसौ स्मरातुरः

उवाच प्रहसन्वाणीं निजमूर्तिमचिन्तयन्॥ ३७॥

धनुर्ध्वज उवाच ।

काऽसि कल्याणि सुश्रोणि! चारुहासिनि सुन्दरि! ।
मनो हरसि मे कस्मात्सुयौवनरसैः प्रिये ! ॥ ३८ ॥

विशालजघने तन्वि! मया गुणवता सह । गुणवत्या त्वया सर्वं सुखमत्यनुभूयताम् ॥
धनुर्ध्वजवचः श्रुत्वा तस्याःसख्यस्ततोद्विज !। ऊचुर्वाक्यंतथाक्रुद्धाःसन्दष्टदशनच्छदाः

सख्यऊचुः ।

अरे मूढ! दुराचार! दुराचारकुलोद्भव !। पादनिष्प्रेक्षणमपि नैतस्यास्ते प्रदीयते॥४१॥
इयं पतिव्रतानारी धर्मकर्मपरायणा । आत्मनः सुखमिच्छद्भिः पापदृष्ट्या न दृश्यते ॥
परस्त्रीमुखसौन्दर्यं परद्रव्यं च सर्वदा । दृष्ट्वा कामाग्निसङ्क्लिन्ना दह्यन्ते मूढमानसाः ॥
याहि पापमते दूरं मा वदोक्तिं सुदुःसहाम् । वयमेव भवन्तं न स्पृशामश्चरणैरपि॥४४

धनुर्ध्वज उवाच ।

धिगस्त्वमुं जातिशब्दं सम्पन्नोऽप्यखिलैर्गुणैः ।
सम्भावितो न युष्माभिः श्वपचत्वे यतोऽधुना ॥ ४५ ॥

सौवर्णमदिरापूर्णाभ्यन्तरं कलशंस्थितम् । सम्प्राप्यकोनगृह्णातितद्गुणग्रामवित्पुमान्
अतोऽहं युवतीमेनां यथा प्राप्नोमि साम्प्रतम् । तथाकुरुतहेसख्यःशरणंभोगतोऽस्मियत्
इति ब्रुवन्तं तं मूढं भूयो भूयो द्विजोत्तम !। ऊचुर्वाक्यमिदंतास्तु जातात्यन्तकुतूहलाः

सख्यऊचुः ।

यद्येतां रमणीं नूनमिच्छसि त्वं सुदुर्मते !। गङ्गायमुनयोः शीघ्रं शरीरं सङ्गमे त्यज ॥
मिथःकृतमुखालोका हसन्त्यस्तास्ततोद्विज !। तां साधुपत्नीमादाय ययुर्निजगृहान्तरम्
ततोऽसौ श्वपचोमोहाद्ब्रह्महत्यासहस्रकृत् । गङ्गायमुनयोस्तोये तामिच्छन्पञ्चतांगतः
तत्स्वामिसदृशाकारः समस्तगुणवान्बली । सएवचश्वपाकोऽसौस्ववृत्तान्तंस्मरन्नभूत्
ततोऽसौ प्रणिधिर्वैश्यस्तस्मिन्नेवदिनेशुभे । कृत्वावाणिज्यमायातःस्वकीयंनिलयंप्रति
श्वपाकोऽपि ततो विप्रस्तस्यावासंविवेश ह । प्रणिधेः सदृशो रूपैर्वयोभिश्च गुणैरपि
एकाकारौ समालोक्य पुरःस्थौ तौ गुणाकरौ ।

कस्याहं दयिता को वा मम भर्त्तेत्यचिन्तयत् ॥ ५५ ॥

ततः सा विस्मिता साध्वी विलोक्य तत्पतिद्वयम् । तुष्टावमाधवंदेवंवचनैःकोमलाक्षरैः

पद्मावत्युवाच ।

नमामि गोविन्दमनन्तमूर्तिं शक्रादिदेवार्चितपादपद्मम् ।
योगेश्वरं योगविदां शरण्यं योगप्रदं योगिभिरर्चनीयम् ॥ ५७ ॥
नमोऽस्तु ते कैटभमर्दनाय नमो मधुध्वंसकराय तुभ्यम् ।
नमोऽस्तु कंसासुरनाशनाय नमोऽस्तु चाणूरनिपातनाय ॥ ५८ ॥
नमोऽस्तु वेदोद्धरणाय नित्यं नमोऽस्तु भूम्युद्धरणाय तुभ्यम् ।
नमोऽस्तु पृथ्वीधरणक्षमाय नमोऽस्तु दैत्यान्तकराय तुभ्यम् ॥ ५९ ॥
गङ्गाम्बुधौताङ्घ्रियुगाय तुभ्यं नमोऽस्तु राजन्यकुलान्तकाय ।
नमोऽस्तु ते रावणवंशहन्त्रे नमोऽस्तु दैत्यान्तकराय तुभ्यम् ॥ ६० ॥
नमोऽस्तु ते चाऽसुरनाशकाय नमोऽस्तु ते म्लेच्छकुलान्तकाय ।
नमोऽस्तु ते हृत्कमलासनाय नमोऽस्तु ते सर्परिपुध्वजाय ॥ ६१ ॥
प्रसीद गोपीजनवल्लभ ! प्रभो धृतैकहस्ताचल ! देवदेव ! ।
प्रसीद लक्ष्मीमुखपद्मभृङ्ग ! प्रसीद विष्णो ! सततं नमस्ते ॥ ६२ ॥
प्रसीद पद्मेक्षणचक्रपाणे ! कौमोदकीहस्तगदाधर ! त्वम् ।
प्रसीद विष्णो ! धृतपाञ्चजन्य ! नमोऽस्तु ते पद्मधराय नित्यम् ॥ ६३ ॥
संसारकौतूहलमन्दिरे ते मोहान्धकारे च विवेकदीपे ।
सम्मोहिता केशवमायया हि त्वदीयया नित्यमहं भ्रमामि ॥ ६४ ॥
विरिञ्चिसेन्द्रार्कमुखाः सुरेन्द्रा मायां न जानन्ति तवाऽसुरारे ! ।
मानुष्यहं किं तव वेद्मि मायां पुरो भ्रमं मे हर सानुकम्पम् ॥ ६५ ॥

व्यास उवाच ।

तस्याः स्तवं समाकर्ण्य भगवान्माधवः प्रभुः । समालोक्य जगन्नाथश्चतुर्वर्गफलप्रदः
आविर्बभूव सहसा सूर्यकोटिसमप्रभः । सा मूर्ध्ना भूमिमालोक्य ववन्दे तत्पदद्वयम् ॥

नमस्ते कमलाकान्त! भुक्तिमुक्तिफलप्रद!। हर मे ज्ञानहीनायाः स्वकीयमतिविभ्रमम्

श्रीभगवानुवाच।

भ्रमं जहीहि चार्वङ्गि! द्वावेतौ हि पती तव। एकभावेन सुश्रोणि! कुरु सेवां तयोःसदा

यश्च ते प्रणिधिः स्वामी मद्भक्तस्तरुणः सुधीः।
भोक्तुं सुखफलं साध्वि! सोऽभवद्द्विविधः स्वयम्॥ ७०॥

अनन्तरूपिणीलक्ष्मीर्यथाक्रीडन्मयासह। तथात्वमपिसुश्रोणि! भुङ्क्ष्वताभ्यांसुखंसदा

पद्मावत्युवाच।

एकस्या द्वौ पती देव! न प्रशंसन्तिमानवाः। मग्नां लज्जाब्धिकल्लोले मामुद्धर दयामय!

श्रीभगवानुवाच।

यदाप्रकीर्त्तितः साध्वि! विभेषित्वं ध्रुवं भुवि। तदा मत्पुरमागच्छ ताभ्यांसह वरानने!

विमानमागतं सद्यस्ततो भगवदाज्ञया। तौ समादाय वैकुण्ठं सा गन्तुमुपचक्रमे॥

अथ सा पथिगच्छन्ती भर्तृभ्यां सह जैमिने!। ददर्शैकं महात्मानंरथस्थंश्रीसमन्वितम्

धृतं कमलपत्राक्षैरतसीकुसुमप्रभैः। चतुर्भुजैर्दूतगणैरासीनैर्गरुडोपरि॥ ७६॥

विष्णुदूतांस्ततस्तांस्तु विष्णुरूपान्वराङ्गना। कोऽयं रथस्थः पुरुष इतिपप्रच्छसासती

के वा यूयं महात्मानःपुण्डरीकनिभेक्षणाः। सर्वेऽपिविष्णुसदृशाः शङ्खचक्रादिपाणयः

ततस्ते भगवद्दूता विष्णुतुल्यपराक्रमाः। विहस्योच्चुर्मुहुः सर्वे परमामोदसंयुताः॥७९

विष्णुदूताऊचुः।

विष्णुदूतावयं साध्वि! पुण्यात्मानमिमं जनम्। समादाय पदं याम उदारंलोकमुत्तमम्

पद्मावत्युवाच।

केनपुण्यप्रभावेण गतोऽयमीदृशीं गतिम्। विष्णुदूता महात्मानः कथ्यतामित्यहोमम

विष्णुदूताऊचुः।

अयं वृहद्ध्वजो नाम राक्षसोलोकशोककृत्। अरण्यादिनिवासी च महाबलपराक्रमः

परदारपरद्रव्यहारकः प्राणिघातुकः। गोमांसाशी निष्ठुरोक्तिभाषी च देवनिन्दकः॥

यद्यत्पापरतं कर्म तदनेन कृतं सदा। स्वप्नेऽपि तु कृतं कर्म शुभं नच पतिव्रते!॥८४

अयं रथं समारुह्य सततं कामपीडितः । परस्त्रीहरणार्थाय सुश्रोणि! नभसि भ्रमन् ॥
यां यां सुयौवनां नारीं यत्रयत्राऽयमीक्षते । बलाच्चालिङ्गितस्तां तु तत्रतत्र स्मरातुरः
अथैकदा भीमकेशनाम्नो नरपतेः प्रियाम् । ददर्श क्रीडामध्यस्थां सुन्दरीं नवयौवनाम्

अथाऽसौ तां समालोक्य सुवर्णकुसुमप्रभाम् ।
इत्युवाच वचः प्रेम्णा का त्वमत्र करोषि किम् ? ॥ ८८ ॥

सा चोवाच ततः कान्ता भीमकेशस्य भूपतेः । अहं सुरतशास्त्रज्ञा केशिनी नामभूषिता
अपि सर्वगुणज्ञां मां प्रेमहृष्टां न भूपतिः । स्ववंशजां दोषहीनां पश्यति क्षणमप्यसौ
स्थीयते नित्यमत्रैव भर्त्राखण्डितचर्यया । मया स्वकर्म शोचन्त्या विरहानलतप्तया ॥
कस्त्वं कथमिदं प्राप्तमुद्यानं प्रति सत्तम !। समायातोऽसि तत्सर्वं प्रसन्नो वक्तुमर्हसि
अथायमित्याहवचःपूर्णचन्द्रनिभानने !। मायावी राक्षसोऽहंत्वामालिङ्गितुमिहाऽऽगतः
जहीहिरुष्टभर्त्तारं सर्वदा दोषदर्शिनम् । तन्वि मां भज सर्वंते दास्यामि सुखमुत्तमम् ॥
ततो विहस्य साध्वीयं राक्षसेन्द्रमिमं मुदा । बबन्ध बाहुलतया विन्यस्य वदने मुखम्
सतामालिङ्ग्य युवतीं विवेकोद्वेगविह्वलाम् । अनया सह सुश्रोणि! दिव्यमारूढवान्रथम्
दम्पतीभावमाश्रित्य तौ जातावतिकौतुकम् । वायुवेगरथारूढौ यातौ गगनवर्त्मनि ॥
अथैनामयमित्याह पश्य तन्वि वरानने !। त्वद्भर्तृदेशादायातौ गङ्गासागरसङ्गमे ॥ ६८॥
ततो रथस्थनारीयमधिगङ्गाब्धिसङ्गमम् । जगामपञ्चतांसद्यः सन्दृश्याऽत्यन्तसाध्वसैः

विलप्य बहुधा साध्वीं तत्राऽयमपि राक्षसः ।
गतप्राणां समालोक्य सद्यो मृत्युं जगाम ह ॥ १०० ॥

वैनतेयध्वजादेशादिमौ गलितकल्मषौ । नयामः पुण्यकर्माणौ वैकुण्ठम्प्रति सम्प्रति ॥
जलेस्थले चान्तरिक्षे गङ्गासागरसङ्गमे । देहं सन्त्यज्य गच्छन्ति पापिनोहि परांगतिम्
त्रैलोक्यदुर्लभं तीर्थं गङ्गासागरसङ्गमे । माघे तपसि शुक्लायामेकादश्यामुपोषितः ॥
तत्र शुद्धिमवाप्नोति ब्रह्महाऽपि न संशयः । गङ्गाब्धिसङ्गमे स्नात्वा हरिं दृष्ट्वा च माधवम्
कार्त्तिकेयमुखं दृष्ट्वा पुनर्जन्म न विद्यते । कार्त्तिकेयो हरिः साक्षादित्यभेदः कृतः सदाः
ये कार्त्तिकेयं पश्यन्ति ते सर्वे मोक्षगामिनः । सर्वतीर्थाधिकं तीर्थं गङ्गाब्धिसङ्गमंशृणु

जले स्थले चाऽन्तरिक्षे मृतो मोक्षमवाप्नुयात् ॥ १०७ ॥

व्यास उवाच ।

इत्युक्त्वाविष्णुदूतास्ते तौसमादाय जैमिने !। जग्मुर्विष्णुगृहंसर्वे सहसाऽऽकाशवर्त्मनि
या च पद्मावती साध्वी भर्तृद्वयसमन्विता । गता सा रूपतां विष्णोश्चतुर्वर्गप्रदायिनः
तत्रभुक्त्वाऽखिलान्भोगान्दुर्लभान्द्विजसत्तम !। परमं ज्ञानमासाद्य ययुःसारूप्यतांहरेः
सर्वतीर्थमयी गङ्गा सर्वतीर्थमयो हरिः । गङ्गायाश्च हरेश्चैव तस्माद्भक्तिर्विधीयते ॥
गङ्गाब्धिसङ्गमे पूर्वं माधवो नाम भूपतिः । तप्त्वा तपश्चिरं तत्र सदारो मोक्षमाप्तवान्

जैमिनिरुवाच ।

त्वयोक्तो माधवः कोऽसौ किंकर्म स चकार ह । कथं तेपे तपस्तन्मे सर्वं कथयसत्तम!

व्यास उवाच ।

चरितं तस्य विप्रर्षे! माधवस्य महात्मनः । आकर्णय प्रवक्ष्यामि समासेन महामते !॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे व्यास-
जैमिनिसम्वादे प्रयागवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः

## विक्रमपुत्रमाधवस्य वृत्तान्ते गङ्गासागरमाहात्म्यवर्णनम्

व्यास उवाच ।

अस्तितालध्वजानाम नगरी त्रिदिवोपमा । सर्वलोकेषुविख्याता प्रकीर्णागुणिनांगणैः
तत्राऽऽसीद्विक्रमोनामा राजा शुद्धकुलोद्भवः । धार्मिकः सत्यवादीच प्रजापालनतत्परः
तस्य हारावती नाम वल्लभा भुवि दुर्लभा । आसीत्स्वकीयवदनप्रभाजितशशिप्रभा ॥ ३
तस्य सैव प्रिया राज्ञः स्त्रीगणेऽपि च तिष्ठति । गङ्गेव सरितां भर्त्तुस्तिष्ठत्यपि सरिद्गणे

भूदेवदेवकृपया कालेन कियता द्विज ! । व्यजायत सुतस्तस्यां सर्वलक्षणसंयुतः ॥५॥
शास्त्रोक्तविधिना तस्य स राजा सर्वशास्त्रवित् । माधवेति ततो नाम चक्रवर्त्ती चकारह

ततोऽसौ माधवो विप्र ! कालेन कियता बली ।

सर्वविद्यासरित्पारं गतः सद्गुणसङ्गतः ॥ ७ ॥

अथाऽसौ यौवराज्येन राज्ये नरपतिःसुतम् । सिक्तवांस्तां महीदेव!सर्वदेवगणार्चकम्
एकस्मिन्दिवसे विप्र!चतुरङ्गबलैर्वृतः । जगाम कौतुकेनाऽसौ मृगयायै महद्वनम् ॥९॥
तत्र हत्वा बहूञ्जतूनमध्याह्ने समये ततः । कृतवान्नगरं गन्तुमुद्यमं विपिनादसौ ॥१०॥
नगरं स्वकमागच्छत्ससैन्यो माधवो मुदा । ददर्श युवतीमेकां सरसि स्नानतत्पराम्
स्नानार्हद्रव्यवसनैर्व्यक्तीकृतकलेवराम् । स्वकीयमुखसौन्दर्यजितपूर्णनिशाकराम् ॥१२॥
सुवर्णकुण्डलद्वन्द्वविभ्राजद्गण्डमण्डलाम् । सुदीर्घकेशकैश्छन्ननितम्बां चारुहासिनीम्
सुवर्णपद्मकलिकाचारून्नतपयोधराम् । मृगारिकृशमध्यां च वसन्ते कोकिलस्वराम् ॥
यूनां मनोहरा राज्ये कन्दर्पेण महात्मना । आरोपिता पताकेव सुन्दरी सा व्यराजत॥

तादृशीं तां समालोक्य प्रान्तरे सङ्गवर्जिते ।

कः कामवशगो न स्यात्क्षितौ प्राणान्वहन्पुमान् ॥ १६

अथ विक्रमपुत्रोऽसौ तामालोक्य वराननाम् । कन्दर्पबाणव्रणितहृदयश्चेत्यचिन्तयत्
एतस्याःसदृशीकाऽपि न दृष्टा क्षितिमण्डले । एतामिह समालिङ्ग्य सफलंजन्मचेष्यते

श्रेष्ठोऽस्मि सर्वलोकानां वयस्तेजोगुणैरहम् ।

यद्यपीन्द्राङ्गनेयं स्यान्नेतव्याऽद्य तथापि च ॥ १९ ॥

परस्त्रीहरणे यो वा दोषो भवति साम्प्रतम् । को वा शक्नोतितद्वक्तुं यतो राजा पिता मम
इतिसञ्चिन्त्य मनसा दृढं कामवशंगतः । दूरे संस्थाप्य सैन्यानि ययौ सा स्नाति यत्र ह
ऐश्वर्यं च मदश्चैव कामश्चैव महीतले । त्रयएते विवेकस्य तेजो घ्नन्ति किमद्भुतम् ॥

पिताऽस्य दुरितध्वंसी धर्मरक्षाकरो नृणाम् ।

धिक्स्वयं कामदेवोऽसौ मोहयत्यखिलं जगत् ॥ २३ ॥

तमायातं समालोक्य वेगेन महता ततः । एकाकिनी सा रमने भृशं चिन्ताकुलाऽभवत्

एकाकिनीं समालोक्य कान्तारस्थां सयौवनाम् । अयंधावति वेगेन तन्मे मनसिवर्तते
जल्पन्ति मुनयः सर्वे धर्मो रक्षति रक्षितः । न च ज्ञातव्यमत्रैव किमत्र च भविष्यति॥
सहायहीनं यत्स्थानं पुरोधावन्ति शत्रवः । श्लाघ्यं पलायनं तत्र निवासः प्राणनाशकः
इत्यालोच्यवरारोहासव्यकच्छे(क्षे)घटंततः । कृत्वा पलायने भीत्यामनश्चक्रेसरोवरात्
ततः स माधवश्चाऽपि जवेन महता द्विज !। एत्वं तस्याः पुरो गत्वा प्रसारितकरःस्थितः

श्रीमाधव उवाच ।

वराङ्गने चारुदेहे! सुयौवनबलान्मम । पलायसे मनो हृत्वा हतोऽस्म्यहमचेतनः॥३०॥

किं नाम चञ्चलापाङ्गि ! चार्वङ्गि ! तव कः पतिः ।
स्वर्गात्किं वाऽऽगताऽसि त्वं त्वत्तुल्या नास्ति भूतले ॥ ३१ ॥

सुन्दरि! त्वामिह श्रेष्ठा सर्वलक्षणसंयुता । कथं वहसि पानीयं दासीव कमलानने !॥
पयोधरौ शातकुम्भौ सदा वहसि वक्षसि । कक्षेण जलकुम्भं च कोमलाङ्गादमद्भुतम्
दिवाकरकरात्यन्तसन्तप्ते पथि लोहिताः । पादाङ्गुल्यन्तरा भान्ति जपानां कलिका इव
सुश्रोणि भजमांप्रीत्या त्यज कुम्भं वरानने !। तव दुःखावसानोऽभून्मम दर्शनमात्रतः
श्रीमद्विक्रमभूभर्त्तुः पुत्रोऽहं माधवाह्वयः । सर्वभावैर्भविष्यामि वराङ्गस्तव सुन्दरि ! ॥
मम स्त्रीगणमध्ये तु सुभगा त्वं भविष्यसि । सुपुष्पवल्लीमध्ये तु द्विरेफस्येव मालती

अथवा मम वाक्यं त्वं गर्वाल्लङ्घितुमिच्छसि ।
न त्यक्ष्यामि तथापि त्वां यतोऽहं नृपतेः सुतः ॥ ३८ ॥

व्यास उवाच ।

तेनोक्तं वचनं श्रुत्वा पन्थानं प्रविहायसा । तस्थावधोमुखी विप्र! प्राहेति च शनैःशनैः

कदापि च परः कोऽपि न शृणोति वचो मम ।
तथापि लज्जां सन्त्यज्य वक्ष्याम्येव तवाऽग्रतः ॥ ४० ॥

तथा ह्यहं महावीर! सुबाहुक्षत्रियप्रिया । नयामि देवपूजार्थं जलं चन्द्रकला ह्यहम् ॥४१
यद्वचो भवता प्रोक्तं न च तत्त्वत्कुलोचितम् । त्वद्वंशप्रभवाः सर्वे परस्त्रीषु नपुंसकाः॥
अहमेकाकिनी नारी वीराणांप्रभवो भवान् । बलादालिङ्ग्यमामत्रयशःकिंतेभविष्यति

परस्त्रियं समालिङ्ग्य क्षणमात्रसुखं भवेत् । इहापकीर्तिः शेषंच दुःखंकल्पशताधिकम्
कर्मभूमिरियं शूर ! पुण्यमत्र विधीयताम् । परस्त्रीहरणे चित्तं कदाचिदपि मा कुरु
लोभात्प्रवर्त्तते कामःकामात्पापंप्रवर्त्तते । पापान्मृत्युर्मृतेऽपि स्याद्दुस्तरेनरकेस्थितिः

सर्वेऽपि त्वद्गुणा व्यर्थास्त्वज्जन्माऽपि च निष्फलम् ।
कामस्य वशतां गत्वा रन्तुमिच्छेः परस्त्रियम् ॥ ४७ ॥

मांसमूत्रपुरीषास्थिनिर्मितं मे कलेवरम् । एतदेव समालोक्य स्मरस्य वशतां गतः ॥
भूपालवंशोत्पत्तित्वात्पौरेभ्यो न बिभेषिकिम् । मस्तकोपरिगर्जन्तं नेक्षसेसमवर्त्तिनम्

ग्रसन्ते बडिशं मत्स्यास्ते सर्वे ज्ञानवर्जिताः ।
ज्ञानी चेत्प्राप्य बडिशं भवान्कस्माद्ग्रसिष्यसि ॥ ५० ॥

विवेकस्त्रिषु लोकेषु सम्पदां परमं परम् । अविवेको हि लोकानामापदां परमं पदम् ॥
तयोक्तं वचनं श्रुत्वा माधवः काममोहितः । उवाच जैमिने! वाचं विनयावनतः पुनः॥
तवोद्वीक्षणनाराचधाराजर्जरमानसम् । प्रिये! मां त्राहि त्राहीति त्वामस्मि शरणं गतः
तावत्प्रियतमा नारी यावत्तिष्ठति यौवनम् । मृणालकोशां नलिनीं हेमभृङ्गो न गच्छति
प्रसीद हरिणीनेत्रे! रक्ष मां सेवकं स्वकम् । त्वद्वाचं नीरसां श्रुत्वा भिद्यते हृदयं मम

चन्द्रकलोवाच ।

त्यज दुःखं महावीर! शृणु मद्वचनं शुभम् । प्रवक्ष्यामि मनोदुःखं हन्तुं यद्भवतःक्षमाम्
समुद्रपारे विख्याता पुरन्दरपुरोपमा । प्लक्षद्वीपेऽस्ति दीप्यन्ती विख्याता सञ्ज्ञयापुरी
गुणाकराह्वयस्तत्र राजा श्रेष्ठो महायशाः । आस्ते सर्वगुणैर्युक्तः प्रतापेऽग्निसमो बली
सुशीला नाम तद्भार्या सर्वलक्षणसंयुता । सेवावशीकृतस्वामिहृदया सदया जनैः ॥
सुलोचनाख्या तत्कन्या वीर ! तत्कुक्षिसम्भवा । सद्रूहरूपैरजयत्सकलान्सुन्दरीगणान्
तस्या रूपं गुणौघं च वर्णितुं भुवि कःक्षमः । तद्रूपदर्शमालोक्यासृजदन्यां स्वयं विधिः
अहमासं महावीर तस्या दासीनृपात्मज !। समागताऽस्मि दैवेन त्वद्देशं प्रति सुन्दरी

तत्समा सुन्दरी नास्ति त्वत्समो नास्ति सुन्दरः ।
गृहाण तां विवाहेन स्वर्गभोगं यदीच्छसि ॥ ६३ ॥

जम्बुकीं बलवान्सिंहो विहायाऽङ्कगतामपि । हस्तिनीं नहि किं धत्ते यत्नतः प्रतिपत्तये
उद्योगी पुरुषो लोके लभते परमां श्रियम् । उद्योगेन विना ब्रूहि किं कार्यं भुविविद्यते

व्यास उवाच ।

तस्यास्तद्वचनं श्रुत्वा माधवो माधवार्चकः । दूरीकृत्यस्मरोद्भावं तामित्याह वराननाम्

माधव उवाच ।

केनचिह्नेन तां कन्यां ज्ञास्यामि कमलानने !। तन्मे कथय सुश्रोणि! यदि ते मय्यनुग्रहः
सिन्धुपारप्रतीपाङ्गः कथं यास्यामि मानुषः । भविष्यति तया सार्धं कथं सन्दर्शनं मम

चन्द्रकलोवाच ।

तस्यास्तु वामजघने तिलकं तिलसन्निभम् । अस्ति तद्दर्शनेनैव ज्ञास्यसित्वं सुलोचनाम्
उच्चैःश्रवससञ्ज्ञस्य तुरगस्य महात्मनः । त्वन्मन्दुरायां पुत्रोऽस्तिसर्वगामीहयोत्तमः
तमश्वश्रेष्ठमारुह्य जवेन पवनोपमम् । गमिष्यसि समुद्रान्तं सुखसाध्या मही यतः ॥
ततोभूपालपुत्रोऽसौ ससैन्योगृहमागतः । साऽपि चन्द्रकलासाध्वी सुप्रीतास्वगृहंगता
विचिन्त्यवचनंतस्यामाधवोऽतित्वरान्वितः।चिन्ताकुलितचित्तोऽसौसहसामन्दुरांययौ
तत्र बद्धाञ्जलिर्भूत्वावैक्रमिर्विक्रमान्वितः । तुरङ्गमानिति प्राह गुणयुक्तान्महाबलान् ॥

माधव उवाच ।

यूयं सर्वे महात्मानः सर्वलक्षणसंयुताः । समुद्रपारे मां नेतुं कः शक्नोति तुरङ्गमः ॥
अथ ते तुरगाः सर्वे श्रुत्वा तद्वचनं भिया । परस्परं क्षितिमुखास्तस्थुर्नो नेतुमुद्यताः॥
अथैकस्तुरगस्तत्र समस्तैर्लक्षणैर्युतः । माधवस्य पुरो गत्वा वाचमेतामुवाच ह ॥७७
अहं भवन्तं नेष्यामि सिन्धुपारं न संशयः । किंत्वाकर्णय दुःखानिमदीयानिनृपात्मज!
अन्यभुक्तावशिष्टं यत्तत्तृणं मम भक्षणम् । ग्रन्थिकोटिप्रयुक्ताभीरज्जुभिर्मम बन्धनम्

स्वप्नेऽपि व्रीहयो वीर ! न दृष्टा बलिना मया ।
अन्येषामपि भोगानां का कथाऽत्र नृपात्मज ! ॥ ८० ॥

गौरवेण विना वीर! न सतां विक्रमोभवेत् । ज्वलिष्यतिकथंवह्निर्विनाकाष्ठंघृतादिभिः
अहमीदृगिमे सर्वे नानाभूषासमन्विताः । न तु सिंहसमाः श्वानः सर्वाभरणभूषिताः ॥

प्रदक्षिणाकारतया सशैलद्वीपसागराः। क्षणमात्रेण पृथिवीं शक्नोमि भूपते ! प्रभो !॥

माधव उवाच।

क्षमस्व दोषं सकलं मत्पित्रा विहितं हय !। अद्यप्रभृति मुख्योऽसि मन्दुराभ्यन्तरेमम
परेण दत्तः सन्तापः सदा तिष्ठति नोत्तमे। सलिलं वह्निसन्तप्तं क्षणाच्छीतलतां व्रजेत्
स्वमाधुर्यैर्भवेदिक्षुः क्षणमपि हि तृप्तये। इत्युक्त्वा तं नमस्कृत्य तुरङ्गं नृपनन्दनः॥
ततः शुभे क्षणे तस्य पृष्ठमारुह्य वाजिनः। प्रचेताख्येन भृत्येन विलङ्घ्य जलधिं ययौ
पुरीं सर्वगुणैर्युक्तां पुरन्दरपुरोपमाम्। जगाम माधवो भ्राजन्सौधावलिभिरुज्ज्वलाम्

तत्रोपस्थां च युवतीं गन्धिनीं माधवो द्विजः।
दृष्ट्वा स्मितमुखो वाक्यमुवाचेति च कोमलम्॥ ८९॥

वृद्धे मातरहं पान्थो दिनमेकं तवालये। स्थातुमिच्छामिकाऽऽज्ञातेधनवान्माधवाह्वयः
आतिथेयी गन्धिनीसातमादायाऽतिथिंततः। हृष्टा तुस्वगृहंतत्र जगामाऽत्यन्तभक्तितः
यथोक्तविधिनाविप्रतयातस्यार्हणाकृता। माधवस्तांनिशांनिन्येचिन्ताव्याकुलमानसः
अथप्रभातेविमलेगन्धिन्याःपुरतोद्विज !। माधवः सकलं कार्यं कथयामास भूसुरः॥
देव्यास्सुलोचनायाश्च तस्मिन्नेव दिने शुभे। गन्धाधिवासनं कर्म रचयामाससाचतत्
श्रुत्वाऽधिवासनं कर्मराजपुत्र्यास्ततो द्विज। शोकसागरकल्लोलनिकरोमाधवोऽभवत्
यदर्थं राज्यवसतिर्मया त्यक्ता तदिच्छुना। यदर्थं बान्धवास्त्यक्ता लङ्घितश्च महोदधिः
अद्यैव तस्या दैवेन भविष्यत्यधिवासनम्। निष्फलाःसकलाएवयावन्तोविहिताःश्रमाः

किन्तु लोका न जल्पन्ति माच्छ्या मुग्धो गतोऽखिलम्।
कोऽपि भग्नोद्यमो न स्यात्प्रज्ञाय कार्यनिश्चयम्॥ ९८॥

एतद्विचिन्त्य मनसा माधवोऽसौ पुनःपुनः। मालापुष्पादिके कार्यंलिलेखप्रेमवर्णितम्
कन्ये! माधवनामाऽहं कुमारो धरणीपतेः। तालध्वजाधिराजस्य विक्रमस्य महात्मनः
त्वच्चेटी तत्र काऽप्यस्ति कन्ये चन्द्रकलाह्वया। तयातवगुणग्रामःकथितो मे पुराकिल
त्वद्गुणग्रामसँल्लग्नचित्तोऽहं निम्नसागरम्। विलङ्घ्य तुरगारूढः समायातः पुरीं तव
अधुना मां वरत्वेन वृणु कन्ये सुलोचने !। यतः संसारमध्येऽस्मिंस्त्वमस्मिशरणागतः

यथा गुणवतीं त्वां हि नान्योजानाति तत्पुमान् । सरोजिनीगुणंवेत्तिभृङ्गएव न दर्दुरः
शुभ्रस्य जलदस्याऽपि गगनैकस्य नोदयः । तथापि न भजेदन्यं विना चन्द्रं कुमुद्वती॥
अथ तल्लेखनं वीरो मालाकारप्रियाकरे । स्वर्णाङ्गुलीयसहितं ददौ स विनयो नृपः ॥

पुष्पमालान्तरे कृत्वा तं लेखं साङ्गुलीयकम् ।
राजपुत्रीसमीपे सा गन्धिनी तरसा ययौ ॥ १०७ ॥

पुष्पमालांबलितस्यैदत्त्वासागन्धिनीततः । तस्थौ बद्धाञ्जलिर्भूत्वादूरंगत्वाभियाकियत्
ततः सा राजतनयालिखितंसाङ्गुलीयकम् । विलोक्यसकलंमूलात्पपाठात्यन्तपण्डिता
साऽपि तत्पृष्ठपत्रे तु तद्योग्यमुत्तरं द्विज !। अलिखद्विस्मिता कन्या यद्यच्च सर्वमुच्यते
राजपुत्र महाबाहो त्वद्वाक्यमखिलं श्रुतम् । शृणु सत्तम वाक्यं मे यथोचितमिदं वचः
अद्याधिवासनं कर्मश्वो विवाहोममध्रुवम् । पितुर्यत्सम्मतंकार्यंपृथिव्यांकोऽपिनत्यजेत्
कार्ये तु दुःखसाध्ये तु कार्योनाऽतिश्रमो जनैः । कार्यसिद्धेश्रमोनस्यादसिद्धेश्रमएवहि

तथापि शृणु वक्ष्यामि येन प्राप्नोति मां भवान् ।
यदर्थो भवता चैव समुद्रोऽपि च लङ्घितः ॥ ११४ ॥

मया प्रदक्षिणीकार्यो वरो विद्याधरोह्ययम् । तत्पुरोऽहं गमिष्यामि नानाभरणभूषिता
वामबाहूर्ध्वं कृत्वा च वीरःस्यान्ममसम्मुखः । येन मां शक्यतेनेतुं स मे भर्ताभविष्यति
सत्यं सत्यमिदं सत्यं पत्रेऽस्मिल्लिखितं मया । अन्यथासुदृढंकार्यंलङ्घितुं नहि शक्यते
एतद्विलिख्य सा कन्या तस्याएवकरेददौ । साऽपि तत्पत्रमादायगता माधवसन्निधिम्
तया तल्लिखितं पत्रेतत्पठित्वातुमाधवः । भूयोऽपिलिखितंविप्र! लिलेखाऽत्यन्तकौतुकैः
त्वया यदुक्तं हे कन्ये धन्ये धन्यकुलोद्भवे !। तदेवमम्मतंसर्वं कोऽपि नास्त्यत्र संशयः
ततस्तु गन्धिनीभूयो गत्वा तन्निकटे द्विज !। ददौसुलोचनायै सा लेखनं सुन्दराक्षरम्
अथ तल्लेखनं ज्ञात्वा कुमाराङ्गीकृतंद्विज !। बभूवाऽत्यन्तसंहृष्टा विस्मिताच पुनःपुनः

तस्मिन्नसंशयं कार्यं यदाऽसौ स्वीकृतं ददौ ।
तदा किं स्वयमिन्द्रो वा यन्मायामाधवः पुमान् ॥ १२३ ॥

इह लोके परोऽस्ति स्नेहभूमिः पतिःसदा । विना सन्दर्शनेनाऽपि न वरत्वे वृतो मया

इति सञ्चिन्त्य सा साध्वी निःश्वस्य च पुनःपुनः ।
स्नानव्याजाद्गता वासं गन्धिन्याश्च सहाऽलिभिः ॥ १२५ ॥

हस्ते विधृत्य तां कन्यां गन्धिनी सा पुरन्धिका । माधवंदर्शयामास शयानंमञ्चकोपरि
नं समालोक्य सा कन्याकन्दर्पसदृशंततः । रोमाञ्चितं समस्ताङ्गमुदात्तंपश्यतिक्रमात्
तन्नेत्रयुगलं तस्मिन्यत्र यत्र निमज्जति । कष्टदृष्ट्या च नाऽन्यत्रतस्मान्नामाऽत्रगच्छति
साक्षादयं वा कन्दर्पो देवकीनन्दनोऽपि वा । शर्वोवाविषयाधीशःसाक्षाद्वापार्वतीपतिः
रूपैरेतैर्जगन्मध्ये मानुषो न हि जायते । अनेन स्वामिना जन्म सफलं हरिणीदृशः ॥
यद्भक्तिवशगो भूत्वा विधाताऽत्यन्तयत्नतः । यदाऽहं कन्यका जाता तदैनं किं ससर्ज ह
अद्यप्रभृति नाथोऽयं स्वयं नास्त्यत्र संशयः । इत्युक्त्वा सा मतिचक्रेगन्तुंनिजगृहम्प्रति

गन्धिन्युवाच ।

कन्ये युक्तिरियं भद्रे! त्वयाऽपिहृदिसेव्यताम् । यथासुमूर्तिःपुरुषोनतथाभातिनिन्दया
उल्लासो गात्रभङ्गश्च मन्ददृष्टिश्च विस्मितम् । सर्वाणिविष्णुचिह्नानिनिद्रायांमृगलोचने
सन्दष्टौष्ठपुटाक्षेपात्प्रोक्तो नोत्तिष्ठति ध्रुवम् । शनैःशनैःकरं तस्य स्वकराभ्यामदर्शयत्

त्वां द्रष्टुं राजकन्यायाः सन्धृत्याऽऽगमनं शृणु ।
श्रुत्वैतत्सोऽपि चोत्तस्थौ सम्भ्रमाक्रान्तमानसः ॥ १३६ ॥
विनयावनतो वाक्यं माधवश्चेत्युवाच ताम् ॥ १३७ ॥

माधव उवाच ।

कन्ये मज्जन्मसफलं श्रमश्च सफलो मम । त्वच्चारुवदनाम्भोजं साक्षादेव मयेक्षितम् ॥
सफलं यौवनं कन्ये त्वंवरत्वेनमाम्वृणु । त्वद्योग्योऽस्तिवरोनान्योमांविनाभुविसुन्दरि

सुलोचनोवाच ।

सुमते! त्वं मम स्वामी भाग्येन महता भवेः । मया यद्वचनं प्रोक्तं तदेव सुदृढं खलु ॥
आज्ञां कुरु महाभाग ! गच्छामि निजमन्दिरम् ॥ १४० ॥

माधव उवाच ।

तिष्ठेति यदि वा वच्मि कन्ये गर्वस्तदाभवेत् । गच्छेतिवचनं वक्तुं नायातिवदनान्मम

स्वयं विचार्य चार्वङ्गि यद्युक्तं तद्विधीयताम् । यदुक्तं वचनं तस्मिन्भविष्यसि सुतत्परा इत्युक्ता तेन सा कन्या हर्षिता स्वगृहं गता । तत्रैव माधवस्तस्थौ वृतो बहुपरिच्छदैः चारुविद्याधर एवं स्थितो विद्याधरो वरः । तत्रस्थाश्च जनाः सर्वे स्रक्चन्दनविभूषिताः दिव्याम्बरपरीधाना रेजुर्देवगणा इव । क्वचिद्गीतं क्वचिन्नृत्यं क्वचित्कोलाहलध्वनिः ॥ क्वचिच्चाऽपि प्रदीपालिस्तत्पुरे समवर्तत । हेषितैः सप्तिवृन्दानां हस्तिनां चैव बृंहितैः हर्षस्वनैश्च पत्रिणां पूरिताः ककुभो दश । नानापताकानिवहैर्धवलैर्नृपसद्मभिः ॥४७॥ समन्ताद्गगनं सर्वं व्याप्तं तत्र हि जैमिने ॥ केऽपि शङ्खान्समादध्मुर्ढक्काडिण्डिमझर्झरान् वादयाञ्चक्रिरे केऽपि साधुकाहलकादिकम् । ततो युवतयः सर्वाः सरोजकोरकस्तनाः ललितानि सुगीतानि जगुश्चन्द्रनिभाननाः । परस्परं यौवनतो घर्षणच्युतमालया ॥ प्रस्वेदाम्बुगलद्गन्धैर्बभौ कन्येव तत्र भूः । गम्भारीकाष्ठरचितं पीठमारुह्य सुन्दरी ॥

ज्ञातिभिर्वेष्टिता याता वरं स्थानं सुलोचना ॥ १५२ ॥

अत्रान्तरे विक्रमपुत्र एष शय्योपरिष्टात्किल लब्धनिद्रः ।
न वेद दैवेन विवाहकार्यं सुलोचनायाश्च सुलोचनायाः ॥ १५३ ॥

विधातृमायाशतमोहितानां कदापि न स्याद्भुवने सुखाप्तिः ।
ततः स्वसङ्केतविधिं जनोऽयं विस्मृत्य निद्रामभजत्सुखेन ॥ १५४ ॥

वनं परित्यज्य कृशानुभीत्या जलं प्रविष्टा नलिनी सुखार्थम् ।
सन्दह्यते तत्र हिमानलेन यद्यस्य कर्म न तदन्यथा स्यात् ॥ १५५ ॥

वेदादिशास्त्रमखिलं प्रपठन्तु लोकाः कुर्वन्तु नाम सततं क्षितिपालसेवाम् ।
उग्रं तपः प्रतिदिनं प्रतिसाधयन्तु न श्रीस्तथापि च भजत्यतिभाग्यहीनम् ॥

मस्तकोपरितिष्ठन्ति दुःखानि च सुखानि च । अन्यकाले समायान्ति हठादन्यानि सत्तम निद्रावन्तं समालोक्य माधवं दुःखभागिनम् । प्रचेष्टश्चिन्तयामास जानन्सङ्केतमेतयोः धिगस्त्वमुं राजपुत्रं दैवमायाविमोहितः । विस्मृत्य निजसङ्केतं निद्रां सम्प्राप्य सेवते असौ दुःखागता कन्या वरस्य निकटेऽधुना । किं भवेन्नयने तादृक्सङ्केतं याति निष्फलम् तिष्ठ त्वं वै पापकर्मन्निद्रां संसेव्य मस्तके । मया हयं समारुह्य नेतव्या सा वराङ्गना

कन्यारत्नं च रत्नं च मुदा प्राप्नोति दुर्लभम् ।
तदा किं सेवया कार्यं माधवस्याऽस्य दुर्मतेः ॥ १६२ ॥
धनार्थं क्रियते सेवा सर्वभावेन भूभुजाम् । तच्चेन्मुदा स्वयं प्राप्तं सेवादुःखेनकिंतदा
प्रचेष्टइतिसञ्चिन्त्य समारुह्य तुरङ्गमम् । सा राजकन्या यत्राऽऽस्ते ययौ तत्र नभः पथा
वरं प्रदक्षिणीकृत्य स्मरन्ती समयं स्वकम् । वामहस्तं समुद्धृत्य तस्थौ विद्याधराग्रतः
हस्ते विधृत्य तां कन्यां प्रचेष्टोऽतिजवेन सः । पृष्ठे निमेषयामाससतेस्तस्य महाबलः
तां राजपुत्रीमादायपुरींकाञ्चींजगामच । तामथाऽसौ समालोक्यप्रचेष्टोऽतित्वरान्वितः
उवाच प्रवहन्पाणिं नष्टमानससाध्वसः ॥ १६७ ॥

प्रचेष्ट उवाच ।

समुद्रान्तरतीरस्थां काञ्चीं नाम पुरीमिमाम् । पश्यसर्वत्रविख्यातां सर्वलोकसुखप्रदाम्
अत्र माधववीरस्य तस्य विद्याधरस्य वा । कस्यापिच्रभयंनास्ति पश्य चन्द्रनिभानने!
मच्चित्तेन्धनसँल्लग्नां कामानलशिखावलिम् । कुचकुम्भकरैः सिक्तं निर्वाणंदेहि सुन्दरि!
त्वच्चारुमुखपद्मेऽस्मिन्मन्मुखभ्रमरोऽधुना । इच्छेत्पातुं मधून्यत्रकाऽऽज्ञानेतिष्ठतिप्रिये!
त्वच्चारुगात्रसंस्पर्शाच्छरैस्तुदति मां स्मरः । त्राहित्राहिप्रियेत्राहितवाऽस्मिशरणंगतः
इतिब्रुवन्तं तं मूढमभिवीक्ष्य वराङ्गना । शोकाग्नितप्तसर्वाङ्गी चिन्तयामास चेतसा ॥
अयं मूढो दुष्टचेष्टः प्रचेष्टोनामवेधसा । लिखितः किं ललाटे मे यन्मयाहाहताऽस्म्यहम्
क माता क च मे तातः क च विद्याधरो वरः ।
अनेनाऽहं समानीता धिगस्तु घटनां विधेः ॥ १७५ ॥
अलं लोकाः प्रकुर्वन्ति गर्वं जगति सर्वदा । वेत्तिच्छेत्तुं गर्ववृक्षं विधाता घटनासिना
तथापि विपदे धैर्यं निर्भयत्वं च तत्परम् । उपायाश्चेति चत्वारः प्रशस्यादीर्घदर्शिभिः
इत्यालोच्यहृदा कन्यावचोभिःकोमलाक्षरैः । प्रचेष्टंप्रत्युवाचाऽसौसर्वकार्यविचक्षणा

सुलोचनोवाच ।

दृढं कुरु मनो वीर! कन्याऽहमविवाहिता । मां समालिङ्ग्य मोहेन कथं यास्यसिदुर्मते
शास्त्रोक्तविधिना वीर ! विवाहेन गृहाण माम् ।

तव सेवां करिष्यामि दासीवत्कोऽत्र संशयः ॥ १८० ॥
त्वं मे प्राणाश्च मित्रंच भूषणंबान्धवास्तथा । अनन्यगतयोनार्योभवान्नीतिमवैतिकिम्
विवाहयोग्यवस्तूनि विवाहार्थं समानय । मत्पाणिग्रहणं शीघ्रं कुरु जाड्यं जहीति च
अन्तर्दृढं बहिःश्लक्ष्णं बदरीफलवद्वचः । आकर्ण्य तस्या मूढोऽसौ परमां प्रीतिमाययौ
तुरङ्गमं च तां कन्यां संस्थाप्यैकत्र दुर्मतिः । करकङ्कणमादाय तस्यास्तत्पुरमाययौ॥
ततः सा चिन्तयामास विधिर्नूनंप्रशस्यतम् । यत आवांपरित्यज्यमूढोऽसौहर्षितोययौ

किंकर्तव्यं क्व गन्तव्यं क्वस्थातव्यं मयाऽधुना ।
अतिसङ्कटकार्येऽस्मिन्निस्तारो मे भवेत्कथम् ॥ १८६ ॥

यदाऽहमत्र तिष्ठामि किं वदिष्यन्तिते तदा । पुण्यतीर्थं समासाद्य परत्र जन्मकाम्यया
पञ्चतां प्रतियास्यामि सापि श्रेयस्करी यतः । मद्वियोगादयं मूढो नविद्याधरमाधवौ
जीविष्यन्तित्रयोऽप्येते क्षणमात्रमपिस्मरन् । मयि स्थितायामेतेषां भवेज्जीवनरक्षणम्

मृतायामपि यास्यन्ति त्रयोऽप्येते तु पञ्चताम् ।
मामुद्दिश्य यदा प्राणांस्त्यक्ष्यन्ते तेऽत्र मे जनाः ॥१९० ॥

भविष्यामि तदा नूनमहं तद्वधभागिनी । इदानीं पुण्यतीर्थेषु यष्टव्यो भगवान्हरिः ॥
तस्मिन्प्रसन्ने भद्रं मे सर्वमेव भविष्यति । प्राणेषु च विनष्टेषु सर्वमेव विनश्यति ॥

तेषु स्थितेषु सकलं स्तोकस्तोकेन सिध्यति ॥ १९३ ॥

निशावशिष्टा नलिनी हिमाकरे दूरीकृते चण्डकरेण भास्वता ।
सुगन्धपुष्पप्रकरोऽतिसुन्दरी नाप्नोति किं भृङ्गवरस्य सङ्गमम् ॥ १९४ ॥
हृदा विचिन्त्येति वराङ्गना सा सप्तिं समारुह्य महाजवं तम् ।
तम्तु तपः सागरविष्णुपत्न्योर्जगाम विप्रोत्तमसङ्गमाय ॥ १९५ ॥

तस्मिन्क्षेत्रवरे पुण्ये गङ्गासागरसङ्गमे । अभूद्राजा सुषेणाख्यः सोमवंशसमुद्भवः ॥
गन्तुंतस्यसभां राज्ञश्चेतसा सा व्यचिन्तयत् । मयायुवत्या कर्तव्यंकथं भूपालदर्शनम्
अधिवासनसूत्राणि सदूर्वाणि भुजे मम । कन्याऽहं तुरगारूढा युवती सङ्गवर्जिता ॥

चारित्रं मामकं नूनं मनोविस्मयकारकम् ।

आत्मानं गोपयित्वाऽहं यास्यामि नृपतेः सभाम् ॥ १६६ ॥

इन्द्रजालप्रभावेण सा भूत्वा पुरुषाकृतिः । प्रविवेश सभां राज्ञः सुधर्मामिव जैमिने !॥

तंसम्पन्नमिवाऽयान्तं शक्तिहस्तंहयासनम् । स्वयम्पप्रच्छभूपालःकस्त्वंकुतइहाऽऽगतः

तस्यैतद्वचनं श्रुत्वा सा कन्या पुरुषाकृतिः । प्रणम्योवाच राजानं सुहृदं सज्जनाश्रयम्

देव ! वीरवरो नाम पुत्रोऽहं पृथिवीपतेः । वर्तनाय समायातस्त्वद्राज्यं प्रति सम्प्रति॥

यद्यत्कार्यमसाध्यं स्यात्तदेवसाधयाम्यहम् । मयिस्थितेन मद्भर्त्तुःकुत्रापि स्यात्पराजयः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे वीरवर-प्रदर्शो नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

## वीरवरछद्मवेषयाराजपुत्र्याभीमनादहननं परिणतंतस्यरूपंमध्येमार्गदिव्यरथारूढं पुरुषंदृष्ट्वा तत्सकाशतस्तस्यपूर्वजन्मवृत्तान्तश्रवणं सुलोचनायैपुरुषवेषायै-राज्ञास्वपुत्र्याःसमर्पणंस्वनगरगमनं प्रचेष्टस्यपाशनिगडनं राजपुत्र्यामाधवेनसम्मेलनं तयोर्विवाहः

राजोवाच ।

तिष्ठाऽत्रैव महाबाहो!मम राज्येसुशोभने । कर्तव्याते मया वृत्तिः संशयो नाऽत्रविद्यते

ततो वीरवरस्तस्य सन्निधौ धरणीपतेः । उवास सततं विप्र! तत्सेवागतमानसः ॥२॥

अथैकदा तस्य पुरे जैमिने!सकलाः प्रजाः । भीमनादोनामखड्गः क्षोभयामास सन्ततम्

तद्बुध्वाय ततो राजा प्रेषयामास तं रुषा । ततोऽसौ गण्डकं हन्तुं ययौ वीरवरोजनैः ॥

ददर्श पर्वताकारं सुप्तन्तं धरणीतले । दंष्ट्राकरालवदनं खड्गिनं तं सशक्तिधृत् ॥ ५ ॥

नभसि भ्रामयन्सप्तिं स च वीरवरो रुषा । खड्गिनं तमिति प्राह मेघगम्भीरया गिरा॥

उपार्जितास्त्वया ये ये दुरात्मन्पापपादपाः । बभूवुःफलिनस्ते तन्मृतं प्राप्य यथा द्रुमाः

खादिताः प्राणिनो ये ये राज्येऽस्मिन्पापिना त्वया ।

यमालये समस्तैस्तैः सङ्गमस्ते भविष्यति ॥ ८ ॥

मुञ्च निद्रामरे दुष्ट! मां पश्यान्तकरं स्थितम् । अनया निद्रयाकिन्तेमहानिद्रा भविष्यति

ततःसोऽपि समुत्तस्थौ क्रोधसंरक्तलोचनः । धूलिधूसरसर्वाङ्गस्त्यक्तनिद्रो महाबलः ॥

भीमनाद उवाच ।

गर्वं मा कुरु दुर्बुद्धे तवायुः शेषतां गतम् । मद्दृष्टिपथमायातः पुमान्को नु विमुच्यते

ज्वलदग्निशिखाश्रेणीं प्रविशेच्छलभो यथा । मत्कोपानलराशौ त्वं तथैव निपतिष्यसि

इतिब्रुवन्तं तंशक्त्याजघान शितया तया । सजज्वाल महाकोपात्कृत्वा हुङ्कारनिःस्वनम्

स पपात महीपृष्ठे गतासुर्गण्डकस्ततः । चालयन्पृथिवीं सर्वां शोणितौघपरिप्लुतः ॥

खड्गिनं पतितं दृष्ट्वा गङ्गाब्धिरोधसि द्विज !। समीपं तस्य भूपस्य स गन्तुमुपचक्रमे॥

स गच्छन्पथि विप्रर्षे!ददर्शैकंमहाशयम् । जाज्वल्यमानं तेजोभिर्द्वितीयमिव भास्करम्

विष्णुदूतगणैर्युक्तं तुलसीमाल्यभूषितम् । दिव्याम्बरधरं दिव्यं रथारूढं स्मिताननम्॥

प्रपच्छेति ततो भक्त्या स च वीरवरश्च तम् ।

कस्त्वं कुत इहाऽऽयातः क्व गच्छसि वदस्व नः ॥ १८ ॥

पुरुष उवाच ।

कन्ये! विधृतपुंवेषे मद्वृत्तान्तं निशामय । कथयामि समासेन श्रोतुमिच्छसि चेन्मुदा

अहमासं पुरा राजा चौरवंशवनानलः । धर्मबुद्धिरितिख्यातः सर्वधर्मपरायणः ॥ २०॥

मया यज्ञाः कृताः सर्वे दानानि सकलानि च । चतुर्वर्षसहस्राणि पालिता च वसुन्धरा

पाखण्डजनवाक्येन मया भूमिर्द्विजन्मनः । आहृता कोपमासाद्य पुनर्दत्ता न कुत्रचित्

मम तेनाऽपराधेन स्वयमेव विधिस्ततः । जहार तत्क्षणादेव सर्वां राजश्रियं रुषा ॥

अथाऽहं गतसम्पत्तिः शोकाग्निदग्धमानसः । कियद्भिर्दिवसैः साध्वि!यमराजवशं गतः

मां दृष्ट्वा चित्रगुप्तेन तत्कर्म प्रकटीकृतम् । उक्तश्च भास्करिर्देवश्चाग्रहासगतिः प्रभुः ॥

धर्मबुद्धिरयं राजा कृतपुण्यक्रियः सदा । अस्त्यस्य दुरितं किञ्चित्तन्निशामय वच्म्यहम्

पाखण्डैर्बोधितोऽयन्तु द्विजभूमिं जहार वै। तेनैव कर्मणा स्थानं नरके चाऽस्य दुस्तरे
वृत्तिच्छेदः सूर्यपुत्र!यस्य येनविधीयते। स तेन वधमाप्नोति शास्त्रेष्वितिसुनिश्चितम्
तस्मादयं पापकर्मा ब्रह्महा पृथिवीपतिः। एतस्य निरये स्थानं कल्पकोटिशतावधि॥
आत्मदत्तां हरेद्यस्तु परदत्तां च मेदिनीम्। सकोटिकुलसंयुक्तः प्रयाति नरकं विभो!॥
यो हरेच्च महीं तावद्देवस्य ब्राह्मणस्य च। न तस्य निष्कृतिर्दृष्टा कल्पकोटिशतावधि
परदत्तां क्षितिं यस्तु धरानाथोऽभिरक्षति। सकोटिगुणमाप्नोति पुण्यं दातुस्तुयद्भवेत्
ततोऽहं शमनादेशाद्भुक्त्वा वै पूतिमृत्तिकाम्। अनन्तजन्मसु प्राणिहिंसासदा मया कृता
गावश्चब्राह्मणाश्चैव तथैवान्येऽपि जीविनः। मयादुष्टेन निहताः कोटिकोटिसहस्रशः
कालेन चाऽद्य मांसाब्धि!सर्वप्राणिविहिंसकम्। खड्गयोनौ समुत्पन्नं भवतीप्रजघानह
गङ्गाब्धिसङ्गमं तीर्थं दुर्लभं दैवतैरपि। स्थलेऽपि मृत्युमासाद्य यत्रेयं मम सद्गतिः॥
गच्छ सुश्रोणि! भद्रं ते भविष्यति न संशयः। अचिरेणैव च पतिदर्शनं ते भविष्यति

व्यास उवाच।

तस्यैतद्वचनं श्रुत्वा सा कन्या परमाद्भुतम्। ववन्दे चरणौ तस्य धर्मबुद्धिर्महीपतिः॥
ततो रथं समारुह्य स राजा त्रिदिवं ययौ। सोऽपि वीरवरो विप्र!जगामनृपतेःसभाम्
राजा च तं मृतंश्रुत्वा खड्गिनंभीमविक्रमम्। तस्यैददौविवाहेन जयन्तींनिजकन्यकाम्
जयन्ती तां समादाय सा कन्या पुरुषाकृतिः। तपस्तप्तुं मनश्चक्रे गङ्गासागरसङ्गमे॥
गङ्गाब्धिसङ्गमे स्नात्वा प्रभाते द्विजसत्तम!। गीतैर्वाद्यैश्च नृत्यैश्च यजेन्नारायणं प्रभुम्
निरामिषं हविष्यं च फलाहारं द्विजोत्तम!। कदाचिदुपवासं सा कुरुते च वराङ्गना॥

एकाकिनीं मां दृष्ट्वाऽत्र धर्षयिष्यन्ति दुर्जनाः।
दुर्बलामिति मत्वाऽसौ समारुह्य च वाजिनम्॥ ४४॥

भूयएवनिजं राज्यं सा जगाम वराङ्गना। माधवस्य वियोगेन तस्य विद्याधरस्य वा॥
मृता सा रातजनया यतोऽन्यंनभजत्यपि। तस्यांमृतायांभृत्योऽसौनिर्जगामयदृच्छया
विलप्य बहुधा तत्र प्रचेष्टोऽत्यन्तशोकभाक्। जगाम मरणार्थाय गङ्गासागरसङ्गमम्
गङ्गाब्धिसङ्गमे स्नात्वा तुलसीमृद्भिभूषितः। कृताञ्जलिरिति प्राह प्रचेष्टो भीष्ममातरम्

पवित्रे त्वज्जलेमातस्त्यजाम्यत्रकलेवरम् । सुलोचना मे कान्तास्याद्यथातत्त्वंकरिष्यसि
भूयोभूयो ब्रुवन्तं तमिति तस्याश्च किङ्कराः । बद्ध्वापाशेनतंनिन्युर्निरुक्तांतत्सभांप्रति
क्रुद्धा वीरवरादेशात्किङ्करास्ते सुदारुणाः । कारायां स्थापयामासुः प्रचेण्मनुविह्वलम्
एतस्मिन्नेव काले तु दृष्ट्वा तत्कार्यमद्भुतम् । हाहाकारो महानासीत्तद्राज्ये द्विजसत्तम!
एतच्छ्रुत्वाऽद्भुतंकर्म स च राजा गुणाकरः । आयातोऽत्यन्तसन्तप्तोवदतीतिद्विजोत्तम!
निषङ्गिणश्च रथिनश्चर्मिणः खड्गिनस्तथा । धानुष्काश्चकौन्तकाश्चकोटिकोटिसहस्रशः
स्थाने स्थाने पुरे तस्मिन्राजा वै शोकविह्वलः । नियोजयामासतदारक्षार्थं द्विजसत्तम!

तेनाऽऽज्ञप्तास्ततः सर्वे योद्धारोऽमितविक्रमाः ।
सत्वराः पतिरक्षासु तस्थुस्तस्मिन्पुरे रुषा ॥ ५६ ॥

गीतानि गायकैःसर्वैर्नृत्यानिनर्तकैस्तथा । वाद्यानिवादकैश्चैवतत्रत्यक्तानिसाध्वसात्
ततः स राजा विप्रर्षे! समाहूय स्वमन्त्रिणः । किमेतदिति पप्रच्छ शोकोपहतमानसः॥

मन्त्रिणऊचुः ।

देवाद्भुतमिदं कर्म न दृष्टं न श्रुतं क्वचित् । एतावतां नृणां मध्ये पश्यतां क जगाम सा
कोऽपिजल्पति सा लक्ष्मीः शापेनाऽऽगत्य भूतले । त्वदीयंसौधमेतर्हिस्वयमन्तरधीयत
मायामयी सा रमणी मायया त्वद्गृहेस्थिता । दर्शयित्वातुमायांस्वांगतेत्यन्तेवदन्तिवै
केचिद्वदन्ति रमणी सर्वलक्षणसंयुता । आगमिष्यति भूयोऽपि भगाङ्गो मघवा यतः॥
तन्मुखं चन्द्रवन्मत्वा विचिन्त्यात्मानमात्मना । केचिद्वदन्ति चन्द्रेण नीतासुप्रतिपत्तये
वदन्तिकेऽपिसाकन्यासद्गुणादीर्घवासना। भ्रान्त्याचन्द्रमसाग्रस्तापूर्णचन्द्रनिभानना
दिग्गजैर्नलिनीभ्रान्त्या प्रफुल्लकमलानना । विषदण्डप्रहस्ता च नीरजाकलिकाकुचा ॥
केचिद्वदन्ति सृष्ट्वा तां स्रष्टुमन्यां स्त्रियं नृप !। तद्रूपदर्शनार्थाय नीता रूपगुणास्थिता

केचिद्वदन्ति भूपाल ! त्वया सर्वदिशो जिताः ।
रूपैर्देवाङ्गना जेतुं गता सा त्रिदिवं प्रति ॥ ६७ ॥
अथ ते मन्त्रिणोऽन्योन्यमालोक्य विमुखश्रियः ।
स्तब्धाइवाऽभवन्सर्वे निरुत्साहाः ससाध्वसाः ॥ ६८ ॥

भूपःसुलोचनेपुत्रि!क्वगताऽसिविहायमाम्। इत्युक्त्वासमहीपालःपृथिव्यांमूर्च्छितोऽपतत्
राजानं पतितं दृष्ट्वा शोकेन महता ततः। जज्ञे हाहारवस्तस्मिन्नगरे द्विजसत्तम!॥७०॥
तत्क्रन्दनध्वनेस्तत्र दिक्षु जाता प्रतिध्वनिः। उत्प्रेक्षते तत्र लोकः क्रन्दन्ति ककुभोद्‌ःः
धूलिधूसरिताङ्गं तु नृपतिं मुक्तकेशकम्। विधृत्य मन्त्रिणः सर्वे तरसा सौधमाययुः॥
अथ विद्याधरस्तत्र श्रीविक्रमतनूद्भवः। तस्याः पीठं समालिङ्‌ग्य रुरोद करुणस्वनैः॥
हा प्रिये चञ्चलापाङ्गि सुवर्णकुसुमप्रभे!। शोकाब्धौ पातयित्वा मां क्वगताऽसिवरानने!
मम किं दूषणं दृष्टं त्वया निर्दोषया प्रिये!। न ददासि कथं भद्रे दर्शनं कमलानने!॥
न जीविष्याम्यहं भद्रे क्षणमात्रं त्वया विना। अतोमे दर्शनंदत्त्वा क्रियतां प्राणरक्षणम्

किं धनैः किं जनैः किं मे मित्रैः किं वा धनैर्गृहैः।
नाऽऽप्नोमि यदि भद्रे! त्वां प्राणेभ्योऽपि गरीयसीम्॥ ७७॥
एतच्चान्यच्च विप्रर्षे! स कृत्वा करुणं महत्।
शोकान्मृत्युं विनिश्चिन्त्य(त्य) ययौ गङ्गाब्धिसङ्गमम्॥ ७८॥

तत्र गङ्गाम्भसि स्नात्वासमुद्रजलमिश्रिते। निवेद्य भास्करायार्घ्यंगङ्गांनत्वाऽऽहमातरम्
गङ्गे देवि जगन्मातस्त्वज्जले विमले तनुम्। त्यजामितांयथाभूयःप्राप्नोमितत्करिष्यसि
इति ब्रुवन्तं तं विप्र! तत्किङ्करवरास्ततः। विधिं विनिन्युः सदृशं क्रुद्धा वीरवरस्य च
ततो वीरवरः प्राह कस्त्वं भोः कुतआगतः। कथमत्र तनुत्यागं कुरुषे तद्वदस्व मे॥
तद्वाक्यमेतदाकर्ण्यततोविद्याधरोऽखिलाम्। तांकथांकथयामासशृण्वतांविस्मयप्रदाम्

अथ त्वं मूर्ख! लोकानां प्रवरोऽसि न संशयः।
गान्धर्वी राक्षसी वाऽपि पन्नगी वाऽपि किन्नरी॥ ८४॥

शापागनेव सा कन्या तस्मादन्तर्हितास्वयम्। सा देवरूपिणीकन्यादेवानांनिलयं गता
कथं तया समं भूयो दर्शनं ते भविष्यति। चकोरपेयं पीयूषं गगने रोहिणीपतेः॥८६॥
किं शक्नुवन्ति तं पापा वायसा बलिनोऽपिच। यदप्राप्यंनतत्प्राप्यंप्राप्यंयत्तच्चलभ्यते
जानन्ति तज्जनं कश्चिन्मोहस्प्रति नगच्छति। केनाऽपि दीयतेकन्या कन्याकेनाऽपिगृह्यते
पूर्वजन्मनि या कन्या तां कन्यां लभते पतिः। पुत्रप्रयोजनाभार्या पुत्राःपिण्डप्रयोजनाः

कुर्वन्ति दारग्रहणमतएव मनीषिणः। यथेह दीयते नार्या तथा नारी समश्नुते ॥९०॥
कन्दर्पजन्यामप्येष भृङ्गः कुमुदिनीं सहेत्। सद्रूपोऽपि पतिः स्त्रीणांसन्तोषायभवेन्नहि
रवौ स्थितेऽपि पद्मिन्या मधूनि भ्रमरः पिबेत्। नारीषु सततं चित्तंविष्णुभक्तावनादरः

शोकैः कैश्चित्तनुत्यागस्तिस्रः पुंसां विडम्बनाः।

दाराः पुत्रास्तथा भ्राता देशाश्च बान्धवास्तथा ॥ ९३ ॥

पुनर्लभ्या इमे सर्वे पुनर्लभ्या न चाऽसवः। न मुक्तोविषयोधर्मो न च कर्मकृतं त्वया
वर्तमाने गते मूढ! भविष्यं जन्म दुर्लभम्। मम माता मम पिता भार्या भ्राताधनं मम
निष्फलं याति वै जन्म नृणां ममतया तया। एवं प्रबोधितः सम्यक्तेन धीरवरेणसः
दौर्मनस्यं परित्यज्य तस्थौ तत्रैवजैमिने!। ततस्तु गन्धिनी प्रीत्या हसन्तीस्वगृहंगता

गत्वा च माधवं मञ्चे स्वपन्तं सा ददर्श ह ॥९७॥

गन्धिन्युवाच।

उत्तिष्ठोत्तिष्ठ दुर्बुद्धे! भ्रमस्तेऽविफलोऽभवत्।

विवाहकाले सा कन्या बभूवाऽन्तर्हिता स्वयम् ॥ ९८ ॥

एवंतस्यावचःश्रुत्वासमुत्तस्थौसमाधवः। विललापाऽऽकुलःशोकैर्महद्भिःक्ष्मातलेलुठन्
कन्याया दूषणंनास्ति नास्ति विद्याधरस्यवा। ममैवदूषणं सर्वंयतो हीनस्य सङ्गभाक्
नीचसङ्गे कृते पुंसा सुखं यच्छति नो विधिः। एतदेव मया ज्ञातं यतो गतिरियं मम॥
न प्राप्नोति सुखं किञ्चिन्नीचसङ्गान्महानपि। प्रेतसङ्गान्महादेवो नग्नो भग्नविभूषणः॥
प्रविश्य निलयंनीचः स्त्रीधनादिकमीक्षते। किञ्चित्प्रसङ्गमासाद्य षड्वक्त्रः सषडाननः
स तां श्रुत्वा गुणं नीचः सद्य एव विषीदति। दोषं संश्रोतुमाप्नोति शतरूपो भवेत्तदा

शुभमिच्छन्निजं प्राज्ञो नीचेभ्यो नहि निश्चयेत्।

क्षणमेकमपि प्राज्ञो नीचेभ्यो नहि निश्चयेत् ॥ १०५ ॥

पादमेकमपि प्राज्ञो नीचैः सह न गच्छति। विश्वासवचनं नीचः सद्यएव विषीदति॥
दोषं सा श्रोतुमाप्नोति श्रोतुमायाति यत्नतः। ततः समयमासाद्य प्रकाशयति चोद्धसन्
मनस्येकंवचस्येकं कर्मण्येकंयतात्मनाम्। मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम्

यदाऽकरिष्यत्सा कन्या विवाहं सा नृपात्मजा ।
नाऽभविष्यत्तदा शोकः स्वल्पोऽपि हृदये मम ॥ १०९ ॥
स्वर्गंगता चेत्सा कन्या सर्वलक्षणसंयुता । नीता नीचेन शोकोऽयंहृदये दुःसहोऽभवत्
लिखितामिवसर्वत्रतांपश्यामि वराननाम् । विमस्तुं नहिशक्नोमिजीवताऽनेनचाऽऽत्मना
नीचक्रोडगता साध्वी न जीविष्यति सा क्षणम् (?)।
विद्याधरोऽपि तच्छोकैर्नजीविष्यति दारुणैः ॥ ११२ ॥
यथामातापितात्यक्तो देशस्तत्प्राप्तयेमया । तथैवसम्प्रति प्राणास्त्यक्तव्यानाऽत्रसंशयः
पुनस्तत्प्राप्तये प्राणान्गङ्गासागरसङ्गमे । त्यक्ष्यामीति दृढं कृत्य सगन्तुमुपचक्रमे ॥
एतस्मिन्नेव काले तु नारदान्मुनिसत्तमात् । पादलेपं महाबुद्धिरभिगम्य स माधवः ॥
ययौ कियद्भिर्दिवसैर्गङ्गासागरसङ्गमम् ।
गङ्गाब्धितोये स्नात्वा च पूजयामास चाऽच्युतम् ॥ ११६ ॥
तुलसीपत्रमालाभिर्भूषितो माधवस्तदा । बद्धाञ्जलिरिति प्राह जह्नुकन्यां सरिद्वराम् ॥

माधव उवाच ।

देवि ! त्वत्सलिले देहं प्राप्तशोकस्त्यजाम्यहम् ।
भाविजन्मनि तां कन्यां मह्यं दास्यसि शोभनाम् ॥ ११८ ॥
इत्युक्त्वातां नमस्कृत्य गङ्गां त्रैलोक्यमातरम् । ततस्तत्सलिले निम्ने प्रवेष्टुमुपचक्रमे
अथ वीरवरः पृष्टे तं विधृत्य नृपात्मजम् । तत्सभां प्रति विप्रर्षे!जवेनाऽऽगत्यतज्जनैः
ततः समालोक्य नृपात्मजं तं प्रीतिं समासाद्य अनिन्द्यशोभाम् ।
कस्त्वं त्यजस्यत्र कथं शरीरं ब्रूहीति तं वीरवरं जगाद॥१२१॥

माधव उवाच ।

अहं विक्रमराजस्य पुत्रो माधवसञ्ज्ञकः । मृगयायै वनं घोरं ससैन्योऽगममेकदा ॥
अस्त्येका नगरोपान्ते सरसी पद्मशोभना । नारीमेकाकिनीं रम्यामपश्यं तत्र कामुकः
साच चन्द्रकलानाम भामिनी मांस्मरातुरम् । सुलोचनायाः प्रस्तावंकथयामासभूतले
ततस्तुरङ्गमारूढो विलङ्घ्य सरितां पतिम् । प्रचेष्टाख्येन भृत्येन गतस्तस्या पुरं प्रति

तस्मिन्नेवदिनेतस्या अधिवासनमुत्तमम् । तथाऽऽकर्ण्य मया तत्र प्रेरितं साङ्गुलीयकम्
मम पत्रं समालोक्य साङ्गुलीयकमुत्तमम् । साऽपि तत्पृष्ठपत्रेषु यल्लिलेख तदुच्यते ॥
श्रीत्रिविक्रमदेवस्य पुत्रो विद्याधराह्वयः । पिता तस्मै विवाहेन मां प्रदास्यति सत्तम!
अद्याऽधिवासनंकर्मश्वो विवाहोममध्रुवम् । अथाऽप्युपायंवक्ष्यामि येनप्राप्नोतिमांभवान्
वामबाहुं समुद्धृत्यस्थिताऽहं वरसम्मुखी । यस्तु शक्नोतिमां नेतुं स मे भर्त्तानसंशयः

विलिख्य पत्रं सा कन्या गन्धिन्यास्तत्करे ददौ ।
गन्धिन्या च तया दत्तं तत्पत्रं मह्यमुत्तमम् ॥ १३१ ॥

तत्सङ्केतं प्रचेष्टेन संश्रुत्य मम सम्मुखे । हयमारुह्य सा नीता तत्राऽहं निद्रया जितः
अनया व्यथया तत्र पुनस्तत्प्राप्तिहेतवे । तदाद्य जागरं भद्र! शृणुष्वाऽत्र विधानतः ॥
इत्युक्त्वाचाऽस्यरक्षार्थैनियुज्यपदगान्बहून् । विहस्याऽन्तःपुरंगत्वासाकन्यापुरुषाकृतिः
ततो विधृत्य स्त्रीवेषं नानालङ्कारभूषिता । स्वदासीं प्रेषयामास तमानेतुं नृपात्मजम्
तदाज्ञया समागत्य ततो नृपतिनन्दनः । ईक्षां चक्रे च तां साध्वीं लक्ष्मींमूर्तिमतीमिव
सा च कन्या समुत्थाय सुवर्णासनतो द्विजः !। ववन्दे चरणौ तस्य पुलकाञ्चितविग्रहा
ततो गान्धर्वविधिना स राजतनयः सुधीः । अङ्गीचकार तां कन्यां तत्रैव प्राप्तकौतुकः
तत्प्रेमवारिधाराभिः संसक्तो नृपनन्दनः । तत्रैव तां निशां निन्ये कुर्वन्केलिं तया सह
अथ प्रभाते विमले सा मृगीलोचना सती । आदितः सर्ववृत्तान्तं कथयामासमाधवम्

ततः सुलोचना साध्वी जयन्तीं तां नृपात्मजाम् ।
माधवं च समादाय सुषेणस्य सभां ययौ ॥ १४१ ॥

तांकन्यां स नृपः श्रुत्वा हर्षितो माधवाय वै । सुलोचनां जयन्तींच विवाहेन ददौ ततः
तस्मै तु यौतुकत्वेन स राजा धर्मतत्परः । सुप्रीतो निजराज्यार्धं ददौस्वर्णशतानि च
ततोविचित्रमावासं निर्माय स नृपात्मजः । तस्मिन्पुण्यतमे तीर्थे चकार वसतिं द्विज!
तत्रान्तरे प्रचेष्टं तं कारागारनिवासिनम् । सभां समानीय ततश्चिन्तयामास माधवः
अयं पापमतिः क्रूरः स्वामिविश्वासघातकः । शत्रूणां प्रवरो मूढो रक्षणीयो मया नहि
पालितोऽपि मुहुर्नित्यं प्रसादधनभोजनैः । शत्रुकर्म करोत्येव समयं प्राप्य निर्दयः ॥

विपत्त्यां येन हस्तेन नयेत्पादरजः खलु । शिरःकृन्तति तेनैव स्वामिनं प्राप्य सम्पदम्
नूनमेव प्रभुं घ्नन्ति वशगा नृपराजयः । तप्तमप्युदकं वह्निं सद्यो निर्वाणतां नयेत् ॥
इति सञ्चिन्त्यमनसा तेन क्ष्मापतिसूनुना । प्रचेष्टा नष्टचेष्टोऽसौ निरस्तो द्विजसत्तम !

ताभ्यां स्त्रीभ्यां तदा विप्र सुखेन स नृपात्मजः ।
किञ्चित्कालं तत्र तस्थौ शोकव्याधिविवर्जितः ॥ १५१ ॥

तस्यां सुलोचनायां तु माधवस्य महात्मनः । शतं पुत्रा जयन्त्यांचद्वेशते जज्ञिरे सुताः
माधवस्य सुतास्तेऽपि शस्त्रशास्त्रविदुत्तमाः । बभूवुः सर्वलोकानां प्रीतये धर्मतत्पराः
जन्मान्तरोपार्जितया विष्णुभक्त्या च सङ्गतः । एकदा चिन्तयामासमनसासचमाधवः

कोऽहं कस्मात्समायातः कस्य वा केन निर्मितः ।
भूयः क्व च गमिष्यामि कुत्र वा स्थास्यते मया ॥ १५५ ॥

विषयं भुञ्जतो जन्म विना पुण्येनमे गतम् । तस्माद्विघ्नार्णवेमग्नंकोऽत्र मामुद्धरिष्यति
संसारेऽस्मिन्नुः प्राप्य येन नाराधितोहरिः । आत्मघाती स विज्ञेयःसर्वधर्मबहिष्कृतः
भूयोभूयो भवेज्जन्म भूयोभूयोऽपि पञ्चता । संसारोऽयमतःसर्वःक्लेशदो भैरवो महान्
विष्णुभक्तिविनानस्याज्जन्ममृत्युनिवारणम् । अतोऽन्यसकलंत्यक्त्वाकरिष्याम्यर्चनंहरेः
एतद्विचिन्त्य मनसा विश्वस्य च मुहुर्मुहुः । विश्वकर्माणमाहूय सवाक्यमिदमब्रवीत्
विश्वकर्मन्महाबाहो! मह्यं विष्णोः शिलामयीम् । प्रतिमांदेहिनिर्मायसर्वकामफलप्रदाम्
तस्यादेशात्ततो विप्र! शिल्पिना विश्वकर्मणा । प्रतिमारचितातेनमहाविष्णोःशिलामयी
नवीननीरदश्यामा पुण्डरीकनिभेक्षणा । शङ्खचक्रगदापद्मधारिणी च चतुर्भुजा ॥१६३
लक्ष्मीसरस्वतीयुक्ता वनमालाविभूषिता । समस्तलक्षणैर्युक्ता भूषिता सर्वभूषणैः ॥
विचित्रमण्डपे तां च संस्थाप्य प्रतिमां हरेः । स पूजां कर्तुमारेभे कामदांचक्रपाणिनीम्
तस्मिन्नेवाऽऽलये विप्र घृतदीपं द्विजोत्तम !। दीपंप्रतिदिनं यच्छेदविच्छिन्नशिखं स च
प्रातःस्नायी स्वयं भूत्वा कुर्यात्संमार्जनादिकम् । मार्गशोभां च विप्रर्षे!तत्रोपलेपनम्पुनः

स्नात्वा गङ्गाब्धिसलिले कृत्वा पञ्च महाध्वरान् ।
त्रिसन्ध्यं पूजयेद्विष्णुमुपहारैरनुत्तमैः ॥ १६८ ॥

गन्धैर्धूपैश्च नैवेद्यैस्ताम्बूलैर्धूपदीपकैः। गीतवाद्यैः प्रबन्धैश्च स्तवपाठैः सुशोभनैः ॥
प्रदक्षिणैर्नमस्कारैरध्वरैश्च सदक्षिणैः। निरामिषैर्हविष्यैश्च फलाहारैश्च सत्तम ॥१७०
नमोनारायणायेतिजपेत्प्रणवपूर्वकम्। अष्टाक्षरं महामन्त्रं सर्वकामफलप्रदम् ॥१७१ ॥
एवमब्दसहस्राणि महाविष्णोः परात्मनः। चकार परया भक्त्या स पूजांसर्वकामदाम्
तस्य भक्त्या ततस्तुष्टः सर्वदेवशिरोमणिः। आविर्बभूव भगवांस्तुलसीकुसुमप्रभः ॥
आविर्भूतं हरिं दृष्ट्वा सदारो माधवस्ततः। शिरसा भूमिमालिङ्ग्य ववन्दे चरणौ हरेः

माधव उवाच।

नमस्ते देवदेवाय नमस्ते परमात्मने। परेशाय सुरेशाय नमस्ते ज्ञानदायिने ॥ १७५ ॥
नमस्ते परमानन्द पुरुषोत्तम केशव !। नमस्ते पद्मनेत्राय कमलापतये नमः ॥ १७६ ॥
नमस्ते बहुरूपाय नीरूपायनमोनमः। विचिन्त्यायाविचिन्त्याय दृश्यादृश्याय वै नमः
नमस्त्रैलोक्यनाथाय लोकपित्रे नमोनमः। नमस्ते ज्ञानगम्याय नमस्ते सर्वसाक्षिणे ॥
कंसारये नमस्तुभ्यं नमस्ते कैटभारये। मधुहर्त्रे नमस्तुभ्यं विधात्रे च नमोनमः ॥

येन त्वयोद्धृता वेदा मीनरूपधरेण वै।
गम्भीराम्भोनिधेरम्भोऽभ्यन्तरात्तमहं भजे ॥ १८० ॥

येन त्वयोद्धृता पृथ्वी सशैलवनकानना। कूर्मरूपधरेणेयं तस्मै तुभ्यं नमोनमः ॥१८१
वाराहमूर्तिना येन धरणी धरणीपते !। उद्धृता निजदन्तेन तस्मै तुभ्यं नमोनमः ॥
नृसिंहमूर्तिना येन त्वया दैत्यो विदारितः। हिरण्यकशिपुः क्रुद्धस्तस्मै तुभ्यं नमोनमः
बलियज्ञस्तथा ध्वस्तो येन वामनरूपिणा। तस्मै तुभ्यंनमो देव!काश्यप्यादानकारिणे
पितरस्तर्पिता येन त्वया क्षत्रियशोणितैः। कार्तवीर्यो हतो येन तस्मै रामाय ते नमः
रावणो निहतो येन कौसल्यासूनुना त्वया। मारीचः कुम्भकर्णश्च तस्मै रामायतेनमः
प्रलम्बो निहतो येन रेवतीपतिना त्वया। कालिन्दीभेदिने तुभ्यं तस्मै रामाय तेनमः
वेदा विनिन्दिता येन विलोक्य पशुहिंसनम्। सकृपेन त्वया येन तस्मै बुद्धाय ते नमः

म्लेच्छाश्च विहिता येन युगान्ते कल्किमूर्त्तिना।
सर्वलोकहितार्थाय तस्मै तुभ्यं नमोनमः ॥ १८९ ॥

हरे विष्णो दैत्यजिष्णो नारायण कृपामय !। संसारसागरे घोरे पतितं मां समुद्धर॥
ततो हर्षान्माधवोऽसौ प्रक्षाल्य चरणौ हरेः । भूमौनिपात्यसर्वाङ्गं जगादमाधवोहरिम्

माधव उवाच ।

गोविन्द परमानन्द मुकुन्द मधुसूदन !। त्राहि मां पापिनं कृष्ण! यतस्त्वं सर्वपापहा ॥
इतिस्तोत्रं तस्य श्रुत्वा भगवान्भक्तवत्सलः । परमां प्रीतिमासाद्य तमित्याहवचःस्वयम्

श्रीभगवानुवाच ।

वरं वरय भो वत्स माधव!क्षत्त्रियर्षभ !। ब्रह्मत्वं वा शिवत्वंवा शक्रत्वंवाकिमिच्छसि

माधव उवाच ।

सर्वमेव मया प्राप्तं जगदीश! न संशयः । दैवतैरप्यदृश्यं त्वां पश्यामि वरदं प्रभुम् ॥
भुक्तिं मुक्तिं धनैश्वर्यं दातुंसर्वं भवान्क्षमः । प्रभो!न भक्तियोग्योऽस्मिभक्तिमेवप्रयच्छमे

श्रीभगवानुवाच ।

तव भक्त्याऽनया वत्स ! प्रीतोऽहं नाऽत्रसंशयः ।
किमस्ति वस्तु यद्दत्त्वा तवाऽऽनृण्यं भजाम्यहम् ॥ १९७ ॥

सूत उवाच ।

इत्युक्त्वा परमप्रीतः प्रसार्य्य चतुरोभुजान् । तमालिङ्गितवान्विष्णुःपितापुत्रमिवद्विज!

श्रीभगवानुवाच ।

आलिङ्गनप्रभावेण तवाऽऽनृण्यं गतोऽस्म्यहम् । सर्वमेव शुभं भद्र!भविष्यतिन संशयः
कामिना प्रतिमावत्स! क्रियायोगेन सर्वदा । पूजिता मम तेन त्वां नेष्याम्यहंतनुम्प्रति

व्यास उवाच ।

इति दत्त्वा वरं तस्मै चतुर्भिर्दीर्घबाहुभिः ।
भूयःप्राणैः समालिङ्ग्य तत्रैवाऽन्तरधीयत ॥ २०१ ॥

ततस्तां प्रतिमां विष्णोः सदारोमाधवस्तदा । आराधयामासभक्त्याक्रियायोगैरनुत्तमैः
स भुक्त्वासकलान्भोगान्पुत्रपौत्रसमन्वितः । गङ्गायांमृत्युमासाद्यसदारोमोक्षमाप्तवान्
पठति हरिचरित्रैर्युक्तमध्यायमेतं सकलदुरितराशिध्वंसिभिः सर्वभक्त्या ।

इह जगति स भुक्त्वा सर्वभोगांस्ततोऽन्तेव्रजतिभगवतःश्रीवासुदेवस्यधाम

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे गङ्गासागरसङ्गममाहात्म्यवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः

## गङ्गामाहात्म्यम्

श्रीव्यास उवाच ।

भूय एव प्रवक्ष्यामिगङ्गामाहात्म्यमुत्तमम् । यच्छ्रुत्वामानवाःसर्वेसर्वान्कामानवाप्नुयुः
येननाचरितंस्नानंगङ्गायांलोकमातरि । आलोक्य तन्मुखं सद्यः कर्त्तव्यं सूर्यदर्शनम् ॥
प्रभाते यःस्मरेद्भक्त्या गङ्गाइत्यक्षरद्वयम् । तस्य नश्यन्ति पापानि तमोवदरुणोदये॥३॥
न दृष्टा येन सरितांप्रवरा जह्नुकन्यका । तस्याऽग्राह्याणिसर्वाणि अन्नादिसलिलानि च

शरीराणि परित्यज्य गङ्गास्नानं प्रकुर्वताम् ।
गात्राण्यायान्ति पापानि गङ्गास्नानमकुर्वताम् ॥ ५ ॥

अहोचित्रमहोचित्रमहोचित्रमिदम्पुनः । पतन्ति नरके मूढा गङ्गानाम्नि स्थिते सति॥६॥
शिरसा यो वहेद्भक्त्या गङ्गाम्भःकणिकामपि । स मुच्यते महापापैर्ब्रह्महत्यादिभिर्द्विजः
ललाटे दृश्यते यस्य गङ्गासैकतमुत्तमम् । स पुण्यात्मा जगत्सर्वं पुनातिनाऽत्रसंशयः
गङ्गातीरात्समायान्तं यः पश्येत्परमादरात् । सोऽश्वमेधसहस्रस्य फलंप्राप्नोति मानवः

गङ्गातीरमहं यामि त्वमागच्छेति वक्ति यः ।
तस्य विष्णुः प्रसन्नात्मा सर्वान्कामान्प्रयच्छति ॥ १० ॥

गङ्गेतिनाम संस्मृत्य यस्तु कूपजलेऽपि च । करोतिमानवःस्नानं गङ्गास्नानफलं लभेत्
गङ्गाम्भःशीकरं यस्तु संमितं सर्षपस्य च । प्राप्नोति मृत्युकाले तु सगच्छेत्परमं पदम्

अत्रैव शृणु विप्रर्षे ! इतिहासं पुरातनम् । यस्य श्रवणमात्रेण गङ्गादेवी प्रसीदति॥१३
आसीत्त्रेतायुगे विप्रो धर्मस्वो नाम धार्मिकः । शान्तोदान्तोदयायुक्तोवेदवेदाङ्गपारगः
सत्यवादी क्रोधहीनो हिंसाहीनोजितेन्द्रियः । सर्वभूतहितैषी च योगाभ्यासरतः सदा
संसारसागरं तर्त्तुं स विप्रो वैष्णवो जनः । पूजयामास देवेशं क्रियायोगेन केशवम्
कदाचित्प्राप्य पुण्याहं स च विप्रर्षभो द्विज !। जगाम जाह्नवीतीरं मुमुक्षुः स्नानहेतवे

तत्र गङ्गाम्भसि स्नात्वा कृत्वा च तर्पणादिकम् ।
गृहं गन्तुं मनश्चक्रे गङ्गाम्भःकर्करीं वहन् ॥ १८ ॥

तस्मिन्काले ततो विप्र!वैश्योरत्नकराह्वयः । कृत्वा वाणिज्यमायाति सकलैःकिङ्करैर्वृतः
तस्यैकः किङ्करो विप्रः कालकल्पइतिस्मृतः । दण्डहस्तःसमायातो विहिताखिलपातकः
अथवर्त्मश्रमश्रान्तस्तस्य रत्नकरस्य च । सुष्वापैको बलीवर्दः पथि ब्राह्मणसत्तम ! ॥
पथि स्वपन्तं तं दृष्ट्वा कालकल्पो वृषं ततः । दण्डेन ताडयामास बहुधाऽत्यन्तनिर्दयः
तद्दण्डाघातजनितक्रोधेन वृषभेण सः । विषाणाभ्यांसुतीक्ष्णाभ्यांसमुत्थायविदारितः
तच्छृङ्गद्वयनिर्भिन्नवक्षाः स गतलोचनः । तत्सन्निधिं दयायुक्तो धर्मस्वस्त्वरितो ययौ
ततः कर्णात्समादाय तुलसीपत्रमुत्तमम् । गङ्गाम्भःशीकरैर्दिव्यैःसिक्तोऽसौतेनधीमता
गतप्राणं समालोक्य स विप्रः परमार्थवित् । विस्मितःस्वगृहं गन्तुं मनश्चक्रेद्विजोत्तम!
अथ गच्छन्पथि प्राज्ञो गङ्गानामानि कीर्तयन् । यमदूतान्ददर्शाऽग्रेकोटिकोटिसहस्रशः

छिन्नैकपादाः केचिच्च केचिच्छिन्नैकपाणयः ।
केऽपि केऽपि च्छिन्नकर्णाः केऽप्येकनयनास्तथा ॥ २८ ॥

केचिच्चच्छिन्ननासाश्चच्छिन्नजिह्वाश्चकेचन । भग्नदन्ताःकेऽपिकेऽपिकेऽपिदन्तविवर्जिताः
केऽपि शोणितधाराभिर्लिप्तसर्वकलेवराः । विमुक्तकेशिकाःकेऽपिकेऽपिवक्त्रविवर्जिताः

केऽपि केऽपि तथा नग्नाः केऽपि निर्भिन्नवक्षसः ।
केऽपि जर्जरिताङ्गाश्च महातीक्ष्णैः शिलीमुखैः ॥ ३१ ॥

निबद्धाङ्गुलिहस्ताश्च दृढपाशैस्तथाऽपरे । क्रन्दन्तो व्यथया केऽपि पलायनपरायणाः ॥
एवं भूतान्यमप्रेष्यान्सविलोक्यद्विजोत्तमः । सकम्पहृदयोभीत्याततःस्तब्धइवाऽभवत्

अवलम्ब्य ततो धैर्यं स विप्रोहरिभक्तिकृत् । इत्यपृच्छन्मधुरया गिरा तान्यमकिङ्करान्

धर्मस्व उवाच ।

के यूयं विकृताकाराः पाशमुद्गरपाणयः । दंष्ट्राकरालवदना अङ्गारसदृशप्रभाः ॥३५ ॥
यूयं सर्वे महावीरा ज्वलत्पावकलोचनाः । कृता तथापि युष्माकमियं केनाऽपि दुर्गतिः

यमदूताऊचुः ।

यमदूता वयं सर्वे यमाज्ञाहारिणः सदा । सदण्डोऽयं द्विजास्माकं सुमहान्कदनोदयः

धर्मस्व उवाच ।

अकस्मादागता यूयं महाबलपराक्रमाः । एतावतइयं केन कथं वा दुर्गतिः कृता ॥३८॥

यमदूताऊचुः ।

भयं मुञ्च द्विजश्रेष्ठ! वृत्तान्तं सकलं शृणु । यथाऽस्माकमिदंदुःखं बभूवाऽत्यन्तदुःसहम्
योऽसौ वृषेण शृङ्गाभ्यां कालकल्पो विदारितः । तंनेतुं धर्मराजेनप्रेरिताःकिङ्करावयम्
तेनाऽऽगमा वयं सर्वे समस्तायुधपाणयः । बद्ध्वातं पापिनं श्रेष्ठं नेतुमत्र समागताः
अथाऽसौ प्राप्तकालश्च कालकल्पो दुराशयः । वृषेण हेतुभूतेन विषाणाभ्यां विदारितः
सदयेन त्वया तत्र गङ्गापानीयसीकरैः । सिक्तः पातकिनां श्रेष्ठो गङ्गानामानि जल्पता
गङ्गाम्भःकणिकासेकैर्गतकल्मषमप्यमुम् । बद्ध्वा पाशैर्दृढं नेतुमुद्यता हि यदा वयम्
नेतुं तमपि देवेशः शरणागतिपालकः । स्वदूतान्प्रेषयामास महाबलपराक्रमान् ॥४५ ॥

केऽपि दूताः समागत्य ततो नारायणाज्ञया ।
सकोपाः प्राहुरित्यस्मान्पथि ब्राह्मणसत्तम ! ॥ ४६ ॥

विष्णुदूताऊचुः ।

के भवन्तो महात्मानः कथमेनं महाशयम् । बद्ध्वानयथ पाशेनयूयंवा कस्य किङ्कराः
विहायैनं महात्मानंपलायध्वंयथासुखम् । नचेच्छिरांसि युष्माकंछेत्स्यामश्चक्रधारया

तेषामेतानि वाक्यानि गर्वितानि द्विजोत्तम ! ।
संश्रुत्याऽच्युतदूतानां तेऽस्माभिरिति जल्पिताः ॥ ४६ ॥

दण्डपाणेर्वयं दूताः सर्वे प्राणाधिपस्य वै । गृहीत्वा पापिनांश्रेष्ठं प्रयामः शमनालयम्

यूयं सर्वे महात्मानस्तुलसीमाल्यभूषिताः । स्फुटपद्मपलाशाक्षा बलिनो गरुडध्वजाः॥
दिव्याम्बरधरा यूयं मयूरगलसुन्दराः । शङ्खचक्रगदापद्मधारिणश्च चतुर्भुजाः ॥ ५२ ॥
के यूयमीदृशाः सर्वे सर्वलक्षणसंयुताः । इमं पातकिनां श्रेष्ठं कथं वा नेतुमिच्छथ ॥

विष्णुदूताऊचुः ।

वयं सर्वे विष्णुदूताः पुण्यात्मानमिमं नरम् । नेतुमत्र समायाता वैकुण्ठं प्रति सम्प्रति
इमं श्रीभगवद्भक्तं स्वजनं गतकल्मषम् । मुञ्चताऽऽशु यमप्रेष्या यदि जीवितुमिच्छथ॥
भूयस्तेषामिदं वाक्यं श्रुत्वा सर्वगतं द्विज ! । कोपाद्यदुक्तमस्माभिस्तदाकर्णय कथ्यते
अयं पापी दुराचारो ब्रह्महत्यासहस्रकृत् । कृतघ्नश्चैव गोघ्नश्च मित्रघ्नश्च दुराशयः ॥
मेरुप्रमाणहेमानि हृतानि सुबहूनि च । परदारा हृता नित्यमनेनाऽतिदुरात्मना ॥५८॥
कोटिकोटिसहस्राणि जन्तूनां विष्णुकिङ्कराः । कृताश्चबहुधाहत्याःस्त्रीहत्या च तथैवच
अयं न्यासापहरणं स्वमातृगमनं तथा । गोमांसभक्षणं चैव चकार प्रतिवासरम् ॥६०
परहिंसाकृताऽनेन दाहश्च परवेश्मनः । सभायां परनिन्दां च विधवागर्भपातनम् ॥६१
गृहमायान्तमतिथिं धनलोभेन सत्तमाः । अहन्सुनिशितैः खड्गैर्निशायां यवनोपमः ॥

एतान्यन्यानि पापानि महान्त्यगणितानि च ।
चकार नीचो मूढोऽसौ नाल्पमात्रं शुभावहम् ॥ ६३ ॥

तस्मादयं महापापी नीयते यातनागृहम् । ज्ञेया हि पापिनोदण्ड्या धर्मराजस्यसत्तमाः
यूयं वै देवदेवस्य दूता भगवतो यदि । तदा कथमिमं नेतुं पापिनां श्रेष्ठमिच्छथ ॥६५

विष्णुदूताऊचुः ।

भवद्भिः सत्यमेवोक्तंकोऽपिनास्त्यत्रसंशयः । दण्ड्याःपातकिनःसर्वेजीविताधिपतेःसदा
अयं पापविनिर्मुक्तो गङ्गाशीकरसेवनात् । तस्मादेनं वयं सर्वे नेष्यामो हरिमन्दिरम्
तावत्तिष्ठन्ति देहेषु पातकानि शरीरिणाम् । गङ्गाम्भःशीकरायावन्नस्पृशन्तिसुदुर्लभाः
चन्द्रैककलया सर्वं तिमिरं हन्यते यथा । गङ्गाम्भःशीकरेणाऽपि पातकं हन्यते तथा

गङ्गानामानि संस्मृत्य पापी मुच्येत पातकात् ।
साक्षात्तत्सलिलं स्पृष्ट्वा मुच्यतेऽत्र किमद्भुतम् ॥ ७० ॥

शीतमप्युदकं गाङ्गं वह्निवत्पापकानने । यथाग्निवत्पद्मवने शीतं तोयं च दाहकृत् ॥७१
तस्मादयं पुण्यकर्मा द्वितीयइव केशवः । गच्छध्वं शमनप्रेष्या यदि कल्याणमिच्छथ॥
तेषां केशवदूतानां श्रुत्वाऽस्माभिरिदं वचः । भूयएव निरुक्तं यद्विहस्योच्चैःशृणुष्वतत्
अहोचित्रमहोचित्रमयं कल्मषमन्दिरम् । गङ्गाम्भःसेचनादेव विमुक्तः सर्वपातकैः ॥७४
स्वहस्तोपार्जितंकर्म शुभं वायदिवाऽशुभम् । नाऽभुक्त्वामुच्यतेमर्त्यःकल्पकोटिशतैरपि
यमाज्ञया नेतुमिमं वयंसर्वेसमागताः । कस्याऽयं वचसाऽस्माभिस्त्यज्यतेपापिनांवरः

विष्णुदूताऊचुः ।

यूयं पापधियो नूनं विवेकपरिवर्जिताः । युष्माभिर्जह्नुकन्याया न ज्ञायन्ते यतो गुणाः
कार्यं वेदे निषिद्धं यत्तत्पातकमितिस्मृतम् । यद्वेदसम्मतं कार्यं तदेव धर्म्यमुच्यते ॥
देवो नारायणः साक्षात्स्वयम्भूरितिशुश्रुम । यथा विष्णुस्तथा गङ्गा गङ्गैव सर्वपापहा
हरौ प्रसन्ने पापानि कुत्र तिष्ठन्ति देहिनाम् । जन्मान्तरार्जितैःपापैर्गतायूयमिमां गतिम्
अद्याऽपि पापकर्माणः किमर्थंपापमिच्छथ । गङ्गानिन्दाकरायूयंविष्णुनिन्दाकरास्तथा
अतो युष्मान्हनिष्यामः पापिनश्चक्रधारया ।
इत्युक्त्वा विष्णुदूतास्ते कोपादरुणलोचनाः ॥ ८२ ॥
चक्रिरे समरारम्भमस्माभिः सह सत्तम !। जीवेशदूताहन्यन्तामिति प्रोचुश्च ते रुषा ॥
भूयोभूयो वदन्तोऽस्मान्निजघ्नुश्चक्रधारया ।
इत्युक्त्वा विष्णुदूतास्ते सङ्ग्रामेऽत्यन्तदारुणाः ॥ ८४ ॥
सर्वे शङ्खान्समादध्मुः सहसा हृष्टमानसाः । ततोऽस्माकं सिंहनादैः पयोदस्तनितैरिव
कोदण्डानां च विस्तारैर्व्याप्तंविप्र!जगत्त्रयम् । अथ वृक्षैःशिलाभिश्च तथापर्वतवृष्टिभिः
अस्माभिर्विष्णुदूतास्ते बाणैश्च विदलीकृताः । ऋष्टिभिर्भिन्दिपालैश्चबाणैश्चपरिघैस्तथा
कुठारैश्छुरिकाभिश्च दण्डैश्च शङ्कुभिस्तथा । खड्गैश्च शक्तिभिश्चैवनिशितैश्चशिलीमुखैः
गदाभिश्चक्रधाराभिर्नाराचैश्च सुभीषणैः । एतैरन्यैश्च विषमैरस्त्रैस्ते विष्णुकिङ्कराः ॥
निजघ्नुर्बहुधा कोपाद्वज्रकल्पैर्महार्णवे । तदास्त्रजर्जराः सर्वे वयं भीत्या पलायिताः ॥
निपेतुःकेऽपि सङ्ग्रामेगतप्राणाःसहस्रशः । ततोऽस्मांस्तेसमालोक्यपलायनपरायणान्

मुदाकम्बून्समादध्मुर्बलिनो विष्णुकिङ्कराः। अथच्छित्त्वाद्विजश्रेष्ठ! कालकल्पस्यबन्धनम्
विमाने तं समारोप्य जग्मुर्भगवतःपुरम्। गङ्गाशीकरसेकस्य प्रभावेणैव सत्तम! ॥
जगाम हरिसालोक्यं कालकल्पोऽतिपातकी।
स्थित्वा कल्पशतं तत्र भुक्त्वा भोगान्मनोहरान् ॥ ६४ ॥
ज्ञानमासाद्य तत्रैव परं मोक्षं गमिष्यति। गङ्गाप्रभावैरस्माकमेतद्दुःखं गतं प्रभो! ॥
गच्छ ब्राह्मण! भद्रन्ते सुप्रीतो निजमन्दिरम्। इत्युक्त्वा यमदूतास्ते ययुर्यमपुरं द्विज!
भूयएव स धर्मस्वः प्रीतो गङ्गातटं ययौ। गङ्गायां स्नानमाचर्य सर्वलोकस्य मातरि ॥
बद्धाञ्जलिः स विप्रस्तां तुष्टाव परमेश्वरीम् ॥ ६८ ॥

धर्मस्व उवाच।

गङ्गे! समस्तजगदम्ब! चलत्तरङ्गेऽनङ्गादिचारुतरमस्तकपुष्पमाले!।
कंसारिचारुचरणद्वयरेणुहन्त्रि! भक्त्या नमामि दुरितक्षयकारिणी त्वाम् ॥
मातः समस्तसुखदे! प्रवरे नदीनां व्यासादिविप्रचयगीतगणे गुणाढ्ये!।
संसारभैरवमहार्णवमध्यनौके! वन्दे तवाङ्घ्रियुगलं दुरितापहारि! ॥१००॥
यस्यास्तवाऽम्बुकणिकामपि जह्नुकन्ये! सौदासनामनृपतिर्द्विजकोटिहन्ता
सम्प्राप्य मुक्तिमगमत्त्रिसुरैरलभ्यां तां त्वां नमामि शिरसा वरदे! प्रसीद ॥
नारायणाच्युत जनार्दनकृष्णरामगङ्गादिनाम गदतो मम देवि! मातः!।
संसारपातकनिवारिणि! देहपातस्त्वद्वारिणीह भवतु त्वदनुग्रहेण ॥१०२॥
किम्वा तपोभिरखिलेश्वरि! किं जपैर्वा दानैश्च किं तुरगमेधमुखैश्च किम्वा
त्वन्नीरशीकरमवाप्य सुरैरलभ्यां मुक्तिं व्रजन्ति मनुजा अतिपापिनोऽपि ॥
स्वाहात्वमेव परमेश्वरि! या स्वधा त्वं गीर्वाणवृन्दपितृलोकसुतृप्तिहेतोः।
सत्त्वं रजस्तमइतित्रिगुणस्वरूपां सृष्टिस्थितिप्रलयकारिणि! नौमितां त्वाम्
धत्ते ललाटफलके तव सैकतं यः पुण्ड्रं च देवि! तव तीरमृदा सदैव।
त्वन्नामसर्वरसधाम वदेच्च भक्त्या तत्पादरेणुरखिलोऽस्तु ममैव मूर्ध्नि ॥
त्वद्रोधसि त्रिपथगे! वसतिं विधाय पीत्वा च वारि तत्र पातकनाशकारि

स्मृत्वा च नाम तव वीचिरसं च दृष्ट्वा संसारबन्धनहरे! मम जातु जन्म ॥
नाकं शुभे सुमहदुल्लसिता मनुष्याः कुर्वन्ति भीतिरतिदुर्गमवर्त्म मत्वा ।
व्यर्थैव सा किल यतोऽमृतदे ! त्वदीयं सोपानभूतमुदकं त्रिदिवप्रयाणे ॥७
पापानि रोगनिकराश्च शरीरदेहे तिष्ठन्ति तावदखिलेश्वरि ! मुक्तिदात्रि ! ।
कुर्वन्ति यावदमलेषु तवोदकेषु स्नानं नहि त्रिपथगे! सरितां प्रधाने! ॥ ८ ॥
यस्यास्तवाच्युतविरिञ्चिशिवादयोऽपि शक्रादिदेवनिकरा व्रजितुं महिम्नाम्
पारं परे परममोक्षपदप्रदात्रीं तां त्वां वदन्ति तटिनीमिति केऽपि मोहात् ॥
गङ्गे ! समस्तसुखदायिनि ! किञ्चिदेव जानाति ते पशुपतिर्भगवान्महत्त्वम्
यस्मादसौ सुमनसां प्रवरोऽतिभक्त्या धत्ते सदैव शिरसा जगदीश्वरीं त्वाम्
गङ्गेदेविजगन्मातः! प्रसीद परमेश्वरि !। परिपाहि नमस्तुभ्यं रक्ष मां सेवकं स्वकम् ॥
परब्रह्मस्वरूपांत्वां सर्वलोकैकमातरम् । शक्नोमिकिमहं स्तोतुं भ्रान्तचित्तोऽत्र मोक्षदे!

व्यास उवाच ।

इति स्तुता जगद्धात्री तेन विप्रेण धीमता । आविर्बभूव सहसा गङ्गामूर्तिमती द्विज! ॥
ददर्श पुरतो गङ्गां द्विभुजां मकरासनाम् । कुन्देन्दुशङ्खधवलां सर्वालङ्कारभूषिताम् ॥
तां दृष्ट्वा पुरतो गङ्गां गङ्गा गङ्गेति कीर्तयन् ।
ववन्दे चरणौ तस्याः शिरसाऽऽलिङ्ग्य मेदिनीम् ॥ ११५ ॥
मोहयन्ती स्मिता लोकैः सुप्रीता परमेश्वरी । तमुवाच ततो विप्र!वरंवृणिवति जैमिने!॥

धर्मस्व उवाच ।

मातस्त्वत्सलिलस्पर्शाद्ब्रह्महाऽपिचमोक्षभाक्।मयात्वंदृश्यतेसाक्षात्सार्ध्यंकिमपरंमम
तथाऽप्येकं वरं याचे त्वत्तीरे परमेश्वरि !। मृत्युर्भवतु मे देवि ! त्वन्नाम स्मरतो मम॥
मया कृतेन स्तोत्रेण यस्त्वां स्तौति सदेश्वरि ! ।
सोऽपि भुक्त्वाऽखिलान्कामानन्ते यास्यति सद्गतिम् ॥ ११६ ॥

गङ्गोवाच ।

अनयाभवतो भक्त्या सन्तुष्टाऽस्मि द्विजोत्तम !। शीघ्रंतेकुशलं सर्वं भविष्यतिनसंशयः

त्वया कृतमिदं स्तोत्रंत्रिसन्ध्यंयःपठेन्नरः। तस्याऽहमपि सन्तुष्टादास्यामिमुक्तिमुत्तमाम्

व्यास उवाच।

इति दत्त्वा वरं तस्मै सा देवी भक्तवत्सला। धर्मस्वनाम्ने विप्रेन्द्र! तत्रैवाऽन्तरधीयत

स च विप्रो वरम्प्राप्य कृतकृत्यइवाऽभवत्। गङ्गारोधसि तत्रैव तस्थौ विप्र! मनोरमे॥

ततः कालेन महता विमले जाह्नवीजले। सुखमृत्युं समासाद्य जगाम पदमुत्तमम्॥

कालकल्पोऽपिपापात्मासिक्तोगङ्गाम्बुशीकरैः। प्राप्तवानुत्तमंमोक्षमन्येषांकाकथाद्विज!

अनिच्छयाऽपि गाङ्गेयं जलंस्पृष्ट्वाफलंभजेत्। स्पृशतां भक्तिभावेन किंभवेन्नहिवेद्मितत्

गङ्गासमं नास्ति तीर्थं भूयोभूयो मयोच्यते। यदम्बुकणिकां स्पृष्ट्वा परमं धाम लभ्यते

ये भक्तिभावेन सरिद्वरायाः स्पृशन्ति पाथः कणिकामपीह।

ते यान्ति नूनं पदमच्युतस्य पापैर्विमुक्ताः सकलैर्महोग्रैः॥ १२८॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे गङ्गा-शीकरमाहात्म्यं नाम सप्तमोऽध्यायः॥ ७॥

---

# अष्टमोऽध्यायः

## गङ्गामाहात्म्यवर्णनम्

व्यास उवाच।

पुनर्वक्ष्यामि विप्रेन्द्र! गङ्गामाहात्म्यमुत्तमम्। गङ्गाकथासुधापानं कुरुमुक्तिंयदीच्छसि

दानं दत्तं तेनसर्वं तेन सर्वे मखाः कृताः। तेन प्रपूजितो विष्णुर्यद्भक्तिर्भीष्ममातरि॥२

गङ्गायांधर्मकर्माणि क्रियन्ते यानिकानिच। अक्षयानिभवन्त्यस्य तानिसर्वाणिजैमिने!

वहन्तंजनमालोक्य गाङ्गेयानिजलानियः। भक्त्यागच्छेत्समुत्थाय सोऽश्वमेधसहस्रकृत्

गङ्गाजलेष्वागतेषु यो नोत्तिष्ठति भक्तितः। पशुता शाश्वती तस्यजन्मजन्मनिजैमिने!

गाङ्गेयं जलमासाद्य योनगृह्णाति भक्तितः। जन्मकोट्यर्जितं पुण्यं क्षणादेवतु नश्यति
गङ्गातीरं जिगमिषुं यस्तु वारयते द्विज!। सकोटिकुलसंयुक्तो रौरवं नरकं व्रजेत्॥
मूत्रं वाऽथ पुरीषं वा गङ्गातीरे करोति यः। न दृष्टा निष्कृतिस्तस्यकल्पकोटिशतैरपि

श्लेष्माणं वाऽपि निष्ठीवं दूषिकाम्वाऽश्रु वा मलम्।
गङ्गातीरे त्यजेद्यस्तु स नूनं नारकी भवेत्॥ ६॥

उच्छिष्टं कफकञ्चैव गङ्गागर्भेच यस्त्यजेत्। सयातिनरकं घोरं ब्रह्महत्यां च विन्दति
गङ्गारोधसि यः पापं कुरुते मूढधीर्नरः। तदक्षयं भवेन्नूनं नान्यतीर्थेषु शाम्यति॥
अन्यतीर्थेकृतंपापं गङ्गायांच विनश्यति। गङ्गायांयत्कृतंपापं तत्कुत्राऽपिनशाम्यति
तस्मात्पापंनकर्तव्यं गङ्गायांशास्त्रकोविदैः। कर्मणामनसावाचा कर्तव्योधर्मसङ्ग्रहः
न ते देशा न ते शैला नच तानि वनानि च। पापविध्वंसिनी यत्र न तिष्ठेत्सुरनिम्नगा
गङ्गातीरं परित्यज्य मुहूर्तमपि जैमिने!। न च स्थातव्यमन्यत्र यदि कार्यशतान्यपि॥
भिक्षान्नमपि भुक्त्वा च स्थातव्यं जाह्नवीतटे। नचाऽन्यत्र क्षणमपि प्राप्य भूपालतामपि
सन्त्यज्य देहं गङ्गायां ब्रह्महाऽपि विमुच्यते। अन्यत्र मुक्तये न स्यादश्वमेधसहस्रकृत्
गङ्गातीरे वसन्यस्तु हरिपूजापरोभवेत्। जन्मजन्मान्तरे येन कदाचिन्नार्चितो हरिः
भक्तिर्भवति नैतस्य गङ्गायां लोकमातरि। श्रूयतां मानवाः सर्वे भूयोभूयोब्रवीम्यहम्
स्नानं विधाय गङ्गायां गम्यतां परमं पदम्। मृत्युकाले वदेद्यस्तु गङ्गागङ्गेतिमानवः
विमुक्तःपातकैः सर्वैर्दिवि देवयुगान्वसेत्। यस्य गङ्गाकथारम्भोमृत्युकाले भवेद्द्विज!
सगच्छेद्विष्णुभवनं गलिताखिलकल्मषः। यस्तु स्मरति वै प्राज्ञो मृत्युकाले द्विजोत्तम
गङ्गेति मुक्तिदं नाम तस्य तुष्टो भवेद्धरिः। मृत्युकाले भवेद्यस्तु गङ्गामृत्पुण्ड्रधारकः
गङ्गास्नायिनमालोक्य त्यजेद्यस्तु कलेवरम्। श्मशानेऽपि द्विजश्रेष्ठ!स गङ्गामरणंलभेत्
तिष्ठन्त्यस्थीनिगङ्गायां यावत्कालंशरीरिणः। तावत्कल्पसहस्राणि विष्णुलोकेमहीयते

यस्य मज्जन्ति गङ्गायां भस्मास्थीनि नखानि च।
शिरोरुहाण्यपि प्राज्ञः स विष्णोर्भवने वसेत्॥ २६॥

स्थितेष्वस्थिषु गङ्गायां यत्फलं लभते नरः। ब्रवीमि तत्फलं सर्वं शृणुनान्यमनाद्विज!

एकदा भगवाञ्छक्रो नानालङ्कारभूषितः । क्रीडागृहं ययौ कामी युवत्या पद्मगन्धया
पद्मगन्धा रसज्ञा सा सम्प्राप्तनवयौवना । नानारसप्रदानेन चकार सुरसम्प्रति ॥२६॥
सपत्न्याः स्वर्णपर्यङ्के तस्याः शिशुमृगीदृशः । प्रीतः पादतले जिष्णुरुवास स्मरमोहितः
अथ तस्यै स्वयं शक्रो निर्माय स्वर्णवीटिकाम् । ददाति परमप्रीतस्तद्गुणाकृष्टमानसः
एतस्मिन्नेव काले तु पौलोमी वरसुन्दरी । भूषणैर्भूषिता सर्वैः स्वयं तद्गृहमाययौ ॥
दृष्ट्वा तथाविधं शक्रं सर्वदेवाधिपं प्रभुम् । भृशं चुकोप पौलोमी प्राहेतिच सुलक्षणा ॥

शच्युवाच ।

देव किं कुरुषे कान्त! त्वं समस्तसुराधिप !। मम दासीस्वरूपायै ददासि स्वर्णवीटिकाम्
स्पृशन्ति त्रिदशाःसर्वे शिरसा चरणौतव । त्वंकथं पद्मगन्धाया दास्याःपादतलेप्रभो!
सुन्दरीकोटिभर्त्ता त्वं समस्तरसवित्प्रभो !। कथमेवंविधं कर्म करोष्यत्यन्तकुत्सितम्
निर्गुणे पद्मगन्धे ! हे दासि ! दूरं परिव्रज । त्वमीश्वरी च पर्यङ्के शक्रः पादतले तव ॥

व्यास उवाच ।

तयानिर्भर्त्सितासाध्वी पौलोम्या बहुधाततः । उवाचपद्मगन्धासा क्रोधादितिवराङ्गना

पद्मगन्धोवाच ।

गुणंचममदोषंचस्वयंस्वाम्येववेत्ति वै । केनाऽधिकारेणाऽऽगत्यत्वंमांनिन्दसिनिर्गुणे!
अन्ये नेत्रद्वयेनाऽपि पश्यन्ति गुणदोषकौ । सहस्रनेत्रैरप्येष न पश्येत्किं दुराशये ! ॥
यथा दोषो हि लोकानां प्रचरेन्न गुणं तथा । आदौ कलङ्कश्चन्द्रस्य दृश्यते गुणवर्ज्जनैः
अनर्थभाषिणी क्रूरा कुमूर्तिर्गुणवर्जिता । यदाऽहं नास्मि गुणिनी भजतु त्वां तदापतिः

व्यास उवाच ।

इत्युक्त्वापद्मगन्धासा क्रोधात्कोकनदेक्षणा । उत्तस्थौ स्वर्णपर्यङ्कात्कुर्वन्तीकरुणंमहत्

इन्द्र उवाच ।

प्रिये प्राणेश्वरि!श्रेष्ठे!मां विहाय क्व गच्छसि । मया किमपराद्धं ते ममतद्वद सुन्दरि!॥

कान्ते ! दासोऽस्म्यहं नूनं दासकर्म करोमि ते ।
दासपत्नी भवेद्दासी वाक्यं त्वं न शृणोषि किम् ॥ ४५ ॥

समुत्थाय ततः शक्रस्तन्मोहाकुलमानसः । अङ्के निवेशयामास भूयस्तां वरसुन्दरीम्

शच्युवाच ।

क्रौञ्चि! त्वज्जीवनं धन्यं व्यर्थं मज्जीवनं ध्रुवम् । त्वं स्वामिसुभगा नित्यं दुर्भगाऽहं वराङ्गने!

यावत्पुण्यक्षयं क्रौञ्चि ! तत्पुण्यं यास्यते क्षयम् ।
क्रौञ्चिवंशसमुत्पन्ना दुःखं भूयोऽपि भोक्ष्यसि ॥४८ ॥

देवेन्द्रेण समं तावत्कुरु केलिं यथासुखम् । कियद्भिर्दिवसैः क्रौञ्चि! नभवेत्तव निर्गुणे!
अत्यद्भुतं वचस्तस्याः पद्मगन्धा निशम्य सा । द्वन्द्वभावम्परित्यज्य प्रणम्योवाच तां सतीम्

पद्मगन्धोवाच ।

पुलोमजे! वरारोहे! चित्रमेतत्त्वयोदितम् । क्रौञ्ची कथमहं ब्रूहि श्रोतुमिच्छामि यत्नतः

काऽहं कुत्र स्थिता चाऽपि कथमत्राऽऽगता सती ।
कालैः कियद्भिर्मत्पुण्यं क्षीणत्वं प्रतियास्यति ॥ ५२ ॥

शच्युवाच ।

पद्मगन्धे! पुरा त्वं हि क्रौञ्चीपक्षिसमुद्भवा । अमेध्यमामिषं कीटान्भक्षयन्ती क्षितौ स्थिता
न्यग्रोधतरुरेकोऽस्ति गङ्गातीरे मनोरमे । तत्र नीडं विनिर्माय भवत्या वसतिः कृता॥
एकदा कृष्णसर्पेण तस्मिन्न्यग्रोधपादपे । नीडं प्रविश्य दष्टा त्वं सहसा पञ्चतां गता॥

क्रव्याणि तव सर्वाणि स सर्पोऽभक्षयत्क्षुधा ।
स्थितानि तत्र वाऽस्थीनि निर्मांसानि वरानने ! ॥ ५६ ॥

कदाचित्पवनैर्भद्र! महद्भिः स च पातितः । भग्नः पपात गङ्गायां समूलोऽपि वराङ्गने!
गङ्गायां पतिते तस्मिन्न्यग्रोधे धरणीरुहे । गङ्गाजलैः प्लावितानि तान्यस्थीनि तवोत्तमे!
यावदस्थीनि गङ्गायां तव तिष्ठन्ति तानि च । तावत्त्वं स्वामिसुभगा भविष्यसि सदैव हि
इति ते कथितं सर्वं पद्मगन्धे ! मयाऽधुना । येन पुण्यप्रभावेण शक्रोऽपि वशगस्तव ॥

धन्या तु जाह्नवी देवी क्रौञ्ची यस्याः प्रसादतः ।
त्वमस्पृश्याऽपि चाण्डालैरङ्के स्वपिषि वज्रिणः ॥ ६१ ॥
तेनाऽपमानिता साध्वी शक्रेणाऽपि पुलोमजा ।

परिम्लानमुखाम्भोजा सा जगाम यथाऽऽगता ॥ ६२ ॥
शक्राङ्कपवसा तस्थौ पद्मगन्धा वराङ्गना । तद्वाक्यं हृदये तस्या जागरूकमिव स्थितम्
अथैकदा सुराधीशः सुप्रीतस्तद्गुणैर्द्विज !। वरं वरय सुश्रोणि! स्वयं तामित्युवाच ह

पद्मगन्धोवाच ।

त्वं सर्वदेवताधीशो नारीकोटिपतिस्तथा । तथाऽप्यसि ममाधीनः स्वामिन्किमपरैर्वरैः
तथापि त्वं वरं दित्सुर्यदा नूनं सुरोत्तम !। कर्मणा मनसा वाचा प्रतिज्ञां कुरु मत्पुरः

इन्द्र उवाच ।

जीवितञ्च धनञ्चैव राज्यञ्चैव परिच्छदम् । आज्ञापय किमेतद्वै तुभ्यंदास्यामिसुन्दरि!
सत्यंसत्यं पुनःसत्यं सन्देहोनाऽत्रविद्यते । यदिच्छसि मृगीनेत्रे! तत्तदास्याम्यहंध्रुवम्

पद्मगन्धोवाच ।

नूनमेव प्रसन्नोऽसि यदि त्वं त्रिदशेश्वर !। जन्म मे हस्तियोनौच भूयो देहीति मेवरम्

इन्द्र उवाच ।

कृतप्रतिज्ञः सुश्रोणि! वरं तेऽहं ददामि वै । किन्तु दुःखानि यातानि बहूनि हृदये मम
त्वामदृष्ट्वा वरारोहे प्रीतिर्न प्राप्यते क्षणम् । कथन्ते चिरविच्छेदंसोढुं शक्नोमिदुःसहम्
यदामय्यनुकम्पाऽस्ति तव पीनपयोधरे ! । तदा कियद्दिनं तिष्ठ मया सह वराङ्गने !॥
ततो देवाधिराजस्य वदन्ती बहुसम्पदम् । वर्षाणामयुतं तस्थौ सा देवनिलये सती ॥

पद्मगन्धोवाच ।

आज्ञां देहि सुराधीश!साधितुं सुमनोरथम् । व्रजाम्यहं कर्मभूमिं वन्दे पादद्वयं तव ॥

इन्द्र उवाच ।

त्वत्प्रेमसिन्धुमानेन मया चन्द्रनिभानने !। स्थित्वाकतिदिनं पश्चाद्गमिष्यसियथासुखम्
ततस्तु कौतुकागारे तेन सार्धमहर्निशम् । क्रीडन्ती पद्मगन्धा सातस्थौ वर्षायुतत्रयम्
सुराधीशं ततः सेति तदा प्राह मुदान्विता । आदेशं कुरु गच्छामि पृथिवींप्रतिसम्प्रति

इन्द्र उवाच ।

जाड्यं जहीहि सुश्रोणि!तिष्ठाऽत्रैव मया सह ।

त्वां त्यक्तुं नहि शक्नोमि प्राणेभ्योऽपि गरीयसीम् ॥ ७८ ॥

पद्मगन्धोवाच ।

पुण्यक्षये सुराधीश! यदा यास्याम्यहं भुवम् । तदाचिरन्ते विच्छेदो भविष्यति मयासह
इच्छाम्यहं गन्तुमद्य पुण्योपार्जनहेतवे । कर्मभूमिमहं गत्वा येनोपायेन वासव ! ॥८०
तत्करिष्यामि विच्छेदः कदाचित्स्यात्त्वया न मे ॥ ८१ ॥

इन्द्र उवाच ।

भद्रे! त्वया यदा नूनं कर्मेदं कर्तुमिच्छितम् । तदा गच्छ पुनःशीघ्रमागमिष्यसिसुन्दरि!
सहस्रनेत्रविगलद्बाष्पसिक्ततनुस्ततः । दोर्भ्यामालिङ्ग्य तां शक्रो गच्छेत्याहप्रिये! वदन्
तदादेशात्ततःसाध्वी कर्मभूमिं समागता । जाताचहस्तिनीयोनौभूत्वाजातिस्मराद्विज!
स्मरन्ती निजवृत्तान्तं सा कियद्भिर्दिनैस्ततः । जगाम जाह्नवीतीरंहस्तियोनिसुसम्भवा
गङ्गायां स्नानमासाद्य गङ्गाकर्दमभूषिता । गङ्गागङ्गेति जल्पन्ती ह्रदं निम्नं विवेश सा
तस्मिन्गङ्गाह्रदे गत्वा हस्तिनीपर्वताकृतिः । निजां जातिंस्मरन्तीसाजगामपञ्चतांपुनः
तस्याः साहसमालोक्य हस्तिनीं सर्वदेवताः ।
ववर्षुः पारिजाताद्यैः कुसुमैरुत्तमैर्मुदा ॥ ८८ ॥

तामानेतुं ततः शक्रः सर्वद्देवगणैर्वृतः । वेगात्तच्चिरविच्छेदात्कृष्णाङ्गी सुमना ययौ॥
पुष्पके तां समालोक्य दिव्यदेहां सुराधिपः । कथयन्निजदुःखानि निजावासं जगाम ह
पुलोमजा च रम्भा च प्रम्लोचा चोर्वशी तथा ।
सुन्दर्योऽन्याश्च युवतीस्तस्यास्त्यक्त्वा मुदा गताः ॥ ९१ ॥

शक्रस्य हृदयोत्साहं तन्वन्ती सा वराङ्गना । पुरन्दरपुरे तस्थौ सुभगा प्रीतिवल्लभा ॥
यस्यास्तिष्ठन्ति गङ्गायां यावदस्थीनिजैमिने !। कुलकोटिशतंतावत्तस्यावासस्सुरालये
राजानो दिवि राज्येषु ये ये भूतास्तपोबलात् । तेषां तेषां स्नेहभूमिर्भवत्यमरसुन्दरी॥
गङ्गास्थिमज्जनादेव जैमिने! फलमीदृशम् । गङ्गायां त्यजतो देहं फलं वक्तुं न शक्यते ॥
मृतं शरीरं गङ्गायां यावदस्थीनि जैमिने !। कल्पकोटिशतं तावत्तस्यावासः सुरालये॥
मृतं शरीरं गङ्गायां स्रोतोभिश्चलितं द्विज !। दृश्यते देहिनस्तस्य तत्फलं शृणु जैमिने!

स्वर्गे दैवाङ्गनात्रस्तचारुचामरवायुभिः । वीजितः स्वर्णपर्यङ्के सुप्तस्तिष्ठति कौतुकी ॥
जाह्नवीसैकते यस्य शरीरं दृश्यते मृतम् । दिवाकरकरैस्तप्तं फलं तस्य वदाम्यहम् ॥
सुगन्धैश्चन्दनैर्दिव्यैर्लिप्तसर्वकलेवरः । दिव्याङ्गनाभिः सहितो दिवि क्रीडति सर्वदा ॥
काकैर्गृध्रैश्च कङ्कैश्च शकुन्तैर्भीष्ममातरि । वपुर्विदलितं यस्य दृश्यते तत्फलं शृणु ॥
दिवि दिव्याङ्गनापीनप्रोत्तुङ्गरुचिरस्तनैः । श्लिष्टवक्षाश्च पर्यङ्के निद्राति नित्यमेव सः ॥

पिपीलिकावेष्टितानि माक्षिकाभिश्च कीटकैः ।
गङ्गायां यस्य दृश्यन्ते अस्थीनि पतितानि च ॥ १०३ ॥

तस्याऽक्षयं फलं विप्र ! वदतो मे निशामय । प्रणमत्त्रिदशव्यूहशिरोमुकुटभूषणैः ॥
हतपादरजाः स्वर्गे स च शक्रायते चिरम् । अनिच्छयाऽपि गङ्गायां यद्देहपतनं भवेत्
स विमुक्तोऽखिलैःपापैर्नरोनारायणोभवेत् । यस्याङ्गाराश्चदृश्यन्तेगङ्गायांचलिताजलैः

अङ्गारसङ्ख्यया स्वर्गे तिष्ठेत्कल्पशताधिकम् ।
सर्वेषामेव पुण्यानां कदाचित्क्षयईक्ष्यते ॥ १०७ ॥

गङ्गायां पतिते देहे भवेत्पुण्यक्षयो नहि । बहुनाऽत्र किमुक्तेन निश्चितं कथ्यतेऽधुना॥

गङ्गायां त्यक्तदेहस्य महिमा ज्ञायते नहि ॥ १०६ ॥

विषमदुरितराशिनाशि गाङ्गं स्पृशति नरो भुवि भक्तितो जलं यः ।
जगदुदधिजलं विलङ्घ्य घोरं व्रजति स पारमपारतुष्टिनावा ॥ ११० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे गङ्गा-माहात्म्यवर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः

## गङ्गामाहात्म्यवणनम्

जैमिनिरुवाच ।

भूय एव गुरो! ब्रूहि गङ्गामाहात्म्यमुत्तमम् । गङ्गाकथामृतं पातुं माधुर्यात्पुनरिष्यते ॥

व्यास उवाच ।

तदप्यहं ब्रवीमि त्वा गङ्गाभक्तो यतो भवान् । तौ पादौ सफलौ नृणां जाह्नवीतटगामिनौ
गङ्गाकल्लोलनिनदश्राविणौ श्रवणौ च तौ । सा जिह्वा या च जानाति स्वादुभेदं तदम्भसः
ते नेत्रे जाह्नवीचारुतरङ्गदर्शने च ये । तल्ललाटमिति प्रोक्तं गङ्गामृत्पुण्ड्रधारि यत् ॥४॥
तौ हस्तौ जाह्नवीतीरे हरिपूजापरायणौ । शरीरं सफलं तच्च विमले जाह्नवीजले ॥५॥
पतितं यद्द्विजश्रेष्ठ ! चतुर्वर्गफलप्रदे । स्वर्गस्थाः पितरः सर्वे गच्छन्तो जाह्नवीतटे ॥
सन्दृश्य हृष्टाः शंसन्ति वदन्तइतिजैमिने ! । तत्पुण्यं कृतमस्माभिः सद्गतिप्राप्तये पुरा
भविष्यत्यक्षयं तच्च यतः पुत्रोऽयमीदृशः । अनेन गाङ्गैः सलिलैर्वयं सम्प्रति तर्पिताः ॥
यास्यामः परमं धाम दुर्लभं यत्सुरैरपि । गङ्गायांयानिद्रव्याणिदास्यत्यस्माकमात्मजः
अस्मभ्यं तानि सर्वाणिभविष्यन्त्यक्षयाणिवै । नरकस्थाश्चपितरःसर्वदुःखसमन्विताः
वदन्तीति सुतं दृष्ट्वा गच्छन्तं जाह्नवीतटम् । कृतानि यानि पापानि नरकक्लेशदानिवै
यास्यन्ति संक्षयं तानि पुत्रस्याऽपि प्रसादतः ।
विमुक्ता नरकक्लेशैर्वयं सर्वे सुदुःसहैः ॥ १२ ॥
अथ पुत्रप्रसादेन यास्यामः परमांगतिम् । यात्रां विधाय यो मर्त्यो गृहं मोहान्निवर्तते
निराशाः पितरस्तस्य यान्ति सर्वे यथागताः । आमिषं मैथुनं चैव दोलामश्वं गजन्तथा
उपानहं चाऽऽतपत्रं गङ्गायात्रासु वर्जयेत् । अध्वश्रमोद्भवं दुःखं दुष्करं नहि मन्यते ॥
गृहे पद्मसुखं तत्र गङ्गास्नाने स्मरेन्न च । असत्यभाषणं चैव पाखण्डसङ्गमेव च ॥१६॥
द्विर्भोजनं च कलहं गङ्गायात्रासु वर्जयेत् । परनिन्दां च लोभं च गर्वं च क्रोधमत्सरौ
अत्यन्तहास्यं शोकं च गङ्गायात्रासु वर्जयेत् ।
मञ्चसुप्तमिवाऽऽत्मानं चिन्तयेद्भूमिशायिनम् ॥ १८ ॥
गङ्गानामसुनामानि वदेद्गच्छञ्जनः पथि । माहात्म्यं जाह्नवीदेव्याः सर्वपापप्रणाशनम्
सुखदं मोक्षदं चैव कथयन्पथि गच्छति । गङ्गे देवि ! जगन्मातर्देहि सन्दर्शनं मम॥२०
वचोभिः कोमलैरेभिः कुर्याच्छ्रमनिवारणम् । हा कथं सदनं त्यक्तमागतस्त्वाकथं मया
श्रमैरितिवदेद्यस्तु सम्पूर्णं तत्फलं नहि । क पर्यङ्कः क मे पत्नी क च मे च सुहृद्गृहम्

स्वपिमि प्रान्तरे भूमौ कथं वाऽहं समागतः । धनधान्यादिवस्तूनां का गतिर्वा गृहेमम
कियद्भिर्दिवसैर्भूयो गमिष्याम्यहमालयम् । इतिचिन्ताकुला ये च पथिगच्छन्तिमानवाः
गङ्गास्नानफलं तेषां सम्पूर्णं न भवेद्द्विज ! ॥ २५ ॥
गङ्गे गन्तुं प्रतीर्तारे यात्रेयंविहितातव । निर्विघ्नां सिद्धिमाप्नोमि त्वत्प्रसादात्सरिद्वरे!
इमं मन्त्रं समुच्चार्य यात्राकाले विशेषतः । हर्षितो निलयाद्गच्छेद्वैष्णवैः सह जैमिने !
नाऽतिवेगेन गन्तव्यं न तथा च शनैःशनैः । गङ्गायात्रासु कर्त्तव्यं नान्यत्कर्मविचक्षणैः
गङ्गातीरे प्रयागे तु वाणिज्यप्रमुखानि च । कार्याणि कुरुते यस्तु तत्पुण्यार्धंविनश्यति
जन्मजन्मार्जितं पापं स्वल्पं वा यदि वा बहु । गङ्गादेवीप्रसादेन सर्वं मे यास्यति क्षयम्
इत्युक्त्वा परमप्रीतः प्राज्ञो गङ्गातटं व्रजेत् । दृष्ट्वा च मातरं गङ्गामिमं मन्त्रमुदीरयेत् ॥
अद्यमे सफलं जन्म जीवितञ्च सुजीवितम् । साक्षाद्ब्रह्मस्वरूपां त्वामपश्यमितिचक्षुषा
देवि! त्वद्दर्शनादेव महापातकिनो मम । विनष्टमभवत्पापं जन्मकोटिसमुद्भवम् ॥३३॥
इत्युक्त्वा सकलं देहं निपात्य पृथिवीतले । प्रणमेज्जाह्नवीं देवीं भक्तिभावसमन्वितः ॥
ततः स्रोतःसमीपे च बद्धाञ्जलिरिमं पुनः । पठेन्मन्त्रं भक्तिभावैः सुप्रीतो द्विजसत्तम!॥
गङ्गेदेवि जगद्धात्रि! पादाभ्यां सलिलन्तव । स्पृशामीत्यपराधं मे प्रसन्ना क्षन्तुमर्हसि
स्वर्गारोहणसोपानं त्वदीयमुदकंशुभे !। अतः स्पृशामि पादाभ्यां गङ्गदेवि ! नमोनमः
ततस्तु मस्तके धृत्वा गाङ्गेयं वारि भक्तितः ।
स्नानार्थं प्रविशेत्स्रोतः प्राज्ञो गङ्गेति कीर्तयन् ॥ ३८ ॥
त्वत्कर्दमैरतिस्निग्धैः सर्वपापप्रणाशनैः । मया संलिप्यते गात्रं मातर्मे हर पातकम् ॥
गङ्गाकर्दमलिप्ताङ्गो गङ्गागङ्गेति कीर्तयन् । सर्वकल्मषनाशिन्यां गङ्गायां स्नानमाचरेत्
भूयःपूर्वोक्तमन्त्रेण गृहीत्वा मृत्तिकां ततः । वक्ष्यमाणेन मन्त्रेण गृहीत्वामृत्तिकांपुनः
वक्ष्यमाणेन मन्त्रेण भक्तितः स्नानमाचरेत् ॥ ४१ ॥
ब्रह्मस्वरूपे हे गङ्गे! स्नानमाचर्यते मया । त्वदीये निर्मले तोये यथोक्तफलदा भव ॥४२
ततोनिजेच्छया विप्र!गङ्गायां लोकमातरि । स्नानंसमाचरेत्प्राज्ञो गङ्गां नारायणंस्मरन्
एवं स्नात्वा तु गङ्गायां गात्रं वस्त्रेण मार्जयेत् ।

परिधेयाम्बराम्बूनि गङ्गास्रोतसि न त्यजेत् ॥ ४४ ॥
न दन्तधावनं कुर्याद्गङ्गागर्भे विचक्षणः । कुर्याच्चेन्मोहतः पुण्यं न गङ्गास्नानजं लभेत्
प्रभातेऽन्यत्रतांकृत्वादन्तकाष्ठादिकक्रियाम् । रात्रिवासंपरित्यज्यगङ्गायांस्नानमाचरेत्
बाह्यभूमिमगत्वायो गङ्गायां स्नानमाचरेत् । गङ्गास्नानफलं सोऽपि सम्पूर्णंचलभेन्नहि
स्नात्वा च गङ्गामृत्पुण्ड्रं स्थाने स्थाने नयेद्बुधः ।
ततः स्थिरमनाः कुर्याद्विधिना तर्पणादिकम् ॥ ४८ ॥
गाङ्गेयैरुदकैर्यस्तु कुरुते पितृतर्पणम् । पितरस्तस्य तृप्यन्ति वर्षकोटिशतावधि ॥४६॥
गङ्गायां कुरुते यस्तु पितृश्राद्धं द्विजोत्तम !। पितरस्तस्य तिष्ठन्ति सन्तुष्टास्त्रिदशालये
समाप्य स्नानकर्माणि गङ्गायां समुपोषितः । दानंदेवार्चनंचैव जपोऽन्याश्चक्रियास्तथा
कृतास्तु यास्तु गङ्गायां क्षयस्तासांनविद्यते । समाप्यस्नानकर्माणि गङ्गायांसमुपोषितः
कृतपञ्चमहायज्ञो गङ्गापूजां समाचरेत् । गङ्गायाःप्रतिमां देव्याः श्रीविष्णोःप्रतिमांतथा
नालिकेरोदकैर्दिव्यैः स्नापयेद्भक्तितो बुधः । जाह्नवीप्रतिमाभावे नालिकेरोदकानि वै ॥
निक्षिपेज्जाह्नवीतोये जाह्नवीं हृदि संस्मरन् । दिव्यैर्गन्धैश्च दीपैश्च घृतपूर्णसमुज्ज्वलैः
धूपैः सुवासितैश्चैव नानापुष्पैर्मनोहरैः । नानाफलैः सुपक्वैश्च नैवेद्यैरुत्तमैस्तथा ॥
पाद्यार्घाचमनीयैश्च ताम्बूलैः खादिरान्वितैः । अन्यैरप्युपहारैश्च विशिष्टैर्निजभक्तितः
स्तवैर्नानाविधैश्चैव गङ्गां विष्णुंचपूजयेत् । ततःसम्पूजितां देवीं विष्णुंचपरमेश्वरम्
अङ्गप्रदक्षिणं कुर्याद्भक्त्या वारत्रयं बुधः । अथ स्थित्वा निराहारोऽपरेऽहनि सरिद्वरे
भोक्ष्यामि जह्नुतनये ! शरणं मे भवाऽघने !। एवं सङ्कल्प्यमतिमान्कर्मणा मनसा गिरा
रात्रौ जागरणं कुर्याज्जितनिद्रोऽतिहर्षितः । अशक्त्याच द्विजश्रेष्ठ! फलहारो भवेद्बुधः॥
अन्नमात्रंन भुञ्जीत न च कुर्याद्धि भोजनम् । प्रातर्गङ्गांच विष्णुंच पुनरभ्यर्च्यजैमिने!
विप्राय दक्षिणां दद्याद्विभवस्याऽनुरूपतः । अर्चनं जागरं चैव यत्कृतं पुरतस्तव ॥६३॥
अच्छिद्रमस्तु तत्सर्वं त्वत्प्रसादात्सरिद्वरे ! ।
इत्युक्त्वा तां नमस्कृत्य कृतनित्यक्रियो द्विजः ॥ ६४ ॥
ततः सबन्धुभिः सार्धं पारणं स्वयमाचरेत् । तीर्थोपवासमेवं यः कुरुते जाह्नवीतटे ॥

तस्य पुण्यफलं वत्स!वदतोमे निशामय । जन्मान्तरार्जितैः पापैर्विमुक्तो विष्णुरूपधृत्
विष्णोःपुरं समासाद्य विष्णुना सह मोदते । कल्पकोटिसहस्राणि कल्पकोटिशतानिच
स्थित्वाविष्णुपुरेसवं सुखंभुङ्क्तेसुदुर्लभम् । ततोनारायणादेशाद्ब्रह्मलोकं सगच्छति
ब्रह्मलोके सुखंभुङ्क्ते दुर्लभं यत्सुरैरपि । तावत्कालं ब्रह्मलोके स्थित्वा ब्रह्मक्षयात्ततः
महादेवं ततोगच्छेद्रथमारुह्य शोभनम् । सुखं नानाविधं तत्र भुङ्क्तेऽत्यन्तसुदुर्लभम्
गाणपत्यमवाप्नोति किमन्यैर्बहुभाषितैः । तावत्कालं शिवपुरे स्थित्वा वै पुण्यवान्नरः
इन्द्रलोकं ततो गच्छेद्द्वितीय इव वासवः । तेन पुण्यात्मना सार्धं वसेदेकासने ततः॥

तत्र भुक्त्वाऽखिलान्कामान्कल्पकोटिशतावधि ।
सूर्यलोकं ततो गच्छेद्द्वितीयइव भास्करः ॥ ७३ ॥

उषित्वातत्र सुचिरं चन्द्रलोकंततोव्रजेत् । तत्राऽमृतानिभुक्त्वावै चिरंचन्द्रस्यसन्निधौ
पुनरागत्य पृथिवींचक्रवर्ती नृपोभवेत् । पालयित्वाचिरं पृथ्वीं जित्वावैसकलान्रिपून्
आयुषोऽन्तेच गङ्गायां सुखं मृत्युमवाप्नुयात् । भूयःस एवमारुह्यविमाने सुमहायशाः
पुरं भगवतो याति दैवतैरपि दुर्लभम् । तत्र भुक्त्वाऽखिलान्भोगान्मन्वन्तरचतुष्टयम्
परमं ज्ञानमासाद्य दुर्लभं मोक्षमाप्नुयात् । जाह्नवीतीरयात्रायां दैवाद्यस्य भवेत्पतिः॥
पञ्चता सोऽपि परमं धाम गच्छेन्नसंशयः । सत्यधर्मो नामराजा धार्मिकश्चप्रियम्वदः
त्रेता द्वापरसन्धौ च बभूव क्षितिमण्डले । विजयानाम महिषी तस्य भूमिपतेरभूत्
सुन्दरी शीलयुक्ता सा पतिसेवापरायणा । सप्तवर्षसहस्राणि भुक्त्वावसुमतीमिमाम्
कदाचित्प्राप्तकालोऽसौ सदारः पञ्चतां गतः । ततो यमभटैर्बद्धौ दम्पती तौ भयङ्करैः
दुःखप्रदेन मार्गेण जग्मतुर्यममन्दिरम् । तौ दृष्ट्वा धर्मराजोऽपि चित्रगुप्तमुवाच ह ॥
एतयोः सर्वकर्माणि चित्रगुप्त!विचारय । तेनाऽऽज्ञप्तश्चित्रगुप्तस्तयोः कर्माणि जैमिने!

मूलाद्विचारयामास प्राह चेति कृताञ्जलिः ॥ ८४ ॥

चित्रगुप्त उवाच ।

एतयोः सकलं कर्म शृणु राजन्वदाम्यहम् । शुभं वाऽप्यशुभं कर्म यदेताभ्यां कृतं भुवि
किञ्चिदस्यावयोपार्यं वदामि तदहंशृणु । एकदा त्रासितो व्याघ्रैः कश्चिदेकोमृगःप्रभो!

वनाज्जीवनरक्षार्थमागतोऽस्य सभाम्प्रति । तमायान्तं समालोक्य भूपोऽयं प्राप्तकौतुकः
जघान स्वयमुत्थाय खड्गेन तरसा मृगम् । जघान ह मृगं राजा शरणागतमप्यमुम्
तस्मात्सदारो भूपोऽयं दण्डनीयस्त्वया प्रभो !। यावन्ति तस्य रोमाणि संस्थितानि कलेवरे
मन्वन्तरसहस्राणि मन्वन्तरशतानि च । कोटिकोटिकुलैर्युक्तो नारकी स्यान्न संशयः॥
शरणागतरक्षां यः प्राणैरपि धनैरपि । कुरुते यो नरो ज्ञानी तस्य पुण्यं निशामय ॥
सर्वपापैर्विनिर्मुक्तो ब्रह्महत्यामुखैरपि । आयुषोऽन्ते व्रजेन्मोक्षं योगिनामपि दुर्लभम् ॥

यमाज्ञया ततो दूतैः सदारोऽसौ महीपतिः ।
असिपत्रवने घोरे स्थापितोऽत्यन्तदुःखदे ॥ ९३ ॥

असितुल्यानि पत्राणि यतस्तेषां च शाखिनाम् । असिपत्रवनं प्राहुस्तस्तद्वै मनीषिणः
स्थित्वाऽसिपत्रविपिने युगकोटिशतानि च । सदारो नरकं भेजे व्याघ्रभक्ष्याह्वयं ततः
निरयं तं प्रविशति सर्वोपद्रवसंयुतम् । भवेच्च भक्ष्यो व्याघ्रेण व्याघ्रभक्ष्यस्ततः स्मृतः
युगकोटिसहस्राणि स्थित्वा तत्र स भूपतिः । सदारोऽजनि पापान्ते भेकयोनिगतः क्षितौ

जातिस्मरौ ततस्तौ तु भेकीभेकौ सुदुःखितौ ।
तीरे तस्थतुरेकस्मिन्सततं कीटभोजिनौ ॥ ९८ ॥

अथैकदा तेन पथा पुण्याहं प्राप्य मानवाः । गच्छन्ति जाह्नवीतीरं तांस्तौ ददृशतुर्द्विज!

भेक उवाच ।

वर्षाभ्वि! मोहाद्यत्सर्वं पापं कर्मकृतं मया । अद्याऽपि कर्मणा तेन दुःखमावां न मुञ्चति
त्यक्त्वा शरीरं गङ्गायांमुक्ताःस्युःपापिनोऽपि च । तथाप्येवंविधंदुःखमनुभूयावहे कथम्
गङ्गायांत्यक्तुमिच्छामिसम्प्रत्येतत्कलेवरम् । कायुक्तिर्ब्रूहितांकान्ते! तितीर्षुर्दुःखसागरम्

वर्षाभ्वी तद्वचः श्रुत्वा प्राहेति विनयान्विता ॥ १०२ ॥

वर्षाभ्व्युवाच ।

दुःखं न शक्यते सोढुं स्वामिन्नेतद्द्रुतं कुरु । ततस्तौ दम्पती विप्र! स्मृत्वा गङ्गां शुभप्रदाम्
सहसा चक्रतुर्यात्रां मरणायोपहर्षितौ । अथैतौ पथि गच्छन्तौ चिरकालं बुभुक्षितौ

अपश्यत्पापकृत्क्ष्वेडः कालसर्पो भयङ्करः ॥ १०५ ॥

कालसर्प्प उवाच ।

दर्दुरौ पापिनौ चाऽपि प्राप्तकालौयुवांततः । अथ नूनं भक्षितव्यौक्षुधितेनमयायुवाम्
ततस्तावतिसन्त्रस्तौ दम्पती दुःखभागिनौ । इत्यूचतुर्वचो भक्त्या कालसर्पं पुरोगतम्
नास्ति मृत्युभयं सर्प! स्वल्पमप्यावयोर्हृदि । अहमासं पुरा राजा सत्यधर्माह्वयःक्षितौ
इयं च विजया नाम महिषी संस्थिता मम । मया दुरात्मना मोहान्निहतः शरणं गतः॥
तेनैव कर्मणा भुक्तं चिरं दुःखं यमालये । भोक्तुं स्वकर्मणः शेषं भेकयोनौ स्त्रिया सह
सोऽहं जातोऽस्मि पापेन कृतं कर्म न मुञ्चति । सत्यमावांजिगमिषू परमं धाम पन्नग!
व्रजावो जाह्नवीतीरं शरीरत्यागहेतवे । त्यजाऽविवेकितां सर्प नरकक्लेशदायिनीम् ॥
आवां सङ्गाद्भवतो भविष्यति सुखं कियत् । आवयोर्हृदये विष्णुस्तवाऽपिहृदयेहरिः

अतएव त्वया सार्द्धं शत्रुता का भुजङ्गम ! ।
प्राणिहिंसा न कर्त्तव्या कदाचिदपि च विचक्षणैः ॥ ९४ ॥

क्रियतेऽपि च तद्धिंसां विदधातिस्वयंविधिः । आयुः पुत्राश्चदाराश्चसम्पदश्चयशांसिच

हिंसां दत्त्वा मनुष्याणां हरेद्दुष्टो विधिः स्वयम् ।
किं जपैः किं तपोभिर्वा किं दानैः किमुचाऽध्वरैः ॥ ११६ ॥

हिंसेतिवर्णद्वितयं यस्याऽस्ति हृदये सदा । यः प्राणिहिंसको मर्त्यः सएव हरिहिंसकः
सर्वप्राणिशरीरस्थो भगवान्कमलापतिः । आत्मानं बहुधा सृष्ट्वा भगवान्भूतभावनः ॥
संसारकौतुकागारे क्रीडेच्छिशुरिव स्वयम् । शरीरिणः शरीरं हि निलयः परमात्मनः
परमात्मा स्वयं विष्णुरतो हिंसां विवर्जयेत् । परप्राणविनाशेन चात्मतुष्टिर्विधीयते॥
क्षणं स्यादात्मनस्तुष्टिरन्यस्य प्राणसङ्क्षयः । चरित्रमेतल्लोकानामत्यद्भुतमिव क्षितौ ॥
आत्मतृप्तिं प्रकुर्वन्ति परं हत्वाऽतियत्नतः । धीमानात्मपरिज्ञानं कदाचित्कुरुते नहि ॥
अहं विष्णुरसौ विष्णुरिति चेतसि भावयेत् । परदुःखेनयोदुःखी सुखी यश्च परश्रिया

संसारेऽस्मिन्सविज्ञेयः साक्षादेव हरिः स्वयम् ।
धिगस्तु तत्सुखं नृणां मोहवञ्चितचेतसाम् ॥ १२४ ॥

परहिंसाविधानेन सुखं यत्स्याद्भुजङ्गम !। सुखानि वाऽपिदुःखानि दीयन्तेयानि जन्तवे

अचिरेणैव तानि स्म लभन्ते भुवि मानवाः । तस्माद्धिंसांपरित्यज्यभुजङ्गम ! सुखीभव

त्वयि प्रसन्ने गच्छावः पारं दुःखमहोदधेः ॥ १२७ ॥

सर्प उवाच ।

यदि स्यात्परहिंसायां नूनं मे नाऽतिपातकम् । तदाकथमहोसृष्टौ वेधसा भक्ष्यभक्षकौ

परहिंसा न कर्तव्या सत्यमेतत्त्वयोदितम् । किन्तु सर्वेषु भक्ष्येषु हिंसासम्भाव्यतेनहि

नारायणो विश्वरूपः सत्यमेतन्न संशयः । भक्ष्यभक्षकभावेन स्वयमेव ससर्ज ह ॥१३०

सृजति स्वयमात्मानमात्मानं रक्षतिस्वयम् । आत्मानंस्वयमेवाऽत्तिसृष्टिरेवंविधाहरेः

शक्तोऽहं किं युवां हन्तुं कालरूपी स्वयं विधिः ।

सम्प्रति प्रेषयामास कार्येऽस्मिन्मां स्वयं हरिः ॥ १३२ ॥

युवां ससर्ज यो देवो यश्च रक्षतिवांसदा । कालरूपी स एवाऽद्यहन्ति हेतुं विधायमाम्

व्यास उवाच ।

ततस्तेन भुजङ्गेन भक्षितौ तौ च दम्पती । गङ्गागङ्गेति जल्पन्तौ महत्या क्षुधया पथि

जाह्नवीतीरयात्रायां पादे पादे च ताविमौ । अश्वमेधाख्ययज्ञानां प्राप्तवन्तौ महाफलम्

तस्मादेनौ महात्मानौ बह्वश्वमेधधारिणौ । एतयोः सदृशो नास्ति शतक्रतुरहं यतः ॥

निजाधिकारेणैवाऽन्यमवलम्ब्य पुरन्दरः । अर्घ्यहस्तः पादचारी वृतो देवैः समाययौ॥

अथरम्भोर्वशी चैव सुन्दर्योऽन्याश्च हर्षिताः । अन्योन्यं कथयामासुर्निजयौवनगर्विताः

अयं पुण्यात्मनां श्रेष्ठो रसज्ञोऽत्यन्तसुन्दरः ।

आयातोऽमुं करिष्यामि स्ववशं सेवितैः स्वकैः ॥ १३६ ॥

काचित्काश्चिद्वदत्येतज्जानामि सकलां कलाम् । अतएवभविष्यामिकान्ताहमस्यभूपतेः

काचित्काश्चिदितिब्रूयात्ते शक्रोऽपि वशोमम । किमत्रचित्रंवशगोभूपालोऽयंभविष्यति

भर्त्ता ममाऽयं च पतिर्ममाऽयं स्वामी ममाऽयं मम नाथ एषः ।

इतीव सर्वाः परमप्रमोदैर्वदन्ति नार्योऽखिलसद्गुणज्ञाः ॥ १४२ ॥

उच्चावचं विप्र ! निशम्य तासां जगाद काचिद्गुणिनी रसज्ञा ।

सौदास्यकान्तां नृपतिः स्वयं यां भजत्ययं किं कलहेन नार्यः ॥ १४३ ॥

सुन्दर्यस्तास्ततः सर्वाः सन्त्यज्यकलहं द्विज !। आजग्मुर्हृदयोत्साहैःसर्वाभरणभूषिताः
अथ तं नृपतिश्रेष्ठं सदारं गतकल्मषम् । पाद्याद्यैः पूजयामासुःप्राहेति च पुरन्दरः ॥
रथे निवेशयामास पुष्पके स्त्रीसमन्वितम् । भेरीमृदङ्गमधुरीडिण्डिमानकनिस्वनैः ॥
करकङ्कणनादैश्च करतालस्वनैस्तथा । जयशब्दैश्च देवानां नाकःशब्दमयोऽभवत् ॥
देवाङ्गनाचारुहस्तश्वेतचामरमारुतैः । वीजितः सरथारूढः सदारस्त्रिदिवं ययौ ॥१४८
ततः शक्रःस्वयं तस्मै सत्यधर्माय भूभुजे । दत्तवान्निजासनार्धं शुभोवैक्षयशङ्कया ॥
शक्रेणसह भूपोऽसौ वसन्नेकासने सदा । शक्रत्वमकरोत्स्वर्गे केशवस्यानुकम्पया ॥
युगकोटिसहस्राणि दिवि भुक्त्वाखिलं सुखम् । रथमारुह्य वैकुण्ठं ययौ भगवदाज्ञया
तत्र मन्वन्तरं भुक्त्वा सर्वभोगं मनोरमम् । परमं ज्ञानमासाद्य सदारो मोक्षमाप्तवान्
जाह्नवीतीरयात्रायां शरीरं त्यजतः पथि । फलमेवं विधं विप्र ! मया सर्वं प्रकीर्तितम्
जाह्नवीतीरगमने मुनिभिस्तत्त्वदर्शिभिः । न कालनियमः प्रोक्तोनारदाद्यैर्महर्षिभिः ॥
यदा यदा द्विजश्रेष्ठ! गङ्गायां स्नानमाचरेत् । तदातदाऽक्षयंपुण्यं लभते मानवोध्रुवम्
गङ्गासर्वाणि पापानि नाशयेदितिनिश्चयः । कुर्यात्पुनःपुनःपापंनच गङ्गापुनातितम्
पापबुद्धिं परित्यज्य गङ्गायां लोकमातरि । स्नानं कुरुत हे लोका यदि सद्गतिमिच्छथ
यत्पुण्यंगङ्गास्नानात्तुमानवानांभवेद्द्विज !। तत्पुण्यंप्राप्यतेविप्र कर्मभिःकैःसुदुस्तरैः

आसाराणां भूमिरेणोः सङ्ख्यां कर्तुं तु शक्यते ।
भागीरथीगुणास्तेन शक्या वक्तुं न च द्विज !॥ १५६ ॥

विचार्यसर्वशास्त्राणित्वदीयानिमयोच्यते । गङ्गाम्भसिसकृत्स्नात्वामोक्षमाप्नोतिमानवः

स्नानं कूपजलेऽपि यस्तु कुरुते गङ्गांविचिन्त्य प्रभुं
देवानां सकलार्तिशोकदुरितत्रासौघविध्वंसिनीम् ।
मुक्तःसोऽपि समस्तपातकचयैर्गोविप्रहत्यादिभि-
र्गच्छेद्विष्णुपुरंसमस्तसुखदं गङ्गाप्रसादाद्द्विज ! ॥ १६१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे गङ्गा-
माहात्म्यं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

### माघादिषु सविष्णुपूजाविधानंतत्फलवर्णनम्

जैमिनिरुवाच ।

माहात्म्यमेतद्गङ्गायास्त्वत्प्रसादाच्छ्रुतं मया ।
इदानीं श्रोतुमिच्छामि विष्णुपूजाफलं गुरो ! ॥ १ ॥

व्यास उवाच ।

शृणु लक्ष्मीपतेर्वत्स! सपर्याफलमुत्तमम् । यच्छ्रुत्वा मानवाः सर्वे लभन्ते ज्ञानमुत्तमम्
विप्र द्वादशमासेषु माघादिषु सनातनः । पूजितव्यो विधानैर्यैः शृणु तानि वदाम्यहम्
माघेमासि समायाते सर्वमासोत्तमे शुभे । आमिषं मैथुनं चैव सन्त्यजेद्वैष्णवोत्तमः ॥
प्रातः स्नायी भवेन्नित्यं तैलान्यपिच्चवर्जयेत् । द्विर्भोजनं परान्नंच माघेमासिपरित्यजेत्
प्रातः शुक्लाम्बरधरः कृतपञ्चमहाध्वरः । सपर्यामारभेद्विष्णोःस्थिरचित्तो हि मानवः ॥
ईषदुष्णजलैः शुद्धैः स्नापयेद्विष्णुमव्ययम् । अतिश्लक्ष्णैश्चन्दनैश्चविष्णोरङ्गानि लेपयेत्
पूजयेज्जगदीशस्य देवदेवस्य चक्रिणः । प्रक्षालितानि पात्राणि जलहीनानि कारयेत् ॥
स्नापयित्वा जगन्नाथमीषदुष्णेन वारिणा । प्रोक्षितव्यं तच्छरीरं दिव्यवस्त्रेण यत्नतः
सलिलैरीषदुष्णैश्च प्रस्नापयति केशवम् । माघे मासि द्विजश्रेष्ठ! फलं तस्य मयोच्यते
विमुक्तः पातकैः सर्वैर्जन्मजन्मान्तरार्जितैः । इह भुङ्क्ते सुखं सर्वंशेषे याति हरेर्गृहम्॥
यत्नात्प्रक्षाल्य पात्राणि कृत्वा शुद्धानिवारिभिः । यःपूजयेज्जगन्नाथं तस्यपुण्यं निशामय

इह भुक्त्वाऽखिलान्कामान्सर्वव्याधिविवर्जितः ।
अन्ते युगसहस्राणि तिष्ठेत्केशवमन्दिरे ॥ १२ ॥

प्रभाते चिश्वसन्ध्यायां पुरतश्चक्रपाणिनः । ज्वलन्तं स्थापयेद्वह्निं निर्धूमं वैष्णवोजनः
शीतस्य वारणार्थाय सायं प्रातश्चवैष्णवः । माघेविष्णवग्रतो वह्निंज्वालयेत्तत्फलंशृणु
इह भुक्त्वाऽखिलान्कामान्पुत्रपौत्रसमन्वितः । अन्ते विष्णुपुरं याति दैवतैरपिदुर्लभम्

यथैवाऽत्मा तथा विष्णुः सन्देहो नाऽऽत्रविद्यते । स्वपश्चदेवदेवस्य पर्यङ्के केशवस्यनु
यथात्मनस्तथा मर्त्यःकुर्याच्छीतनिवारणम् । क्षीरेणस्नापयेद्यस्तु माघे मासिजनार्दनम्
तस्मैदेवोत्तमोविष्णुः सन्तुष्टोन ददातिकिम् । तथाशीतक्षयं कुर्याद्दिव्यवस्त्रणचक्रिणः
यः पूजयेत्सकृन्माघेस्नापयित्वा चतुर्भुजम् । नालिकेरोदकैर्दुग्धैः फलं तस्यवदाम्यहम्
नरकाब्धौ मज्जमानान्दुस्तरैस्वेनकर्मणा । उद्धृत्य कोटिपुरुषान्स याति चक्रिणःपदम्
माघे मासे च शुक्लायां पञ्चम्यां द्विजसत्तम ।। एकादश्यां च सप्तम्यां हरिपूजाविशेषतः
दातव्यो देवदेवाय सपद्माय मुरारये । पायसो धूपसहितो माघे मासि दिने दिने ॥
सधूपपायसं यस्तु माघे यच्छति चक्रिणे । तस्य पुण्यफलं वच्मिश्रृणु वैष्णव जैमिने!
अन्ते विष्णुपुरं गत्वा मन्वन्तरचतुष्टयम् । भुङ्क्तेमनोरमान्भोगान्प्रसादाच्चक्रपाणिनः
पुनरागत्य धरणीं चक्रवर्त्ती नृपोभवेत् ! भुङ्क्ते च भोगं सुचिरं मृतोयाति हरेर्गृहम्
पञ्चम्यां वाऽपि सप्तम्यामेकादश्यांच जैमिने ।। अशक्तो वैष्णवो दद्यात्परमान्नं मुरारये
कृष्णपक्षाद्द्विजश्रेष्ठ! शुक्लपक्षे विशेषतः । शुक्लपक्षे तिथिष्वेषु दद्यादन्नं मुरारये ॥२८॥
एकाहमपि यो माघे विष्णवे दैत्यजिष्णवे । सापूपं पायसं दद्यान्न तस्य दुर्लभो हरिः
यत्किञ्चिद्द्विजतुष्ट्यर्थं माघे मासिप्रदीयते । तदक्षयंभवेत्पुंसः कोऽपिनास्त्यत्रसंशयः
माघे मासि कृतं कर्म शुभं वाऽशुभमेव वा । तस्यनास्तिक्षयं विप्र! मन्वन्तरशतैरपि ॥
माघे चम्पकपुष्पेण योऽर्चयेत्कमलापतिम् । सगच्छेत्परमं धाम विमुक्तः सर्वपातकैः
यावन्ति स्वर्णपुष्पाणि दीयन्ते चक्रपाणये । तावद्युगसहस्राणि स्थीयते विष्णुमन्दिरे
मेरुतुल्यसुवर्णानि दत्त्वा भवति यत्फलम् । एकेनस्वर्णपुष्पेण हरिं संपूज्य तत्फलम्
सुवर्णपुष्पं विप्रेन्द्र! सर्वदा केशवप्रियम् । माघे मासि विशेषेण पवित्रं केशवप्रियम् ॥
सुवर्णकुसुमैर्दिव्यैर्येन नाऽऽराधितो हरिः । रत्नैर्हीनः सुवर्णाद्यैः स भवेज्जन्मजन्मनि
फलंचम्पकपुष्पस्य ब्रवीम्यहं विशेषतः । आकर्णय द्विजश्रेष्ठ! सेतिहासमनुत्तमम् ॥३७
सुवर्णो नाम भूपालो बलवान्सर्वशास्त्रवित् । आर्यावर्तेषु सर्वेषु बभूव विप्रवर्चमा ॥
राजश्रिया विद्यया च वयसा च स भूपतिः । अतिप्रमत्तो विप्रर्षे! सदापापरतोऽभवत्

पाखण्डमन्त्रिणां वाक्यैर्विना दोषैरपि द्विज ! ।

धनलोभात्तेन राज्ञा दण्डयन्ते साधवो जनाः ॥ ४० ॥
अन्यायोपार्जितं वित्तं गीतवाद्यादिभिर्वृतः। समस्तं नाशयामास यज्ञदानविवर्जितः॥
न ज्ञातिपोषणं चक्रे न देवद्विजभोजनम्। न च याचकसन्तुष्टिं सर्वदापापमोहितः॥४२
न चकाराऽतिथेः पूजां सदापापपरायणः। ययौ च मन्दिरान्नित्यं स भूपः पापमन्दिरः
कृतानितेनपापानियान्यन्यान्यविवेकिनाम्। अपिवर्षशतैःशक्तःसङ्ख्यातुंजनितानिकिम्
एकदा स महीपालः कामेन परिमोहितः। जगाम वेश्यानिलयं निशीथे दुरिताशयः॥
तमायातं ततो दृष्ट्वा भूपालमुज्ज्वलाह्वया। सहसोत्थाय पर्यङ्काच्चक्रे तत्पादवन्दनम्॥
प्रक्षाल्य तत्पादयुगं भृङ्गारसलिलैश्च सा। मञ्चे निवेशयामास दोर्भ्यामालिङ्ग्यतंनृपम्
तत्प्रेमामृतधाराभिः सिक्तोऽसौ पृथिवीपतिः। तस्मिन्नुवास पर्यङ्के तया सह कुतूहली

ततः सा गणिका प्रीत्या हसन्ती नवयौवना।
ददौ चम्पकपुष्पाणि तस्मै भूमिभुजे स्वयम् ॥ ४६ ॥

पुष्पमालापुष्पमेकं तस्माद्भूपतिहस्ततः। पपात धरणीपृष्ठे गन्धव्याप्तदिगन्तरम्॥
तच्च्युतं कुसुमंदृष्ट्वा सराजाऽत्यन्तसम्भ्रमात्। नमोनारायणायेति जगादोङ्कारपूर्वकम्
नारायणायेति वाक्यात्सर्वाणि पातकानि च। स्वर्णपुष्पप्रदानेन तस्य नष्टानिभूभुजः
ग्रामीणाअथसर्वेऽपि समागत्याऽतिदुर्जये। तस्यामेवनिशायांतं जघ्नुर्वेश्यागृहेस्थितम्
नेतुं तमथ भूपालं सर्वपातकिनां वरम्। किङ्करान्प्रेषयामास क्रुद्धो वैवस्वतो भृशम्
तेनाऽऽज्ञप्तास्ततो दूताः पाशमुद्गरपाणयः। अतिवेगात्समायाताः क्रोधसंरक्तलोचनाः॥
उद्यमं चक्रिरे नेतुं यमदूताः स्वमालयम्। ततो नारायणप्रेष्याः शङ्खचक्रगदाधराः॥
आयाता गरुडारूढास्तं नेतुं पृथिवीपतिम्। पाशेन यन्त्रितं दृष्ट्वा तं भूपंविष्णुकिङ्कराः
जघ्नुश्चक्रैर्गदाभिश्च यमदूतान्महाबलाः। समारोप्य रथे दिव्येशङ्खान्दध्मुरनुत्तमान्॥
तथा राजा रथारूढस्तुलसीमाल्यभूषितः। पीतकौशेयवासाश्च स्वर्णालङ्कारभूषितः॥
स्तूयमानो मुनिगणैर्वेदवेदाङ्गपारगैः। विष्णुदूतैः परिवृतो हरेः सालोक्यमाययौ॥

अथोत्थाय स्वयं विष्णुश्चतुर्भिर्दीर्घबाहुभिः।
तमालिङ्गितवान्भूपं प्रोक्तवांश्चद्विजोत्तम ! ॥ ६१ ॥

श्रीभगवानुवाच ।

नृपते! कुशलं ब्रूहि सर्वपुण्यात्मनाम्वर !। किमस्ति साध्यं भवतस्तदाज्ञापयसम्प्रति॥
नमोनारायणायेति वारैकमपियोवदेत् । नित्यं तस्यानुपाल्योऽहं स मे भ्राता स मे पिता
नारायणेतिमन्नाम कदाचिद्यः स्मरेणन्नरः । साधयाम्यखिलं तस्य पितुःपुत्रइवेप्सितम्
भक्तोऽसिनृपतिश्रेष्ठ!तस्मान्निजमनोरथम् । प्रकाशयाऽद्भुतं तात किन्तेदास्यामिचाधुना

राजोवाच ।

सर्वमेव दयासिन्धो!त्वया दत्तंन संशयः । पापिनाऽपि मया प्राप्तं तवस्थानंसुदुर्लभम्
तस्याऽनेन तु वाक्येन प्रसन्नः कमलापतिः । स्नेहान्निवेशयामास भूपालं तन्निशामय
ततः सुवर्णालङ्कारैर्विश्वकर्मविनिर्मितैः । चकार मण्डलं तस्य स्वमेव दयामयः ॥६८॥
अथ नानाविधैर्भक्ष्यैर्दिव्यैरपि सुदुर्लभैः । तोषितः स महीपालो विष्णुनाऽतिसहिष्णुना
एवं प्रतिदिनं तस्थौ स राजा विष्णुमन्दिरे । मन्वन्तरसहस्राणि नववर्षशतानि च ॥
प्रजानां पालनं चक्रे स राजा धर्मतत्परः । पूजयामास सततं भक्त्या परमया हरिः ॥
चारुचम्पकपुष्पैश्चनैवेद्यैर्विविधैश्च सः । आयुःशेषे स भूपालो मरणं जाह्नवीजले ॥
समासाद्य ययौ मोक्षं प्रसादाच्चक्रपाणिनः ॥ ७३ ॥

व्यास उवाच ।

विप्र!चम्पकपुष्पस्यप्रभावोऽयंप्रकीर्तितः । चम्पकैर्हरिमभ्यर्च्य मुक्ताःस्युःपापिनोजनाः
स्फुटच्चम्पकपुष्पेण पूजितो भगवान्हरिः । अचिरेणैव विप्रर्षे ! ददाति परमंपदम् ॥७५
ये यजन्ति परात्मानमिच्छयाचाप्यनिच्छया । तेऽपियान्ति परंधामविमुक्ताःसर्वपातकैः

हरौ प्रसन्ने दुरितानि कोऽपियतः स राजा कृतपातकोऽपि ।
जगाम मोक्षं कृपया मुरारेर्विश्वार्णवं निम्नमिमं वितीर्य ॥ ७७ ॥
दिव्यैः सुगन्धैः कनकप्रसूनैर्नारायणं पद्मदलायताक्षम् ।
भक्त्या यजेद्यः परमादरेण मर्त्यो व्रजेत्तं तु विहाय पापम् ॥ ७८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे चम्पकपुष्पमहिमा नाम दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः

## हरिपूजाविधिवर्णनम्

**व्यास उवाच ।**

जैमिने! विधिनायेन पूजितव्यो हरिः सदा । तमहं वच्मि विप्रर्षे! शृणुवत्स समाहितः
कल्यउत्थाय पर्यङ्काद्गृहीत्वापात्रमम्भसाम् । बहिर्देशं व्रजेत्प्राज्ञःशीर्षमाच्छाद्यवाससा
तत्रोदीच्यांदिशि मौनीयज्ञसूत्राणि कर्णयोः । कृत्वोपविष्टःप्राज्ञस्तु मलमूत्रंविसर्जयेत्
देवतायतने मार्गे गोष्ठेषु चत्वरेषु च । रथ्यायां कृष्टभूमौ च दर्भमूले तथाऽङ्गणे ॥४॥
तटिनीपुलिने चैत्यवृक्षमूले तथावने । तडागवापीगर्भेषु मलं मूत्रं च न त्यजेत् ॥५॥
रविं चन्द्रमसं चैव द्विजान्गाश्च दिशो दश । मलं मूत्रं त्यजेद्यावत्तावत्प्राज्ञो न पश्यति
खनितां मूषिकाद्यैश्चविलाभ्यन्तरवर्तिनीम् । फालकृष्टां मृदञ्चैव न गृह्णीयाच्छौचहेतवे
जलाञ्जलं समानीय शौचं कुर्याद्विचक्षणः । पादं जलेषु वै दत्त्वा न शौचं कुरुते बुधः

दक्षिणाभिमुखो रात्रौ कुर्यात्प्राज्ञो बहिःक्रियाम् ।
शिरः प्रावृत्य वस्त्रेण ततः शौचं समाचरेत् ॥६ ॥

मृत्तिकैका प्रदातव्या लिङ्गे तिस्रस्तु वै गुदे । सप्त सव्ये करे प्राज्ञैर्हस्तयोरुभयोर्दश ॥
पादयोः षट्प्रदातव्यामृत्तिकाच विचक्षणैः । कृतशौचक्रियःप्राज्ञः कुर्याद्दन्तस्यधावनम्
जिह्वापामार्जनञ्चैवदशनाच्छादनादिभिः । दक्षिणाभिमुखोभूत्वा पश्चिमाभिमुखस्तथा
नदन्तधावनं कुर्यात्कुर्याच्चेन्नारकीभवेत् । मध्यमानामिकाभ्यां च वृद्धाङ्गुष्ठेनचद्विज!
दन्तस्य धावनं कुर्यान्न तर्जन्या कदाचन । अश्वत्थवटवृक्षाणां धात्र्यार्कैश्चिकया बुधः
न दन्तधावनं कुर्यात्तथेन्द्रस्य सुरस्य च । नित्यं क्रियाफलं तस्य सर्वमेव विनश्यति
यः स्नानसमये कुर्याज्जैमिने!दन्तधावनम् । निराशाः पितरो यान्ति तस्यदेवाःसुरर्षयः
दन्तस्य धावनं कुर्याद्यो मध्याह्नापराह्णयोः । तस्य पूजां न गृह्णन्ति देवताः पितरोऽञ्जलम्

स्नानकाले पुष्करिण्यां यः कुर्याद्दन्तधावनम् ।

ततो ज्ञेयः स चाण्डालो यावद्गङ्गां न पश्यति ॥ १८ ॥
भगवत्युदिनेसूर्ये यः कुर्याद्दन्तधावनम् । तद्दन्तकाष्ठं पितरो भुक्त्वा गच्छन्ति दुःखिनः
उपवासदिने विप्र ! पितृश्राद्धदिने तथा । न तत्फलमवाप्नोति दन्तधावनकृन्नरः ॥२०॥
प्रभाते मार्जयेद्दन्तान्वाससा रसनां तथा । कुर्याद्द्वादश विप्रेन्द्र! कल्लोलानि जलैर्बुधः
उपवासे पितृश्राद्धे विधिनाऽनेन जैमिने !। दन्तधावनकृन्मर्त्यः सम्पूर्णं लभते फलम्
अनेन विधिना कृत्वा दीर्घदर्शीबहिष्क्रियाम् । ततो निजगृहंगत्वारात्रिवस्त्रंपरित्यजेत्
ततो देवगृहद्वारे चोपविष्टो बुधः शुचिः । स्मरेन्नारायणं देवमनन्तं परमेश्वरम् ॥२४॥
राम! श्यामतनो! विष्णो नारायण दयामय !। जनार्दन जगद्धाम पापं मे हर केशव!॥
पीताम्बरधरानन्तपद्मनाभ जगन्मय !। वामन! प्रणतस्येश! विभो! त्वं शरणं भव॥२६॥
दामोदर यदुश्रेष्ठ श्रीकृष्ण करुणार्णव !। कमलेक्षण देवेन्द्र ! वासुदेव कृपां कुरु ॥२७
गरुडध्वज गोविन्द विश्वम्भर गदाधर !। शङ्खपाणे चक्रपाणे पद्महस्त हराऽऽपदः ॥२८
लक्ष्मीविलास वैकुण्ठ हृषीकेश सुरोत्तम !। पुरुषोत्तम ! कंसारे कैटभारे ! भयं हर ॥
श्रीपते श्रीधर विभो श्रीद श्रीकर माधव !। परं ब्रह्म परं धाम शरणं मे भवाऽव्यय !॥

इत्थं कृत्वा द्विजश्रेष्ठ ! श्रीविष्णुस्मरणं बुधः ।
बद्धाञ्जलिरिति ब्रूते प्रविश्य निलयं गतः ॥३१ ॥

ईश्वर श्रीपते कृष्ण देवकीनन्दनप्रभो ! । निद्रां मुञ्च जगन्नाथ प्रभातसमयोऽभवत् ॥
अथोत्थितमिवप्राज्ञः पर्यङ्के देवकीसुतम् । निद्रां त्यक्त्वा सलक्ष्मीकं चिन्तयेन्निजचेतसा
ततः कृतच्छदं दिव्यं पात्रं च जलपूरितम् । मुखप्रक्षालनार्थाय दद्यात्कृष्णाय वैष्णवः
ईश्वरं वर्तनार्थाय सेवन्ते सेवका यथा । तथैव मतिमन्तोऽपि सेवन्ते परमेश्वरम् ॥३५
यस्तु सेवकरूपेण सेवते जगदीश्वरम् । अचिरेणैव विप्रर्षे! तस्य सिध्यति वाञ्छितम्
यथेश्वरस्य सभयाः सेवां कुर्वन्ति चेटकाः । प्राज्ञास्तथैव सेवन्ते सर्वदैव हरिं प्रभुम्
निजेच्छयाऽनयाविष्णुं निर्भयः पूजयेन्नरः । कुसेवकः सएवास्ति तदा नहि भवेद्द्विज!
अतएव द्विजश्रेष्ठ! त्वरया कमलापतेः । कर्त्तव्या सर्वदा सेवा पुंसा कैवल्यमिच्छता
निर्माल्यं रात्रिवस्त्रं च गन्धं पर्युषितं तथा । हरेरुत्तारयेदङ्गात्प्रभाते वैष्णवो जनः ॥

ततो देवालये तस्मिन्स्वयमेव हि मार्जयेत् ।
कुर्याच्छनैः शनैः प्राज्ञः सम्मार्जन्या परिष्क्रियाम् ॥ ४१ ॥
यावन्तो निलयात्तस्माद्गच्छन्ति रेणवो बहिः । तावन्मन्वन्तरशतं तिष्ठेद्विष्णुगृहे नरः
यस्तु सम्मार्जनंकुर्याद्ब्रह्महाऽपि हरेर्गृहे । सोऽपि याति परं धाम किमन्यैर्बहुभाषितैः
तथोपलेपनं कुर्यादूर्णकैर्गोमयैर्द्विज !। तस्मिन्विष्णुगृहे प्राज्ञः स्मरेन्नारायणं प्रभुम् ॥
यस्तूपलेपनं कुर्यात्केशवस्य च मन्दिरे । तस्य पुण्यमहं वच्मि संक्षेपाच्छृणु जैमिने !
रजांसि तत्र यावन्ति विनश्यन्ति द्विजोत्तम ! ।
तावत्कल्पसहस्राणि तिष्ठेद्विष्णुगृहे सुखी ॥ ४६ ॥
सम्मार्जनं विष्णुगृहे जनः कृत्वोपलेपनम् । लभते परमं धाम किं पूजाफलवित्प्रभो!॥
देशकालविरोधेन न शक्नोति यदा स्वयम् । तदा विष्णुगृहेचाऽपि धर्मपत्नींनियोजयेत्
अथवा तनयं भक्तं सुचरित्रंतथाऽऽत्मनः । भ्रातरं भगिनीं वाऽपि देवागारे नियोजयेत्
हरेः सपर्यावस्तूनि सप्तधा शुद्धवारिभिः । प्रक्षालयेत्त्रिधा वाऽपिस्वयमेवाऽतियत्नतः
अम्लेन ताम्रपात्राणि कांस्यपात्राणि भस्मना ।
वह्निना लोहपात्राणि शुध्यन्ति नाऽत्रसंशयः ॥ ५१ ॥
धनाढ्यो लोहपात्रस्थैर्यः स्नापयति वारिभिः । नारायणं जगन्नाथंतस्य तुष्टो न केशवः
अज्ञानाद्वाऽपि चेत्तर्हि गङ्गास्नानेन शुद्ध्यति । सम्पदि ब्राह्मणश्रेष्ठ!कर्त्तव्योनियमःसदा
विपत्त्यां नियमो नास्ति शास्त्रेष्विति विनिश्चयः ।
यत्नात्प्रक्षालितः शङ्खो यदा भूमिस्पृशेत्पुनः ॥ ५४ ॥
तदा स शङ्खो विप्रेन्द्र!शतधौतेन शुध्यति । इत्थं प्रक्षाल्य यत्नेन पूजाद्रव्याणिचक्रिणः
गृहीत्वा स्नानवस्तूनि स्नानार्थं सरसीं व्रजेत् । अकृत्वास्नानकर्माणिगृहमायातियःपुनः
तस्मिन्दिने पितृगणस्तस्य नाप्नोति तर्पणम् । स्नानार्थंभोजनार्थंवागच्छतोविघ्नकृद्भवेत्
यस्तु मोहाद्द्विजश्रेष्ठ! स नूनं नारकीभवेत् । स्नानार्थं सरसींगत्वामलमूत्रंकरोति यः
पितरस्तस्य विण्मूत्रभोजिनः स्युर्न संशयः । ततः कृत्वा विधानेनस्नानंच तर्पणादिकम्
स्वकीयं गृहमागच्छेत्स्मरन्नारायणं बुधः । ततश्च प्राङ्गणे विप्र! प्रक्षाल्य चरणद्वयम् ॥

प्रविशेद्देवतागारं शुचिर्ब्राह्मणसत्तम !। अप्रक्षालितपादो यः प्रविशेन्निलयं जनः ॥६१॥

सम्वत्सरकृतं पुण्यं तस्य नश्यति तत्क्षणात् ।

स्नानं कृत्वा समागत्य प्राङ्गणेषु विचक्षणः ॥ ६२ ॥

तस्मात्प्रक्षाल्य चरणौ प्रविशेद्देवतागृहम् । उपविश्य पादयुग्मं बुधः सव्येन पाणिना यत्नात्प्रक्षालयेद्विप्र! तथा पाणिद्वयम्पुनः । पादेन पादं विप्रेन्द्र! तथा दक्षिणपाणिना॥ यश्च प्रक्षालयेन्मूढस्तं लक्ष्मीस्त्यजति ध्रुवम् । अथोपविष्टोमतिमान्केशवार्चनमारभेत् अनन्यमानसो भूत्वा सर्वकामफलप्रदम् । मृगचर्मासने शुद्धे व्याघ्रचर्मासनेऽपि वा ॥ वस्त्रासने केवले च तथा कुशमयासने । पुष्पासने चोपविष्टः पूजयेत्कमलापतिम् ॥

काष्ठासने द्विजो विद्वान्न कुर्याद्विष्णुपूजनम् ।

विष्णुना त्वं धृता पृथ्वि ! सर्वे लोकास्त्वया धृताः ॥ ६८ ॥

अतः सर्वं सहे देहि वस्तुं मे स्थानमुत्तमम् । इत्युक्त्वासनमास्तीर्य वसेन्नारायणार्चकः दक्षिणाभिमुखोभूत्वा न कुर्याद्विष्णुपूजनम् । शङ्खेकृत्वातुपानीयंमन्त्रपूतंसुवासितम् स्नापयेत्कमलाकान्तं कमलासहितं प्रभुम् । शङ्खेन स्नापयेद्यस्तु भगवन्तं जनार्दनम् तत्फलं तस्य वक्ष्यामि श्रृणु विप्रेन्द्र जैमिने !। विप्रगोस्त्रीभ्रूणहत्यासुरापानादिपातकैः विमुक्तोयाति वैकुण्ठं भुङ्क्ते हि सकलंसुखम् । यदिद्रष्टा हृषीकेशं पूजयेन्मानवो द्विज! लभते तत्तदेवाऽऽशु प्रसादात्कमलापतेः । शङ्खाभावे तु विप्रेन्द्र! सुगन्धितोयकं बुधः॥ कृत्वा च तुलसीं पात्रे स्नापयेत्केशवं बुधः । ततो देवं स्नापयित्वा संस्थाप्यच वरासने सुगन्धैश्चन्दनैस्तस्य कुर्यात्सर्वाङ्गलेपनम् । तुलसीकाष्ठपङ्केन चक्रिणो देहलेपनम् ॥ यः करोति जनस्तस्य प्रसन्नः सततं हरिः । तुलसीपत्रमालेयं निजगन्धसुखप्रदा ॥ दीयते ते जगन्नाथ! सुप्रीतो भव सर्वदा । मन्त्रेणाऽनेन विप्रेन्द्र तुलसीपत्रमालया॥७८

अलङ्कृतो महाविष्णुः प्रसन्नो न ददाति किम् ।

ततस्तुवैदिकैर्मन्त्रैः कर्तव्यं स्वस्तिवाचनम् ॥ ७९ ॥

दिग्बन्धनश्चकर्तव्यं मन्त्रैःपौराणिकैर्बुधैः । कृष्णो रक्षतु पूर्वस्यामाग्नेय्यां देवकीसुतः याम्यां रक्षतु दैत्यारिर्नैर्ऋत्यां मधुसूदनः । विदिक्षु रक्षतु श्रीमानूर्ध्व च श्रीधरः प्रभुः

अधो रक्षतु विश्वात्माकूर्ममूर्तिःकृपामयः । ये विघ्नकारकाःसर्वोपूजाकालेभवन्तिह ॥
दूरंगच्छन्तु ते सर्वेहरिनामास्त्रताडिताः । इत्थंदिग्बन्धनं कृत्वा ततः प्रह्वः कृताञ्जलिः॥
वक्ष्यमाणेन मन्त्रेण संकल्पं कुरुते दृढम् । मयाऽऽरब्धामिमां पूजां देवदेव जनार्दन!॥
सिद्धिं प्रापय निर्विघ्नां प्रसीद परमेश्वर !॥ ततस्तु कृतसङ्कल्पो वैष्णवः सर्वत्त्ववित् ॥
अङ्गन्यासादिकं कृत्वा ध्यायेन्नारायणं हृदा । नवीनमेघसङ्काशं पुण्डरीकनिभेक्षणम् ॥
पीताम्बरधरं देवं स्मितचारुतराननम् । कदम्बपुष्पमालाभिर्भूषितं सुमहाभुजम् ॥
बर्हिबर्हश्रेणिबद्धशिखण्डधृतकुण्डलम् । वंशीमधुरनादेन मोहयन्तं दिशो दश ॥ ८८॥
आवृतं गोपनारीभिश्चारुवृन्दावने स्थितम् । एवंसञ्चिन्त्य देवेशं गोविन्दं सर्वकामदम्
ततश्चाऽऽवाहनं कुर्याद्भक्तिभावेन वैष्णवः । आवाहिताय कृष्णाय चतुर्वर्गप्रदायिने ॥
पाद्यार्घ्याचमनीयानि तत्र दद्याद्विचक्षणः । कोमलैस्तुलसीपत्रैरम्यैर्वा कुसुमैर्बुधः ॥
पूजयेत्सर्वदेवेशं श्रीकृष्णं देवकीसुतम् । नमो मत्स्याय कूर्माय वराहाय नमोनमः ॥
नमोऽस्तु हरये तुभ्यं वामनाय नमोनमः । नमो रामाय रामाय रामाय बलिने नमः ॥
नमो बुद्धाय शुद्धाय सकृपाय नमोनमः । नमोऽस्तु कल्किने तुभ्यं नमस्ते बहुमूर्तये ॥

नारायणाय कृष्णाय गोविन्दाय च शार्ङ्गिणे ।
दामोदराय देवाय देवदेवाय ते नमः ॥ ९५ ॥

हृषीकेशाय शान्ताय व्योमपादाय वै नमः । नमोऽस्तु पद्मापतये नमस्ते पद्मचक्षुषे ॥
अनन्ताय नमस्तुभ्यं गदाहस्ताय वै नमः । तार्क्ष्यध्वजाय वै तुभ्यं नमस्ते चक्रपाणये
पद्महस्ताय वै तुभ्यमच्युताय नमोनमः । नमो दैत्यारये तुभ्यं सर्वकामप्रदायिने ॥
माधवाय सुरेशाय विष्णवे परमात्मने । किरीटिने कुण्डलिने नमोऽस्तु हरये सदा ॥
नमो भगवते तुभ्यं वाहनं गरुडाह्वयम् । ॐनमोगरुडायेति मन्त्रेणैव विचक्षणः ॥
नमः शङ्खाय चक्राय गदायै च नमोनमः । नमः पद्माय खड्गाय नन्दकाय नमोनमः ॥
इति सम्पूज्य देवेशं सदारं च सवाहनम् । सायुधं च ततो मन्त्रं जपेदष्टाक्षरं बुधः ॥

निजभक्त्या ततो जप्त्वा मन्त्रमष्टाक्षरं बुधः ।
गोविन्दाय ततो दद्यान्नानानैवेद्यमुत्तमम् ॥ १०२ ॥

धूपं दीपं च ताम्बूलं देवदेवाय विष्णवे। अन्यान्यप्युपहाराणि प्रदद्याद्वैष्णवो जनः ॥
यस्तु धूपं द्विजश्रेष्ठ! चन्दनागरुवासितम्। दद्यान्मुरारये तस्य द्रुतं सिध्यतिवाञ्छितम्
धूपं यच्छति यो विप्र! हरये घृतवासितम्। सगच्छेद्विष्णुभवनं विमुक्तः पापकोटिभिः
नारायणाय यो धूपं दद्याद्गुग्गुलुवासितम्। स याति परमं धाम दुर्लभं यत्सुरैरपि
घृतेन दीपं यो दद्यात्तिलतैलेन वा पुनः। निमेषात्सकलंतस्य पापं हरति केशवः ॥
कर्पूरवासितं यस्तु ताम्बूलं चक्रपाणये। दद्यात्तस्य द्विजश्रेष्ठ! मुक्तिर्भवति जैमिने! ॥
यस्तुयच्छति ताम्बूलंखदिरेण समन्वितम्। इहभुक्त्वाऽखिलान्भोगानन्तेयातिहरेःपदम्

पत्रीमधुरिकायुक्तं तथा जातिफलादिभिः।
ताम्बूलं हरये दत्त्वा स्वर्गमाप्नोति मानवः ॥ ११२ ॥

शङ्खे कृत्वा तु पानीयं कुर्याद्विष्णुप्रदक्षिणम्। वक्ष्यमाणेन मन्त्रेणजैमिनेवैष्णवोजनः
जनार्दन जगद्वन्द्यो शरणागतपालक !। त्वद्दासदासदासत्वं दासस्य देहि मे प्रभो!॥
मन्त्रेणाऽनेन यः कुर्यान्नारायणप्रदक्षिणम्। तस्य पुण्यफलवच्मि संक्षेपाच्छृणुजैमिन
ब्रह्महत्यादिपापानि यानि यानि महान्ति च। तानि तानि प्रणश्यन्ति प्रदक्षिण पदेपदे
यावत्पादं नरो भक्त्या गच्छेद्विष्णुप्रदक्षिणे। तावत्कल्पसहस्राणि विष्णुनासह मोदते
हरिप्रदक्षिणे यावत्पदं गच्छेच्छनैः शनैः। पदेपदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥
प्रदक्षिणाकृत्य सर्वं संसारेयत्फलंभवेत्। हरिं प्रदक्षिणीकृत्य तस्मात्कोटिगुणंफलम्

अङ्गप्रदक्षिणं कुर्याद्यस्तु नारायणाग्रतः।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः ॥ ११६ ॥

न लङ्घयेत्सोमसूत्रं धीमाञ्शम्भुप्रदक्षिणे। लङ्घितं यदि तद्विप्र!सा पूजा निष्फलाभवेत्
प्रदक्षिणाकारतया वारैकं यो हरिंव्रजेत्। जन्मजन्मनि विप्रेन्द्र! सार्वभौमो भवेद्ध्रुवम्
यस्तु वारद्वयं विप्र ! कुर्याद्विष्णुप्रदक्षिणम्। ऐन्द्रं पदमवाप्नोति त्रिदिनेनाऽत्रसंशयः॥
विष्णुप्रदक्षिणं यस्तु कुर्याद्वारद्वयं जनः। विमुक्तः सकलैः पापैः प्रविशेन्माधवीं तनुम्
भ्रामयेत्सोदकं शङ्खं केशवोपरि जैमिने !। अन्ते देवालयं गत्वा स भवेत्सुरवन्दितः ॥
प्रणमेद्दण्डवद्भूमौ सप्तधा यस्तु केशवम्। पातकंतच्छरीरस्थं भस्मीभवति तत्क्षणात्

शिरस्यञ्जलिमाधाय प्रणमेद्यो जनार्दनम् । तस्मै लक्ष्मीपतिर्विष्णुर्ददाति परमं पदम्॥
भूमौ निपात्य सर्वाङ्गं हरिं प्रणमतां नृणाम् । पुण्यप्रभावं विप्रर्षे! वदतो मे निशामय॥
यावद्भूरेणुभिर्नृणां भूषितं स्यात्कलेवरम् । तावत्कल्पसहस्राणि तिष्ठन्तिहरिसंनिधौ
ततः केशवनिर्माल्यं वैष्णवेभ्यः प्रदीयते । वैष्णवांस्तान्प्रवक्ष्यामि शृणु सत्तमजैमिने!
शुकः सूतस्तथा व्यासो नारदः कपिलोमुनिः । प्रह्लादश्चाम्बरीषश्च तथाऽक्रूरोद्धवावपि
विभीषणो हनूमांश्च तथैवान्येऽपि वैष्णवाः । निर्माल्यं वासुदेवस्यगृह्णन्तुसर्वकामदम्

इत्युक्त्वा विष्णुनिर्माल्यं निक्षिपेद्भुवि वैष्णवः ।
ततस्तु हरिनिर्माल्यं स्वयं गृह्णाति भक्तितः ॥ १३२ ॥

मस्तके दृश्यते यस्य हरिनिर्माल्यमुत्तमम् । स विज्ञेयो द्विजश्रेष्ठ! साक्षादेव हरिःस्वयम्
दुर्लभं विष्णुनैवेद्यं निर्माल्यं पापनाशनम् । गृह्णन्तित्रिदशाःसर्वे मनुष्याणांच का कथा
जैमिने तुलसीपत्रं यस्तु जिघ्रति वैष्णवः । तस्य देहान्तरस्थं हि सर्वपापं विनश्यति
तुलसीपत्रगन्धस्तुप्रविशेद्यस्यनासिकाम् । आपदस्तच्छरीरस्थाःसद्योगच्छन्तिसंक्षयम्
तुलसीदलगन्धं यस्समाघ्रायाऽभिनन्दति । तस्यालये भवेन्नित्यमानन्दो द्विजसत्तम!॥
स्तवैः स्तुत्वा जगन्नाथं कमलाप्रियमच्युतम् । कृताञ्जलिस्ततःप्राज्ञ इमं मन्त्र मुदीरयेत्
नारायण जगद्रूप! गच्छ धाम जगत्पते !। गच्छ देव! निजस्थानं प्रसन्नो भव सर्वदा॥

येयं स्वशक्त्या देवेन्द्र ! तव पूजा कृता मया ।
अच्छिद्राऽस्तु जगन्नाथ ! त्वत्प्रसादाज्जगन्मय !॥ १४० ॥

ततः पादोदकं प्राज्ञो महाविष्णोः परात्मनः । समस्तपातकध्वंसि गृह्णीयाद्भक्तिभावतः
कणमात्रं वहेद्यस्तु विष्णोःपादोदकं शुभम् । स स्नातः सर्वतीर्थेषु जैमिने!सत्यमुच्यते
स्पृशेत्पादोदकं विष्णोर्गङ्गास्नानफलं भवेत् । गाङ्गेयं सलिलं विप्र!विष्णुपादोदकंयतः
अकालमरणं नास्ति नास्ति व्याधिभयन्तथा । यःस्पृशेत्पादसलिलंकेशवस्यमहात्मनः

पापव्याधिविनाशार्थं विष्णुपादोदकौषधम् ।
पापिनोऽपि नरास्ते च पिबन्तु प्रतिवासरम् ॥ १४५ ॥

विष्णुपादोदकं विप्र! यः पिबेद्वैष्णवो जनः । पातकं तच्छरीरस्थं क्षणादेव तु नश्यति

यथौषधेन रोगास्तु हन्यन्ते देहिनो भृशम् । तथैव पातकं सर्वं विष्णुपादोदकेन च ॥ विष्णुपादोदकं शुद्धं तुलसीपत्रसंयुतम् । यो वहेच्छिरसा विप्र! तस्य पुण्यं वदाम्यहम् ब्रह्महत्यादिभिः पापैर्विमुक्तो विष्णुरूपधृत् । अन्ते विष्णुपुरं गत्वा विष्णुनासहमोदते मेरुप्रमाणहेमानि दत्त्वा भवति यत्फलम् । विष्णुपादोदकं स्पृष्ट्वा तद्भवेदधिकं फलम् अश्वकोटिप्रदानेन तत्फलं प्राप्यते जनैः । सप्तद्वीपां महीं दत्त्वा द्विजेभ्योयत्फलंलभेत् तत्फलं लभते मर्त्यो विष्णुपादोदकं स्पृशन् । अश्वमेधसहस्राणिकृत्वाभवतियत्फलम् विष्णुपादोदकं स्पृष्ट्वा तद्भवेदधिकं फलम् । दीर्घिकाशतदानेन यत्पुण्यं परिकीर्तितम् तस्मादप्यधिकं पुण्यं लभेत्पादोदकं स्पृशन् । बहुनाऽत्रकिमुक्तेन संक्षेपादुच्यते मया

विष्णुपादोदकस्पर्शान्मुक्तो भवति मानवः ।
भूयोभूयोऽपि विप्रेन्द्र ! सुदृढं कथ्यते मया ॥ १५५ ॥

पुनर्न लभते जन्म स्पृशन्पादोदकं हरेः । विष्णुनैवेद्यशेषं यः सर्वपापविनाशनम् ॥ अश्नाति भक्तिभावेन स गच्छेत्परमं पदम् । दुर्लभं विष्णुनैवेद्यं भुञ्जतो द्विजसत्तम!॥ देहं त्यजन्ति पापानि ब्रह्महत्यामुखान्यपि । भुञ्जतो हरिनैवेद्यं दासीव वशगा भवेत् ॥ मुक्तिभूमिः सुरश्रेष्ठ ! दैवतैरपि दुर्लभा । सम्पूज्य कमलाकान्तं योऽश्नान्नैवेद्यमत्यजन् अचिरेणैव तं विष्णुर्नयति स्वां तनुम्प्रति । नैवेद्यस्य महाविष्णोर्गुणंकिंकथयाम्यहम्

यद्भुञ्जतः केशवोऽपि स्यादधीनो द्विज! प्रभो ! ।
यजेदनेन विधिना प्रतिमास्थं जनार्दनम् ॥ १६१ ॥

विधिहीनामपि श्रेष्ठां पूजां श्रीकमलापतेः । यः कुर्याद्भक्तिभावेनसोऽपिस्यात्केशवप्रियः विधिज्ञो विधिना विष्णुमभ्यर्च्य लभतेफलम् । यथोक्तविधिनाविप्रनैवेद्यैर्बहुभिःप्रभो! पूजितोऽपि न तुष्टः स्याद्यदि भक्तिर्न तिष्ठति । यस्य वै यावती भक्तिर्देवदेवे जनार्दने तावदेव फलावाप्तिस्तस्य नास्त्यत्र संशयः । अभक्त्या या हरेःपूजा क्रियते भुवि मानवैः सा पूजा ब्राह्मणश्रेष्ठ! पूजाकाले भवेत्किल । ज्ञानमूलं हरेर्भक्तिर्भक्तिमूलं जगत्पतेः ॥ पूजामोक्षद्रुमोत्पत्तौ मूलमाराधनं हरेः । अल्पमात्रमपि प्राज्ञ! श्रद्धया कुरुते हि यत् ॥ तदक्षयं भवेत्सर्वं श्रद्धायुक्ताखिलाक्रिया । भक्त्या यः पूजयेद्विष्णुमपि वा वारिमात्रतः

संस्थानं लभते विष्णोर्यतो भक्तवशो हरिः ॥ १६९ ॥
असारमेतद्भुवनं समस्तं सारं हरेः पूजनमेव विप्र ! ।
तस्मान्मनुष्यो निजमङ्गलैषी भक्त्या यजेत्कृष्णमनन्तमूर्तिम् ॥ १७० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे हरिपूजाविधिर्नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### श्रीमद्भगवतोविष्णोरर्चनप्रकारपुरःसरमश्वत्थपूजनेविष्णुपूजनाभेदत्व-प्रतिपादनं तत्र धनञ्जयब्राह्मणाख्यानम्

व्यास उवाच ।

फाल्गुने ब्राह्मणश्रेष्ठ! श्रीकृष्णं सुरवन्दितम् । पूजयेद्भक्तिभावेन प्रत्यहं वैष्णवो जनः॥
फाल्गुने स्नापयेद्यस्तु सर्पिषादेवकीसुतम् । फलं तस्य प्रवक्ष्यामि यतःसम्यङ्निशामय
सर्वयज्ञफलं प्राप्य सर्वदानफलं तथा । अन्ते याति हरेः स्थानं सर्वपापविवर्जितः ॥
युगकोटिसहस्राणि भुक्त्वा भोगं हरेर्गृहे । तत्रैव मोक्षमाप्नोति सम्प्राप्य ज्ञानमुत्तमम्

यस्तु यच्छति कृष्णाय शिशिरे गोपमूर्तये ।
तिलानां मोदकं दिव्यं स गच्छेद्धरिमन्दिरम् ॥ ५ ॥

यो दुग्धलड्डुकान्दद्यात्केशवाय महात्मने । स पिबेदमृतं स्वर्गे मन्वन्तरशतावधि ॥
हरये ललितं खण्डं यस्तु यच्छति जैमिने !। तस्य विष्णुःप्रसन्नात्माछिनत्तिभवबन्धनम्
विचित्रं फलितं दिव्यं दद्याद्भगवते द्विज !। अन्ते शक्रपुरं गत्वा स भवेत्सुरवन्दितः ॥
निर्मलां शर्करां यच्छेद्यस्तु कृष्णायभक्तिमान् । स किं न लभते विप्र!वासुदेवप्रसादतः
सुपक्वं फाल्गुने मासि मधुरं बदरीफलम् । यस्तु यच्छति कृष्णाय फलंतस्यनिशामय

इह भुङ्क्ते सुखं सर्वं पुत्रपौत्रसमन्वितः। अन्ते हरेर्गृहं याति रथमारुह्य शोभनम् ॥
न दद्याद्गुडसंयुक्तं हरये बदरीफलम्। अज्ञानाद्ब्राह्मणश्रेष्ठ! दद्याच्चेन्नारकी भवेत् ॥
फाल्गुने मासि यो दद्याद्धरये दाडिमीफलम्। सुपक्वं तत्फलं विप्र! वदतो मे निशामय
तत्र यावन्ति बीजानि तिष्ठन्ति दाडिमीफले। तावन्मन्वन्तरं विष्णोर्गृहे तिष्ठति भाग्यवान्
फाल्गुने मासि यो दद्याद्धरये गुडपिष्टकम्। स विज्ञेयो द्विजश्रेष्ठ! वाजिमेधसहस्रकृत्
चैत्रे मासि द्विजश्रेष्ठ! मधुना मधुसूदनम्। स्नापयेल्लभते मर्त्यस्तद्विष्णोः परमं पदम् ॥
मधुना स्नापयेद्यस्तु नारायणमनामयम्। न चर्चा क्रियते तस्य कदाचिद्रविसूनुना ॥
चैत्रे किंशुकपुष्पेण योऽर्चयेत्कमलापतिम्। तन्नामचित्रगुप्तेन पञ्जिकायां न लिख्यते
चैत्रके जगतामीशं कृष्णं तिलकपुष्पकैः। अर्चितो नास्ति वै जन्म पुनरस्मिन्महीतले
कृष्णवञ्जुलपुष्पेण सर्वदेवशिरोमणिम्। पूजयन्मनुजो विप्र! लभते नापदं क्वचित् ॥

वासन्तीभिः सुगन्धीभिर्वसन्ते यस्तु पूजयेत्।
भगवन्तं प्रसन्नात्मा स देवैरपि पूज्यते ॥२१ ॥

तथा किसलयैर्दिव्यैरखण्डैर्योऽर्चयेद्धरिम्। तं वन्दते समुत्थाय स्वयं पीठासनोऽपि च
धात्रीपत्रैर्नवैर्यस्तु कोमलैर्हरिमर्चयेत्। अचिरेणैव लभते सकलं वाञ्छितं जनः ॥२३॥
शाण्डिल्याखण्डपत्रैश्च धत्तूरैश्चाऽर्कपुष्पकैः। योऽर्चयेद्विष्णुमीशं च स संसाराब्धिपारगः
यो दद्याद्विष्णवे विप्र! कदलीफलमुत्तमम्। शक्राद्यास्त्रिदशाः सर्वे वन्दन्ते तमहर्निशम्
यो दद्याच्चैत्रके मासि भक्त्या गोपालरूपिणे। गोधूमपिष्टकं विप्र! सर्वपापैः प्रमुच्यते
आयाते माधवे मासि पवित्रे माधवप्रिये!। आमिषं मैथुनं तैलं विष्णुभक्तः परित्यजेत्
प्रातः समाचरेत्स्नानं माधवे मासि वैष्णवः। परित्यजेत्परान्नं च न कुर्याच्च द्विभोजनम्
प्रभाते पूजयेद्विष्णुं पूर्वोक्तविधिना द्विज!। वैशाखे स्नापयेद्विष्णुं पुष्पवासितवारिणा
स्नापयेच्छीततोयेषु सन्ध्यापर्यन्तमच्युतम्। त्रिसन्ध्यं पूजयेद्भक्त्या नैवेद्यैर्विविधैः प्रभुम्
वैशाखे दमनस्रग्भिर्लक्ष्मीपतिरलङ्कृतः। न किं ददाति विप्रर्षे! प्रसन्नः परमेश्वरः॥३१॥

वैशाखे मासि यो दद्याद्यवान्नं चक्रपाणये।
तस्य पुण्यानि सङ्ख्यातुं कः समर्थोऽस्ति पण्डितः ॥ ३२ ॥

यत्किञ्चिन्माधवे मासि माधवप्रीतिहेतवे । दीयते माधवायैव तत्सर्वमक्षयं भवेत् ॥
यदन्यत्सुकृतं कर्म क्रियते मासि माधवे । माधवप्रीतये विप्र! क्षयस्तस्य न विद्यते ॥
वैशाखे मासि यः कुर्यात्प्रपां माधवतुष्टये । दिनेदिनेऽश्वमेधस्य फलमाप्नोति मानवः
वैशाखो दुर्लभो मासः सर्वकर्मफलप्रदः । पूजितव्यो हरिस्तत्र हित्वा कर्मशतान्यपि॥
एकाहमपि यः पूजां वैशाखे कुरुते हरेः । षड्वर्षं हरिं पूजित्वा यत्फलं लभते स तत्

वैशाखे मासि यो नित्यं विष्णुमश्वत्थरूपिणम् ।
चतुर्वर्गफलप्राप्तिहेतवे वैष्णवो जनः ॥ ३८ ॥

गण्डूषमात्रतोयेन कुर्याद्योऽश्वत्थसेवनम् । सोऽपियातिपरंस्थानंविमुक्तःकोटिपातकैः
अश्वत्थमूलं विप्रर्षे!यो बध्नातिशिलादिभिः । अश्वत्थरूपीभगवान्किंकितस्मैनयच्छति
अश्वत्थद्रुममालोक्य प्रणामं कुरुते यदि । सोऽपि याति परं स्थानमायुर्वृद्धिर्नसंशयः॥
यदश्वत्थतले विप्र! धर्मकर्म करोति यः । न्यूनातिरिक्तता नस्यात्तस्मिन्कर्मणिजैमिने!
तत्रतीर्थानिसर्वाणित्रिस्रोतःप्रभृतीनिच । यत्राऽश्वत्थतरुस्तिष्ठेदेकोऽपिशाखिनाम्वरः
अश्वत्थं पूजयेद्यस्तु स एव विष्णुपूजकः । अश्वत्थमूर्तिर्भगवान्स्वयमेव यतो द्विज !॥
अवज्ञानाद्द्विजश्रेष्ठ! योऽश्वत्थंहन्तिमूढधीः । संसारेनास्तितत्कर्मयत्कृत्वासचशुध्यति
अश्वत्थोवृक्षराजोऽयंहरिमूर्त्तिः प्रकीर्त्तितः । तस्मादश्वत्थहन्तॄणां त्राताकोऽपिनविद्यते
अश्वत्थं पश्यतो विप्र! स्पृशतः परतस्तथा । देहस्थं पातकं सर्वं हरेत्प्रणमतो हरिः ॥

विलोक्याऽश्वत्थहन्तारं यः शक्तो न निवारयेत् ।
तन्नेत्रयुग्मं बडिशैर्यमेनोत्पाट्यते स्वयम् ॥ ४८ ॥

अश्वत्थच्छेदनं मूढो माकुर्विति वदेन्न यः । तस्य जिह्वां छुरिकया स्वयं कृन्तति प्रेतराट्
अश्वत्थशाखामेकां यः स्वल्पामपिनिहन्तिवै । सकोटिब्रह्महत्यानांफलमाप्नोति मानवः
यत्पापं ब्रह्महत्यायां गुरुस्त्रीगमनेन च । सुरापाने तथा स्तेये न्यासापहरणेऽपि च ॥
यत्पापं भ्रूणहत्यायां गोहत्यायां द्विजोत्तम !। स्त्रीहत्यायां च यत्पापं परस्त्रीगमनेतथा
शरणागतहत्यायां हत्यायां सुहृदस्तथा । विश्वासवाक्यकथने पतिहिंसाविधौ च यत्
यत्पापं परनिन्दायां हरिवासरभोजने । अश्वत्थच्छेदनाद्घोरं तत्पापं प्राप्यते जनैः ॥

विष्णुमूर्त्तेर्जनो मोहादश्वत्थस्य निहन्ति यः ।
तत्तुल्यः पातकी कोऽपि न श्रुतः क्षितिमण्डले ॥ ५५ ॥

वदाम्यश्वत्थमाहात्म्यं सर्वपापविनाशनम् । सेतिहासं द्विजश्रेष्ठ! शृणु वत्स समाहितः
पूर्वं धनञ्जयो नाम ब्राह्मणो हरिभक्तिकृत् । आसीत्त्रेतायुगे विप्र ! सर्वप्राणिहिते रतः
ज्ञातिपूजारतो नित्यं दीपदाने रतः सदा । सत्यवादी जितक्रोधो हिंसादम्भविवर्जितः
मुमुक्षुः स द्विजश्रेष्ठ! सर्वदा परमेश्वरम् । पूजयामास परया भक्त्या नारायणं प्रभुम्
तस्य भक्तिं ततो ज्ञात्वा महतीं सुदृढां प्रभुः । जहार सकलं वित्तं हेतुमात्रेण केनचित्
तथापि स द्विजश्रेष्ठः केशवस्य महात्मनः । पूजामनुदिनं चक्रे भक्त्या परमया सुधीः॥

दुःखेनोपार्जितं वित्तं विनष्टं सकलं द्विज ! ।
दृष्ट्वाऽपि तस्य विप्रस्य न दुःखेनाऽचलं मनः ॥ ६२ ॥

भुजेस्तुमर्जनं चक्रे स विप्रः परमार्थवित् । महाविष्णुसपर्यायांदृढं बद्ध्वा मनोनिजम्
भूयोऽपि तस्य विप्रस्य भक्तिं ज्ञात्वा जनार्दनः । चकारबन्धुविच्छेदंसुदृढः शमदस्ततः
बान्धवास्तस्य विप्रस्य विष्णुमायाविमोहिताः । हिंसामारेभिरेकर्तुं सर्वदैवद्विजोत्तम!
ततो विप्रो हि निर्वृत्तो निर्बन्धैःपुरुषोत्तमम् । पूजयामास सततं प्रीतः प्रचुरभक्तितः॥
परिकल्प्य च भूदेवो धनं केशवपूजने । माधवं च जगन्नाथं स बन्धुशुचमत्यजत् ॥
भूय एव महाविष्णुः कौतुकी तस्य जैमिने !। जहारसानुकम्पोऽपि पुत्रानपि दिनेदिने
तथापि स द्विजश्रेष्ठः केशवंक्लेशनाशनम् । पूर्वद्विगुणया भक्त्या नित्यंविष्णुमपूजयत्

तस्य पत्नी ततो विप्र ! दुःखशोकाऽतिदुःखिता ।
पितृगेहं गता विष्णोर्मायया परिमोहिता ॥ ७० ॥

अथैकाकी स भूदेवो विष्णुभक्तिपरायणः । विपदं चिन्तयामास न कदापि तु चेतसा
एकदा स द्विजश्रेष्ठ!विष्णुभक्तिमताम्वरः । स्कन्धेपरशुमादाय काष्ठार्थं विपिनं ययौ ॥
वनात्काष्ठं समादाय नित्यमेव च स द्विजः । हिमागमे वस्त्रहीनः कुरुते शीतवारणम्
कदाचिद्विपिनंगन्तुंनाऽशक्नोद्द्विजसमत्तमः । जघानप्राङ्गणस्थस्यशाखामश्वत्थशाखिनः
अत्रान्तरे महाविष्णुस्तस्मादश्वत्थपादपात् । निश्चक्राम सुरश्रेष्ठो व्यथाव्यथितमानसः

ददर्श विष्णुं पुरतः सविप्रश्चतुर्भुजं पद्मदलायताक्षम् ।
पीताम्बरं कुण्डलिनंसुकेशं दधानमब्जादिनिजायुधानि ॥ ७६ ॥
परिस्रवद्भिस्तररक्तधारासन्ध्यासुशोणीकृतनव्यमेघम् ।
विभावसुं चैव सुखं परेशं संदृश्य तं देवगणैरदृश्यम् ।
हर्षाश्रुधारारुचिराक्षियुग्मस्तुष्टाव विप्रोमृदुलैर्वचोभिः ॥ ७७ ॥

ब्राह्मण उवाच ।

हरे मुरारे जगदेकनाथ गोविन्द दामोदरमाधवेति ।
लक्ष्मीपते ! केशव ! केशिशत्रो! नारायणानन्त ! विभो ! प्रसीद ॥ ७८ ॥
तवाऽवतारं किमहं ब्रवीमि त्वया विना नास्ति भुवीह कोऽपि ।
किम्वा गुणव्याप्तसमस्तलोकं किम्वा दयां मित्रपरैकतुल्याम् ॥ ७६ ॥
दत्त्वा स्वीयां कस्यचिदीशविष्णो ! भक्ति हरस्य च्युतदेहसंस्थाम् ।
श्रियं समादाय मुदं प्रदास्ये भक्तिः प्रदत्ता महतःसुधन्या ॥८०॥
मन्ये महात्मानमनन्तमूर्ते ! पापात्मनां श्रेष्ठमिवाऽनिशं यत् ।
तदर्थमेवाङ्घ्रियुगं त्वदीयं न पातकी पश्यति दैवचिन्त्यम् ॥ ८१ ॥
यद्यप्यहं दुःखवतां वरिष्ठो मन्ये तथापीन्द्रमिवाऽद्य विष्णो ! ।
आत्मानमात्मा जगतां भवन्तं साक्षात्समीक्षे तईक्षणाभ्याम् ॥ ८२ ॥
पूजां तवाऽल्पामपि वेद्मि नाऽहं द्रव्यं कदापि न ददामि तुभ्यम् ।
तथापि चाऽग्रे मम मूर्तिमांस्त्वं दृष्टोऽसि मे केशवएकपूज्यः ॥ ८३ ॥
दत्तस्त्वयाऽयंममभक्तिवृक्षोधर्मार्थकामत्रयएवसोऽयम् ।
त्वद्दर्शनाम्भोमयवृष्टिसिक्तः प्रभोऽद्य कैवल्यफलं दधार ॥ ८४ ॥
मूर्धा मदीयोऽखिललोकमूर्ध्ना श्रेष्ठो भवेत्केशव विश्वमूर्ते ! ।
त्वत्पादपाथोजयुगे मनो मे संयाति वै सम्प्रति देवदेव !॥८५ ॥

व्यास उवाच ।

इत्थंस्तुत्वा जगन्नाथं नारायणमनामयम् । कृताञ्जलिःपुनः प्राह भक्त्या तमिति स द्विजः

ब्राह्मण उवाच ।

देवदेव जगन्नाथ ! लोकानुग्रहकारक !। कशाप्रहरणैरेतद्गात्रं ते रुधिरोक्षितम् ॥ ८७ ॥
सर्वेषामेवदैत्यानांयुधि वंशास्त्वयाहताः । त्वांहन्तुं कःक्षमःपृथ्व्यां प्रभोऽद्भुतमिदंमहत्

भगवानुवाच ।

वत्स ! सत्यमिदं प्रोक्तं त्वया नास्त्यत्र संशयः ।
दानवो राक्षसो वाऽपि मां हन्तुं कोऽपि न क्षमः ॥८९ ॥

अश्वत्थमूर्तिरेवाऽहं कुठारेण हतस्त्वया । अतोऽजनि शरीरे मे रक्तपातोऽधुना द्विज!॥

व्यास उवाच ।

तस्य वाक्यमिदं श्रुत्वा सविप्रोभयविह्वलः । निनिन्द स्वयमात्मानमात्मनाबहुधाद्विजः
धिगस्तु तस्वतोऽभाग्यंसर्वपातकिनाम्वरम् । त्रैलोक्याधिपतेर्दाताहृदयेमहतीं व्यथाम्
सर्वपापहरो विष्णुः स मया व्यथितः कृतः । एतत्पापं मया पारं कर्तुं नैकेन शक्यते

यस्मिंस्तुष्टे पापिनोऽपि भवन्ति सुरवन्दिताः ।
मद्दत्तया सव्यथया व्यथितो हा ! हतोऽस्म्यहम् ॥ ९४ ॥

प्रसादयन्ति यं देवा ब्रह्माद्या अतिभक्तितः । अहो मया पापवता तस्य दत्ता हृदिव्यथा
किंतपोभिर्जपैः किंवा किं गृहैर्जीवनैश्चमे । धर्मार्थकाममोक्षाणां दातैकोऽयं व्यथातुरः
इत्युक्त्वा स द्विजश्रेष्ठ! तमेव परशुं निजे । दातुं कण्ठे मनश्चक्रे विष्णुप्रीणनहेतवे॥९७
तस्यभक्तिं दृढां ज्ञात्वा दयालुः कमलापतिः । तद्धस्तात्तत्परं निन्ये जवेन भक्तवत्सलः

श्रीभगवानुवाच ।

कथंत्वमेव कुरुषेवत्स!कर्माऽतिदारुणम् । आत्महत्याकृतांपुंसांतुष्टोऽस्मिन कदाप्यहम्
तव भक्त्याऽतितुष्टोऽस्मि भीतिं मा कुरु सत्तम !। वरं वरय विप्रेन्द्र!यत्ते मनसि वर्तते

ब्राह्मण उवाच ।

मया व्यथा प्रदत्तेयं महती परमेश्वर !। मा तिष्ठतु शरीरे ते याचे वरमिमं प्रभो!॥१०१

श्रीभगवानुवाच ।

अज्ञानोद्भववता वत्स! कर्मेदं विहितं द्विज ! । अतोऽपराधो नेतव्यो महानपि न ते यथा

नित्यं तवाऽनुपाल्योऽस्मिभक्तश्रेष्ठोयतोभवान् । भवदीयानहंमन्ये दोषान्वत्सदिनेदिने
तथापिमयि भक्तिस्तेववृधेमहतीसदा । तस्माद्वत्स!तवाऽऽनृण्यंगन्तुमिच्छामिसम्प्रति
विहाय सकलां भीतिं वरं वृणु ममाऽग्रतः ॥ १०५ ॥

ब्राह्मण उवाच ।

त्वयि सर्वसुरश्रेष्ठ! मम जन्मनि जन्मनि । तिष्ठतां सुदृढाभक्तिर्हरे!किमपरैर्वरैः ॥१०६

व्यास उवाच ।

श्रुत्वावाक्यमिदं तस्य केशवंप्रणयोदितम् । निजकण्ठस्थितां मालांप्रीतस्तस्मै ददौततः
समालिङ्ग्य ततो विप्रं पिता पुत्रमिव प्रभुः । चतुर्भिर्बाहुभिर्दीर्घैरुवाच मृदुलं वचः॥

श्रीभगवानुवाच ।

मद्भक्तोऽसि यदा विप्र!तथा ते मत्प्रसादतः । अचिरेणैव सकलं भद्रं विप्र!भविष्यति
अश्वत्थरूपंमांनित्यं क्रियायोगेनसत्तम !। समाराधयसर्वन्ते साधयिष्यामिवाञ्छितम्

इत्युक्त्वा तं द्विजश्रेष्ठं भूयोऽप्यालिङ्ग्य केशवः ।
अभवत्सहसाऽदृश्यस्तत्रैव करुणालयः ॥ १११ ॥
विष्णोः कण्ठस्रजं प्राप्य स विप्रो वैष्णवोत्तमः ।
कृतकृत्यमिवाऽऽत्मानं मत्वा तस्थौ निजे गृहे ॥ ११२ ॥

ततः कुबेरो विप्रर्षे! तस्य विप्रस्य सद्मनि । स्वयं ववर्ष वित्तानि बहूनि केशवाज्ञया ॥
प्रासादो रचितस्तस्य शिल्पिना विश्वकर्मणा । नारायणाज्ञया तत्र वैजयन्तइवोत्तमः
दासदासीसमायुक्तो नानावस्तुविभूषितः । गजाश्वकोटिसङ्कीर्णं विबभौतस्यमन्दिरम्
बभूवुः सङ्गतास्तस्य नप्ता अपि च बान्धवाः । कृतावज्ञा च तत्पत्नी स्वयं तद्गृहमाययौ
मृतपुत्राऽपि तत्पत्नी केशवस्याऽनुकम्पया । स्थिरप्रजाऽभवद्विप्र! स्वामिभक्तिपरायणा

चिरं भुक्त्वाऽखिलान्भोगान्पुत्रपौत्रसमन्वितः ।
आयुषोऽन्ते ययौ मोक्षं सदारो विप्रसत्तमः ॥ ११८ ॥

व्यास उवाच ।

साक्षादेव स्वयं विष्णुरश्वत्थो वृक्षसत्तमः । तद्भक्तिं कुर्वतां पुंसां विद्यते नाऽशुभं क्वचित्

अश्वत्थं सेवते यस्तु विष्णुं ध्यात्वा नरोत्तमः । तस्य प्रसन्नो भगवान्ददाति परमंपदम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डेऽश्वत्थमाहात्म्यं नाम द्वादशोऽध्यायः ॥ १२ ॥

# त्रयोदशोऽध्यायः

## विविधमासेषुनानापुष्पादिद्रव्यैर्हरिपूजाविधानपुरःसरंप्रजानाम्नोब्राह्मणस्यपूर्वजन्मशबरकुलोत्पत्तिवृत्तपूर्वकं हरिभक्तिप्रसादेनमुक्तिलाभो हरिपूजाफलवर्णनश्च

व्यास उवाच

ज्येष्ठे मासि द्विजश्रेष्ठ! भगवन्तं जनार्दनम् । पूजयेद्भक्तिभावेन जलैः संस्नाप्यशीतलैः॥
उद्वर्तनं च दातव्यं सुगन्ध्यामलकं तथा । तैलं सुगन्धं हरये ग्रीष्मकाले दिने दिने ॥
सुवासिते शीतले च मन्दिरेऽतिमनोरमे । प्रत्यहं कमलाकान्तं स्थापयेज्जनमण्डपे ॥३
न रौद्रदेशे विप्रेन्द्र! सधूमे रन्धनालये । न सूतिका गृहे चैव स्थापयेत्कमलापतिम् ॥

चामरैर्वीजयेच्छुवैतैःसुदीर्घैः कमलापतिम् ।
ज्येष्ठे मासि द्विजश्रेष्ठ ! सुप्रीतः किं न यच्छति ॥ ५ ॥

मयूरपुच्छव्यजनैर्निदाघे वीजितो हरिः । ददात्यभिमतं सर्वमचिरेणैव सत्तम ! ॥६॥
तालवृन्तकवातेन पवित्राम्बरवायुना । यैर्ग्रीष्मे वीज्यते विष्णुस्ते सर्वे स्वर्गगामिनः॥
यो गात्रलेपनं कुर्यात्सुगन्धीयैश्च कर्दमैः । ग्रीष्मे हरिं चन्दनैश्च स विशेन्माधवींतनुम्
उष्मागमे द्विजश्रेष्ठ! स मुक्तो नाऽत्रसंशयः । प्रफुल्लकुसुमोद्याने तुलसीकानने तथा॥६

सन्ध्यायां स्थापयेद्विष्णुं देशे धीरसमीरणे ।
स्रग्भिः पाटलपुष्पाणां येन विष्णुरलङ्कृतः ॥ १० ॥

ज्येष्ठेमासि स विज्ञेयो ह्यश्वमेधसहस्रकृत् । यस्तु मुक्तावलिं दद्याद्ग्रीष्मेवै श्रीपतेर्जनः
भूपालत्वंहरिस्तस्मै यच्छेज्जन्मनिजन्मनि । यस्तुमण्डयति ग्रीष्मे श्रीकृष्णंमणिमालया

तस्य पुण्यफलं विप्र! वदतो मे निशामय। यावद्ब्रह्मा सृजत्येतज्जैमिने! सकलं जगत्
तिष्ठेद्विष्णुपुरे तावन्मणिमालाविभूषितः। सुवर्णाभरणैर्यस्तु रजताभरणैस्तथा ॥१४

कृष्णं मण्डयति ग्रीष्मे सोऽपि तत्फलमाप्नुयात्।
विचित्रं यस्तु पर्यङ्कं सगण्डूकं प्रयच्छति ॥ १५ ॥

हरये देवदेवाय न स दुःखी कदाचन। ग्रीष्मकाले न देयानि गुरूणि वसनानि च ॥
हरये ब्राह्मणश्रेष्ठ! देयं तन्वंशुकं शुचि। यस्त्वच्युफलैर्दिव्यैः सुगन्धैः पूजयेद्धरिम् ॥
अन्ते शक्रपुरं गत्वा स पिबेदमृतं मुदा। प्रियालानां फलैर्दिव्यैर्योऽर्चयेत्कमलापतिम्
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः। निदाघे हरये यस्तु यवागूमतिशीतलाम्
नानाव्यञ्जनसंयुक्तामर्पयेद्वैष्णवो जनः। आषाढे मासि विप्रेन्द्र! देवदेवं जगद्गुरुम् ॥
दधिभिः स्नापयित्वा च पूजयेद्भक्तितो बुधः। मातुः पयोधरपयः पुनस्तेन न पीयते ॥
घनागमे घनश्यामं कदम्बकुसुमैर्हरिम्। आराधयति विप्रर्षे! परां गतिमवाप्नुयात् ॥
कदम्बपुष्पमालाभिर्मण्डपं मण्डयेन्नरः। यस्तस्य ब्राह्मणश्रेष्ठ! वाजिमेधफलं भवेत् ॥
सुगन्धैः केतकीपुष्पैः पूजितः कमलापतिः। सर्वदुःखं हरत्येव मानवानां द्विजोत्तम!॥
पनसानां फलैर्दिव्यैः सुपक्वैर्घृतमिश्रितैः। पूजितो भगवान्विष्णुर्दद्यादैश्वर्यमुत्तमम् ॥
आषाढेमासि दध्यन्नं हरये प्रतिवासरम्। श्रद्धया वैष्णवो दद्यान्मुक्तिमिच्छन्द्विजोत्तम!
कृष्णाय नवनीतं यो ददाति वैष्णवो जनः। विशुद्धः सकलैः पापैर्ब्रह्मलोकं स गच्छति
शेफालिकाप्रसूनैश्च यूथिकाकुसुमैस्तथा। योऽर्चयेत्परमात्मानं स गच्छेत्परमं पदम्

प्रफुल्लमालतीपुष्पैः सुगन्धैर्योऽर्चयेद्धरिम्।
तत्पुण्येन समं पुण्यं न किञ्चिद्भविता द्विज! ॥ २६ ॥

कदम्बपुष्पैर्बकुलैर्जगद्बन्धुं जनार्दनम्। अर्चयन्सकलं कामं प्राप्नोति भुवि मानवः ॥
महामहाप्रसूनैश्च तथा कुरुबकैर्हरिम्। प्रफुल्लैः पूजयेद्यस्तु तस्य तुष्टः सदा हरिः ॥
सैरीयकैश्च यो विष्णुं प्रसूपुष्पैश्च योऽर्चयेत्। करवीरप्रसूनैश्च स याति हरिसन्निधिम्
श्रावणे चैव यो दद्याल्लाजान्घृतसमन्वितान्। हरये तस्य विप्रर्षे! गृहे श्रीः सर्वतोमुखी
भाद्रे मासि द्विजश्रेष्ठ! नारायणमनामयम्। श्रद्धया पूजयेत्प्राज्ञश्चतुर्वर्गप्रदायकम् ॥३४

निर्मिते नूतनागारे सर्वोपद्रववर्जिते । स्थापयेत्पुण्डरीकाक्षं भगवन्तं जनार्दनम् ॥३५
दंशैश्चमशकैश्चाऽपि प्रकीर्णे मक्षिकादिभिः । हरिं पुरातनागारे स्थापयेन्नहि मानवः ॥
सकर्दमे पतद्द्वारे गलद्भित्तौ गृहे तथा । हरिं न स्थापयेत्प्राज्ञो वर्षासु परमेश्वरम् ॥
विष्ण्वालयेद्विजश्रेष्ठप्रकुर्याद्यस्तुमानवः । चन्द्रातपंविचित्रंचचन्द्रलोकंसगच्छति ॥३८
रात्रौनानाविधैर्धूपैर्मन्दिरेजगतीपतेः । दंशांश्च मशकांश्चैव पूजाकाले निवारयेत् ॥३९

मसारिकाभिः प्रावृत्य मञ्चशायिनमच्युतम् ।
प्रावृषि स्थापयेद्विष्णुं निशायां दिव्यमन्दिरे ॥ ४० ॥

कह्लारपत्रैर्देवेशं सुगन्धैर्नूतनैस्तथा । मुमुक्षुः पूजयेन्मर्त्यो भाद्रे मासि दिने दिने॥४१॥
न भाद्रे केतकीपुष्पैः पूजितव्यो जनार्दनः । यतो भाद्रपदे मासि केतकीस्यात्सुरासमा
पक्वैस्तालफलैर्दिव्यैर्योऽर्चयेद्यदुनन्दनम् । गर्भवासमहादुःखं स भूयो लभते न च॥४३
संयुक्तं घृतदुग्धाभ्यां पक्वतालं मुरारये । यो दद्याच्छ्रद्धया मर्त्यःस गच्छेन्मन्दिरं हरेः
भाद्रे मासि द्विजश्रेष्ठ ! हरये तालपिष्टकम् । सघृतं वैष्णवो दद्यात्कैवल्यप्राप्तिहेतवे ॥
मासि भाद्रपदे विप्र!न कुर्याच्छाकभक्षणम् । न रात्रौ भोजनं कुर्यान्मुमुक्षुर्वैष्णवोजनः
आश्विनेमासि विप्रेन्द्र!केशवं क्लेशनाशनम् । पूजयेन्मधुरैस्तोयैः पवित्रैश्चसुगन्धिभिः
यत्तोयं दीयते विप्र!पूर्वाह्णे हरये जनैः । पीयूषमिव तत्तोयं गृह्णाति कमलापतिः ॥४८
मध्याह्ने दीयते यच्च तोयं वै चक्रपाणये । तत्तोयमिव वेत्तव्यं तद्गृह्णाति द्विजोत्तम!॥
अपराह्णे च यत्तोयं गोविन्दाय प्रदीयते । तत्तोयं रक्ततुल्यं स्यान्न गृह्णाति ततो हरिः
अतएव द्विजश्रेष्ठ!पूर्वाह्णे हरिमर्चयेत् । समस्तं लभते कामं केशवस्याऽनुकम्पया ॥५१
एकवस्त्रेण विप्रेन्द्र!न कुर्यात्पूजनं हरेः । कुर्याद्वाऽपि तथा पूजां न गृह्णाति च केशवः

अधौतेन च वस्त्रेण यः पूजां कुरुते हरेः ।
विफला सा च पूजा स्यान्न च विष्णुः प्रसीदति ॥ ५३ ॥
यैस्त्वबद्धशिखैः पूजा क्रियते चक्रिणो जनैः ।
पूजाफलं नाऽऽप्नुवन्ति बलिग्राह्या च सा भवेत् ॥ ५४ ॥

असंस्कृतगृहे पूजा क्रियते जगतीपतेः । सा पूजा ब्राह्मणश्रेष्ठ! बलिग्राह्या भवेत्खलु ॥

स्नानं देवार्चनं चैव दानं च पितृपूजनम्। तिलकेन विना विप्र! कुरुते न विचक्षणः॥
तिलकान्यगृहीत्वा यत्पुण्यकर्म विधीयते। भर्म्माभवति तत्सर्वं कर्ता च नारकीभवेत्
शङ्खचक्रगदापद्मैरङ्कितं यस्य दृश्यते। शरीरं ब्राह्मणश्रेष्ठ! विज्ञेयः सोऽच्युतः स्वयम्॥
यो लिखेद्दक्षिणेबाहौ शङ्खपद्मे च वैष्णवः। सव्ये चक्रं गदां चैव सविष्णुर्नाऽत्रसंशयः

पङ्कजं दक्षिणे बाहौ शङ्खस्योपरि यो लिखेत्।
पातकं सकलं तस्य क्षणादेव तु नश्यति ॥ ६० ॥

चक्रोपरि गदां यस्तु लिखेत्सव्ये भुजे द्विज!। तंवन्दन्तेद्विजश्रेष्ठ! शक्राद्याअपिनिर्जराः
मुरारिपादयुग्मं च स्वललाटे लिखेद्बुधः। पापात्माऽपि च तंदृष्ट्वामुक्तोभवति पातकात्
अष्टाक्षरं महामन्त्रं मत्स्यं कूर्मं च यो हृदि। लिखेत्स वैष्णवश्रेष्ठः पुनाति भुवनत्रयम्
कृष्णायुधाङ्कितं यस्य शरीरं स्याद्दिने दिने। तस्य कृष्णोजगन्नाथो ददाति परमम्पदम्
कृष्णायुधाङ्किततनुर्यत्कर्म कुरुते नरः। शुभं वाऽप्यशुभं वाऽपि तत्सर्वमक्षयं भवेत्॥
दानवा राक्षसाश्चैव भूतवेतालकास्तथा। पिशाचाः पन्नगाश्चाऽपियक्षविद्याधरास्तथा

किन्नरा गुह्यकाश्चैव ग्रहा बालग्रहास्तथा।
कूष्माण्डाश्चैव डाकिन्यस्तथाऽन्ये विघ्नकारकाः ॥ ६७ ॥

सर्वे भीत्या पलायन्ते दृष्ट्वा कृष्णायुधाङ्कितम्। द्वीपाश्चद्वीपिनश्चैवतथाऽन्ये वनवासिनः
दृष्ट्वैव प्रपलायन्ते भयात्कृष्णायुधाङ्कितम्। कामलाद्या महारोगा देहदेहावपातिनः॥
कृष्णायुधाङ्कितनुं भक्त्या पश्यति यो जनः। कृष्णदर्शनतुल्यं तु फलंप्राप्नोति मानवः
त्रिपदीकृतदूर्वाभिराश्विने योऽर्चयेद्धरिम्। दूर्वावत्सन्ततिस्तस्य अविच्छिन्ना प्रवर्तते॥
आश्विने मासि यो दद्याद्धरये कर्कटीफलम्। शोको न जायतेतस्यकदाचिद्धृदये द्विज!
कार्तिके च समायाते सर्वमासोत्तमे शुभे। दामोदरं देवदेवं भक्त्या प्राज्ञः प्रपूजयेत्॥
कार्त्तिके मासि विप्रेन्द्र! विष्णुप्रीणनहेतवे। यथोक्तविधिना प्राज्ञः प्रातःस्नानंसमाचरेत्

आमिषं मैथुनं चैव कार्त्तिके मासि यस्त्यजेत्।
जन्मान्तरार्जितैः पापैर्मुक्तो याति परां गतिम् ॥ ७५ ॥

तुलाराशिगते सूर्ये प्रातःस्नानं द्विजोत्तम!। हविष्यं ब्रह्मचर्यं च महापातकनाशनम्॥

आमिषं मैथुनं चैव कार्तिके मासि सेवते । जन्मजन्मनि विप्रेन्द्र ! स भवेद्ग्रामसूकरः
द्विर्भोजनं परान्नं च तैलं च वैष्णवोजनः । आयाते कार्त्तिकेमासि यत्नादपिपरित्यजेत्
दामोदराय नभसि दीपं यस्तु प्रयच्छति । फलं तस्य प्रवक्ष्यामि समासेन शृणु द्विज!
ब्रह्महत्यादिभिः पापैर्विमुक्तः क्लेशदायकैः । दामोदरपुरं गत्वा तिष्ठेत्कोटियुगावधि
दीपं ज्वलन्तं नभसि त्रिदशा वासवादयः । विलोक्य हर्षिताः सर्वे वदन्तीतिपरस्परम्
असौ पुण्यात्मनां श्रेष्ठः केशवार्चनतत्परः । प्रदीपं कार्तिके मासि यतो यच्छति चक्रिणे

कार्तिके मासि विप्रेन्द्र ! तस्य तुष्टः सदा हरिः ।
दद्यादक्षयदीपं यः कार्त्तिके हरिमन्दिरे ॥ ८३ ॥

दिनेदिनेऽश्वमेधस्य फलं प्राप्नोति मानवः । तुलसीदललक्षैर्यः कार्तिके पूजयेद्धरिम् ॥
लक्षैकवाजिमेधस्य मानवो लभते फलम् । बिल्वस्य दललक्षेण योऽर्चयेद्विष्णुमव्ययम्
परमं मोक्षमाप्नोति प्रसादाज्जगतीपतेः । यत्किञ्चित्कार्तिके मासि विष्णुमुद्दिश्य दीयते
तदक्षयं भवेत्सर्वं सत्यमेतन्मयोच्यते । घृताक्तं सुरपत्रं यः कार्तिके मासि विष्णवे ॥

दद्याद्दिनेदिने विप्र! तस्य विष्णोः पुरे स्थितिः ।
प्रफुल्लपद्मपत्रेण सितेनाऽप्यसितेन वा ॥ ८८ ॥

योऽर्चयेत्कमलाकान्तं तस्यकिंभुविदुर्लभम् । द्विजाग्र्यःकार्तिकेमासि हरये येन पङ्कजम्
न दत्तं तेन किं विप्र! विष्णवे दैत्यजिष्णवे । एकमेवाऽम्बुजं हृत्वा ददाति कैटभारये
तस्मै किं भगवान्विष्णुर्नददातिश्रियःपतिः । कमलैःकार्तिकेमासियेननाऽऽराधितोहरिः
जन्मजन्मनि तद्गेहे कमला नहि तिष्ठति । पद्मबीजानि यो दद्यात्केशवाय महात्मने
स जायते विप्रकुले शुद्धे च प्रतिजन्मनि । ब्राह्मणस्य कुले जातश्चतुर्वेदसुहृद्भवेत् ॥
धनवान्बहुपुत्रश्च कुटुम्बानां च पोषकः । नास्ति पद्मसमं पुष्पं जैमिने ! सत्यमुच्यते

येन सम्पूज्य गोविन्दं पापात्माऽपिच मोक्षभाक् ।
पद्मपुष्पस्य माहात्म्यं विशेषादुच्यते मया ॥ ९५ ॥

सेतिहासं द्विजश्रेष्ठ! सावधानं निशामय । आसीदेकः प्रजानाम ब्राह्मणःसर्वशास्त्रवित्
हरिपादाम्बुजे यस्य मनोभृङ्गसदास्थितिः । देवानां ब्राह्मणानाञ्च गुरूणाञ्चैव सर्वदा

कृता पूजा द्विजश्रेष्ठ! त्यक्त्वा कार्यशतान्यपि । परद्रव्यं विषंतस्य परस्त्रीच स्वमातृवत्
अभूच्च मानसं तस्य समं मित्रे च शात्रवे । आयान्तमतिथिं दृष्ट्वा स विप्रः परमार्थवित्
भृशमानन्दमाप्नोति याचकश्च द्विजोत्तमम् । सर्वयज्ञाः कृतास्तेन व्रतानि सकलानि च
संसारसागरं घोरमपारं च तितीर्षुणा । एकदा स द्विजश्रेष्ठो हरिभक्तिपरायणः ॥
स्वमृत्युं च निजां जातिं चिन्तयामास चेतसा ।
अहं पूर्वं स्थितः को वा किं वा कर्म कृतं पुरा ॥ १०२ ॥
कथम्वा जन्मसम्प्राप्तं गमिष्यामि क वा पुनः । इतिसञ्चिन्त्यविप्रोऽसौ निःश्वस्यचपुनःपुनः
विज्ञातुं पूर्ववृत्तान्तं शिवक्षेत्रं जगाम ह । तत्र वद्धाञ्जलिर्विप्रो भक्त्या परमया युतः ॥
तुष्टाव शङ्करं देवं वाचा मधुरया शिवम् ॥ १०४ ॥

ब्राह्मण उवाच ।

नमस्तुभ्यं महादेव नमस्ते परमेश्वर ! । नमस्ते शङ्करेशान ! नमस्ते वरद ! प्रभो ! ॥
नमस्ते ज्ञानरूपाय नमस्ते ज्ञानदायिने । नमस्ते सर्वभूतानां हृदम्बुजनिवासिने॥१०६
जगत्स्रष्ट्रे नमस्तुभ्यं जगत्पित्रे नमोनमः । नमः संहारकर्त्रे च पशूनां पतये नमः ॥
नमस्तेऽस्तु त्रिनेत्राय नमस्ते वह्निचक्षुषे । नमस्ते चन्द्रनेत्राय सूर्यनेत्राय वै नमः ॥
नमस्ते भस्मभूषाय नमस्ते कृत्तिवाससे । नमोऽस्थिमालिने तुभ्यं नीलकण्ठायवैनमः
नमस्ते पञ्चवक्त्राय नमस्ते शूलपाणये । कन्दर्पदर्पविध्वंसकारिणे भीममूर्तये ॥११०॥
नमस्ते देवदेवाय नमस्ते त्रिपुरारये । पार्वतीपतये तुभ्यं नमस्ते भीममूर्तये ॥ १११ ॥
बाणभक्त्याऽतिसन्तुष्टमानसाय नमोऽस्तु ते । बहुरूपाय वै तुभ्यं विश्वरूपाय वै नमः
गङ्गाधराय वै तुभ्यं दक्षयज्ञविनाशिने । प्रेतानां पतये तुभ्यं नमस्तुभ्यं पिनाकिने ॥
ईशानाय नमस्तुभ्यं मनीषाय नमोनमः । तुभ्यं नमोऽस्तु दृश्याय अदृश्याय नमोनमः
नमश्चिन्त्याय वै तुभ्यमचिन्त्याय नमोनमः ॥ ११४ ॥
ब्रह्मा त्वमेव त्रिदशैकनाथस्त्वमेव विष्णुस्तपनस्त्वमेव ।
त्वमेव सोमः सकलार्तिहारी नमोनमस्ते परमेश्वराय ॥ ११५ ॥
तस्य स्तवं समाकर्ण्य शङ्करो लोकशङ्करः । आविर्बभूव सहसा प्रसन्नः परमेश्वरः ॥

आविर्भूतं समालोक्य सर्वदेवनमस्कृतम् । ववन्दे चरणौ तस्य स विप्रोऽत्यन्तभक्तिमान्
भूयोऽपि स द्विजश्रेष्ठो हर्षनिर्भरमानसः । कृताञ्जलिर्महादेवं तुष्टाव वरदं प्रभुम् ॥११८

ब्राह्मण उवाच ।

यं न पश्यन्ति देवेशं देवाअपि सवासवाः । पश्यामि तमहं साक्षान्महाभाग्यमिदं मम
ध्यानावस्थितचित्तेन यो दृश्यः परमेश्वरः । पश्यामि तमहं साक्षात्साध्यं किमपरं मम
यन्नामस्मरणादेव महापातकिनोऽपि च । गच्छन्ति परमं स्थानं समीक्षे तमहं प्रभुम्
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि च भाग्यवान् ।
नमस्तुभ्यं नमस्तुभ्यं प्रसीद परमेश्वर ! ॥ १२२ ॥

महादेव उवाच ।

भवतोऽनेन वाक्येन तुष्टोऽस्मि द्विजसत्तम !। वरं वृणु महाभाग ! वरं दित्सुरहं खलु

ब्राह्मण उवाच ।

भवन्तं परमात्मानमदृश्यं दैवतैरपि । साक्षात्पश्याम्यहं नाथ ! किंकार्यमपरैर्वरैः ॥
तथापि त्वं महादेव! वरं दित्सुः कृपामयः । पृच्छामि यदहं किञ्चित्तद्ब्रूहि परमेश्वर !
कोऽहं तस्थौ पुरा देव ! किम्वा कार्यं कृतम्पुरा ।
संसारसागरे नाथ ! पतितोऽस्मि कथं प्रभो ! ॥ १२६ ॥
कर्मणा प्राप्यते देहो देही पापेन लिप्यते । पुनः पापप्रभावेण प्राप्यते विषमा गतिः ॥
प्रभावैः कर्मणां केषां जन्म प्राप्तमिदं मया । नानादुःखप्रदं नाथ! प्रसन्नो ब्रूहि शङ्कर !
पापमूलमिदं जन्म जन्मदुःखस्यकारणम् । ज्ञातुमिच्छाम्यहं तस्मात्पूर्ववृत्तान्तमात्मनः
स्थितोऽहं जननीकुक्षौ जठरानलतापितः । मूत्रविष्ठाप्रकीर्णे च विपाकेन च कर्मणाम्
गर्भवाससमं दुःखं संसारे नहि मन्यते ।
कथं मयाऽनुभूतं तत्प्रभो ! भक्तार्तिनाशन ! ॥ १३१ ॥
संसारेऽस्मिन्महाघोरे नानादुःखसमन्विते । असारे मायया विष्णोर्मोहिने पातकाश्रये
दुस्तरे बन्धुहीने च कामक्रोधादिसंयुते । शोकरोगप्रदे चैव जन्ममृत्युप्रदे तथा ॥१३३
अपारे जगतामीश! पतितोऽस्मि कथंशिव !। एतत्सर्वं विभो! ब्रूहि यदि ते मय्यनुग्रहः

महादेव उवाच ।

यद्यप्येतद्द्विजश्रेष्ठ! गुह्याद्गुह्यतरं महत् । अप्रकाश्यं तथापि त्वां भक्तं प्रतिवदाम्यहम्
पुरा त्वं ब्राह्मणश्रेष्ठ! शबरान्वयसम्भवः । दण्डपाणिरितिख्यातः स्थितःसँल्लोकदुःखदः
परलोकभयं त्यक्त्वा विवेकैः परिवर्जितः । दस्युवृत्तिं प्रपन्नोऽभूः सर्वेषांक्लेशदायिनीम्
दस्युवृत्तिगतं दृष्ट्वा भवन्तमतिनिर्दयम् । अपरे भ्रातरः सर्वे बभूवुस्ते च दस्यवः ॥१३८
तेषां नामानिविप्रेन्द्र! भ्रातॄणां निगदाम्यहम् । यैः सार्द्धं भवता पूर्वं भ्रातृभिर्दस्युताकृता
दण्डी दण्डायुधश्चैव दत्तवान्दत्तभूस्तथा । सुदण्डो दण्डकेतुश्च भ्रातरःषट्प्रकीर्तिताः
तैर्भ्रातृभिर्महाघोरैर्दयाभिः परिवर्जितः । दण्डेन भवता नित्यं सर्वे व्यग्रीकृता जनाः ॥
धनलोभेन भवता दुष्टैस्तैर्भ्रातृभिः सह । अरण्यप्रान्तरे विप्र ! हताः शतसहस्रशः ॥

हत्वा च सायकैस्तीक्ष्णैर्वनस्थेन त्वया सदा ।
गवां क्रव्याणि भुक्त्वा च मदिराभिः सह द्विज ! ॥ १४३ ॥

ततो यानविधिं सर्वे वणिजस्त्वद्भयात्तथा । तत्यजुर्विपिने तस्मिन्ननर्थः पतितः सदा ॥
यस्य वित्तं न तद्वित्तं गृहं यस्य न तद्गृहम् । यस्य भार्या नतद्भार्यात्वयिदस्युत्वमागते
एवं स्वभ्रातृभिस्तैस्तु तस्मिन्नेव महावने । गतो वर्त्मश्रमश्रान्तः स्नानार्थं सरसीं प्रति
तत्र स्नानं समाचर्य क्षुधितेन द्विजोत्तम !। भक्षितानि मृणालानि भ्रातृभिस्तैर्जलानिच
अथ त्वया द्विजश्रेष्ठ! कौतुकात्तत्र सत्तम !। भुक्तानि पद्मपुष्पाणि प्रफुल्लानि बहूनि च
तस्मिन्नेव ततः काले ब्राह्मणो विपिनेचरः । सर्ववेदाइतिख्यातस्तत्र स्नानार्थमागतः॥

तत्र स्नात्वा स धर्मात्मा भगवन्तं जनार्दनम् ।
यष्टुं त्वामेकमम्भोजं ययाचे विनयान्वितः ॥ १५० ॥

अथ त्वया च विप्रेन्द्र! पद्ममेकं सुनिर्मलम् । दत्तं परमया भक्त्या पूजार्थं कमलापतेः ॥
त्वया दत्तेन पद्मेन स च प्रीतो द्विजोत्तमः । पूजयामास तत्रैव विष्णुं सकलकारकम्
विष्णुपूजापरं दृष्ट्वा तं विप्रं सर्ववेदसम् । त्वमपि प्रहसन्विष्णुं ननन्द च सुकामदम्
अथाऽभ्यर्च्य परात्मानं चतुर्वर्गफलप्रदम् । यथोक्तविधिना विप्र! स जगाम यथागतः
तेनाऽम्बुजप्रदानेन प्रणामेन च सत्तम !। विष्णुपूजादर्शनेन नष्टं ते सर्वपातकम् ॥

ततः कियद्भिर्दिवसैस्तस्मिन्नेव महावने । सम्प्राप्तकालः पञ्चत्वं गतोऽसि त्वं द्विजोत्तम!
तेनैव कर्मणा तुष्टो भगवान्करुणालयः । ददौ तुभ्यं परं स्थानं देवैरपि सुदुर्लभम् ॥
मन्वन्तरसहस्राणि मन्वन्तरशतानि च । भुक्तं नानासुखं तत्र कृपया कमलापतेः॥१५८
ततः कर्मावसाने तु कर्मभूमिमिमां द्विज !। आगत्य तैः पुण्यफलैर्जातोऽसिद्विजसन्ततौ
ब्राह्मणस्य कुले शुद्धे जन्म सम्प्राप्य सत्तम !। सर्वगुणाश्रया लब्धा हरिभक्तिरचञ्चला

आराधितो महाविष्णुः क्रियायोगैस्त्वया प्रभुः ।
तुभ्यं दास्यति विज्ञानं ज्ञानान्मुक्तो भविष्यसि ॥ १६१ ॥

गच्छ ब्राह्मण!भद्रन्ते सुप्रीतो निजमन्दिरम् । मद्दर्शनंत्वयाप्राप्तं मुक्तोऽसिभवबन्धनात्

व्यास उवाच ।

इत्युक्त्वाऽन्तर्दधे विप्र! तत्रैव जगदीश्वरः । कृतार्थोब्राह्मणः सोऽपिजगामभवनंस्वकम्
अथ स त्रिदिनं विष्णुं पद्मपुष्पैर्मनोरमैः । यत्नादाराधयामास तुष्ट्यर्थं परमेश्वरम् ॥

विष्णुं समाराध्य चिरं प्रसुप्तः पद्मप्रसूनैर्विविचित्रैः (विधैः) सुपुष्पैः ।
ज्ञानं समासाद्य जगाम मोक्षं प्रसादतः श्रीगरुडध्वजस्य ॥ १६५ ॥

अनिच्छयाऽपि कमलं यच्छन्तःफलमीदृशम् । विष्णवेयच्छतोभक्त्यानजानेकिंभवेदिति
सत्यं सत्यं पुनःसत्यं सत्यमेव मयोच्यते । कमलैर्हरिमभ्यर्च्य प्राप्यते परमम्पदम् ॥
एकमेवाऽरविन्दं यः प्रददाति मुरारये । तस्य नास्ति पुनर्जन्म संसारे तु भयावहे ॥

नारायणं ये च प्रफुल्लवारिजैर्दयामयं कामदमर्चयन्ति ।
एकाहमप्युत्कटपापयुक्तास्ते यान्ति मुक्तिं ह्यतिपापिनोऽपि ॥ १६६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे हरिपूजावर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः

## भगवत्पूजामाहात्म्यम्

व्यास उवाच ।

मार्गशीर्षे द्विजश्रेष्ठ! महालक्ष्म्या समन्वितम् । पूजयेदव्ययं विष्णुं भक्तिभावेन वैष्णवः
म्लेच्छदेशे च विप्रेन्द्र! तथैव पतितालये । दुर्गन्धैश्च परिव्याप्ते स्थाने विष्णुं न पूजयेत्
पाखण्डानां समीपेच महापातकिनां तथा । असत्यभाषिणां चैव न कुर्याद्विष्णुपूजनम्
क्रन्दतां सन्निधौ चाऽपि कलहानपि कुर्वताम् । तथोपहसतां स्थाने न कुर्यात्पूजनं हरेः
प्रतिग्रहरतानाञ्च स्थाने विष्णुं न पूजयेत् । कृपणानां गृहे चैव परवित्ताभिलाषिणाम्
तथा कपटवृत्तीनां न कुर्याद्विष्णुपूजनम् । नारायणार्चने विप्र! परं भक्तिपरायणः ॥६॥

अन्यचित्तं परित्यज्य हरिध्यानपरो भवेत् ।
हाहाकारं च निःश्वासं विस्मयं च द्विजोत्तम ! ॥ ७ ॥

पाखण्डजनसम्भाषं न कुर्याद्धरिपूजने । अनन्यमानसो भूत्वा भक्त्या विष्णुं यजेद्बुधः
भ्रान्तचित्तेन यत्कर्म क्रियते तच्चनिष्फलम् । सर्वं कर्म मनोऽधीनं मनोऽधीनंजगत्त्रयम्
तस्मान्मनो दृढीकृत्य पूजयेत्कमलापतिम् । पूजान्यत्रमनो यत्र भवेत्तस्य द्विजोत्तम! ॥
न च तस्यफलेत्कार्यं कल्पकोटिशतैरपि । यत्नाद्विहितशौचोऽपि विष्णुपूजापरोऽपिच
मनःशुद्धिविहीनश्चेच्चाण्डाल इव स स्मृतः । अभक्त्या यत्तपस्तप्तं सुचिरंविधिनाद्विज!
भवेन्निरर्थकं सर्वं केवलं कायशोधनम् । मेरुप्रमाणकं स्वर्णं ब्राह्मणाय कुटुम्बिने ॥१३
अभक्त्यायत्तमप्यर्थनाशायैव तु केवलम् । तस्मादेकमना भूत्वा भक्तिश्रद्धासमन्वितः॥

सवास्तुकादिशाकम्वा दद्यात्सदसि वैष्णवे ।
नारङ्गस्य फलं दिव्यं सुपक्वं यस्तु यच्छति ॥ १५ ॥

केशवाय द्विजश्रेष्ठ! सोऽस्माभिरभिपूज्यते । यत्नेन नूतनं वस्तु प्रियं भगवतो हरेः ॥
तदेवाऽऽग्रयणेमासि भक्त्या दद्यान्मुरारये । पौषे मासि समायाते श्रीकृष्णं वरदंप्रभुम्

देवमिक्षुरसैर्दिव्यैः स्नापयेद्वैष्णवो जनः । यः स्नापयति विप्रेन्द्र! विष्णुमिक्षुरसैः प्रभुम्
इह भुङ्क्ते सुखं सर्वं मृतो यातीक्षुसागरम् । यो दद्यादिक्षुनैवेद्यं देवदेवाय विष्णवे ॥
सोऽपि तत्फलमाप्नोतिकिमन्यैर्बहुभाषितैः । सुदुग्धपृथुकं पौषे दधिभिर्वा समन्वितम्
दत्त्वा मुरारये मर्त्यः सर्वान्कामानवाप्नुयात् । सर्वं पुरातनं वस्त्रं दूरीकृत्य मुरारये ॥
शीतस्य वारणार्थाय दद्याद्वस्त्रं च नूतनम् । पौषसंक्रमणे विप्र!सलक्ष्मीकाय विष्णवे
दद्यान्मुमुक्षुर्मनुजो दशवर्णं च पीठकम् । यस्तु शङ्खध्वनिं कुर्यात्सम्पूज्य कमलापतिम्
तस्य पुण्यफलं वच्मि शृणु वत्स!समाहितः । अगम्यागमनाद्यैश्च विमुक्तः सर्वपातकैः
अन्ते विष्णुपुरं गत्वा विष्णुना सह मोदते । वैनतेयाङ्कितां घण्टां यस्तु वादयते हरेः
पूजाकाले द्विजश्रेष्ठ!तस्यपुण्यं वदाम्यहम् । अभक्ष्यभक्षणाद्यैश्च विमुक्तः सर्वपातकैः ॥

प्रयाति मन्दिरं विष्णोरथमारुह्य शोभनम् ।
तत्र भुक्त्वाऽखिलान्कामान्कल्पकोटिशतावधि ॥ २७ ॥

पुनरागत्य धरणीं चतुर्वेदी द्विजोत्तमः । तत्र भुक्त्वाऽखिलान्कामान्कल्पकोटिशतावधि
पुनर्विष्णुपुरं गत्वा मोक्षं प्राप्नोत्यनुत्तमम् । वीणां वादयते यस्तु पूजाकाले जगत्पतेः
पण्डितानामग्रणीः स्यात्स मर्त्यःप्रतिजन्मनि । मृदङ्गवाद्यकृद्यस्तु पूजायां कैटभद्विषः
तस्य प्रसन्नो भगवान्ददात्यभिमतं फलम् । डमरुं डिण्डिमं चैव झर्झरीं मधुरीं तथा
पटहं दुन्दुभिं चैव काहलं सिन्धुवारकम् । कांस्यं च करतालं च वेणुं वादयते तु यः

पूजाकाले महाविष्णोस्तस्य पुण्यं निशामय ।
स्तेयाद्यैः पातकैर्मुक्तो मन्दिरं याति चक्रिणः ॥ ३३ ॥

परमं ज्ञानमासाद्य तत्रैव परिमुच्यते । कलशब्दं च यः कुर्यात्पूजाकाले जगद्गुरोः ॥
मुखवाद्यं च विप्रेन्द्र!तस्य पुण्यं मयोच्यते । कोटिकोटिकुलैर्युक्तः प्रयाति मन्दिरंहरेः
ज्ञानमासाद्य तत्रैव मोक्षमक्षय्यमाप्नुयात् । विष्णोरायतनेयस्तु भक्तियुक्तः प्रनृत्यति
सयाति ब्राह्मणश्रेष्ठ!तद्विष्णोः परमम्पदम् । यस्तु गायति गीतानि भक्त्यानारायणाग्रत
स नृपत्वमवाप्नोति गन्धर्वाणां पुरेषुच । स्तौति स्तोत्रैर्जगन्नाथं भक्त्या च वैष्णवोजनः
तस्यप्रसन्नो भगवान्सर्वान्कामान्प्रयच्छति । मासेमासे हरिंयस्तु विधिनाऽनेनपूजयेत्

अचिरेणेव विप्रर्षे प्रसादयति सोऽच्युतम् ॥ ४० ॥
जगदुदधिमिमं ये तर्तुमिच्छन्ति मर्त्याः प्रचुरतरगभीरं सर्वदुःखप्रदश्च।
परमपुरुषपादाम्भोजयुग्मं मनोज्ञं त्रिदशनिवहसेव्यंतेचसर्वेयजन्तु ॥४१॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे भगवत्पूजामाहात्म्यं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः

भगवन्नामप्रभाववर्णने वैश्यपरशुनाम्नःपत्न्याजीवन्त्यामृतभर्त्र्याःकामलुब्धायाः स्वपितुर्गृहान्निष्कासनं वेश्यावृत्त्याकेनभाग्येनलुब्धकसकाशाच्छुकशावकग्रहणं तत्पालनं वात्सल्येनरामनाम्नःपाठनं रामनाममहिम्नापापराशिनाशः पञ्चत्वंगतयोस्तयोर्विष्णुदूतानां यमदूतैर्युद्धमनुवैकुण्ठप्रापणं यमकृतारामनामप्रशंसावर्णनम्

व्यास उवाच ।

नारायणस्य माहात्म्यं पुनर्वच्मि शृणुद्विज !। यच्छ्रुत्वा सर्वपापेभ्योमुक्तो भवतिमानवः
विष्णवंशभूतं सकलं जगदेतद्द्विजोत्तम !। तस्माद्विष्णुमयं धीराःपश्यन्ति परमार्थिनः
ब्रह्मशङ्कररुद्राद्या विष्णवंशाःसकलाःसुराः । तस्मात्समस्तदेवार्चा विष्णुमेकंप्रपद्यते
स्मरतां विष्णुनामानि सर्वपापहराणिच । येनकेनाऽप्युपायेन विद्यते नाऽशुभंक्वचित्
सर्वमेव द्विजश्रेष्ठ! कर्म पापमयं भवेत् । अनपायित्विदं विष्णोः स्मरणं पापनाशनम्
स्वपन्भुञ्जन्वदंस्तिष्ठन्नुत्तिष्ठंश्च व्रजंस्तथा । स्मरेदविरतं विष्णुं मुमुक्षुर्वैष्णवो जनः ॥
उत्तुङ्गैर्मुनिभिः सर्वैः स्मरणे कमलापतेः । न कालनियमः प्रोक्तः सर्वदुःखविनाशनः ॥
नामप्रभावं विप्रर्षे!केशवस्य महात्मनः । ब्रवीम्यहं समासेन सेतिहासं निशामय ॥८॥

आसीत्स परशुर्नाम पूर्वं कृतयुगे शुचिः । वैश्यो वैश्यकुलश्रेष्ठः समस्तगुणपारगः ॥६॥
स वैश्यो दैवयोगेन प्रथमे वयसि द्विज !। जगाम वशतां मृत्योः कासश्वासगदार्दितः
जीवन्ती नाम तत्पत्नी सुमध्या नवयौवना । मृते भर्तरि तातस्य जगाम निलयं ततः
सा जीवन्ती द्विजश्रेष्ठ! नवयौवनगर्विता । गतिं चकार जारेषु बोध्यमानाऽपि बान्धवैः
व्रतस्य नियमं वाऽपि गृहव्यापारमेव च । जारानुरक्तचित्ता सा तत्याज नवयौवना॥
अन्धीकृता सा कामेन सुश्रोणी पीवरस्तनी । धर्ममार्गं द्विजश्रेष्ठ! न कदाचिद्ददर्श ह॥
दुःशीलांचैव तां दृष्ट्वा तत्पिता धर्मतत्परः । अपकीर्तिभयाद्भीरुरित्याहात्यन्तकोपवान्
दुष्टे पापिनि! मद्वंशे सर्वदोषविवर्जिते । आसाद्य जन्म किमिति क्रियते पातकंत्वया
यदि ते पातके चित्तं नेहि भोक्तुं गृहं मम । अभद्रे गच्छ सदनाज्जहीहि मम मन्दिरम् ॥
तातेनेति निरुक्ता सा क्रोधारुणितलोचना । पितुर्गेहं परित्यज्य सा जगाम यथासुखम्

अथ सा स्वेच्छया नारी भ्रमन्ती जारकाङ्क्षया ।
वेश्यावृत्तिं समाश्रित्य तस्थौ लज्जाविवर्जिता ॥ १९ ॥
पुलिन्दः शबरो वाऽपि चाण्डालो वाऽपि तद्गृहम् ।
आयाति तस्यास्तेनाऽपि मुदा क्रीडति साऽसती ॥ २० ॥

परलोकभयं विप्र! कदाचिदपि चेतसा । न चिन्तयामास च सा वारनारी यथाक्रमात्
कदाचिद्ब्राह्मणश्रेष्ठ! कश्चिद्व्याधस्तदालये । शुकशावं समादाय विक्रयार्थं समाययौ
साऽपि वाराङ्गना तं च शुकशावकमुत्तमम् । जगृहे परमप्रीत्या धनैःसम्पूज्य लुब्धकम्
तद्योग्याहारदानेन वारस्त्री नित्यमेव सा । शुकस्य पोषणं चक्रे तस्य जातकुतूहला ॥
वाराङ्गनाऽपत्या सा तमेव शुवशावकम् । मत्वा पुत्रमिवाऽऽत्मानं चक्रे तत्प्रतिपालनम्
सोऽपि पक्षी द्विजश्रेष्ठ! नित्यमेव तदाज्ञया । ज्ञातिवच्चित्तवात्सल्यव्यवहारंकरोति च
ततोऽसौ लब्धभावश्च शुको गणिकयातदा । रामेति सततं नाम पाठ्यते सुन्दराक्षरम्
रामनाम परं ब्रह्म सर्वदेवाधिकं महत् । समस्तपातकध्वंसि स शुकस्तु सदा पठन् ॥
रामोच्चारणमात्रेण तयोश्च शुकवेश्ययोः । विनष्टमभवत्पापं सर्वमेव सुदारुणम् ॥
कदाचिद्वारमुख्या सा शुकोऽपि च द्विजोत्तमः । उभावपि च पञ्चत्वमेककाले गतौ ततः

समानेतुं ततस्तौ तु विहीताखिलपातकौ । किङ्करान्प्रेषयामास चण्डाद्यान्धर्मराट्ततः
ततस्ते किङ्कराः सर्वे चण्डाद्या अतिवेगिनः । यमाज्ञया समायाताः पाशमुद्गरपाणयः
आनेतुं तौ समायाताः सर्वे विष्णोस्तु किङ्कराः ।
पाशबद्धौ तु तौ दृष्ट्वा पतितौ विष्णुकिङ्कराः ॥ ३३ ॥
ऊचुर्वाक्यमिदं क्रुद्धा यमदूतान्दुरासदान् ॥ ३४ ॥

विष्णुदूताऊचुः ।

अहो चित्रमिदं वाक्यं यमदूतमुखाच्छ्रुतम् । भक्तावपि हरेरेतौ दण्ड्यौ भास्करसूनुना
अहो!चरित्रं दुष्टानां कदाचिदपि नोत्तमम् । यत्नादपि यतो हिंसां कुर्वन्ति सततंसताम्
दुष्टानांकृतपापानां चरित्रमिदमद्भुतम् । निष्पापमपिपश्यन्ति पुण्यात्मानोऽखिलंजगत्
पापिनस्तु प्रपश्यन्ति कृतपापमिवाऽखिलम् ।
श्रुत्वा पुण्यात्मनां पुण्यमभितृप्यन्ति धर्मिणः ॥ ३८ ॥
तृप्यन्ति पातकं श्रुत्वापापिनां पापिनो जनाः । पापचर्चांसमाकर्ण्य यथातृप्यन्तिपापिनः
नतृप्यन्ति तथाप्राप्य स्वर्णभारतशतान्यपि । अहोबलवती माया महाविष्णोर्महात्मनः
आत्मपीडाकरमपि पापं कुर्वन्ति ते द्विज ! ॥ ४१ ॥

व्यास उवाच ।

इत्युक्त्वा विष्णुदूतास्ते विष्णुभक्तिपरायणाः । छिन्नवन्तस्तयोर्विप्र बन्धनंचक्रधारया
ततस्तु शमनप्रेष्या क्रुद्धास्ते वह्निसन्निभाः । ववर्षुः सहसा तत्र ज्वलदङ्गारसञ्चयान् ॥

दण्ड उवाच ।

विहितंच मयाऽप्येवंशुकं वेश्यांच पापिनीम् । नेतुं यूयं समायाताइत्यद्भुतमिवाऽभवत्
नूनमेतौ यदानेतुं यूयमिच्छथ सत्तमाः !। तदा कुरुत सङ्ग्राममस्माभिः सह सम्प्रति
इत्युक्त्वा यमदूतास्ते बलिनो विधृतायुधाः । सिंहनादैर्दिशः सर्वे पूरयामासुरुद्धताः ॥
विष्णुदूता महात्मानः सुप्रतीकादयस्तथा । शङ्खनादैः सुललितैश्चक्रुः शब्दमयं जगत्
याम्यैस्ततो महादूतैर्धनुर्मुक्तैःशिलीमुखैः । छादिताविष्णुदूतास्ते सङ्ग्रामेऽत्यन्तदारुणे
शूलानि चिक्षिपुः केचिच्छक्तिं केचिन्महारणे । केचिच्छरसहस्राणि केचिच्चक्राणितेरुषा

तैर्मुक्तानि महास्त्राणि विष्णुदूता महामराः । बाणान्विचूर्णयामासुर्गदाप्रहरणादिभिः
ततो भागवतैरेतैर्याम्यानां चक्रधारया । केषाञ्चिच्चरणाश्छिन्नाः केषाञ्चिद्बाहवस्तथा
केचिद्विच्छिन्नशिरसः केचिन्निर्भिन्नवक्षसः । अत्यद्भुतक्षताःकेचिद्व्यास्याः पेतुर्गतासवः
छिन्नैकचरणाः केचित्केचिच्छिन्नैकपाणयः ।
सन्त्यज्य सहसा याम्याः सङ्ग्रामाच्च प्रदुद्रुवुः ॥ ५३ ॥
तानालोक्य ततो दूतान्पलायनपरायणान् । प्रविवेश रुषा चण्डः सङ्ग्रामं धृतमुद्गरः
यमदूतगणश्रेष्ठश्चण्डोऽत्यन्तप्रतापवान् । ताडयामास शतशो मुद्गरैर्विष्णकिङ्करान् ॥
अथ भागवता दूता निशितायुधवर्षणैः । ववर्षुस्तरसा क्रुद्धास्तं चण्डं चण्डविक्रमम्
मुद्गरेण ततश्चण्डो विष्णुदूतान्पृथक्पृथक् । ताडयामास विगलद्रक्तसंसिक्तविग्रहः ॥
चण्डेन ताडितास्तेन दूता भगवतो युधि । त्यक्तसत्त्वाः पृष्ठभागं सुप्रकाशस्य वै ययुः
सुप्रकाशस्ततः क्रुद्धो जपापुष्पनिभेक्षणः । प्रविवेश रणे युद्धं गदापाणिर्महाबलः ॥५६
ताडयामास संक्रुद्धो विष्णुतुल्यपराक्रमः । मुद्गराच्चण्डहस्ताच्च प्रेक्ष्य जनभयप्रदात् ॥
समुत्तस्थौ महानग्निः सधूमः पूतिगन्धवान् । समुद्गरेण चण्डेन ताडितस्तेन वेगिना॥
स्फुलिङ्गवर्षणं सद्यो मुमोचाऽत्यन्तभीतिदम् । ततः क्रुद्धेन चण्डोऽसौ तेनैवमुद्गरेणच
ताडयामास विप्रर्षे!सुप्रकाशं महाबलम् । सुप्रकाशस्ततो विप्र!व्यथां विस्मृत्यकोपवान्
गदया ताडयामास चण्डं शमनकिङ्करम् । तेन प्रताडितश्चण्डस्तत्र रक्तपरिप्लुतः॥६४
पपात मूर्च्छितो भूमौ बालार्कइव जैमिने ! ।
याम्यदूतास्ततस्ते च चण्डमादाय मूर्च्छितम् ॥ ६५ ॥
हाहाकारं प्रकुर्वन्तो युद्धाद्भीताः प्रदुद्रुवुः । विष्णुदूतास्ततो विप्र! सर्वे चाऽतिप्रहर्षिताः
अथ शङ्खान्समादध्मुर्जैमिने द्विजसत्तम ! । यमदूतास्ततस्ते च शोणितौघपरिप्लुताः॥
यमस्य सन्निधिं जग्मुः क्रन्दन्तो भयविह्वलाः ॥ ६८ ॥

यमदूताऊचुः ।

सूर्यपुत्र!महाबाहो तवाऽऽज्ञाकारिणो वयम् । तथापिविष्णुदूतैर्नः कृता दुर्गतिरीदृशी॥
महापातकिनां श्रेष्ठौ प्रभो यद्यपि तौ खलु । रामनामप्रभावेण गतौ नारायणालयम्

भवता दण्डनीया ये दुरात्मानःकृतैनसः। तेऽपि विष्णुपुरं यान्ति प्रभुत्वं तव किन्तदा
नाऽस्माकं विष्णुदूतैस्तैःकृतः परिभवस्त्वयम्। तवैव केवलं नाथ!यतो वैकिङ्करावयम्

यम उवाच।

दूताः स्मरन्तौ तौ रामरामनामाक्षरद्वयम्। तदा न मे दण्डनीयौ तयोर्नारायणःप्रभुः
संसारे नास्ति तत्पापं यद्रामस्मरणैरपि। न याति संक्षयं सद्यो दृढं शृणुत किङ्कराः

ये मानवाः प्रतिदिने मधुसूदनस्य नामानि घोरदुरितौघविनाशनानि।
भक्त्या स्मरन्ति विबुधप्रवरार्चितस्यते पापिनोऽपिहि भटा मम नैव दण्ड्याः
गोविन्द केशव हरे जगदीश विष्णो नारायण प्रणतवत्सल माधवेति।
भक्त्या वदन्ति पुरुषाःसततं क्षितौ ये दण्ड्यानते ममभटा अतिपापिनोऽपि
भक्तार्तिनाशन सुरेश्वर दीनबन्धो लक्ष्मीपते सकलपापविनाशकारिन्।
एतद्वदन्ति सततं भुवि ये मनुष्यास्ते पापिनोऽपि नभटा मम दण्डनीयाः॥
दामोदरेश्वर सुखामरवृन्दसेव्य श्रीवासुदेव पुरुषोत्तम माधवेति।
येषां भवन्ति वदनेषु सदैव शब्दा दूता नमाम्यहमपि प्रतिवासरं तान् ॥७८
नारायणस्य जगदेकपतेर्मुरारेश्चर्चासु चित्तमतिहार्दि नृणां च येषाम्।
तेषामहं च सततं सुभटा ह्यधीनो ये ते प्रफुल्लकमलेक्षणरूपभाजः ॥७९॥
ये विष्णुपूजनरता हरिभक्तभक्ता एकादशीव्रतरताः कपटैर्विहीनाः।
येविष्णुपादसलिलं शिरसा वहन्तिते पापिनोऽपि न भटा मम दण्डनीयाः
ये भुञ्जते भगवतो मधुसूदनस्य नैवेद्यशेषमखिलौघविनाशकारि।
ये कर्णयोश्च शिरसिच्छदनं तुलस्या नित्यं वहन्ति च भटाः प्रणमाम्यहंतान्
ये कृष्णपादकमलार्चनतत्पराश्च ये ब्राह्मणार्चनरता गुणसेविनश्च।
ये दीनलोकहृदयातिसुखप्रदाश्च तेषामहं सततमेव भटा अधीनः ॥८२॥
ये सत्यवाक्यकथनेषु सदाऽनुरक्ता लोकप्रियाश्च शरणागतलोकपालाः।
पश्यन्ति ये च सततं विषवत्परस्वं ते मानवा मम भटा न हि दण्डनीयाः
ये चाऽन्नदाननिरताः सलिलप्रदाश्च भूमिप्रदा निखिललोकहितैषिणश्च॥

ये वृत्तिहीनजनतृप्तिकराः प्रशान्ता दूता न ते खलु कदापि च दण्डनीयाः॥
ये ज्ञातिपोषणरताः प्रियवादिनश्च ये दम्भकोपमदमत्सरहीनचित्ताः।
ये पापदृष्टिरहिता विजितेन्द्रियाश्च तेषामहं न विदधामि कदापि चर्चाम्

व्यास उवाच।

एवं प्रबोधितास्तेन यमेन यमकिङ्कराः। ज्ञातवन्तो जगद्भर्तुः प्रभावमतुलं हरेः॥८६॥
विष्णोर्नामानि विप्रेन्द्र! सर्वदेवाधिकानिवै। तेषां मध्येतु तत्त्वज्ञा रामनाम वरंस्मृतम्
रामेत्यक्षरयुग्मं हि सर्वमन्त्राधिकं द्विज!। यदुच्चारणमात्रेण पापी याति परां गतिम्
रामनामप्रभावं हि सर्वदेवप्रपूजनम्। महेशएव जानाति नान्यो जानाति जैमिने!॥८६
विष्णोर्नामसहस्राणां पठनाल्लभते फलम्। तत्फलं लभते मर्त्यो रामनाम स्मरन्नपि॥
अहो चित्रं मनुष्याणां चरित्रमिदमुच्यते। रामेतिमुक्तिदं नाम न स्मरन्ति दुराशयाः॥
वक्तुंश्रमो नचाल्पोऽपि श्रोतुमत्यन्तसुन्दरम्। तथापि रामरामेति न वदन्ति दुराशयाः
अत्यन्तदुःखलभ्याऽपि मुक्तिर्जगतिमानवैः। लभ्यतेरामनाम्नैव कर्माऽस्ति किमतःपरम्
तावत्तिष्ठन्ति पापानि देहेषु देहिनाम्वर!। रामरामेति यावद्वै न स्मरन्ति सुखप्रदम्॥
श्राद्धे च तर्पणेचैव बलिदाने तथोत्सवे। यज्ञे दाने व्रते चैव देवताराधनेऽपि च॥६५
अन्येष्वपि च कार्येषु वैदिकेषु विचक्षणः। स्मरेद्यस्तत्फलप्रेप्सूरामरामेतिभक्तितः॥
नमोरामायेति विप्रेन्द्र! मन्त्रमोङ्कारपूर्वकम्। षडक्षरं जपेद्यस्तु सायुज्यं प्राप्यते हरेः
षडक्षरेण मन्त्रेण हरिपूजनकृन्नरः। सर्वान्कामानवाप्नोति प्रसादाच्चक्रपाणिनः॥६८॥
मृत्युकाले द्विजश्रेष्ठ! रामरामेतियः स्मरेत्। स पापिष्ठोऽपि परमं मोक्षमाप्नोति मानवः
रामेति नाम यात्रायां येस्मरन्ति मनीषिणः। सर्वसिद्धिर्भवेत्तेषां यात्रायां नाऽत्रसंशयः
अरण्यप्रान्तरे वाऽपि स्मशाने यो भयानके। रामनामस्मरेत्तस्य विघ्नेनाऽऽपदो द्विज!
राजद्वारे तथा दुर्गे विदेशेदस्युसम्मुखे। दुःस्वप्नदर्शने चैव ग्रहपीडासु जैमिने!॥
औत्पातिके भयेचैव वातरोगभये तथा। रामनाम स्मरन्मर्त्यो लभते नाऽशुभं क्वचित्
रामनाम द्विजश्रेष्ठ! सर्वाशुभनिवारणम्। कामदंमोक्षदं चैव स्मर्तव्यं सततं बुधैः॥
रामरामेति विप्रर्षे! यस्मिन्न स्मर्यते क्षणे। क्षणः स एव व्यर्थः स्यात्सत्यमेव मयोच्यते

स्मरन्तो हरिनामानि नावसीदन्तिमानवाः ! ॥ १०६ ॥
जन्मकोटिदुरितक्षयमिच्छुः सम्पदं च लभते भुवि मर्त्यः ।
विष्णुनामसततं भुवि भक्त्या मोक्षदायिमधुरं स्मरतुम्म ॥ १०७ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे रामनामप्रशंसनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः

### हरिभक्तिप्रशंसायां शबरजात्युत्पन्नस्यचक्रिकस्याख्यानम्

व्यास उवाच ।

भूयएव द्विजश्रेष्ठ! महाविष्णोः परात्मनः । ब्रवीमि शृणुमाहात्म्यं सर्वदुःखविनाशनम्
ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चान्येऽन्त्यजास्तथा । हरिभक्तिप्रपन्नायेतेकृतार्था न संशयः
हरेरभक्तो विप्रोऽपि विज्ञेयःश्वपचाधिकः । हरिभक्तःश्वपाकोऽपि विज्ञेयोब्राह्मणाधिकः
स कथं ब्राह्मणो यस्तु हरिभक्तिविवर्जितः । स कथं श्वपचो यस्तु भगवद्भक्तिमानसः
अव्याजेन यदा विष्णुः श्वपाकेनाऽपि पूज्यते । तदा पश्येत्तमप्येवं चतुर्वेदद्विजाधिकम्
पुराऽऽसीच्चक्रिको नाम शबरो लोककर्षकृत् ॥ सुजातिवृत्तिहीनश्च युगेद्वापरसञ्ज्ञके ।
विप्रवादीजितक्रोधः परहिंसाविवर्जितः । दयालुर्दम्भहीनश्च पितृमातृपरायणः ॥ ७
न कृतोवैष्णवालापो मोक्षशास्त्रं न चश्रुतम् । तथापि जाता तच्चित्ते हरिभक्तिरचञ्चला
हरे केशव गोविन्द वासुदेव जनार्दन । इत्यादीनिस्मरन्नित्यं स च नामानि चक्रिणः
वन्यंफलंच यत्किञ्चित्प्राप्नोति द्विजसत्तम !। आदौ ददाति तद्वक्त्रे निजे शबरवंशजः॥
तन्माधुर्यं ततो ज्ञात्वा वक्त्रान्निष्कास्यतत्पुनः । ददातिहरयेभक्त्या सुप्रीतःप्रतिवासरम्
उच्छिष्टं वाऽप्यनुच्छिष्टं द्वयमेव न वेत्ति सः । निजजातिस्वभावो हि सततं मूर्ध्नि वर्तते
कदाचित्स द्विजश्रेष्ठ! काननाभ्यन्तरे भ्रमन् । फलमेकं प्राप्यपक्वंप्रियालस्यतुशाखिनः

अथाऽसौ हर्षितस्तस्य फलमासीत्तु दुर्लभम् । ससंरम्भेणतल्लब्ध्वानिजवक्त्रान्तरेददौ

स ददौ तत्फलं यावन्निजवक्त्रान्तरे द्विज ! ।

प्रविवेश गलं तावत्तत्फलं शृणु जैमिने ! ॥ १५ ॥

तावत्सव्येन हस्तेन गलरन्ध्रं बबन्ध सः । यत्नाद्विधृत्य सव्येन पाणिना सकलं द्विज!

चक्रिकश्चिन्तयामास हरिभक्तिपरायणः । फलमेतद्यदा तस्मै न ददामि मुरारये ॥१७॥

न जातः कोऽपि संसारे तदाऽहमिव पातकी । हरिं सञ्चिन्त्यबहुधास चकारमतिंततः

तथापि तत्फलंतस्य ननिष्क्रान्तंगलाद्द्विज !। हरेरैकान्तभक्तोऽसौछित्त्वापरशुनागलम्

आनीय तत्फलं पक्वं ददौ देवाय विष्णवे । तत्सन्निधिं समायातस्तमेवहृदिचिन्तयन्

रुधिरोक्षितसर्वाङ्गः पतितः क्षितिमण्डले । तंदृष्ट्वा भगवान्विष्णुर्गतासुंव्यथितोऽभवत्

एतस्य सदृशो भक्तो मम कोऽपि न विद्यते । यतो निजगलंछित्त्वाममसन्तोषणंकृतम्

यथा भक्तिमताऽनेन सात्त्विकं कर्म वै कृतम् ।

यद्दत्त्वाऽऽनृण्यमाप्नोमि तथा वस्तु किमस्ति मे ॥ २३ ॥

धन्योऽयमतिधन्योऽयंधन्योऽयं नाऽत्रसंशयः । प्राणानपिपरित्यज्यममसन्तोषणंकृतम्

ब्रह्मत्वंवा शिवत्वंवा चक्रित्वंवापिदीयते । तदाऽप्याऽऽनृण्यमेतस्य भक्तस्यनहिगम्यते

इत्युक्त्वाऽत्यन्तसन्तुष्टो भगवान्गरुडध्वजः । स्वहस्तकमलेनाऽस्यततोमस्तकमस्पृशत्

तद्धस्तकमलस्पर्शाच्छ्व्वरोऽसौ गतव्यथः । समुत्तस्थौ महासत्त्वो नारायणपरायणः॥

व्यास उवाच ।

ततोऽस्य भक्तश्रेष्ठस्य निजवस्त्रेण केशवः । पुत्रस्येव पिता गात्ररजोमार्जितवान्द्विज !

चक्रिकस्तंसमालोक्य मूर्तिमन्तंजनार्दनम् । वाचामधुरयाऽस्तौषीत्प्रह्वमस्तःकृताञ्जलिः

चक्रिक उवाच ।

गोविन्दकेशवहरेजगदीश विष्णो!जानामि यद्यपि न ते स्तुतियोग्यवाक्यम्

स्तोतुं तथापि रसना मम वाञ्छति त्वां स्वामिन्प्रसीद हर दोषमिमंप्रवृद्धम्

त्यक्त्वा भवन्तमखिलेश्वरचक्रपाणे ! ह्यन्यं यजन्ति मनुजा जगतीह ये वै ।

मूढास्त एव दुरितप्रकरैकधाम सानुग्रहस्त्वमसि मय्यपि देव यस्मात् ॥

जानाति देव! भवतो भुवनैकनाथ भक्त्यैव यद्यपि नृणां भवबन्धनाशः।
एकान्तपापशबरान्वयलब्धजन्मा विष्णोस्तथापि भगवान्मयि सुप्रसन्नः॥
यस्य प्रभो! तव मनोज्ञकरारविन्दस्पर्शं चतुर्मुखमुखाअपि देववृन्दाः।
न प्राप्नुवन्ति विदितस्यमयाऽद्य लब्धं त्वत्तो न कोऽपि सदयो निजसेवकेषु
येन त्वया विनिहतस्त्रिदशाद्यवैरी कंसासुरो निमिसुतः कृतसर्वपापः।
सेन्द्रामरप्रकरमर्त्यहिताय पूर्वं तस्मै नमः परममङ्गलदाय तुभ्यम्॥ ३४॥
येन त्वयाऽतिबलिना यमलार्जुनौ तौ देवोत्तमेन निहतौ वसुदेवजेन।
दुष्टश्च कालयवनो युधि धेनुकश्च तस्मै नमोऽस्तु नवमेघनिभाय तुभ्यम्॥
श्रीकृष्ण माधव यदूत्तम! भो ह्यनन्त! येन त्वयाऽमरपतेरचलाविभूतिः।
पूर्वं कृता भगवता परमेश्वरेण तस्मै नमोऽस्तु यदुवंशपराय तुभ्यम्॥३६॥
पारिजातो हृतो येन जितश्चाऽऽखण्डलस्त्वया। लीलाजितमहेशाय तस्मैतुभ्यंनमोनमः
कृत्वा वृकोदरं हेतुं जरासन्धो निपातितः। बाणासुरस्य विच्छिन्ना बाहवश्चत्वयापुरा
शिशुपालो हतो येन तस्मै नित्यं नमोनमः। भूमेरपहृतो भारस्त्वया येन महात्मना
क्षत्त्रियान्मायया हत्वा तस्मै नित्यं नमोनमः॥ ४०॥

व्यास उवाच।

इति तेन स्तुतो विष्णुश्चक्रिकेण महात्मना। उवाच परमप्रीतो वरं वृण्विति जैमिने॥

चक्रिक उवाच।

परं ब्रह्म परंधाम परमात्मन्कृपामय!! पश्यामि त्वामहं साक्षाद्वरैः किमपरैर्द्विज!॥
न ध्याता भवती मूर्तिः पूजा च न कृता तव। नैवेद्यैर्दिव्यपुष्पैश्च दिव्यधूपैः प्रदीपकैः
नतेस्मृतानि नामानि कदाचिद्भगवन्मया। त्वत्पादसलिलं स्वामिन्विधृतं नहि मूर्धनि
न भुक्तं तव नैवेद्यं त्वद्व्रतं न मया कृतम्। तथाप्यहमपश्यं त्वां किंकरोम्यपरैर्वरैः
शबरान्वयजन्माऽस्मि सर्वधर्मबहिष्कृतः। तथापि पादपद्मं ते दैवतैरपि दुर्लभम्॥
तद्देवाऽद्य मया प्राप्तं वरैः किमपरैर्मम। तथापि कमलाकान्त!वरदित्सुर्यदा भवान्॥
त्वयि तिष्ठतु मे चित्तं सदाऽपि त्वदनुग्रहात्॥ ४७॥

श्रीभगवानुवाच ।

वचनामृतवर्षेण त्वदीयेन महाशय ! । सम्प्राप्ता महती तुष्टिर्मया सेवकसत्तम ! ॥४८॥
यदिदं वत्स!मे दत्तं त्वया फलमनुत्तमम् । अनेनाऽत्यन्ततुष्टोऽस्मि भक्तिंगृह्णामि हर्षितः

व्यास उवाच ।

इत्युक्त्वा भगवान्विष्णुर्भक्तिग्राही दयामयः । तमालिङ्गितवान्भक्तं चतुर्भिर्दीर्घबाहुभिः

श्रीभगवानुवाच ।

तुष्टोऽस्मि भवतोभक्त्या वत्स!चक्रिक!सत्तम !। यदिदंप्रार्थितं वत्स! तत्तथैवभविष्यति
इत्युक्त्वा तं पुनर्भक्तमालिङ्ग्य परमेश्वरः । तत्रैवाऽन्तर्दधे विप्र!विश्वात्मा विश्वपालकः
स चक्रिकोऽतिसन्तुष्टो हरिभक्तिपरायणः। पुत्रदारादिकं त्यक्त्वा जगाम द्वारकां पुरीम्
तत्र चैवं समासाद्य कृपया कमलापतेः । आयुषोऽन्ते ययौ मोक्षं देवानामपि दुर्लभम्
तस्माद्भक्तवशो देवो भक्तिमात्रेण तुष्यति । न च स्तोत्रैर्न वित्तैश्च न तपोभिर्जपेन च॥

फलं यद्यपि चोच्छिष्टं दत्तं तेन द्विजोत्तम ! ।
तथापि तुष्टवान्विष्णुर्ज्ञात्वा भक्तिमचञ्चलाम् ॥ ५६ ॥
तस्मान्नारायणो देवः पूजनीयो मुमुक्षुभिः ॥ ५७ ॥
ये यजन्ति दृढया किल भक्त्या वासुदेवचरणाम्बुजयुग्मम् ।
वासवादिविबुधप्रवरैर्ज्यं ते व्रजन्ति मनुजाः किल मोक्षम् ॥ ५८ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे चक्रिकशबरभक्तिसहितं हरिभक्तिप्रशंसनं नाम षोडशोऽध्यायः ॥ १६ ॥

———

# सप्तदशोऽध्यायः

## पुरुषोत्तमक्षेत्रे भद्रतनुब्राह्मणवृत्तान्तं वेश्योपदेशाद्दान्तमुनेराश्रमे भद्रतनोर्गमनं तस्याऽऽदेशाद्विष्णुभक्तिकरणं प्रसन्नेनविष्णुनातस्मैवरप्रदानम्

जैमिनिरुवाच ।

पुनरेव गुरो! ब्रूहि माहात्म्यं कमलापतेः । हरेः कथामृतं पीत्वा तृप्तिर्वै कस्य जायते॥

व्यास उवाच ।

त्वत्तुल्यः कोऽपि संसारे सुकृती नहि विद्यते ।
यतः केशवमाहात्म्यं श्रोतुमिच्छसि भक्तितः ॥ २ ॥

नारायणकथा रम्या पुनात्येवं जगत्त्रयम् । श्रोतारं पृच्छकं चैव वक्तारं च द्विजोत्तम!
शृणु लक्ष्मीपतेर्वत्स!माहात्म्यं पापनाशनम् । कथयामि समासेन चतुर्वर्गफलप्रदम् ॥
भक्त्या परमया विष्णुमेकाहमपि योऽर्चयेत् । जन्मकोटिकृतं पापं सद्यस्तस्य हरेद्धरिः
पुण्यात्मा सकथंमर्त्योयेन नाऽऽराधितोहरिः । सकथं पातकी यस्यभक्तिर्नारायणेप्रभौ
अस्ति सर्वपुरश्रेष्ठं पुरुषोत्तमसञ्ज्ञकम् । पुरं सर्वगुणैर्युक्तं सर्वदेवगणाश्रयम् ॥ ७ ॥
सर्वेषामेव तीर्थानां वरिष्ठं तन्निगद्यते । यतस्तस्मिन्पुरे रम्ये साक्षाद्वसति केशवः॥
तत्र भद्रतनुर्नाम पूर्वमेकोऽभवद्द्विजः । सुन्दरः प्रियवादी च पवित्रकुलसम्भवः ॥६॥
सम्प्राप्तयौवनोविप्रः सुन्दरःकाममोहितः । परलोकभयं त्यक्त्वा वारस्त्रीनिरतोऽभवत्
न वेदाध्ययनं चक्रे पुराणानिच सर्वशः । तत्याजोत्तमसञ्ज्ञांच पाखण्डजनसङ्गमात् ॥
अयाज्यदानग्राही च परद्रव्यापहारकः । अभवद्धर्मनिन्दी च स विप्रः पापतत्परः ॥१२
तत्याज ब्राह्मणाचारं तथैव सत्यभाषणम् । गुरूणामतिथीनां च पूजनं ब्राह्मणाधमः
यद्यत्पापतरं कर्म तत्तदेव विधीयते । न च पुण्यतमं कर्म कदाचित्तेन जैमिने ! ॥१४
एकदा कृतपापोऽसौ लोकलज्जाभयान्वितः । श्राद्धं चकारविप्रो वै श्राद्धभक्तिविवर्जितः
वारनारीमिति प्राह गतः स निशि तद्गृहम् ॥ १५ ॥

ब्राह्मण उवाच ।

एतद्विशालजघने! पितृश्राद्धदिनंमम । आयातस्त्वद्गुणैर्बद्धस्तथाऽपि निलयं तव ॥१६
पश्य रात्रीमिमां कान्ते! सर्वलोकभयावहाम् । स्रवदम्बुदसङ्घातपरिव्याप्तं नभःस्थलम्
नवाम्बुलुप्तमार्गायां त्वद्गुणाकृष्टमानसः । अस्यामपि विभावर्यां तवाऽहं गृहमागतः
मेघविद्युत्प्रतीपेन कामेनाऽर्थोपदेशिना । त्वद्गुणाध्यानविश्वास आगतोऽहंनिशिप्रिये
त्वामदृष्ट्वा क्षणमपि प्रीतिर्मे नहि जायते । अपि दुःखेन हे तन्वि! त्वां द्रष्टुमहमागतः
तीर्थतोयाभिषेकेणकान्ते!किंमेप्रयोजनम् । त्वत्प्रेमतीर्थतोयेन सिक्तःप्राप्तोऽस्म्यहंदिवि
परत्र सुखदान्देवानाराध्य मम किंफलम् । जीवतैव मया स्वर्गः प्राप्यते त्वत्प्रसादतः

अपकीर्तिभयात्कान्ते ! श्राद्धकर्म कृतं गृहे ।
अस्मिञ्छ्राद्धे मम श्रद्धा स्वल्पाऽपि नहि विद्यते ॥ २३ ॥

त्वंमे जपस्तपस्त्वं मे त्वम्मेनीतिश्चसुन्दरि !। त्वामेकामेव संसारे सर्वभावेन सुन्दरि!

प्रपन्नोऽस्मि सदाऽहं ते आज्ञाकारी करोमि किम् ॥ २५ ॥

सुमध्यमोवाच ।

त्वया पुत्रेण तातस्तु पुत्रहीनइवाऽभवत् । पितृश्राद्धदिनेऽपि त्वं मैथुनं कर्तुमिच्छसि
दुर्मते ! मैथुनं यस्तु कुरुते पितृवासरे । रेतोभोजिनएव स्युः पितरस्तस्य सोऽपि च ॥
कुरुते मैथुनं मूढो मोहात्पितृदिने यदि । तच्छ्राद्धं राक्षसग्राह्यं भवेन्नास्त्यत्र संशयः ॥
मय्यद्धा गदितंयत्ते यथास्नेहेनमानसम् ॥ तथा यदिभवेद्विष्णौतदा प्राप्नोतिकिंनहि ॥
यमदण्डान्तरस्थायि जीवितंच शरीरिणाम् । तथापि पातकं मूढ! कुरुषे निर्भयः सदा
जलबुद्बुदवन्मूढ!क्षणविध्वंसि जीवितम् । किमर्थंशाश्वतधिया करोषिदुरितं सदा ॥
ललाटे लिखितं यस्य मृत्युरित्यक्षरद्वयम् ॥ स कथं कुरुते पापं समस्तक्लेशदायकम्
अहो!मायामहाविष्णोरेका बलवती क्षितौ । यतः पापं प्रकुर्वाणः सततं हर्षितो द्विज!
स्थानंपापाय मे देहि निजदेहे दुराश्रये । दहत्याश्रममेधो हि वीतिहोत्र इव ज्वलन् ॥

व्यास उवाच ।

दैवप्रेरितया तत्र तयेत्युक्तं सुवेश्यया । मनसा चिन्तयामास ब्राह्मणः कृतपातकः ॥

धिग्धिङ्मां च महापापं मूढं पातकिनां वरम् ।
वेश्याया एव यज्ज्ञानं तन्मे नास्ति दुरात्मनः ॥ ३६ ॥

ब्राह्मणस्य कुले शुद्धे जन्म सम्प्राप्य वै मया । आत्मघातकरं पापं नित्यमेव कृतं महत्
जातो यदा ध्रुवो मृत्युर्मृतेस्वामी यदा यमः ॥ अविवेकतया पापं कथं तर्हि करोम्यहम्
जपस्तपस्तथा होमो वेदाध्ययनमेवच । विप्राचारोऽतिथेः पूजा गुरुभक्तिर्द्विजार्चनम्
पितृयज्ञादिकं कर्म पूजा च कमलापतेः । मया न चक्रे कस्माद्वै भविष्यत्युत्तमा गतिः
मार्कण्डेयं महात्मानं सर्वधर्मविदाम्वरम् । तुष्टाव स द्विजो वाचा प्रणम्य भुवि दण्डवत्

ब्राह्मण उवाच ।

नमस्तुभ्यं द्विजश्रेष्ठ! दीर्घजीव नमोऽस्तुते । नारायणस्वरूपाय नमस्तुभ्यं महात्मने ॥
नमो मृकण्डपुत्राय सर्वलोकहितैषिणे । ज्ञानार्णवाय वै तुभ्यं निर्विकाराय वै नमः ॥
स्तुतस्तेनेति विप्रेण मार्कण्डेयो महातपाः । उवाच परमप्रीतः सर्वशास्त्रार्थपारगः ॥

मार्कण्डेय उवाच ।

तवभक्तयाऽतितुष्टोऽस्मिमहाभाग!वरंवृणु । तवाऽभिलषितंसद्यःसाधयिष्यामिनान्यथा

ब्राह्मण उवाच ।

अहंपापात्मनां श्रेष्ठो द्विजाचारविवर्जितः । परहिंसान्वितो नित्यं परस्त्रीनिरतः सदा ॥
मायामूढेन विप्रेन्द्र!सदा पापं कृतं महत् । नाल्पंवाऽपिकृतं पुण्यं कदाचिदपि सादरम्
संसारसागरे घोरे दुःखदेऽत्यन्तभैरवे । कथंभवति निस्तारोमहापातकिनो मम ॥

मार्कण्डेय उवाच ।

कृतपापोऽपि विप्रेन्द्र! त्वंहिपुण्यात्मनां वरः । यतोबुद्धिरियंजाता त्वयि संसारदुर्लभा
पुण्यात्मनां पुण्यवृष्टिर्वर्धते प्रतिवासरम् । पापात्मनां पापवृष्टिर्वर्धते तु दिनेदिने ॥
पापात्मनाऽपिभवता पापवृष्टिर्निवार्यते । अतस्तुभ्यं जगन्नाथः प्रसन्नइव लक्ष्यते॥५२॥
पापं कृत्वाऽपियोमर्त्यःपापाद्भूयोनिवर्तते । तमुत्तमं नरं प्राहुःपूर्वजन्मार्ऽचिताच्युतम्
निजभक्तं महाविष्णुर्दृष्ट्वा पापरतं प्रभुः । ददाति विपुलां बुद्धिं यथा भवति सद्गतिः ॥
अतस्त्वं ब्राह्मणश्रेष्ठ! प्रतिजन्माच्युतार्चकः । अचिरेणैव भद्रन्ते भविष्यति न संशयः॥

यद्यत्पृष्टं त्वया विप्र! मत्तः श्रोष्यसि तं नहि।
यतो नित्यक्रियाकालो मम सम्प्रति वर्तते ॥ ५९ ॥
दान्तो नाम द्विजः कश्चिदस्ति सर्वार्थतत्त्ववित्। कथयिष्यति तत्सर्वं स च तस्याऽऽश्रमं व्रज
तेनोपदिष्टोऽसौ विप्रो मार्कण्डेयेन धीमता। दान्ताश्रमं ययौ विप्रं पवित्रमतिसुन्दरम्
अश्वत्थैश्चम्पकैश्चैव बकुलैः प्रियकैस्तथा। अन्यैश्च पुष्पितैर्वृक्षैः शोभितं सुमनोहरम्
प्रफुल्लकुसुमामोदपरिव्याप्तदिगन्तरम्। गुञ्जद्भ्रमरसङ्घातं फलशब्दातिशब्दितम् ॥ ६१ ॥
मन्दं मन्दं वहद्वायुशीतलञ्चैव वारि च। शतश्वापदसङ्कीर्णं शिष्योपशिष्यसङ्कुलम् ॥
तस्याऽऽश्रमं ततो विप्रः प्रविश्याऽतिमनोहरम्।
ददर्श दान्तं तत्त्वज्ञं सर्वशिष्यगणैर्वृतम् ॥ ६१ ॥
स्तुत्वा तं ब्राह्मणश्रेष्ठ! दान्तं नारायणात्मकम्। ववन्दे चरणौ तस्य शिरसा स द्विजोत्तमः

दान्त उवाच।

कस्त्वं भद्र! समायातः किमस्त्यत्र प्रयोजनम्।
ब्रूहि तत्त्वं तु मां स्तौषि हेतुना केन साम्प्रतम् ॥ ६३ ॥

भद्रतनुरुवाच।

ब्राह्मणोऽहं महाभाग ब्राह्मणाचारवर्जितः। नाम्ना भद्रतनुः ख्यातो विहिताखिलपातकः
संसारपापविच्छेदः कथं मे पापिनो भवेत्। एतन्मे कथय ब्रह्मन्यतस्त्वं सर्वतत्त्ववित्

दान्त उवाच।

शृणु विप्र परं गुह्यं तव स्नेहान्मयोच्यते। येन संसारपाशस्य विच्छेदो भवते नृणाम्
त्यज पाखण्डसंसर्गं सङ्गं भज सतां सदा। कामं क्रोधं च मोहं च लोभं च दर्पमत्सरौ
असत्यं परहिंसां च त्यज यत्नादपि द्विज!। स्मरन्नामानि सततं महाविष्णोर्महात्मनः
सम्मार्जनं द्विजश्रेष्ठ! तथोपलेपनं पुनः। मार्गशोभाश्च दीपश्च केशवायतने कुरु ॥ ६९
कुरु ब्राह्मणसेवाश्च ज्ञातिसेवाश्च सर्वदा। कुर्वन्नातोयदानं च नित्यं पञ्चमहाध्वरान्
कथां शृणु हरेर्मन्त्रं जप त्वं द्वादशाक्षरम्। कर्माण्येतानि सर्वाणि कुर्वतस्तव सत्तम!
भविष्यत्युत्तमं ज्ञानं ज्ञानान्मोक्षमवाप्स्यसि ॥ ७२ ॥

ब्राह्मण उवाच ।

यान्येतानि त्वया ब्रह्मन्प्रोक्तानि शुभदानि वै । तेषां विवरणं ब्रूहि को मोहो दम्भमत्सरौ
किमसत्यंच का हिंसा दया शान्तिर्दमश्च कः । समदृष्टिश्च का प्रोक्ता का पूजा कमलापतेः

अहोरात्रश्च कः प्रोक्तः किं विष्णुस्मरणं तथा ।
के वा पञ्चमहायज्ञाः को मन्त्रो द्वादशाक्षरः ॥ ७५ ॥

एषां विवरणं सर्वं ब्रूहि ब्राह्मणसत्तम ! । तथा तव प्रसादेन प्राप्नोमि परमं पदम् ॥७६

दान्त उवाच ।

ये वेदसम्मतं कार्यं त्यक्त्वाऽन्यत्कर्म कुर्वते ।
निजाचारविहीना ये पाखण्डास्ते प्रकीर्तिताः ॥ ७७ ॥

निजाचारग्राहिणो ये कुर्वते वेदसम्मतम् । पापाभिलापरहिताः सज्जनास्ते प्रकीर्तिताः
योऽभिलापः सदा स्त्रीषु विभवोपार्जनादिषु । वर्त्तते ब्राह्मणश्रेष्ठ! स कामइति कथ्यते॥
समाकर्ण्याऽऽत्मनो निन्दांयस्तापो हृदि जायते । सक्रोधइति विज्ञेयःसर्वधर्मावघातकः
परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते । अभिलाषो द्विजश्रेष्ठ!स लोभ इति कीर्तितः॥
मम माता मम पिता ममेयं गृहिणी गृहम् । एतदन्यन्ममत्वं हि स मोह इति कीर्तितः
अहं महात्मा धनवान्न तुल्यःकोऽपिभूतले । इदं यज्जायते चित्ते मदःप्रोक्तः स कोविदैः

निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम् ।
इत्यात्मानं वदेद्यस्तु धिक्कारः स च मत्सरः ॥ ८४ ॥

यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययम् ॥८५॥
ऐश्वर्यं दारपुत्राद्यायान्त्यमुष्य कदाक्षयम् । इति या जायतेचित्तेसा हिंसा परिकीर्तिता
यत्नादपि परक्लेशं हर्तुं यद्धृदि जायते । इच्छाभूमिर्द्विजश्रेष्ठ ! सा दया परिकीर्तिता

या तुष्टिर्जायते चित्ते शान्तिः सा गद्यते बुधैः ।
कुत्सितात्कर्मणोऽन्यत्र यच्चित्तविनिवारणम् ॥ ८८ ॥

सङ्कीर्तितो दमः प्राज्ञैः सम्मतस्तत्त्वदर्शिभिः । दुःखे सुखे च विप्रेन्द्र!या तुष्टिर्वर्ततेसदा
तथा शत्रौ च मित्रे च समदृष्टिर्हि सा स्मृता । नैवेद्यगन्धपुष्पाद्यैः श्रद्धया पुरुषो हरेः

योऽर्चनं कुरुते विप्र! सा पूजा परिकीर्तिता। मध्याह्ने चैव रात्रौ च लङ्घनं यद्विधीयते॥
तद्विज्ञेयमहोरात्रं पूर्वापरदिनाशनम्। आत्मनः केशवस्याऽपि द्वयोरपि च सत्तम!॥
यदेकीकरणं तच्च विष्णुस्मरणमुच्यते। ब्रह्मयज्ञो नृयज्ञश्च देवयज्ञश्च सत्तम!॥९३॥
पितृयज्ञो भूतयज्ञः पञ्चयज्ञाः प्रकीर्तिताः। नमो भगवते वासुदेवायोङ्कारपूर्वकम्॥
महामन्त्रमिमं प्राहुस्तत्त्वज्ञा द्वादशाक्षरम्। इति ते कथितं सर्वं पृष्टं ब्राह्मणसत्तम!॥
यज्ज्ञात्वा मानवाः सर्वे लभन्ते ज्ञानमुत्तमम्। ततः प्रतिदिनं विप्र! नाम्नामष्टोत्तरं शतम्
पठित्वा कमलाभर्तुर्दुर्लभं मोक्षमाप्स्यसि॥ ९७॥

भद्रतनुरुवाच।

ब्रूहि लक्ष्मीपतेर्विष्णोर्नाम्नामष्टोत्तरं शतम्॥ ९८॥

दान्त उवाच।

शृणु विप्र! प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम्। सहस्रनाम्नामाकृष्य सारं विष्णोः परात्मनः
अष्टोत्तरशतं नाम्नां महापातकनाशनम्। पठितव्यं यथा ध्यात्वा शृणु ध्यानं मयोच्यते
अतसीकुसुमाकारं प्रफुल्लकमलेक्षणम्। गवां चरणधूलीभिर्भूषिताखिलविग्रहम्॥१०१
गोपुच्छवालपाशेन मण्डितोत्तममस्तकम्। वंशीरन्ध्रपरिन्यस्तरुचिरौष्ठपुटं प्रभुम्॥

गोगोष्ठवासिभिः स्निग्धैः शिशुभिः परिवारितम्।
पीताम्बरं स्मेरमुखं ध्यायेत्कृष्णास्यमुत्तमम्॥ १०३॥
ॐ नमोऽस्य कृष्णाष्टोत्तरशतनामस्तोत्रस्य वेदव्यासऋषिरनुष्टुप्छन्दः।
श्रीकृष्णो देवता श्रीकृष्णप्रीत्यर्थे जपे विनियोगः॥

नमः कृष्णः केशवश्च केशिशत्रुः सनातनः। कंसारिर्धेनुकारिश्च शिशुपालरिपुः प्रभुः॥
देवकीनन्दनः शौरिः पुण्डरीकनिभेक्षणः। दामोदरो जगन्नाथो जगत्कर्ता जगन्मयः॥
नारायणो बलिध्वंसी वामनोऽदितिनन्दनः। विष्णुर्यदुकुलश्रेष्ठो वासुदेवो वसुप्रदः॥
अनन्तः कैटभारिश्च मल्लजिन्नरकान्तकः। अच्युतः श्रीधरः श्रीमाञ्छ्रीपतिः पुरुषोत्तमः
गोविन्दो वनमाली च हृषीकेशोऽखिलार्तिहा। नृसिंहो दैत्यशत्रुश्च मत्स्यदेवो जगन्मयः
भूमिधारी महाकूर्मो वराहः पृथिवीपतिः। वैकुण्ठः पीतवासाश्च चक्रपाणिर्गदाधरः॥

शङ्खभृत्पद्मपाणिश्च नन्दकीगरुडध्वजः । चतुर्भुजो महासत्त्वो महाबुद्धिर्महाभुजः॥११०
महोत्सवो महातेजा महाबाहुप्रियः प्रभुः । विष्वक्सेनश्च शार्ङ्गी च पद्मनाभोजनार्दनः॥
तुलसीवल्लभोऽपारः परेशः परमेश्वरः । परमक्लेशहारी च परत्रसुखदःपरः ॥ ११२ ॥
हृदयस्थोऽम्बरस्थो यो मोहदो मोहनाशनः । समस्तपातकध्वंसी महाबलबलान्तकः ॥
रुक्मिणीरमणो रुक्मिप्रतिज्ञाखण्डनो महान् । दामबद्धः क्लेशहारी गोवर्धनधरो हरिः
पूतनारीर्मुष्टिकारिर्यमलार्जुनभञ्जनः । उपेन्द्रो विश्वमूर्तिश्च श्योनपादः सनातनः ॥११५
परमात्मा परब्रह्म प्रणतार्तिविनाशनः । त्रिविक्रमो महामायो योगविद्विष्टरश्रवाः ॥
श्रीनिधिः श्रीनिवासश्चयज्ञभोक्तासुखप्रदः । यज्ञेश्वरो रावणारिःप्रलम्बघ्नोऽक्षयोऽव्ययः
सहस्रनाम्नां चैतत्ते नाम्नामष्टोत्तरं शतम् । विष्णुप्रीतिकरं सर्वं सर्वपापविनाशनम् ॥
दुःस्वप्ननाशनं चैव ग्रहपीडाविनाशनम् । सर्वरोगक्षयकरं परमैश्वर्यदं तथा ॥ ११९ ॥
सर्वोपद्रवविध्वंसि सर्वकर्मफलप्रदम् । मया प्रोक्तं द्विजश्रेष्ठ! वैष्णवप्रीतिहेतवे ॥१२०
त्रिसन्ध्यं यः पठेन्नित्यं भक्तितः पुरतो हरेः । शतमष्टोत्तरं नाम्नां तस्य तुष्टः सदा हरिः
श्राद्धे च यः पठेदेतद्भक्तिमान्वैष्णवो जनः । सन्तुष्टाः पितरस्तस्य प्रयान्ति परमम्पदम्
यज्ञकाले पठेद्यस्तु देवताराधने तथा । दानकाले च यात्रायां स वै तत्फलमाप्नुयात्

अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां स्तवस्याऽस्य प्रकीर्तनात् ॥ १२४ ॥

ये पठन्ति हरेर्भक्तया नाम्नामष्टोत्तरं शतम् । नाऽशुभं विद्यते तेषां कदाचिदपि भूतले ॥

दान्त उवाच ।

गच्छ ब्राह्मण! भद्रन्ते प्रोक्तेनविधिनामया । समाराध्य हरिं भक्त्यापरमंक्षेममाप्स्यसि
एवं प्रबोधितस्तेन दान्तेन परमार्थिना । तस्मिन्क्षेत्रवरे पुण्ये हरिपूजापरोऽभवत् ॥

नित्यं तु भक्त्या विप्रोऽसौ पञ्चाहानि च जैमिने ! ।
दान्तप्रोक्तेन विधिना चकार हरिपूजनम् ॥ १२८ ॥

ज्ञात्वा भक्तिं हरिस्तस्य सुदृढां करुणामयः । आविर्बभूव सहसा कोटिसूर्यद्युतिर्यांऽशुमान्
तं दृष्ट्वा जगतामीशं कमलाप्रियमच्युतम् । ववन्दे शिरसा विप्रस्तत्पादकमलद्वये ॥

अथाऽसौ ब्राह्मणश्रेष्ठो हर्षनिर्भरमानसः । कृताञ्जलिर्जगन्नाथमस्तौषीत्कमलापतिम् ॥
दृष्टिं हरे! दुरितगामपि मे कृपालां भक्तिं निजां प्रति विभो! शुभदामनैषीः ।
तस्मादहं विहितविस्तरपातकोऽपि ग्राम्यस्त्वयाऽकारि पुमानिवाऽद्य ॥
रुष्टे त्वयि त्रिदशवन्दितपादयुग्मे दृष्टिः प्रयाति दुरितं खलु मानवस्य ।
तुष्टे च याति सुकृतं प्रति सैव दृष्टिर्ज्ञातं मयैव परमेश्वर ! केवलं च॥१३३
त्वांवच्मिनाथभवतःस्मरणं प्रभावंयस्माद्व्रजामि निखिलार्जितपातकोऽपि
स्थानं जगाम परमं त्रिदशैकलभ्यमारुह्य शुद्धकनकच्छुरितं विमानम् ॥१३४
त्वत्पादपद्मसलिलस्य सदा गुणाढ्यो व्याधः स वेत्ति कनिकः कृतसर्वपापः
त्वद्वेश्ममार्जनफलं जगदेकनाथ! यज्ञध्वजः क्षितिपतिः सुरवन्दितश्च ॥१३५
वेश्मोपलेपनफलं भवतो मुरारे ! सृष्टिस्थितिप्रलयकारणईश्वरस्य ।
जानाति पन्नगरिपुध्वजयज्ञमाली भ्राता च तस्य कृतपापभयः सुमाली ॥
हरिं प्रदक्षिणीकृत्य भवन्तं यत्फलं भवेत् । धर्म एव स जानाति नान्यः कश्चिज्जगत्त्रये
तव चित्तं दयानाथ!गदितंभुवि कःक्षमः । त्वांविद्ध्वाऽपि शरैर्व्याधोजगाम परमंपदम्
निन्दित्वाऽपि जगन्नाथ! भवन्तं त्रिदशेश्वरम् ।
शिशुपालो ययौ मोक्षं तव भक्तस्य का कथा ॥ १३६ ॥
ब्रह्मरूपेण येनाऽसौत्वया सृष्टमिदंजगत् । त्वयितस्मिन्महाविष्णो! रमतांममानसम्
सर्वो विष्णो! त्वयाऽनेन क्रियते जगतःक्षयः । रुद्ररूपेण संसारे तस्मैतुभ्यं नमोऽस्तुमे
यस्मादल्पतमंनास्ति यस्मान्नास्तिमहत्तमम् । येनव्याप्तंजगत्सर्वं त्वयातस्मैनमोऽस्तुते
नेत्राभ्यां यस्य देवस्य सूर्योऽजनि दिवाकरः । मुखादग्निश्च जायेततव तस्मैनमोऽस्तुते
यस्य श्रोत्राद्वायवोऽपि जाताः प्राणाश्चकेशव !। तव तस्मै सुरश्रेष्ठ!नमोऽस्तुममसर्वदा
लक्ष्मीर्यस्य सदा क्रोडे श्यामाङ्गस्य सुनिर्वृता ।
सौदामिनीव मेघस्य तव तस्मै नमोऽस्तु ते ॥ १४५ ॥
गन्तुं महिम्नां सीमानं ब्रह्माद्याअपिनिर्जराः । न शक्नुवन्तिवै यस्यतव तस्मैनमोऽस्तुते
धर्माणां स्थापनार्थाय विनाशायच्च पापिनाम् । युगेयुगे यःप्रभवेत्तस्मैतुभ्यंनमोऽस्तुमे

मायया मोहितं येन जगदेतन्महात्मना। क्षिणोति मायया शम्भुर्यस्तस्मैते नमोऽस्तुमे
भक्तिमात्रेण यस्तुष्टो न धनैर्नस्तवैस्तथा। न दानैर्न तपोभिश्च तस्मैतुभ्यं नमोऽस्तु मे
गवां च ब्राह्मणानां च साधूनांचहितन्तथा। कृपां च कुरुते यस्तुतस्मैतुभ्यंनमोऽस्तुमे
अनाथानांच बन्धूनां योगिनांदुःखिनान्तथा। दुःखं हरतियोदेवस्तस्मैतुभ्यंनमोऽस्तुमे
मनुष्येषु च देवेषु गजेषु सकलेषु च। वर्तते यः समत्वेन तस्मै तुभ्यं नमोऽस्तु मे॥
यस्मिंस्तुष्टे पर्वतोऽपि सद्य एव तृणायते। शैलायते तृणंरुष्टे तस्मै तुभ्यनमोऽस्तुमे
पुण्यानां च यथा पुण्ये निजेपुत्रेयथापितुः। यथा पत्यौसतीनाञ्च तथात्वयिममास्तुवै

यूनां चित्तं यथा स्त्रीषु लुब्धानां च यथा धने।
क्षुधितानां यथा चाऽन्ने तथा त्वयि ममाऽस्तु वै॥ १५५॥

घर्मार्त्तानां यथाचन्द्रे शीतार्त्तानां रवाविति। तृषार्त्तानांयथातोयेतथात्वयिममाऽस्तुवै
यन्मया बुद्धिहीनेन गुरुस्त्रीगमनं कृतम्। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
अवध्यानां वधो यस्तु मया मोहवता कृतः। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
अपेयपानं च मया विहितं परमेश्वर!। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
अप्सु योनौ तथा तोये यद्रेतःसेचनं कृतम्। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
भ्रूणहत्या कृता या च रेतसां सेचनं भुवि। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
विश्वासघातकं यच्च अज्ञात्वा मायया कृतम्। तत्पातकं क्षयं यातु भवन्तं पश्यतोमम
असत्यवचनं यच्च मयाप्रोक्तं क्षणे क्षणे। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥

सतां निन्दा कृता या च परहिंसा च सर्वदा।
तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥ १६४॥

श्लेष्मा च कफकञ्चैव यद्वक्त्रे च मया कृतम्। तत्पातकंक्षयंयातु भवन्तंपश्यतो मम
वनस्पतिगते सोमे यत्कृतं तरुघातनम्। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
पथि देवालये गोष्ठे मलं मूत्रं च यत्कृतम्। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
अभक्तिर्विततता या च पितुर्मातुश्च केशव!। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
स्नानार्थं भोजनार्थं च गच्छन्यस्तु निवारितः। तत्पातकं क्षयं यातु भवन्तंपश्यतोमम

एकादश्यां सुरश्रेष्ठ! यन्मया भोजनं कृतम् । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम॥
अतिथिर्गृहमागच्छन्पूजितो न मया प्रभो !। तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
द्वादश्यां च दशम्यां च कृतं यच्च द्विर्भोजनम् । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
निवारणं च पानार्थं यान्तीनां यद्गवां कृतम् । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
असमाप्य परित्यक्तं व्रतमारभ्य यन्मया । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम ॥
कूटसाक्ष्यं निरुक्तं यन्मित्रवात्सल्यतो मया । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
ऋतुकालाभिगमनं निजपत्न्यां कृतं न यत् । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
असंस्कृते गृहे यच्च भोजनं विहितं मया । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम ॥

ग्रामयाजकवृत्तिश्च या मया नृहरे ! कृता ।
तत्पातकं क्षयं यातु भवन्तं पश्यतो मम ॥ १७८ ॥

दण्ड्यमाने मया भूपे प्रभुत्वं यत्कृतं प्रभो ! तत्पातकं क्षयं यातु भवन्तं पश्यतो मम ॥
पौराणिकंकथामध्ये यो विघ्नो विहितो मया । तत्पातकं क्षयं यातु भवन्तं पश्यतोमम
आदरेण मया या च परपाककथा श्रुता । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम ॥
अश्वत्थच्छेदनं यच्च धात्र्याश्च च्छेदनं कृतम् । तत्पातकंक्षयं यातु भवन्तं पश्यतोमम ॥
दधिदुग्धघृतानां च विक्रयो यः कृतो मया । तत्पातकं क्षयंयातु भवन्तं पश्यतो मम॥
आशांदत्त्वा परेभ्यश्च कृता सा निष्फला मया । तत्पातकं क्षयंयातु भवन्तंपश्यतोमम
द्विजाश्च याचकाश्चैव कोपदृष्ट्या मयेक्षिताः । तत्पातकं क्षयंयातु भवन्तं पश्यतोमम
जीवनोपायदातारः कोपान्निर्भर्त्सिता मया । तत्पातकं क्षयं यातु भवन्तं पश्यतो मम
बहुनाऽत्र किमुक्तेन बहुजन्मार्जितानिच । क्षयं गतानि पापानि भवन्तं पश्यतो मम ॥

कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं जगत्पते ! ॥१८८ ॥

इत्युक्त्वाऽसौ द्विजो भक्त्या पुलकाञ्चितविग्रहः। पपातजैमिने! विष्णोश्चारुपादाम्बुजद्वये

श्रीभगवानुवाच ।

उत्तिष्ठोत्तिष्ठ ते विप्र! तुष्टोऽस्मि तवभक्तितः। किं तेऽभिलषितंब्रूहितत्तेदास्याम्यहंध्रुवम्

भद्रतनुरुवाच ।

परमेश्वर ! गोविन्द ! दयालो ! परमाच्युत ! यत्सम्प्रतिमयाप्राप्तंतत्केन भुविलभ्यते ॥
तथाप्येकं वरंयाचेमुरारे ! तवसन्निधौ । जन्मजन्मनि मेभक्तिस्त्वय्यस्तुसुदृढा प्रभो !
मया कृतमिदंस्तोत्रं यः पठेद्भक्तितो नरः । तस्याभिलपितं सर्वं प्रसन्नस्त्वं प्रदास्यसि ॥

श्रीभगवानुवाच ।

दत्तोऽयं ते वरः कोऽपि विप्र ! नास्त्यत्र संशयः ।
किंतु त्वया सह प्राज्ञ ! सख्यं कर्तुं मयेष्यते ॥

नमन्सेवकतायोग्यो भवानहमिह द्विज ! अतः सख्यं प्रविवृतंत्वया सह मयाऽधुना ॥

व्यास उवाच ।

ततो नारायणो देवो दयालुर्भक्तवत्सलः । चकार जैमिने! सख्यंतेनपुण्यात्मना सह ॥
निजकण्ठगतांमालां ददौतस्मैमुदाहरिः । सोऽपिविप्रोददौ भक्त्याहरेस्तुलसिकास्रजम्
प्रसार्य चतुरोबाहूंस्तमालिङ्गितवान्हरिः । स विप्रोऽपिमुदाविष्णुं तमालिङ्गितवान्प्रभुः
इत्थंकृत्वा हरिःसख्यं तेनाऽग्रजन्मनासह । भक्तिग्राही दयालुःस तत्रैवाऽन्तरधीयत ॥
ततः प्रतिदिनं तत्र क्षेत्रे च पुरुषोत्तमे । आरेभे कन्दुकक्रीडां हरिस्तेनाऽग्रजन्मना ॥
कदाचिद्दुर्बलं दृष्ट्वा तं विप्रं करुणामयः । उवाच वाचं विप्रर्षे! मित्रवात्सल्यतो हरिः ॥

श्रीभगवानुवाच ।

सखे! कथं दुर्बलस्त्वं हृतंकेन धनं तव । हृदि का वा च ते चिन्ता सखे! तद्वक्तुमर्हसि

भद्रतनुरुवाच ।

त्वात्प्रीतये जगन्नाथ ! नित्यमेव मया तपः । क्रियते तेन मेगात्रं याति दुर्बलतां प्रभो ॥

श्रीभगवानुवाच ।

यथात्वयि प्रसन्नोऽस्मिकस्मिश्चनतथासखे !। कायक्लेशंपुनःकस्मात्करोषिद्विजसत्तम
दुर्बलं त्वां समालोक्यहृदि मे जायते व्यथा । कायक्लेशमतः सर्वं जहीहि द्विजसत्तम

निजोत्तरीयैर्निजवस्त्रभूषणैः सुचारुचामीकरकुड्मलाभ्याम् ।
स्वहस्तराजद्वलयैश्च विप्रः स्वयं सुरेशेन च मण्डितोऽसौ ।

किरीटमानीय निजाल्ललाटात्पादाच्च पादाङ्गदयुग्ममीशः ।
सुवर्णहारं निजकण्ठदेशात्तस्मै ददौ विप्रवराय कृष्णः ।
तैर्भूषणैः श्रीहरिणा प्रदत्तैर्विभूषितोऽयं सुकृती द्विजन्मा ।
क्रीडेत्सदा कन्दुककेलिवेत्ता कृष्णेन कृष्णाम्बुजसुन्दरेण ।
तमेकदा भूषणभूषिताङ्गं ताम्बूलरागारुचिरोष्ठयुग्मम् ।
दिव्याम्बरं चारुतरोत्तरीयं स्मेराननं तत्र ददर्श दान्तः ।

दान्त उवाच ।

भद्र भद्रतनोऽद्यापिपापदृष्टिं न मुञ्चसि । दृष्ट्वाऽपि भवतः कार्यं निन्दितं सकलैर्जनैः ॥
शिष्यःकृतस्त्वं यस्मान्मे सर्वमेव हि भूषणम् । अहंयुश्चाऽपिदुःशीलोनिर्दयः पापतत्परः
गुरुकीर्तिविनाशी च पञ्चैते शिष्यपांसुलाः। अभक्तो बहुभाषी च तथा चञ्चलमानसः
परोक्षगुरुनिन्दाकृत्प्रोक्ताःशिष्याधमाइमे । चरित्रमुत्तमं ज्ञात्वा शिष्यःकार्योविचक्षणैः

यतो दुर्जनगा विद्या गुरूणां चाऽपि दुःखदा ।
कीर्तिदास्तैश्च या विद्या निरुक्तास्तत्त्वदर्शिभिः ॥ २१४ ॥

ता वै दुर्जनगाःसद्यो गुरोर्घ्नन्ति यशस्तरम् । पापेभ्यः पुण्यकर्माणि न रोचन्ते कदापिच
न रोचते मक्षिकाभ्यः सुगन्धिचन्दनंयथा । यथा मिष्टान्नपापेन नहि तृप्यन्ति गर्दभाः
दुर्जना नहि तृप्यन्ति यथा धर्मस्य चिन्तया । अपकीर्तिभयाल्लक्ष्मीर्धर्मश्च सर्वकामदः
कदाचिन्नभजेद्दुष्टं भजेद्वा गच्छतिक्षयम् । प्रतिजन्मनि या विद्या भाग्येनलभ्यते परा

कदाचिल्लभते वाऽपि तदा तां हरते विधिः ॥ २१६ ॥

भद्रतनुरुवाच ।

सत्यं ब्रवीषि विप्रर्षे ! नाऽस्मि शास्त्रविशारदः ।
मया शिष्येण ते क्वाऽपि नाऽपकीर्तिर्भविष्यति ॥ २२० ॥

त्वत्प्रसादाद्द्विजश्रेष्ठ!सर्वाभिलषितं मम । सिद्धिं प्रति गतं यस्मात्त्वमेको भुवि दुर्लभः

दान्त उवाच ।

किंतेऽभिलषितं विप्र!सिद्धिं प्रति गतं वद । अचिरेणैव तपसां कथमुद्यापनं कृतम् ॥

भद्रतनुरुवाच ।

स्वल्पश्रमैरपिप्राप्तं मया संदर्शनंहरेः । यस्याऽऽज्ञया गुरो!त्यक्तं मया नित्यक्रियादिकम्
निजोत्तरीयं वस्त्रं च सुवर्णकलशद्वयम् । स्वहस्तवलयं चाऽपि स्वललाटकिरीटकम्
निजपादतुलाकोटिंनिजमुक्तावलीं ददौ । तथा मे भगवान्विष्णुः सुप्रीतो द्विजसत्तम !
मयासहस कृत्वाऽऽस्ते सख्यं सेवकदुःखहा । करोमिकन्दुकक्रीडांगुरो!तेनसहानिशम्
एतन्मे वचनं श्रुत्वा सन्देहस्ते भविष्यति । प्रतीत्यात्त्वमया प्रोक्तं तथापि तव सन्निधौ

दान्त उवाच ।

सप्तवर्षसहस्राणि भक्त्या परमया मया । आराधितोऽपि मे विष्णुर्दर्शनं न ददौ विभुः
अहो विष्णुं समाराध्य पश्चाहान्येव सत्तम !। त्वया सन्दर्शनम्प्राप्तं दैवतैरपि दुर्लभम्
धन्योऽसि त्वं कृतार्थोऽसि साक्षाद्देवस्त्वमुच्यते ।
यतस्त्वया सह स्वामी प्रेम्णा सख्यं चकार ह ॥ २३० ॥
यदा मयि तव स्नेहो विद्यते द्विजसत्तम ! । कथं कथय मे विप्र! दुर्लभं विष्णुदर्शनम्

व्यास उवाच ।

इत्युक्तो गुरुणाविप्रोविपिनेनिजमाश्रमम् । जगाम विस्मितोधीमान्विष्णुभक्तिपरायणः
अथान्यस्मिन्दिने गत्वा कन्दुकक्रीडनंकृतम् । उवाचेतिजगन्नाथं दयालुं विनयान्वितः

भद्रतनुरुवाच ।

गुरुर्हि मम देवेन्द्र! तव दर्शनमिच्छति । काऽऽज्ञा ते वर्तते ब्रूहि दयालो! कमलापते!॥
एकान्तभक्तो विप्रोऽसौ तव पद्मनिभेक्षण !। अतस्तस्मै सुरश्रेष्ठ ! दर्शनं दातुमर्हसि ॥

श्रीभगवानुवाच ।

बहुजन्मसु विप्रेन्द्र! भक्त्या परमया त्वया । पूजितोऽहमतो दत्तं दर्शनं ते मयाऽधुना॥
कतिचिद्दिवसानेव मामभ्यर्च्य द्विजः स च । मां द्रष्टुमिच्छतिप्राज्ञस्त्वद्दृश्यं दैवतैरपि
मम सोऽपि महाभक्तो मत्सपर्यापरायणः । ममसन्दर्शनंतस्मात्कदाचिद्द्विजलप्स्यति

व्यास उवाच ।

इति तस्य वचःश्रुत्वा स विप्रः कमलापतिम् । इत्युवाच पुनर्भक्त्याकेशवंक्लेशनाशनम्

भद्रतनुरुवाच ।

अनुग्रहोऽस्ति देवेश यदा मयि जगत्पते !। तदा मे सम्मुखे देहि दर्शनं भक्तवत्सल !॥
अयाचत गुरुर्देव! तव दर्शनदक्षिणाम् । अहो मे गुरवे दत्त्वा दर्शनं पाहि मां प्रभो !॥

श्रीभगवानुवाच ।

यदा नूनं त्वयोत्सृष्टा मत्सन्दर्शनदक्षिणा । तदा गुरुं समानीय दर्शनं मम कारय ॥
इत्याज्ञप्तस्ततस्तेन गुरोराश्रममुत्तमम् । ययौ भद्रतनुः प्रीत्या पुनःस्वगुरुरागतः॥२४३
तस्मिन्विप्रे समायाते दान्ते दातृवरे हरिः । आत्मानं दर्शयामास सर्वलक्षणसंयुतम्
ततो हरिं समालोक्य स विप्रो हरिभक्तिकृत् । बद्धाञ्जलिस्तमस्तौषीद्धर्षबाष्पविलोचनः

दान्त उवाच ।

दयालो! कमलाकान्त! शरणागतपालक !। नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः
अद्य मे सफलं जन्म अद्य मे सफलं तपः । अद्य मे सफलं सर्वं प्राप्तं त्वद्दर्शनं मया ॥
पूर्वमालोचितं यद्यद्वचनं श्रीपते! प्रभो !। सिन्धुकोटिगभीरस्य प्रसृतं पुरतस्तव ॥

स्तोत्रं तन्नास्ति संसारे वागीशस्य जगत्पतेः ।
येन स्तोत्रेण ते प्रीतिं जनयिष्यामि चेतसि ॥ २४६ ॥

रक्ष रक्ष प्रभो रक्ष मां प्रसीद जगत्पते !। त्वद्दासदासदासानां दासत्वेनाऽपिमां वृणु

व्यास उवाच ।

ततः प्रहस्य देवेशो भक्तिग्राही दयामयः । करारविन्दं तन्मूर्ध्नि दत्त्वा प्राहेति जैमिने!

श्रीभगवानुवाच ।

मद्भक्तोऽसि द्विजश्रेष्ठ ! प्राप्तं मद्दर्शनं त्वया । मत्प्रसादेन भद्रन्ते सर्वमेव भविष्यति ॥

व्यास उवास ।

तमाऽऽलिङ्गय ततो दान्तं प्रेम्णा भद्रतनुञ्च तम् । तत्रैवाऽन्तर्दधे विप्र!सहसापरमेश्वरः
तस्मिन्क्षेत्रवरे पुण्ये दुर्लभे पुरुषोत्तमे । क्रियायोगैर्हरिं दृष्ट्वा दान्तो धाम परं ययौ ॥
सोऽपि भद्रतनुर्विप्रो हरिभक्तिपरायणः । आयुषोऽन्ते ययौ मोक्षं देवानामपि दुर्लभम्
एकाहमपि यो भक्त्या पूजयेत्परमेश्वरम् । बहुजन्मकृतं पापं नश्येत्प्रीतिर्हरौ भवेत् ॥

अद्याऽपि त्रिदशाः सर्वे ब्रह्माद्याअपि जैमिने ! ।
प्रभावं नहि जानन्ति हरिभक्तस्य भूतले ॥ २५७ ॥

कर्मभूमिरियं विप्र! स्वर्गादपिच्च दुर्लभा । यत्रविष्णुंसमभ्यर्च्यमर्त्याःस्युःसुरवन्दिताः
शक्राद्यास्त्रिदशाः सर्वे सुपुण्यक्षयभीरवः । अन्योन्यमपि जल्पन्तोऽनिशंच द्विजसत्तम!
भूयएव गमिष्यामः कर्मभूमिं कदा वयम् । कदा तत्र करिष्यामः पूजां श्रीकमलापतेः
अतिधन्या इमे लोका अस्मत्तोऽपि महत्तराः । दुर्लभे भारते वर्षे पूजयन्ति हरिं प्रभुम्
अहो भारतवर्षस्य कः शक्तो गुणभाषणे । यत्राऽऽराध्य हरिं पूर्वं वयं देवत्वमागताः॥
इत्थं देवगणाः सर्वे वासवाद्या द्विजोत्तम !। नित्यं भारतभूभागं प्रशंसन्ति शुभप्रदम्
तत्र जन्म समासाद्य येन नाराधितो हरिः । तत्तुल्यः कोऽपि संसारे नच दृष्टःश्रुतोनच
सत्यं सत्यं पुनरपि गद्यते सत्यमेव तत् । विश्वात्मानं सकृदपि मानवा येऽर्चयन्ति च
मुक्ताः पापैः स्वरचितैर्यान्ति कैवल्यमाशु मे ॥ २६५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे
पुरुषोत्तमक्षेत्रे भद्रतनुवरप्रदानं नाम सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः

## पुरुषोत्तमक्षेत्रमाहात्म्ये गुडिवायात्राफलवर्णनम्

जैमिनिरुवाच ।

तीर्थश्रेष्ठमिति प्रोक्तं यत्त्वया पुरुषोत्तमम् । तन्माहात्म्यं गुरो! ब्रूहि यदि ते मय्यनुग्रहः

व्यास उवाच ।

पुरुषोत्तमस्य माहात्म्यं समासेन शृणु द्विज ! ।
सम्यग्वक्तुं जगत्यस्मिन्कःशक्तो विष्णुना विना ॥ २ ॥

लवणाम्भोनिधेस्तीरे पुरुषोत्तमसञ्ज्ञितम् । पुरं तद्ब्राह्मणश्रेष्ठ! स्वर्गादपि च दुर्लभम्
स्वयमस्ति पुरे तस्मिन्यतः श्रीपुरुषोत्तमः । पुरुषोत्तममित्युक्तं तस्मात्तन्नामकोविदैः॥
क्षेत्रं तद्दुर्लभं विप्र! समन्ताद्दशयोजनम् । तत्रस्थदेहिनो देवैर्दृश्यन्ते च चतुर्भुजाः ॥
प्रविशन्तस्तु तत्क्षेत्रं सर्वे स्युर्विष्णुमूर्तयः । तस्माद्विचारणा तत्र न कर्त्तव्या विचक्षणैः

चाण्डालेनाऽपि संस्पृष्टं ग्राह्यं तत्राऽन्नमग्रजैः ।

तत्राऽन्नपाचिका लक्ष्मीः स्वयं भोक्ता जनार्दनः ॥ ७ ॥

तस्मात्तत्रौदनं विप्र! दैवतैरपि दुर्लभम् । हरिभुक्तावशिष्टं यत्पवित्रं भुवि दुर्लभम् ॥
अन्नं ये भुञ्जते लोकास्तेषां मुक्तिर्नदुर्लभा । ब्रह्माद्यास्त्रिदशाः सर्वे तदन्नमतिदुर्लभम् ॥
भुञ्जते नित्यमागत्य मानुषाणां च का कथा । न यस्य रमते चित्तं तस्मिन्नन्ने सुदुर्लभे
तमेव विष्णुद्वेष्टारं प्राहुः सर्वमहर्षयः । पवित्रं भुवि सर्वत्र यथा गङ्गाजलं द्विज !॥११
तथा पवित्रं सर्वत्र तदन्नं पापनाशनम् । तदन्नं कोमलं दिव्यं यद्यपि द्विजसत्तम ! ॥
क्रकचस्योदरप्रायं तथाप्यघविदारणे । पूर्वार्जितानि पापानि क्षयं यास्यन्ति यस्य वै
भक्तिः प्रवर्तते तस्य तस्मिन्नन्नेसुदुर्लभे । बहुजन्मार्जितंपुण्यं यस्ययास्यतिसंक्षयम् ॥
तस्मिन्नन्ने द्विजश्रेष्ठ! तस्यभक्तिर्न जायते । इन्द्रद्युम्नस्यसरसिमार्कण्डेयह्रदे तथा ॥१५॥
रोहिण्यां च समुद्रे च श्वेतगङ्गाजलेषुच । स्नानंयेकुर्वते मर्त्या भक्तिभावसमन्विताः
तेषां न विद्यतेजन्मपुनरस्मिन्महीतले । लवणाम्भोनिधेस्तोयैः पितरस्तर्पिताद्विज !॥
सर्वदुःखविनिर्मुक्ताव्रजन्तिहरिमन्दिरम् । तीर्थराजः समुद्रोऽसौ कीर्तितस्तत्त्वदर्शिभि
तस्मात्तत्र कृतंकर्मसर्वमेवाऽक्षयंभवेत् । पित्रर्चनंतथादानंभगवच्चरणार्चनम् ॥ १६ ॥
जपयज्ञं तथाऽन्यच्च तस्मिन्क्षेत्रे मनोरमे । यत्कर्म कुरुते मर्त्यो विष्णुप्रीणनहेतवे ॥
सर्वमेवाऽक्षयं तच्च भवेन्नास्त्यत्रसंशयः । बलभद्रं सुभद्रां च कृष्णं च कमलेक्षणम् ॥
ये मानवाः प्रपश्यन्ति तेषां किंचिन्नदुर्लभम् । अदृष्ट्वा श्रीजगन्नाथं सुभद्रांचबलं तथा ॥
मोक्षं न लभतेमर्त्यः कुर्वन्पुण्यशतान्यपि । तत्र वेत्रप्रहारेण शरीरंयस्यलोहितम् ॥२३
तंवन्दन्तेद्विजश्रेष्ठ देवाःशक्रादयोऽखिला । स्थित्वाऽन्तरिक्षेशक्राद्याः सर्वदेवगणाद्विज!

विमानचारिणोऽन्योन्यं प्रवदन्तीति हर्षिताः ।

कदा मानुष्यमस्मभ्यं दास्यते कमलापतिः ॥ २५ ॥
मनुष्यवच्च गच्छामस्तदा द्रष्टुं हरिं प्रभुम् । कदा वेत्रप्रहारेण क्षेत्रे श्रीपुरुषोत्तमे ॥
भविष्यन्त्यस्मदीयानि लोहितानि वपूंषि च । वासवाद्या सुराः सर्वे तस्मिन्क्षेत्रेवरप्रदे
सदावेत्रप्रहारांश्च वाञ्छन्ति द्विजसत्तम ! तत्राऽक्षयवटं ये तु भक्त्या पश्यन्ति मानवाः
कोटिजन्मार्जितैः पापैर्मुक्तायान्ति परांगतिम् । सुभद्रांबलभद्रं च जगन्नाथमनामयम् ॥
श्वेतं माधवदेवेशं मार्कण्डेयह्रदंतथा । श्यामेश्वरं हनूमन्तन्तत्राक्षय्यं वटं द्विज ! ॥३०
पश्यन्ति भक्त्या ये मर्त्यास्तेषां मुक्तिर्हि शाश्वती ।
दोलायमानं गोविन्दं फाल्गुने मासि तत्र ये ॥ ३१ ॥
पश्यन्तिमानवा भक्त्यातेषाम्पुण्यंनिशामय । विमुक्ताःसकलैः पापैरन्ते यान्ति हरेर्गृहम्
ज्ञानंसम्प्राप्य तत्रैव मोक्षं यान्ति सुदुर्लभम् । चैत्रके मासिवारुण्यां यो जगन्नाथमीक्षते
स मृतः प्रविशेद्देहं जगन्नाथस्य जैमिने !। वैशाखे चैव शुक्लायामेकादश्यांजगत्पतिम् ॥
तृतीयायांचयःपश्येन्मुक्तएवस मानवः । प्रविशेद्यस्तुमनुजोमहास्नानंजगत्पतेः ॥३५॥
तस्य सिध्यन्ति विप्रर्षे ! सर्वएवमनोरथाः ।
ब्रह्माद्यास्त्रिदशाः सर्वे स्थित्वाऽऽकाशे जगत्पतेः ॥
महास्नानं प्रपश्यन्ति भक्तिभावसमन्विताः । महाज्येष्ठ्यांचविप्रर्षे जगन्नाथमनामयम्
आलोक्य लभतेमर्त्योविष्णोस्तत्परमंपदम् । गुण्डिकामण्डपंयान्त माषाढ़ेकमलापतिम्
बलभद्रं च यः पश्येत्स मुक्तो नाऽत्रसंशयः । यः पश्यति जगन्नाथं रथस्थं कमलेक्षणम्
तस्य नास्तिपुनर्जन्म संसारे सर्वदुःखदे । रथारूढां सुभद्रांच भक्त्यापश्यन्ति मानवाः
छिनत्ति भगवांस्तस्य दुःखदं भवबन्धनम् । अपुत्रा मृतपुत्रा च या सुभद्रां प्रपश्यति॥
बहुपत्या जीववत्सासानारी भवतिद्विज ! । दुर्भगावाऽथवन्ध्यावासुभद्रा याप्रपश्यति
सस्वामिसुभगा नारी बहुपत्याभवेत्खलु । गुण्डिकामण्डपस्थंच कृष्णंपश्यतियःपुमान्
बलभद्रंसुभद्रांच सयाति परमंपदम् । रोगी दुःखी च यःपश्येद्गुण्डिका मण्डपे हरिम्
रोगाच्छोकाच्चसहसाजैमिने!सप्रमुच्यते । यस्त्वपुत्रोजगन्नाथं गुण्डिकामण्डपेस्थितम्
पश्येत्सच द्विजश्रेष्ठ! पुत्रं प्राप्नोतिवैष्णवम् । विद्यार्थी लभते विद्यां धनार्थीलभतेधनम्

दारार्थीलभतेदारान्मोक्षार्थी मोक्षमाप्नुयात्। भ्रष्टराज्योनृपो यस्तु हरिंपश्यतिभक्तितः
गुण्डिकामण्डपेविप्र! निजराज्यंलभेत्तसः। शत्रुभिर्विजितोयस्तुगुण्डिकाममण्डपेहरिम्
भक्त्यापश्यतिविप्रर्षे तस्यनश्यन्तिशत्रवः। गुण्डिकामण्डपे पश्येद्यो राजपीडितोभृशम्
ससद्य एव राजानंस्वकीयंवशमानयेत्। सर्वासामेवा यात्राणां गुण्डिकाप्रवरामता॥
तस्मात्सामानवैःकार्यात्यक्त्वा कार्यशतान्यपि। शयनेचतथोत्थानेतस्मिन्क्षेत्रेमनोरमे
हरिं पश्यति यो मर्त्यःसदेवैरपि पूज्यते। पुरुषोत्तममाहात्म्यंवक्तुं शक्नोति कः क्षितौ॥
यस्यप्रवेशमात्रेणनरोनारायणो भवेत्। बहुनाऽत्र किमुक्तेन संक्षेपादुच्यतेमया॥५३॥
सर्वेषामेव तीर्थानां वरिष्ठं पुरुषोत्तमम्॥ ५४॥
संसारसिन्धुमतिनिम्नमिमं तितीर्षुः क्लेशप्रदं विषमपापगणाश्रयं यः।
क्षेत्रे समस्तसुखदे पुरुषोत्तमाख्ये पश्येदमुंवरसुरं पुरुषोत्तमं च ॥ ५५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्त्र्यां संहितायां क्रियायोगसारखण्डे पुरुषोत्तममाहात्म्यंनामाऽष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## विष्णुमाहात्म्यपूर्वकमुर्वीशुविप्रकथानकम्

व्यास उवाच।

नारायणे प्रपन्ना ये नरा भक्तिसमन्विताः। कदाचिदशुभंतेषांविद्यते न द्विजोत्तम!॥
पुनरेव प्रवक्ष्यामि माहात्म्यं कमलापतेः। यच्छ्रुत्वामानवाः सर्वेलभन्ते परमं पदम्॥
वासुदेवस्यमाहात्म्यंश्रुत्वातृप्यन्तिवैष्णवाः। पाखण्डानहितृप्यन्तिनरकेक्लेशभागिनः
पाखण्डानांसमीपेतु विष्णुमाहात्म्यमुत्तमम्। नवक्तव्यंद्विजश्रेष्ठ! वक्तव्यंवैष्णवाग्रतः॥
पूर्वंत्रेतायुगेविप्रउर्वीशुर्नाम जैमिने!। आसीत्पापरतो नित्यं धर्मनिन्दापरायणः॥५॥

ब्रह्मस्वहारी विप्रेन्द्र! परस्त्रीगमनोद्यतः । गोमांसाशी सुरापी च वैश्याविभ्रमलोलुपः
शरणागतहन्ता च परनिन्दाकरः सदा । विश्वासघाती मित्रघ्नो ज्ञातिपीडाकरस्तथा ॥
असत्यभाषी क्रूरश्च पाखण्डजनसङ्गभाक् । वृत्तिच्छेदीद्विजातीनांन्यासापहारकस्तथा
तादृशंतंसमालोक्य दुष्टंपापपरायणम् । आजग्मुर्ज्ञातयः सर्वे क्रुद्धास्तस्य निजं गृहम्

ज्ञातयऊचुः ।

प्रतिष्ठोपार्जिता पूर्वैरस्माकं विमले कुले । सा प्रतिष्ठा त्वया मूढविनाशम्प्रतिनीयते॥
धर्ममार्गं परित्यज्य कुरुषे पातकं सदा । मद्वंशकीर्तिहन्ता त्वं जातोऽसि ज्ञातिदुःखदः

अतिविस्मयदा सृष्टिर्विधातुर्मन्यते त्वियम् ।
यस्मिन्सिन्धौ शशी जातस्तत्र क्ष्वेडोद्भवोऽपि च ॥ १२ ॥

अहोशक्तिःकुपुत्राणां संख्यातुं नचशक्यते । अनेकैःपुरुषैःकीर्तिं संचितांहन्तितत्क्षणात्
जातेपुत्रोत्तमेवंशः श्रेष्ठःस्यादधमोऽपि च । पुत्रऽधमेतुश्रेष्ठोऽपि वंशो गच्छतिहीनताम्

व्यास उवाच ।

इत्युक्त्वा ज्ञातयस्तेचतंसर्वे पापिनां वरम् । अपकीर्तिभयात्क्रुद्धास्तत्यजुःसहसाद्विज
ज्ञातिभिःस परित्यक्तो जनैःसर्वैश्च धिक्कृतः । प्रपेदे दस्युतां दुःखी विनष्टाखिलवैभवः
तं दस्युकर्म कुर्वन्तं निर्दयं परहिंसकम् । धृत्वा जानपदाः सर्वे भूपालाय न्यवेदयन् ॥
तेनभूमिभुजा तस्य पितृस्नेहाद्द्विजोत्तम !। नहतोऽसौ दुराचारो निजदेशाद्बहिष्कृतः
ततोऽसौ वनमाश्रित्य दस्युभिः सह निर्दयः । पान्थस्वहरणार्थाय तस्थौ बहुभिरुद्धतैः
कदाचित्तटिनीतीरं दस्युभिः सह जैमिने !। वनपर्यटने श्रान्तो जगाम स्नानहेतवे ॥२०
तस्यां तटिन्यां भगवत्परिचर्यापरायणान् । असौ ददर्श दुष्टात्मा ब्राह्मणान्कृतिनोबहून्

अथ ते ब्राह्मणाः सर्वे समाराध्य जनार्दनम् ।
अन्योन्यं कथयामासुर्विहितान्यतिकौतुकात् (रिति जातातिकौतुकम् ) ॥

अद्यचम्पकपुष्पाणि मया त्यक्तानि तानि वै । कश्चिद्वदति ताम्बूलं मया दत्तं मुरारये
न खादितव्यं ताम्बूलं कदाचिदपि जन्मनि । मयाऽद्य हरये दत्तं कदलीफलमुत्तमम् ॥
जन्मजन्मनिच मया भक्ष्यंन कदलीफलम् । कोऽपिवक्ति मया दत्तंहरये दाडिमीफलम्

जन्मनीह मया तत्तु न भोक्तव्यं कदापि च ।
कोऽपि वक्ति मया दत्तं रसालफलमुत्तमम् ॥ २५ ॥
मयाऽपि च न भोक्तव्यंफलं तस्य च जीवता । अन्योन्यमेतद्वदतां तेषांश्रुत्वावचांसि च
उर्वीशुश्चिन्तयामास किं प्रदास्यामि विष्णवे ।
संसारे यानि वस्तूनि भोक्ष्याणि सन्ति तान्यहम् ॥ २७ ॥
नहि शक्नोमि सन्त्यक्तुं किं दास्यामि मुरारये । नित्यंवनान्तरस्थोऽहं चौरोराजभयाकुलः
शकटारोहणे नास्ति ह्यधिकारः कदापि मे ॥ २८ ॥

व्यास उवाच ।

इत्युक्त्वा दस्युना तेन भूयोभूयो द्विजोत्तम !। शकटं हरये दत्तं चतुर्वर्गप्रदायिने॥२६॥
अथ ते ब्राह्मणाःसर्वे जग्मुर्विप्र!यथागताः । सोऽपिदस्युर्दस्युभिश्चजगामनिजमाश्रमम्
एकदा गुडकण्डोलं तेनैवखलुवर्त्मना । गृहीत्वापथिकः कश्चिदेकाकीचसमागतः ॥३१
ततोऽसौ सहसा दस्युर्निर्भयः परहिंसकः । जहार गुडकण्डोलमध्वनीनस्य तस्य च ॥
अथते दस्यवश्चक्रुर्गुडकण्डोलभञ्जनम् । उर्वीशुश्चापतद्भागे शकटं गुडनिर्मितम् ॥३३॥
उर्वीशुः शकटं गौडं समासाद्य द्विजोत्तम !। मनसा चिन्तयामास वचःस्मरणपूर्वकम्
अनो मया पुरा दत्तं स्वयमेव मुरारये । तस्मादनो न मे ग्राह्यं कदाचिदिह जन्मनि ॥
विचिन्त्येति हृदा दातुं तदनो गुडपूरितम् । दत्तं विप्राय कस्मैचिन्माधवप्रीतिहेतवे॥
तां भक्तिं तस्य विज्ञाय महापातकिनो द्विज !। जहार सकलं पापं सद्यः प्रीतोजनार्दनः
तस्मिन्नेव दिने विप्र!प्रविश्य च महावनम् । हतः पौरजनैः सर्वैरथ क्रुद्धैः स उर्वीशुः॥
भगवानथ तं नेतुं विमानं स्वर्णनिर्मितम् । दूतांश्च प्रेषयामास नानाभरणभूषितान् ॥
अथ ते भगवद्दूतास्तमुर्वीशुं गतैनसम् । समारोप्य विमाने ते सद्यो जग्मुः पुरं हरेः॥
ततोऽसौ हरिसान्निध्यं प्राप्य पुण्यात्मनांवरः । पुनर्मन्वन्तरशतं स्थित्वाकेशवसन्निधौ
परमं ज्ञानमासाद्य स विवेश तनुं हरेः ॥ ४२ ॥

व्यास उवाच ।

येन केनाप्युपायेन हरिभक्तिकरो नरः । संसारजलधेः पारं राजहंसइव व्रजेत् ॥४३॥

क्षणमेव हरेर्भक्तिर्वर्तते यस्य चेतसि । तत्पदं परमं याति स पापात्माऽपि गच्छति ॥
एकमप्युत्तमं वस्तु दत्त्वाऽसौ तन्मुरारये । स्वयमेव हि भोक्तव्यं पश्चात्पापोपशान्तये ॥
यद्वस्तु हरये दत्तं तच्च दद्याद्द्विजातये । किंचिच्छेषं न भोक्तव्यं तस्याऽवश्यं स्वयं बुधैः
वस्तूनि ब्राह्मणश्रेष्ठ मिष्टानियानि कानिच । अदत्त्वा विष्णवेतानि न भोक्तव्यानि वैष्णवै
विष्णुनैवेद्यमाहात्म्यं सर्वपापप्रणाशनम् । सेतिहासं पुनर्वच्मि शृणु विप्र समाहितः॥
आसीत्सर्वजनिर्नाम ब्राह्मणःशुद्धवंशजः । शान्तो दान्तो दयायुक्तो गुरुब्राह्मणपूजकः॥
हरेःपूजापरश्चैव हरिस्मरणतत्परः । प्रपन्नक्लेशविध्वंसीसत्यवादी जितेन्द्रियः ॥५०॥
प्रातःकालेनिजाचारग्राही हिंसाविवर्जितः । एकादशीव्रतरतो ज्ञातिपूजापरायणः॥५१॥
कदाचित्सद्विजश्रेष्ठः स्वप्नेऽपश्यच्च केशवम् । श्यामंविरजपद्माक्षं स्मेरास्यंपीतवाससम्
स्वर्णकुण्डलमञ्जीरकिरीटोज्ज्वलविग्रहम् । कौस्तुभोद्भासितोरस्कंवनमालाविभूषितम्
चतुर्बाहुं शङ्खचक्रगदापद्मधरं प्रभुम् । समस्तैर्लक्षणैर्युक्तं स्वर्णयज्ञोपवीतिनम् ॥५४॥
संप्राप्य दर्शनं स्वप्ने स विप्रो जगतीपतेः । कृताञ्जलिस्तमस्तौषीद्रोमाञ्चिततनुर्मुदा ॥

तुभ्यंनमोऽस्तु जगतः सकलस्य भर्त्रे सल्लोकशोकभयरोगविनाशनाय ।
नारायणाय कमलाहृदयप्रियाय धर्मार्थकामपरमामृतदाय तुभ्यम् ॥५६॥
पापानि चैव सकलानि मया कृतानि मत्तेन मोहवशगेन सदा मुरारे ! ।
तस्माद्विभेमि जगदम्बुनिधेर्गभीरान्मामुद्धरस्व निजभक्तितरीं प्रदाय ॥५७
जानामि यद्यपि हरे! दुरितं मनुष्यो व्यामोहमाशुचलभे भुवि कैटभारे ! ।
पापंतथाऽपिच मुदासततं करोमि तस्मान्न कोऽप्यहमिवाऽस्तिजनोविमूढः
पुण्यद्रुमः सुखफलं सहसैव धत्ते किंवेद्मिनेति नृहरे कृतपातकोऽहम् ।
पुष्पद्रुमार्पणविधौ न ममाऽस्ति वित्तंनाथ प्रसीद भगवन्किमहं करोमि ॥
त्वत्पादपद्मयुगलं परमामृतस्य स्थानं विहाय मम चित्तमधुव्रतोऽयम् ।
नारीमुखं व्रजति देव मृतिप्रदंयच्छ्लेष्मप्रकीर्णमनिशं कमलभ्रमेण ॥६०॥
पाणिःप्रदानरहितोऽनृतभाषिवक्त्रं कर्णौ च पापश्रवणाय सदैव दक्षौ ।
दोषानिमान्मम हरे ! हर सेवकस्य यस्मान्नु नाथ ! शरणागतदोषहन्ता ॥

संसारघोरजलधौ नृहरे ! कदाचित्त्वद्भक्तिनौरिह मया सुदृढा च लब्धा ।
तत्राऽपि दैववशगोऽहमहो दुरात्मा वर्तेत एव सततं मम दुःखकालः ॥
संसारपारगमनाय लसत्पथोऽस्ति किं सर्व दुःखरहितः सदयः प्रसन्नः ।
अन्धीकृतस्य मम मोहमहातमिस्त्रैर्दृग्भिस्त्वयीह न कदापिच याति विष्णो!
पापात्मनोऽपि मम चित्तमिदं मुरारे नष्टं विनम्रजनकष्टविनष्टिकारि ।
यस्त्वां समस्तसुरवन्दितपादपद्मस्वप्नेऽपि केशिमथनाऽद्यविभो!समीक्षे ।

व्यास उवाच ।

इति तेन स्तुतं देवो भगवान्कमलापतिः । उवाच वाक्यं वाक्यज्ञः संसारार्णवतारकः

श्रीभगवानुवाच

भक्तिभिस्तव विप्रेन्द्र!तुष्टोऽहंनित्यमेवच । तस्मात्तवाऽचिरेणैव सर्वं भद्रंभविष्यति ॥
पापिनोऽपि तवोद्धारोमयापूर्वंकृतोद्विज ! अधुना मम भक्तोऽसि न विपत्तिर्भविष्यति

ब्राह्मण उवाच ।

कोऽहं तस्थौ पुरा विष्णो किं वा पापं मया कृतम् ।
पापिनोऽपि ममोद्धारः कथं पूर्वं त्वया कृतः ॥ ६८ ॥

संसारेऽस्मिन्कथंजातोजनितोऽहं कथंत्वया । एतत्सर्वं विभो!ब्रूहियतस्त्वं सदयःसदा

श्रीभगवानुवाच ।

अप्रकाश्यमिदं गुह्यं यद्यपि द्विजसत्तम !। तथाऽपि तव वात्सल्यान्निगदामि निशामय
पुरा त्वं ब्राह्मणश्रेष्ठ!पक्षिवंशसमुद्भवः । भूतोऽसि भूमिभागेषु निजकर्मविपाकतः ॥७१
क्षुधयातृषया वाऽपिसततं व्याकुलोभवान् । बभ्राम भक्षयन्कीटान्निर्झरोष्णोदकं तथा
नानादुःखंसदा भुञ्जन्पक्षियोनिसमुद्भवः । चतुर्वर्षसहस्राणि!स्थितोऽसि त्वं पुराक्षितौ
एकदा कुलभद्राख्यो ब्राह्मणःसर्वतत्त्ववित् । पूजयामास मां भक्त्यानैवेद्याद्यैर्नदीतटे
समभ्यर्च्य स विप्रेन्द्रो मम नैवेद्यतण्डुलम् । ययौ तत्रैव निक्षिप्य भूयएव निजंगृहम्
ततोवृक्षात्समागत्य क्षुधितेन विनात्वया । मम नैवेद्यसम्बन्धि भक्षितं सर्वतण्डुलम्
भुक्त्वैवसद्योमुक्तोऽसि पातकैरतिदारुणैः । कदाचित्प्राप्तकालस्त्वं कालधर्मंगतोद्विज!

त्वामानेतुं मया दूताः प्रेषिताः सर्वथानिजाः । ततोरथे समारोप्य भवन्तं नष्टकल्मषम्
सद्यो दूतगणाः सर्वे समायाताः परं पदम् ।
युगकोटिसहस्राणि स्थितोऽसि मम सन्निधौ ॥ ७९ ॥
भुञ्जन्सुखानिसर्वाणि दुर्लभानिसुरैरपि । ततोयातोऽसि विप्रेन्द्र! विशुद्धे ब्राह्मणान्वये
तत्राऽपिमयिभक्तिस्ते जाताऽतिसुदृढापुनः । क्रियायोगेनमांनित्यंसमाराध्यद्विजोत्तम!
आयुषोऽन्ते मत्प्रसादान्मामकं पदमाप्स्यसि ।
यस्य तुष्टोऽस्म्यहं विप्र ! स पापात्माऽपि मुक्तिभाक् ॥ ८२ ॥
कदाचिद्यस्य रुष्टोऽस्मि पुण्यात्माऽपि च पापभाक् ।
तस्माद्ब्राह्मणभद्रन्ते भक्तोऽसि मम सुव्रत ! ॥ ८३ ॥
दास्यामि ते परं स्थानं यदलभ्यं सुरैरपि ॥ ८४ ॥

ब्राह्मण उवाच ।

त्वत्प्रसादाच्छ्रुतं नाथ!पूर्ववृत्तान्तमात्मनः ।
इदानीं श्रोतुमिच्छामि यत्किञ्चिद्ब्रूहि तत्प्रभो ! ॥ ८५ ॥
कस्यतुष्टोऽसि देवेन्द्र! कस्य रुष्टोऽसि वा प्रभो !। महत्या कृपया सर्वमेतन्मेवक्तुमर्हसि

श्रीभगवानुवाच ।

कर्मणा येन विप्रेन्द्र! तुष्टिर्मे हृदि जायते । क्रोधश्च तत्समस्तं च कथयामि समासतः
यो दयावान्द्विजश्रेष्ठ! सर्वभूतेषु सर्वदा । अहङ्कारविहीनश्च तस्य तुष्टोऽस्म्यहं सदा ॥
कर्मकुर्यान्मदर्थं यो धर्मभक्तिसमन्वितः । ब्रूते मदर्थं यः शान्तं तस्य तुष्टोऽस्म्यहं सदा
मिष्टंवस्तुसमासाद्य दद्यान्मेयश्चमानवः । मानापमाने सदृशस्तस्यतुष्टोऽस्म्यहंसदा
सर्वभूतशरीरस्थं यो मां जानाति मानवः । परहिंसाविहीनो यस्तस्य तुष्टोऽस्म्यहंसदा
कर्माणि कुरुते यस्तु सुविचार्य पुनःपुनः । गोब्राह्मणहितैषी यस्तस्यतुष्टोऽस्म्यहंसदा
स्वयंनिरुक्तं वचनं यत्नाद्यःपरिपालयेत् । प्रपन्नंपाति यत्नाद्यस्तस्य तुष्टोऽस्म्यहंसदा
ददात्यनुपकारिभ्यो दानानि द्विजसत्तम !। मयिचित्तंसदायस्य तस्यतुष्टोऽस्म्यहं सदा
कर्मणा येन तुष्टोऽस्मि निरुक्तं तत्समासतः ।

रुष्टोऽस्मि कर्मणा येन विप्र! वच्मि शृणुष्व तत् ॥ ९५ ॥
परहिंसारतो यस्तु निर्दयः सर्वजन्तुषु । अहंयुः सर्वदा क्रुद्धः स मां नयति शत्रुताम् ॥
असत्यभाषीक्रूरश्चपरनिन्दापरस्तु यः । कविवर्तनविध्वंसी स मां नयति शत्रुताम् ॥ ९७
अदुष्टदोषौ पितरौ स्त्रीभ्रातृभगिनीस्तथा । मोहात्त्यजति यो मूढः स मांनयति शत्रुताम्
पित्रोस्तु भर्त्सनं यश्च कुरुते मूढधीर्नरः । गुर्ववज्ञाकरो विप्र! स मां नयति शत्रुताम् ॥
आरामच्छेदिनो ये च जलाशयविलायिनः । ग्रामनाशकरा ये च ते मां नयतिशत्रुताम्
परस्त्रियं समालोक्य विषादं यान्ति ये जनाः ।
शृण्वन्ति पापचर्चां च तेषां रुष्टोऽस्म्यहं सदा ॥ १०१ ॥
द्विषन्ति नाथं ये मूढा अनाथस्वंहरन्तिये । विश्वासघातिनोयेच तेषांरुष्टोऽस्म्यहंसदा
ये च गोवीर्यहन्तारो वृषलीपतयश्च ये । अश्वत्थघातिनो ये च तेषां रुष्टोऽस्म्यहं सदा
ब्रह्मविष्णुमहेशानां मध्ये ये भेदकारिणः । परदारातिरक्ता ये तेषां रुष्टोऽस्म्यहं सदा
एकादश्यां भुञ्जते ये लोभात्पापधियोनराः । वेदनिन्दाकरा ये च तेषां रुष्टोऽस्म्यहंसदा
पापबुद्धिरता ये च मित्रद्रोहरतास्तथा । धात्रीतरुं च ये घ्नन्ति तेषां रुष्टोऽस्म्यहं सदा
दिवसे मैथुनं ये च कुर्वते काममोहिताः । रजस्वलास्त्रियां चैव तेषां रुष्टोऽस्म्यहं सदा
ये चाऽदृष्टार्तवां नारीं मोहाद्गच्छन्ति सत्तम! ।
व्रतस्थां च सदा जाल्मास्ते मां नयन्ति शत्रुताम् ॥ १०८ ॥
अमावास्यातिथौ ये च कुर्वतेनिशि भोजनम् । भोजनद्वयमेवाऽर्केतेषां रुष्टोऽस्म्यहंसदा
आमिषं मैथुनं तैलममावास्यादिनेद्विजाः । न ये त्यजन्तिविप्रेन्द्र! तेषां रुष्टोऽस्म्यहंसदा
बहुनाऽत्रकिमुक्तेन संक्षेपात्तेवदाम्यहम् । निन्दन्तिवैष्णवान्ये च तेषांरुष्टोऽस्म्यहंसदा

व्यास उवाच ।

इत्युक्त्वा भगवान्विष्णुरदृश्यःसहसाऽभवत् । सच विप्रःसमुत्तस्थौत्यक्तनिद्रस्तुमश्रुतः
केशवोक्तेनवाक्येन सविप्रो हरिभक्तिकृत् । सन्त्यज्यसकलं कार्यं क्रियायोगरतोऽभवत्
नारायणस्य नैवेद्यं भुञ्जतोऽपि फलं त्विदम् । हरिपूजाकृतां पुंसां न जाने किंभवेदिति
समासेन ब्रवीमि त्वां शृणु सत्तमजैमिने! । सम्यक्कृत्वा हरेः पूजां प्राप्यते परमं पदम्

मानुष्यंदुर्लभंलोकेपूजा तत्राऽपिचक्रिणः। भक्तिस्तत्राऽपि विप्रेन्द्र!दुर्लभापरिकीर्तिता
संसाराब्धि सर्वदुःखप्रपूर्णं कर्तुं वाञ्छा यस्य चित्तेऽस्ति पुंसः।
भक्त्या नित्यं वासुदेवस्य पूजां कुर्यादार्यः कर्मणां सोऽखिलानाम् ॥११७॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे विष्णुपूजाफलकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः

## दानमाहात्म्यम्

व्यास उवाच।

विष्णुपूजाफलं विप्र!संक्षेपात्कथितं मया। इदानींवच्मिदानानि निशामय समाहितः
दानं तपो द्वयोर्मध्ये दानमेकं परं स्मृतम्। तपसा पापमित्युक्तं न पापो दानकर्मणि॥
तपः कृतयुगे श्रेष्ठं त्रेतायां ध्यानमेव च। सपर्या द्वापरे श्रेष्ठा दानं श्रेष्ठं कलौ युगे ॥
तस्मात्कलियुगेदानं प्रीतये कमलापतेः। कर्तव्यं सततं प्राज्ञैरिच्छद्भिः परमं पदम् ॥४
कलया कलया चन्द्रकला सम्वर्धतेतथा। दानस्य सा गतिः प्रोक्ता तपसश्च मनीषिभिः
पलादपि द्विजश्रेष्ठ! कर्तव्यो वित्तसंग्रहः। सञ्चितं तु धनं प्राज्ञो दानकर्मणि संक्षिपेत्
धनेस्थितेऽपियो मर्त्यो नाऽश्नातिन ददातियः। दरिद्रःसच विज्ञेयो दानभोगविवर्जितः
वित्तं केन सहाऽऽयाति याति तेन तु को द्विज!।
आयाति तत्पुरा दत्तमिह पञ्चत्वमागते ॥ ८ ॥
दत्त्वा दत्त्वा सदा दानं मानवा ये दरिद्रति। न ते दरिद्रा विज्ञेयाः परलोके महेश्वराः॥
धनं रक्षन्ति कार्पण्याद्ये ते ज्ञेयाः सुदुःखिताः।
अन्ते त्यक्त्वा च तत्सर्वं निराशा यान्ति जैमिने! ॥ १० ॥

परलोके द्विजश्रेष्ठः ! साधुसद्बलवर्जितः । निर्धने बन्धुहीने च नादत्तमुपतिष्ठते ॥११
स्तोकंस्तोकं च विप्रेन्द्र! भक्तिश्रद्धासमन्वितः । नित्यं देयानि दानानि वैष्णवैर्निजभक्तितः
सर्वेषामेव दानानामन्नदानं द्विजोत्तम ! । जलदानं च तत्त्वज्ञैरतिश्रेष्ठं प्रकीर्तितम् ॥
विनाऽन्नेन न तिष्ठन्ति प्राणा देहेषु देहिनाम् । अन्नदः प्राणदो ज्ञेयः प्राणदः सकलप्रदः
तस्मात्समस्तदानानामन्नदो लभते फलम् । अन्नदानसमं दानं जलदानं च जैमिने ! ॥
विना तोयेन नान्नं स्यादतस्तोयं प्रदीयते । क्षुधातृषाऽपि विप्रेन्द्र! द्वे तुल्ये तु प्रकीर्तिते
तस्माद्दत्वा च तोयं च श्रेष्ठं प्रोक्तं मनीषिभिः । जीवनं जीवनं नृणां जीवनं न च जीवनम्
अतो जीवनरक्षार्थं जीवनं प्राज्ञ उत्सृजेत् । अन्नं तोयं च विप्रेन्द्र! दत्तं येन महीतले ॥
तेन सर्वाणि दानानि कृतानि नाऽत्रसंशयः । अन्नदानस्य माहात्म्यं जलदानस्य वै शृणु
बभूव हास्तिनपुरे कुबेरइव वित्तवान् । तस्मिन्नेव पुरे वेश्या बभूव सुरसुन्दरी ॥२०॥
ख्याता रतिविदग्धेति सर्वलक्षणसंयुता । तत्र क्षेमङ्करी नाम ब्राह्मणीश्रेष्ठवंशजा ॥२१

समस्तगुणसम्पन्ना विधवाऽऽसीद्द्विजात्मजा ।
सा ब्राह्मणी द्विजश्रेष्ठ! जारानुरक्तमानसा ॥ २२ ॥
निषिद्धं कर्म कुर्वन्ती त्यक्त्वा यात्यविवेकताम् ।
तया संनिहिता विप्र ! वेश्याऽपि ब्राह्मणी च सा ॥ २३ ॥

चकार सख्यं स्नेहेन वेश्यावृत्तिमुपेत्य सा । सा वेश्या ब्राह्मणी चाऽपि द्वे चैकत्र दिने दिने
पापानि चक्रतुः प्रीत्या असङ्ख्यातानि जैमिने !। ततो रतिविदग्धा सा वृद्धभावमुपागता

ब्राह्मणी चाऽपि विप्रेन्द्र! दुःशीलाऽत्यन्तपापिनी ।
कदाचिद्दारमुख्या सा जरती तां निजां सखीम् ॥ २६ ॥
प्राहेति विस्मिता विप्र! वचनं विनयान्विता ॥ २७ ॥

रतिविदग्धोवाच ।

सखि त्वया सहाऽनेकं दारुणं पातकं कृतम् । अद्याऽपि पातके दृष्टिर्महती वर्तते मम॥
सौन्दर्यञ्च बलञ्चैव सर्वं मे जरया हृतम् । इत्थमस्वास्थ्यकृन्नित्यमाशा त्यक्तुं न शक्यते
स्थाविरं सुमहत्प्राप्तं कृतपातकया मया । समागतमिवैतर्हि समीक्ष्य मरणं गतम् ॥३०

उपार्जितानि पापेन यानिवित्तानिवै मया । रक्षिष्यन्त्यनपत्यायां मृतायां मयितानिके
तस्मात्सर्वाणि वित्तानि अन्यायोपार्जितानि च ।
दातुमिच्छामि विप्रेभ्यो यदि त्वं मन्यसे सखि ! ॥ ३२ ॥

ब्राह्मण्युवाच ।

मयायावन्तिवित्तानि पश्येतिसंचितानिच । असत्पात्रेषुदत्तानि तानि सर्वाणिनित्यशः
तस्मादहं धनैर्हीना किं दास्यामि द्विजातये । अस्तिचेद्यदि वित्तं ते दानमाशु तदाकुरु
तस्या एवं वचः श्रुत्वा सा वेश्याऽत्यन्तहर्षिता । वित्तेन सकलेनैव अन्नदानंचकारह
हरिशर्मा च विप्रेन्द्रो धनवानतिभक्तितः । पूजयामास सततं भगवन्तं जनार्दनम् ॥३६
जितेन्द्रियो जितक्रोधो हिंसादम्भविवर्जितः । प्रीतये कमलाभर्तुः स तेपे सुमहत्तपः ॥
गन्धपुष्पैश्च बलिभिर्घृतधूपैः प्रदीपकैः । पूजयामास देवेशं नित्यमेव जनार्दनम् ॥३८॥
धनवानपि विप्रोऽसौ वित्तस्यक्षयशङ्कितः । पिपीलिकामूषिकाश्च तथान्येऽपिचजन्तवः
कृपणस्य द्विजश्रेष्ठ! गृहे नित्यं बुभुक्षिताः । उपार्जितं धनं सर्वं स्वयमेव दिनेदिने ॥४०
बुभुजे ब्राह्मणश्रेष्ठ! दानकर्मविवर्जितः । सुहृदां ब्राह्मणानाञ्च बान्धवानां कदाऽपि सः
चकार न च सम्भाषामर्थप्रार्थनशङ्कया । विगणय्य स्ववित्तानि सुबहूनि निजालये॥४२
मत्वा श्रेष्ठमिवाऽऽत्मानं मोदतेऽसौ द्विजोत्तम ! ।
कदाचित्प्राप्तकालोऽसौ ब्राह्मणोऽत्यन्तवित्तवान् ॥ ४३ ॥
गणिका ब्राह्मणीसाच एककालेमृताद्विज !। अथदूताः समायातास्तान्नेतुमतिभीषणाः
धर्मराजस्य देवस्य पाशमुद्गरपाणयः । ते च चण्डादयो दूतास्तान्समादाय जैमिने !॥
ययुर्धर्मपुरं सद्यो दुर्गमेन पथा ततः ॥ ४५ ॥

चण्ड उवाच ।

आनीतोहरिशर्माचवेश्याचब्राह्मणीचसा । तवाऽऽज्ञयाजीवितेश पश्यैतान्पुरतःस्थितान्
तान्समालोक्य जीवेशः प्रहस्य द्विजसत्तम !। चित्रगुप्तमिति प्राह सर्वकार्यविचक्षणम्

यम उवाच ।

एतेषां सर्वकार्याणि शुभदान्यशुभानि च । मूलाद्विचारय प्राज्ञ चित्रगुप्त महामते ! ॥

यमादेशात्ततस्तेषां चित्रगुप्तो विचक्षणः । सर्वं विचारयामास शुभकर्माऽशुभं तथा ॥

चित्रगुप्त उवाच ।

देवाऽऽकर्णयवक्ष्यामि पुण्यंच पातकं तथा । इयंवेश्या ब्राह्मणीचहरिशर्मा चकार यत्
एषारतिविदग्धाख्यागणिकाऽतिदुराशया । चकार यानि पापानि वक्तुंतानिन शक्यते
अन्यायोपार्जितैर्वित्तैरखिलैरेव सूर्यज !। अन्नदानं चकारेयं गणिका गतयौवना ॥ ५२
अन्नदानप्रभावेण यातना गृहवासदैः । त्यक्तेयं पातकैः सर्वैः कोटिजन्मार्जितैरपि ॥
अन्नदानंमहाराज!ये कुर्वन्तिजनाःक्षितौ । तेपापिनोऽपि गच्छन्ति तद्विष्णोःपरमंपदम्

यावन्त्यन्नानि यच्छन्ति मानवाः क्षितिमण्डले ।
तावन्त्यो ब्रह्महत्याश्च तस्य नश्यन्त्यसंशयम् ॥ ५५ ॥

अन्नानियच्छतां त्यक्त्वाशरीराणिच पातकम् । गृह्णतामेवपात्राणि सहसा यातिसूर्यज!
अन्नानिपापिनांतस्मान्न गृह्णन्तिविचक्षणाः । मोहाद्गृह्णन्तिये मूढास्तएवपापभागिनः

शुभकर्माऽशुभं वाऽपि वेश्यायाः कथितं प्रभो ! ।
ब्राह्मण्याः शृणु कर्माणि शुभानिचाऽशुभानिच ॥ ५८ ॥

इयं क्षेमङ्करी नाम ब्राह्मणी शुद्धवंशजा । भद्रकीर्तिप्रिया सर्वं चकार दुरितं प्रभो ! ॥
त्यक्त्वानिजाश्रमाचारं निजयौवनगर्विता । बभूवाऽत्यन्तपापिष्ठा जारसङ्गमलोलुपा ॥
कदाचिच्छैशवे राजन्खेलन्ती शिशुभिःसह । रथ्यायांखननंचक्रे चतुष्कोणसमन्वितम्
तस्मिन्नेव दिनेमेघउदकानि ववर्ष च । पूरितं तज्जलैः खातं(मे) तया विनिर्मितं प्रभो!
ततोमध्याह्नसमये गौरेका तृषिता नृप !। अपिबत्तत्र पानीयंतापितातपनातपैः ॥६३ ॥
तेनैव सर्वपापानिविनष्टानि महान्ति वै । तस्याः सूर्यसुत! प्राज्ञ ! जलदानप्रभावतः ॥
विमुक्ता सकलैः पापैर्व्रजेन्नरायणालयम् । कृतपापा हि देवेश ब्राह्मणीयंदुराशया॥६५
विमुक्ता सकलैः पापैर्जलदानप्रभावतः । अयंविप्रोमहाभक्तो देवदेवस्य चक्रिणः॥६६॥

ततोऽस्योपरि जीवेश ! प्रभुरेकोऽच्युतः स्मृतः ॥ ६७ ॥

व्यास उवाच ।

चित्रगुप्तस्य तद्वाक्यंसमाकर्ण्य स दण्डभृत् । तांवेश्यांब्राह्मणींचापिववन्देब्राह्मणंचतम्

दिव्यैः सुवर्णालङ्कारैर्वस्त्रैर्नानाविधैस्तथा। तेषां पूजा यमः कृत्वाकुटुम्बीनांचजैमिने!
उवाच प्रहसन्वाक्यंसुप्रीतो मृदुलाक्षरम् ॥ ६६ ॥

यम उवाच।

यूयंसर्वेमहात्मानो विनष्टाखिलपातकाः। समस्तसुखदस्थानंगच्छत श्रीपतेः प्रभो!॥
तानारोप्य ततो दिव्ये यमः काञ्चननिर्मिते। राजहंसयुते स्थानं प्रेषयामास चक्रिणः
ततोदिव्यरथारूढाः सर्वाभरणभूषिताः। पुरं भगवतो जग्मुस्ते सर्वे गतपातकाः॥
गणिका ब्राह्मणी सा च विनष्टाऽखिलकल्मषा।
सान्निध्यं प्राप्य देवस्य तस्थौ विप्र! चिरंसुखम् ॥
हरिशर्माणमालोक्य समायान्तं जनार्दनः। ददौ वरासनं तस्मैस्नेहात्कनकनिर्मितम्
पाद्यार्घ्याचमनीयैश्चतमभ्यर्च्य द्विजोत्तमम्। वरासनोपविष्टश्च पप्रच्छेतिमुदा हरिः॥

श्रीभगवानुवाच।

द्विजन्मन्कुशलं ब्रूहि मद्भक्तप्रवरोऽसि यत्। चिरंमेमन्दिरे तिष्ठ सर्वोपद्रववर्जिते॥७७
स्नेहवाक्यं भगवतः श्रुत्वा हृष्टमनाद्विजः। प्रणम्य शिरसा विष्णुमुवाच नतकन्धरः

ब्राह्मण उवाच।

त्वांस्मृत्वाऽपिक्षितौदेवलभनेकुशलं प्रभो!। त्वत्सान्निध्यंमयाप्राप्तं कुशलंकिमतःपरम्

व्यास उवाच।

एतस्य वचनं श्रुत्वा भगवान्प्रणयोदितम्। दत्तवान्निजसारूप्यं प्रीतस्तस्मैद्विजन्मने
ददौ तस्मैसुखंसर्वं दुर्लभं कमलापतिः। आहारमात्रं न ददौ तत्कार्पण्यं स्मरन्प्रभुः॥
दिनद्वयान्तरे विप्रो निराहारः क्षुधाकुलः। प्रोवाच विष्णुं देवेशं विनयावनतः स्थितः

ब्राह्मण उवाच।

प्रभो!प्राप्तं तवस्थानमनेकतपसां फलम्। अत्राऽपिक्षुधया नित्यंविफलंऽस्मिकथंप्रभो
देवकन्यागणैर्दिव्यैः संप्राप्तनवयौवनैः। श्वेतचामरवातेन मञ्चेष्वपि निवीजितः॥
सुगन्धानां प्रसूनानां महास्रग्भिरलङ्कृतः। चन्दनैर्लिप्तसर्वाङ्गो राजश्रेष्ठइव प्रभो! ॥
चार्वङ्गीभिः कामिनीभिर्नित्यं मत्पुरतः प्रभो। गीतेनर्नृत्यते चापिनारायण! तवाज्ञया

वासवाद्याः सुरा सर्वेरजांसिममपादयोः । शिरः किरीटशोभीनिनित्यमेववहन्तिवै
देव!देवर्षयश्चाऽपि मुनयश्च जगत्पते !। स्तुवन्ति मांस्तवैर्नित्यं किङ्करा इव सर्वदा ॥
चतुर्बाहुरहं श्यामः शङ्खचक्रगदाब्जभृत् । प्रफुल्लपुण्डरीकाक्षः पीतवासाः सुकुण्डलः॥
स्वर्णयज्ञोपवीती च किरीटी कुण्डली तथा । दृश्ये त्वमिवदेवाद्यैर्द्वितीयोगरुडध्वजः॥
सुखान्येतानि दत्तानि दुर्लभानि त्वया प्रभो !। ददासि कथमाहारं न मह्यं परमेश्वरः !
क्षुधाग्निना च सुमहच्छरीरंममदह्यते । यथैवज्वलितो वृक्षः कोटरस्थेनवह्निना ॥६० ॥
सुखमेतत्त्वया दत्तं हरे! मह्यं न रोचते । प्रज्वलज्जठराग्नौतु विह्वलाङ्गाय केशव ! ॥६१॥
कर्मणामनसा वाचा त्वां विनाजगदीश्वरम् । न पूजितो मयाकश्चिद्देवदेवगणार्चितः
स्वप्नेनाऽपि जगन्नाथ! तस्य भक्तिःकृता नहि । आहारंकेनदोषेणददासिनहि मे प्रभो !

व्यास उवाच ।

अथाऽसौभगवान्विष्णुःकौतुकीसमुवाचतम् । गच्छब्राह्मणभद्रन्तेब्राह्माणंप्रतिसत्वरम्
इतिश्रुत्वा वचो विप्रः शीघ्रंब्रह्माणमाययौ । ब्रह्माणंप्रतिप्रोवाच कार्पण्यं तस्यदर्शयन्

ब्रह्मोवाच ।

दुःखादुपार्जितंद्रव्यं दीयते यत्र भूसुरे । स्वयं न भुज्यते तच्च नष्टमेव न संशयः ॥६६॥
कारणं तव दुःखस्य सर्वमेव मयोदितम् । गच्छब्राह्मण! भद्रन्ते निःसंदेहोऽयमागतः॥

ब्राह्मण उवाच ।

निजकर्मविपाकोऽयं त्वत्प्रसादाच्छ्रुतोऽखिलः ।
इदानीं ब्रूहि दानानि कानि देयानि मानवैः ।

ब्रह्मोवाच ।

बहूनि सन्ति दानानितानिवक्तुं न शक्यते । संक्षेपात्कथ्यतेविप्रनिशामय समाहितः॥
भूमिदानं द्विजश्रेष्ठ ! सर्वदानोत्तमोत्तमम् । कृतं पुण्यात्मना येन स ज्ञेयः सर्वदानकृत्
गोचर्ममात्रां भूमिं यो ददाति द्विजसत्तम !। स गच्छेत्परमंस्थानं विमुक्तः सर्वपातकैः
भूमिं सस्यसमेतां यो दरिद्राय द्विजातये । ददातिब्राह्मणश्रेष्ठतस्यपुण्यं निशामय ॥२॥
सर्वपापविनिर्मुक्तो नारायणपुरं व्रजेत् । तत्रभुङ्क्तेसुखंसर्वं यावदिन्द्राश्चतुर्दश ॥ ३ ॥

भूयो भूमिंसमासाद्यसार्वभौमोनृपोभवेत् । चिरंभुक्त्वामहीं कृत्स्नांनरोनारायणोभवेत्
यस्माद्भूमिर्द्विजैर्ग्राह्यात्यक्त्वादानशतान्यपि । भूमिदोभूमिनेताचद्वावपिस्वर्गगामिनौ
मन्दबुद्धिर्द्विजो यस्तु भूमिदानं परित्यजेत् । प्रतिजन्मनि विप्रेन्द्र! स भवेदतिदुःखितः॥
अन्येभ्योऽपिसमादाय भूमिदानं य आचरेत् । तस्य विष्णुरतिप्रीतो ददाति परमंपदम्
ग्रामं यच्छति यो विप्र!दरिद्राय द्विजातये । दापयत्यपि वा तस्यपुण्यं वाऽपिनिशामय
यावन्तोरेणवोभूमौयावन्तो वृष्टिबिन्दवः। मन्वन्तराणितावन्ति विष्णुलोकेवसेत्सुधीः
धेनुंपयस्विनीं यस्तु सवत्सां यच्छति द्विज !। तस्य वर्ण्याम्यहं पुण्यमाकर्णयमहात्मनः
सप्तद्वीपां महीं दत्त्वासस्यां यत्फलं लभेत् । तत्फलंलभते मर्त्योधेनुं यच्छन्द्विजातये
ददाति वृषभं यस्तु ब्राह्मणाय कुटुम्बिने । विमुक्तः पातकैस्सर्वै रुद्रलोकं स गच्छति॥
तस्ययावन्ति रोमाणि शरीरेवृषभस्य च । तावत्कल्पसहस्राणि रुद्रेण स च मोदते॥
यस्तु वेदविदे धेनुंदद्यादुभयतो मुखीम् । न तस्य पुनरावृत्तीरुद्रलोकात्कदाचन॥१४॥
वृषंतिलसमायुक्तं कृष्णं यस्तु प्रयच्छति । स रुद्रभवने तिष्ठेद्द्विजेन्द्र! तिलसङ्ख्यया ॥
तिलप्रमाणमपि च स्वर्णं दद्याद्द्विजातये । स याति विष्णुभवनं कुलकोटिसमन्वितः॥
यो भक्त्या रजतं यच्छेद्दरिद्राय द्विजातये । चन्द्रलोकं समासाद्य सुधापानंकरोति सः
हीरकंमौक्तिकं चाऽपि प्रवालंचमणिंतथा । यो ददाति द्विजश्रेष्ठ!शक्रलोकं स गच्छति
अश्वदानं द्विजश्रेष्ठ!यः करोति महाशयः । गन्धर्वराजराजत्वं स प्राप्नोति न संशयः ॥
ददाति वारणं यस्तु युवानं दोषवर्जितम् । देवराज्ये विभागी स भवेदिन्द्रइव द्विज!॥
नरदोलाश्च योदद्याद्ब्राह्मणाय सदक्षिणाम् । सोऽपीन्द्रपदमासाद्य वसेत्कल्पचतुष्टयम्
शालग्रामशिलादानं यो ददाति द्विजातये । तस्य पुण्यं प्रवक्ष्यामि समासेन शृणुद्विज!
सप्तद्वीपां महीं दत्त्वा सशैलवनकाननाम् । यत्फलं तच्च लभते शालग्रामशिलाप्रदः ॥
तुलापुरुषदानेन यत्फलं प्राप्यते नरैः । शालग्रामशिलां यच्छंस्तस्मात्कोटिगुणं लभेत्
शालग्रामशिला येन प्रदत्ता द्विजसत्तम !। नूनं तेन प्रदत्तानि भुवनानि चतुर्दश॥१२५॥
तुलापुरुषदानं यः प्रकरोति नरोत्तम !। दिवि दिव्याम्बरधरश्चिरं स च महीपतिः ॥
जननीजठरे भूयस्तस्य जन्म न विद्यते। ददाति यस्तु वै कन्यां सालङ्कारां नरोत्तमः॥

सगच्छेद्विष्णुभवनं पुनरावृत्तिवर्जितः । यः कन्याविक्रयं मूढो मोहात्प्रकुरुते नरः ॥
स गच्छेन्नरकं घोरं पुरीषह्रदसञ्ज्ञकम् । विक्रीतायाश्च कन्याया यः पुत्रो जायते द्विज!
स चाण्डालइवज्ञेयः सर्वधर्मबहिष्कृतः । कन्याविक्रयिणः पुंसो मुखंपश्येन्न शास्त्रवित्
पश्येदज्ञानतो वाऽपि कुर्याद्भास्करदर्शनम् । यत्किञ्चित्क्रियते कर्म कन्याविक्रयिणःपुरः

शुभं तत्सकलं कर्म गच्छेद्विफलतां द्विज ! ।
कन्याविक्रयिणो नास्ति नरकान्निष्कृतिः पुनः १३२ ॥

कन्यादानकृतो नास्ति स्वर्गादागमनं पुनः । बहुनाऽत्र किमुक्तेन सङ्क्षेपेण ब्रवीमि ते
हीरकक्षितिकन्यानां फलं स्याच्चशताधिकम् । उपानहं चाऽऽतपत्रं यस्तुयच्छतिभूतले
शृणु तस्य तु वै पुण्यं संक्षेपेण ब्रवीमि ते । इह वर्षशतं जीवेत्सर्वसम्पत्समन्वितः ॥
मृतः शक्रपुरं प्राप्य शतकल्पचतुष्टयम् । ददाति नूतनं वस्त्रं स याति परमां गतिम् ॥
वस्त्रं पुरातनं यच्छेद्धेनुं च जरतीं तथा । कन्यां रजस्वलां यस्तु स सदा नरकं व्रजेत्
फलदोमानवो विप्र!गच्छतित्रिदशालयम् । भुङ्क्ते कल्पसहस्राणिफलंतत्राऽमृतोपमम्
शाकप्रदो याति विप्र!शम्भोर्भगवतः पदम् । तत्र कल्पद्वयं भुङ्क्ते पायसं दुर्लभं सुरैः॥
दुग्धदो दधिदश्चैव घृतदस्तक्रदस्तथा । प्राप्नोति वै सुधापानं पुरो भगवतो हरेः ॥
पुष्पदो मनुजो विप्र ! गन्धदश्च सुरालये । तिष्ठेद्युगसहस्राणि पुष्पगन्धविभूषितः ॥
शय्यादानं द्विजश्रेष्ठ ! यः करोति द्विजोत्तम ! । स ब्रह्मलोकमागत्य पर्यङ्कशयनश्चिरम्
दीपदः पीठदश्चैव सर्वपापविवर्जितः । दिव्यसिंहासनस्थश्च जलदीपावलीवृतः ॥१४३
ताम्बूलदो नरो राजन्भुविभुङ्क्तेऽखिलंशुभम् । दिविदेवाङ्गनाक्रोडे सुमस्ताम्बूलमत्तिवै

विद्यादानं द्विजश्रेष्ठ ! यः करोति नरोत्तम ! ।
सम्प्राप्य सन्निधिं विष्णोस्तिष्ठेद्युगशतद्वयम् ॥ १४५ ॥

ततो ज्ञानं समासाद्य तत्रैव द्विजसत्तम ! । प्राप्नोति दुर्लभं मोक्षं प्रसादात्कमलापतेः॥
अनाथं ब्राह्मणं यस्तु पाठयत्यतिदुःखितम् । स याति विष्णुभवनं पुनरावृत्तिदुर्लभम्

कुलीनोऽपि द्विजश्रेष्ठो न भाति विद्यया विना ।
तस्माद्द्विजं पाठयन्तः प्रयान्ति परमं पदम् ॥ १४८ ॥

भुवि प्रत्यक्ष देवोऽपि ब्राह्मणो देवताश्रयः। सर्ववर्णगुरुर्नैव विद्याहीनो विराजते॥
संसारे यानि दानानि सन्ति हेमादिकानिच। तानि तेन प्रदत्तानि ब्राह्मणोयेनपाठितः
कुर्यात्पुस्तकदानं यो नरो भक्तिसमन्वितः। तस्यपुण्यं द्विजश्रेष्ठ!संक्षेपात्ते वदाम्यहम्
तत्राऽक्षराणि यावन्ति पत्रेपत्रेच पुस्तके। प्रत्यक्षरे लभतेत्पुण्यं कपिलाकोटिदानजम्
यावद्दिनं पुस्तकं तत्प्रपठन्ति द्विजातयः। तावन्मन्वन्तरं तिष्ठेद्वैकुण्ठे पुस्तकप्रदः॥
एवमादीन्यनेकानि सन्तिदानानि भूसुर!। सम्यग्वक्तुं जगत्यस्मिन्कः शक्तो द्विशतैरपि
ब्रह्महत्यादिपापानि क्रियन्तेयानि मानवः। हन्यन्ते तानिपापानि तस्माद्दानंसमाचरेत्
आत्मपुण्येन यद्दानं दीयते च त्रिभिर्जनैः। यावद्द्रव्यं फलं तस्मात्तस्य दानस्यलभ्यते
प्रीतये कमलाभर्तुर्यद्दानं दीयते जनैः। तस्य कोटिगुणं पुण्यं लभते नाऽत्रसंशयः॥
तस्मान्नारायणप्रीतिहेतवे मतिमान्नरः। दानं समाचरेद्विप्र!भक्तिकर्मसमन्वितः॥१५८॥
तपसोऽपि परं दानं निरुक्तं तत्त्वदर्शिभिः। अतो यत्नादपि प्राज्ञो दानकर्म समाचरेत्
दानं तपो द्वेअपि यः प्रकरोति नरोत्तमः। तस्य तुल्यो जगत्यस्मिन्विद्यते नहि भूसुर!

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे सर्वदानमाहात्म्यं नाम विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः

### अन्नदानजलदानमाहात्म्ये विप्रपादप्रक्षालनतीर्थजलेनभषकमुक्तिस्तस्य-पूर्वजन्मकथापुरःसरं हरिशर्मब्राह्मणवृत्तवर्णनम्

व्यास उवाच

ब्रह्मणोवचनंश्रुत्वा हरिशर्मा द्विजोत्तमः। भूयोऽपि तं नमस्कृत्यभक्त्या प्राहेतिजैमिने!

हरिशर्मोवाच।

प्रोक्तानि यानि दानानि सुबहूनित्वयाप्रभो!। कस्मै देयानि दानानि तन्मेगदितुमर्हसि

ब्रह्मोवाच ।

सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः । तस्मै देयानि दानानि भक्तिश्रद्धासमन्वितैः
सर्वदेवाश्रयो विप्रः प्रत्यक्षस्त्रिदशो भुवि । स तारयति दातारं दुस्तरे विश्वसागरे ॥४

ब्राह्मण उवाच ।

सर्ववर्णगुरुर्विप्रस्त्वया प्रोक्तः सुरोत्तम !। तेषां मध्ये तु कःश्रेष्ठः कस्मै दानं प्रदीयते

ब्रह्मोवाच ।

सर्वेऽपिब्राह्मणाः श्रेष्ठाःपूजनीयाः सदैवहि । स्तेयादिदोषतप्ता ये ब्राह्मणाब्राह्मणोत्तम!

अस्माकं द्वेषिणस्ते च परेभ्यो न कदाचन ।
अनाचारा द्विजाः पूज्या न च शूद्रा जितेन्द्रियाः ॥ ७ ॥
अभक्ष्यभक्षका गावो लोकानां मातरः स्मृताः ।
माहात्म्यं भूमिदेवानां विशेषादुच्यते मया ॥ ८ ॥

तवस्नेहाद्द्विजश्रेष्ठ! निशामयसमाहितः । क्षत्रियाणांच वैश्यानां शूद्राणांगुरवोद्विजाः
अन्योन्यं गुरवो विप्राःपूजनीयाश्च भूसुराः । ब्राह्मणं पूजयेद्यस्तु विष्णुबुद्धयानरोत्तम!
आयुःपुत्रश्च कीर्तिश्च सम्पत्तिस्तस्य वर्धते । सञ्चिनोति द्विजंयस्तु मूढधीर्मानवोभुवि
सुदर्शनेन तच्छीर्षं हन्तुमिच्छति केशवः । पुष्पहस्तं पयोहस्तंदेवहस्तं च जैमिने !
न नमेद्ब्राह्मणंप्राज्ञस्तैलाभ्यक्तस्वविग्रहम् । जलस्थं देववेश्मस्थंध्यानमज्जितचेतसम्
देवपूजां प्रकुर्वन्तं न नमेद्ब्राह्मणं बुधः । बहिष्क्रियां प्रकुर्वन्तंभुञ्जानं च द्विजोत्तम !
तथा सामानि गायन्तं न नमेद्ब्राह्मणं बुधः । ब्राह्मणायत्रतिष्ठन्ति बहवो द्विजसत्तम!॥
प्रत्येकन्तुनमस्कारस्तत्रकार्योन धीमता । कृताभिवादनं विप्र! भक्त्यायोनाऽभिवादयेत्
स चाण्डालसमो ज्ञेयो नाऽभिवाद्यः कदाचन । कृतप्रणामं तनयं नमेतां पितरौ नच॥

कृतप्रणामाः सर्वेऽपि नमस्कार्या द्विजैर्द्विजाः ।
कृतदोषान्द्विजान्गाश्च न द्विषन्ति विचक्षणाः ॥ १८ ॥

द्विषन्तिवाऽपिमोहेन तेषांरुष्टःसदाहरिः। याचकान्ब्राह्मणान्यस्तु कोपदृष्ट्याप्रपश्यति
सूचिप्ररोपणं तस्य नेत्रयोः कुरुते यमः । विप्रनिर्भर्त्सनं मूढा येन वक्त्रेण कुर्वते॥२०॥

तस्मिन्वक्त्रे यमस्तप्तं लोहदण्डं ददाति वै । ब्राह्मणो यद्गृहे भुङ्क्ते तद्गृहे केशवः स्वयम्
देवताः सकला ये च पितरश्च सुरर्षयः । विप्रपादोदकं यस्तु कणमात्रं वहेद्बुधः ॥
देहस्थं पातकं तस्य सर्वमेवाऽऽशु नश्यति । कोटिब्रह्माण्डमध्येषु सन्ति तीर्थानि यानि वै

तीर्थानि तानि सर्वाणि विप्रपादे तु दक्षिणे ।

विप्रपादोदकैर्नित्यं सिक्तं स्याद्यस्य मस्तकम् ॥ २४ ॥

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । सर्वपापानि घोराणि ब्रह्महत्यादिकानि च
सद्यस्तस्य विनश्यन्ति विप्रपादाम्बुधारणात् । क्षयाद्या व्याधयः सर्वाः परमक्लेशदायिकाः
गच्छन्ति विलयं सद्यो विप्रपादाम्बुधारणात् । पित्रर्थं यानि तोयानि दीयन्ते विप्रपादयोः
तैस्तृप्ताः पितरः स्वर्गे तिष्ठन्त्याचन्द्रतारकम् । प्रक्षाल्य विप्रचरणौ दूर्वाभिर्योऽर्चयेद्बुधः

तेनाऽर्चितो जगत्स्वामी विष्णुः सर्वसुरोत्तमः ।

विप्राणां पादनिर्माल्यं यो मर्त्यः शिरसा वहेत् ॥ २६ ॥

सत्यं सत्यमहं वच्मि तस्य मुक्तिर्हि शाश्वती । विप्रं प्रदक्षिणीकृत्य वन्दते यो नरोत्तमः
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा । प्राप्यन्ते सर्वकामास्तु विप्राणां पादसेचनात्
रोगी रोगात्प्रमुच्येत पापी मुच्येत पातकात् । मुच्यते बन्धनाद्बद्धो विप्राणां पादसेचनात्
अनपत्याश्च या नार्यो मृतपत्याश्च याः स्त्रियः । बहुपत्या जीववत्सा विप्रपादस्य सेचनात्
माहात्म्यं शृणु विप्रेन्द्र! सर्वपापप्रणाशनम् । द्विजाङ्घ्रिसेचनस्याऽहं समासेन ब्रवीमि ते
पूर्वं भद्रक्रियो नाम पवित्रकुलसम्भवः । बभूव ब्राह्मणो विष्णोः परिचर्यापरायणः ॥
वेदवित्सदयः शान्तः पितृभक्तिपरायणः । अतिथीनां पूजकश्च ज्ञातिपूजाकरस्तथा ॥
एकदा स द्विजश्रेष्ठस्तैलाभ्यक्तस्वविग्रहः । जगाम सरसीं स्नातुं गृहीतस्नानवस्त्रकः ॥
कृतस्नानः स विप्रेन्द्रो विधिना तर्पणादिकम् । चकार सर्वशास्त्रज्ञः सर्वलोकहिते रतः
समाप्य स्नानकर्माणि हरिनामानि कीर्तयन् । आजगाम स्वके गेहे हरिपूजापरोऽभवत्
पादौ प्रक्षालयामास पानीयैरतिशीतलैः । प्रक्षालिताङ्घ्रिहस्तोऽसौ ब्राह्मणो ब्राह्मणार्चकः
स्थापयामास सर्वाणि स्नानोपकरणानि च । द्वारदेशे द्विजश्रेष्ठ! निदाघतपनातपैः ॥ ४१
तापितो भषकः कश्चिदग्निकल्पैः समागतः । विप्रपादोदके तस्मिन्प्रसुप्तोऽत्यन्तशीतले ॥

विप्रपादोदकस्पर्शाद्भषकोऽत्यन्तपातकी । विमुक्तः पातकैः सर्वैः कोटिजन्मकृतैरपि ॥
स सुप्तो मन्दिरद्वारि भषको विकलस्तृषा । पानीयं याचयामास ताडितोद्विजकिङ्करैः

जगाम पञ्चतां सद्यो वभूव भषको द्विजः ।
द्विजाङ्घ्रिसेचनस्पर्शाद्भषको वीतकल्मषः ॥ ४९ ॥

तमालोक्य महात्मानं मूर्तिमन्तमिवेश्वरम् । विनयावनतः प्राह ब्राह्मणोऽसौ तपोधनः

ब्राह्मण उवाच ।

कस्त्वं ब्रूहि महाभाग!केन दुःखी तु कर्मणा । भषकस्य कुले जातोनानादुःखसमाकुले
वचनं तस्य विप्रर्षेः समाकर्ण्य महायशाः । कथयामास वृत्तान्तं मूलकः सर्वमात्मनः
अहमासं सार्वभौमः शङ्कुनामा महाबलः । चतुर्वर्षसहस्राणि महीं कृत्स्नामपालयम् ॥
मयाऽऽज्ञायांकृताः सर्वेजिताश्चरिपवोयुधि । दत्तानि सर्वदानानिपालिताज्ञातयोनिजाः
एकदाऽहं महाभाग! ताडितः स्मरसायकैः । बलाज्जनवधूं काञ्चिज्जहार भृशसुन्दरीम्
तेन पापप्रभावेण मम श्रीः संशयं गता । ततः समस्तैर्लोकैश्च निरस्तोऽहं महाबलः ॥
ततस्तु भ्रष्टराज्योऽहं काननाभ्यन्तरे स्थितः । क्षुधातृषापरिश्रान्तःकदाचित्पञ्चतांगतः

अन्तकस्य पुरं गत्वा दुःखं भुक्तं मया चिरम् ।
तदाकर्णय विप्रेन्द्र ! शृण्वतां चित्तदुःखदम् ॥ ५५ ॥

सन्तप्तलोहशस्त्रौघां तप्तां ताम्रमयींमहीम् । प्रापितोऽहं ज्वलद्वह्निशिखातातिसुभीषणाम्

ततस्तु शमनादेशाल्लोहस्तम्भं सुभीषणम् ।
ज्वलता वह्निना तप्तं समालिङ्ग्य स्थितोऽस्म्यहम् ॥ ५६ ॥

अतिशीताम्बुधाराभिः सक्तोऽहं यमकिङ्करैः । दुःखमन्यच्च सुमहद्भुक्तं तत्र यमालये ॥
ततो नरकशेषे च जन्माऽऽसाद्य मुहुर्मुहुः । पापयोनौ मया दुःखमनुभूतं चिरं महत्
त्वत्पादजलसंसर्गान्मुक्तोऽहं पापरज्जुना । गच्छामि परमं धाम दुर्लभं योगिनामपि
त्वं मे गुरुर्द्विजश्रेष्ठ!नमस्तेऽस्तु महात्मने । त्वत्प्रसादाद्विमुक्तोऽहं यास्यामि पुरं हरेः

भद्रक्रिय उवाच ।

पूर्वजन्मकथा राजन्मनुष्यो न कदाचन । अतस्त्वविनयं त्यक्त्वा सर्वदानीतिमाचरेत्

नीतिग्राहीनृपोयस्तु विपत्तिर्नास्तितस्यवै । चिरंभुनक्तिपृथिवीं कण्टकैःपरिवर्जिताम्
यस्मै न रोचते नीतिर्भूपालाय दुरात्मने । भ्रष्टश्रीरचिरेणाऽपि स भवेन्नाऽत्रसंशयः ॥
आयुर्बलंयशोमित्रं विजयंसुखमिच्छता । मन्त्रिणःपण्डिता राज्ञा नियोज्याः सर्वदैवहि
अवज्ञाय महीभर्तुस्त्यजन्ते ये सभां बुधाः । सभायां बुधहीनायां नीतिर्बलवती नहि॥
ततो नीतौ विनष्टायां सहसा धरणीपतेः । राजश्रियो विनश्यन्ति सकोशबलवाहनाः

ब्राह्मणान्गणकांश्चैव वैद्यांश्च बान्धवांस्तथा ।
नृपाः कल्याणमिच्छन्तो न क्षिपन्ति कदाचन ॥ ६७ ॥
गतश्रीर्गणकद्वेष्टा वैद्यद्वेष्टाऽऽयुर्वर्जितः ।
ज्ञातिद्वेष्टा निष्कुलः स्याद्विजद्वेष्टाऽखिलार्तिभाक् ॥ ६८ ॥

राजानः पितरःप्रोक्ताःपुत्राः जानपदास्तथा । ततो भूप! पालयन्तिप्रजाःपुत्रमिवौरसान्
पौरलोके तथा कुर्याद्यथा स्नेहोनिजात्मजे । प्रजापीडाकरा ये च भूपालाअतिपापिनः
शिरःस्था विपदस्तेषां विज्ञेयादीर्घदर्शिभिः । विवेकिनोमहीपालाः पालयन्तियथाप्रजाः
तथा तानपिदेवेशः पालयत्यनिशं हरिः । प्रजानां पालनं दण्डं द्वे च राज्ञः शुभावहे॥
द्वाभ्यांविवर्जिताभूपास्ते विज्ञेयानृपाधमाः । दुष्टानां शासनंचैवशिष्टानांप्रतिपालनम्
प्रकुर्वन्तो महिपालाश्चिरंनन्दन्ति भूतले । न्यायेनोपार्जितं वित्तं यत्नाद्रक्षेन्महीपतिः ॥

दुर्वृत्तो हि महीपालो विपत्तौ नहि विस्तरेत् ।
नृपाः कल्याणमिच्छन्तो निजराज्यशुभाशुभम् ॥ ७५ ॥

पश्यन्ति नित्यं विप्रेन्द्र! सत्वराश्चारचक्षुषा । परचक्रभयं यावन्नायाति चिन्तयेद्द्वयम् ॥
आगते तु भये भूपआचरेन्निर्भयोऽपिच । ज्ञातौ वापि च मित्रेवा पुत्रेवाऽपिचमन्त्रिणि
कुर्यान्मुखेन गाम्भीर्यं मनसा प्रेमकेवलम् । मन्त्रिणोज्ञातयः पुत्राः प्रजाश्चभ्रातरस्तथा
गाम्भीर्यहीनं भूपालं मन्यन्ते नहि भूपवत् । तिष्ठन्ति प्रथमं दूरे न सन्ति पुरतस्तथा॥
लोकाश्रयं न हीच्छन्तित्यक्तगाम्भीर्यभूपतेः । एकश्च मन्त्रीराज्ञावैचिरं राजत्वमिच्छता
कर्तव्यः सकले राज्ये वृद्धये नहि भूसुर !। अत्यन्तबुद्धिवृत्तीनां भृत्यानां सपदं हरेत्
तस्मात्संसदिभूपालो भृत्यमन्यं नियोजयेत् । मूर्खस्त्रीविजितोराजा गीतवाद्यरत.सदा

तुरङ्गवाहनैर्हीनः सहसा विपदंव्रजेत् । आचारग्रहणं सत्यं स्ववाक्यप्रतिपालनम् ॥ ८३
गाम्भीर्यं चेति भूपानां लक्षणानि द्विजोत्तम ! । स कथं नृपतिर्यस्तुप्रतापेन विवर्जितः
स कथं नृपतिर्येनाऽनिर्जिताऽपरमेदिनी । जितायांपरमेदिन्यां यावत्पादंव्रजेन्नृपः ॥
प्रतिपादेऽश्वमेधस्य फलंप्राप्नोति चाऽक्षयम् । परभूमिजयाङ्क्षी हतो नृपतिभिर्युधि ॥
तदागच्छेत्परं स्थानं विमुक्तः सर्वपातकैः । युधिप्राप्तजयो राजा प्राप्नोतिपरमंपदम्
सङ्ग्रामे प्राप्तमृत्युर्वादिवीन्द्रसम्पदंलभेत् । त्यक्तशस्त्रंत्यक्तसत्त्वं पलायनपरायणम्
योद्धारं यदि यो हन्ति स भूपो यात्यधोगतिम् । पलायनपरो युद्धेतद्धन्ताचद्विजोत्तम!
तिष्ठेतां तावपिस्वर्गे यावच्चन्द्रदिवाकरौ । बहुनाऽत्र किमुक्तेन संक्षेपादुच्यते मया

प्रजापालनकृद्राजा कदाचिन्नावसीदति ॥ ६१ ॥

ब्रह्मोवाच ।

इतिब्रुवति भूपालेतस्मिन्गलितकल्मषे । पुष्पवृष्टिरभूत्तस्मिन्महती गगनाद्द्विज!॥६२॥
अथ दूताः समायाताः केशवस्य महात्मनः । राजहंसयुतं दिव्यं रथमादायसुन्दरम् ॥
रथं स तं समारुह्य दिव्यं कनकनिर्मितम् । जगाम विष्णुभवनं स राजा गतकल्मषः॥

विप्रपादोदकस्यैतन्माहात्म्यं ते प्रकीर्तितम् ।
यच्छ्रुत्वा भक्तिभावेन नरो निर्वाणमाप्नुयात् ॥ ६५ ॥

इतितेकथितंसर्वं श्रोतुं यद्वाञ्छितं त्वया । गच्छ ब्राह्मण ! भद्रंतेचक्रिणोनिलयं प्रति

हरिशर्मोवाच ।

क्षुधानलेन महता शरीरं मम दह्यते । केनोपायेन भगवन्क्षुधाशान्तिर्भवेन्मम ॥६७ ॥
एतन्मे वद देवेश! भक्तस्य भक्तवत्सलः । प्राप्नोमि सुमहद्दुःखं नित्यं दग्धःक्षुधानलैः

ब्रह्मोवाच ।

यच्छरीरं त्वया पुष्टंसततं भोजनैःकृतम् । भुङ्क्ष्व तस्यशरीरस्यमांसानिद्विजसत्तमः
आत्मतृप्तिं प्रकुर्वन्ति भोजनेन परस्य ये । मांसानि स्वशरीराणां भुञ्जते ते परत्र हि॥

व्यास उवाच

ब्रह्मणो वचनं श्रुत्वा निष्ठुरं द्विजसत्तमः । पुनस्तुष्टाव तं देवं वचनैःकोमलाक्षरैः ॥

ब्राह्मण उवाच ।

प्रसीद देवदेवेश शरणागतपालक !। क्षमस्व सकलंदोषंसुरश्रेष्ठ नमोऽस्तुते ॥१०२ ॥
मलमूत्रप्रकीर्णानिवपूंषिवहतांनृणाम् । सर्व एव प्रभो दोषाः सन्ति केचिद्गुणा नच॥
कृतंमया मोहवता दूषणं क्षन्तुमर्हसि । शरणापन्नलोकानां सद्भिर्दोषो न चेक्ष्यते ॥
आत्मदेहस्य मांसानि भोक्तुं ब्रह्मन्न शक्यते । देहिनां वद यद्योग्यं संतुष्टिर्जायते यतः॥
इत्येवमुक्तं वचनं भक्त्या तेनाऽग्रजन्मना । उवाच सदयो ब्रह्मा सर्वज्ञो ब्राह्मणप्रियः ॥

ब्रह्मोवाच ।

शोकं मा कुरु विप्रेन्द्र! शृणु मे वचनंशुभम् । आहारो लभते येन प्रकारेणाऽत्रसम्प्रति
आत्मनोजायते पुत्रो यथैवाऽऽत्मातथासुतः । तस्मात्पुत्रकृतं कर्म लभन्ते पितरःखलु
चिरं तिष्ठसि देवस्य भवनेऽत्यन्तशोभने । एवमुक्तस्ततस्तेन स विप्रः क्षुधयाकुलः ॥
स्वप्ने संदर्शनं दत्त्वा पुत्रं वचनमब्रवीत् ॥ १०६ ॥

ब्राह्मण उवाच ।

दीक्षितोऽसिसुतश्रेष्ठतथाऽस्तु परमंशिवम् । तवाऽस्मिजनकःसौम्य!ममदुःखंनिशामय
तपः प्रभावैः परमंधामप्राप्तंमयासुत !। क्षुधानलेनसंतप्तस्तत्र सीदाम्यहं सदा ॥१११॥
यदा मयि पितृस्नेहस्तवाऽस्ति सुत'सम्प्रति । तदान्नमुदकं चाऽपिमदर्थंदीयतां द्विज !
यत्किञ्चिद्दीयते पुत्रैः पित्रर्थं क्षितिमण्डले । लभन्ते पितरस्तच्च यत्पुत्राः पितृदेहजाः
पुरा परमया भक्त्या पूजितो भगवान्मया । गीतैर्वाद्यैश्च नृत्यैश्च स्तवपाठैश्च शोभनैः
गन्धैर्धूपैश्चनैवेद्यैर्घृतपूर्णप्रदीपकैः । पाद्यार्घ्याचमनीयैश्च ध्यानैरावाहनादिभिः ॥१५॥
न दत्तं जगदीशाय कृपणेन मयाऽऽत्मज !। अन्नमात्रमपि क्वाऽपि नैवेद्यं पापहारिणे॥
अतिथेर्न कृतापूजा तोयैरन्यैः कदाचन । ज्ञातीनां याचकानां च संतुष्टिर्न कृता मया
तेनैव कर्मणा पुत्र नारायणगृहेऽपि च । क्षुधानलेनसन्तप्तः सीदामि प्रतिवासरम् ॥
अतोऽन्नतोयदानानि दरिद्राय द्विजातये । दत्त्वा क्षिप्रं द्विजश्रेष्ठ!प्राणरक्षां कुरुष्वभोः
अथवा न करोषि त्वं निष्ठुरत्वादिदं यदि ।
स्वमांसान्येव भोक्ष्यामि तदा वै विष्णुमन्दिरे ॥ १२० ॥

अथाऽऽसौ क्षुधितो विप्रः शुष्ककण्ठोष्ठतालुकः ।
इत्युक्त्वा दीक्षितं पुत्रमदृश्यः सहसाऽभवत् ॥ १२१ ॥
ततः प्रभाते विमले प्रादुर्भूते दिवाकरे । स्वप्ने यदुक्तं पित्रा तु चिन्तयामास दीक्षितः॥
आत्मनः कर्मदोषेण परलोकेऽपि मत्पिता । क्षुधया दग्धसर्वाङ्गः सीदति प्रतिवासरम्
धिगस्तु मां मन्दधियं कृपणप्रवरं जनम् । मयाऽपि पितृपुण्येन न किञ्चिदपि दीयते॥
इतिसञ्चिन्त्य बहुधादीक्षितोऽपिद्विजोत्तम !। ददौदानानिविप्रेभ्यः श्रद्धाभक्तिसमन्वितः
तेन पुण्यप्रभावेण तृषया रहितः क्षुधा । तस्थौ नारायणागारेयावत्कालं शृणुष्व तत्
चतुर्युगसहस्राणि ब्रह्मणोऽहः प्रकीर्तितम् । भवन्ति तस्मिन्नेवाऽह्नि मनवश्च चतुर्दश ॥
इन्द्राश्चतुर्दशप्रोक्तास्तस्मिन्नेव दिने च ते । भुञ्जते ब्राह्मणश्रेष्ठ विषयान्स्वान्पृथक्पृथक्
एकस्मिन्ब्रह्मदिवसेभुक्त्वा स्वान्विषयाञ्छुभान् । इन्द्राश्चमनवश्चैव विनश्यन्तिचतुर्दश
विष्णुलोके स्थिते तस्मिन्हरिशर्मणि भास्वरे । समस्तसुखदे रम्ये ब्रह्मणो दिवसोगतः
तत्राऽसौ कालमेतावद्भुक्त्वा भोगान्मनोरमान् । परमं ज्ञानमासाद्य प्रविवेश हरेस्तनुम्

व्यास उवाच ।

अन्नतोयसमं दानं संसारे नास्ति जैमिने !। सर्वदानफलान्येव अन्नतोयप्रदानतः ॥३२॥
न च पात्रपरीक्षा च न कालनियमः क्वचित् । अन्नतोयप्रदानेषु निरुक्तस्तत्त्वदर्शिभिः॥
अन्नतोयप्रदानानि कर्तव्यानि सदैव हि ॥ ३३ ॥
एतत्पठन्तिमनुजाः परमादरेण माहात्म्यमन्नजलयोश्च तथा द्विजानाम् ।
ते प्राप्य चान्नजलदानफलं ततोऽन्ते नारायणस्यनिलयं सुखदं प्रयान्ति ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे अन्नदान-जलदानमाहात्म्यं नामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## एकादशीश्रेष्ठत्वप्रतिपादनपुरःसरं तद्व्रतविधिः फलश्च

जैमिनिरुवाच ।

गङ्गायाःशुभमाहात्म्यं विष्णुपूजाफलंतथा । अन्नदानस्य माहात्म्यं जलदानस्यचोत्तमम्
विप्रपादोदकस्याऽपि माहात्म्यंपापनाशनम् । त्वत्प्रसादाच्छ्रुतंसर्वंसेतिहासं गुरो!मया
इदानीं मुनिशार्दूल! श्रोतुमिच्छामि सादरम् । एकादश्याः फलं सर्वं सर्वपातकनाशनम्
कस्मादेकादशी श्रेष्ठा तस्याः को वा विधिः स्मृतः ।
कदा च क्रियते किं वा फलं तस्या वदस्व मे ॥ ४ ॥
का वा पूज्यतमा तत्र देवतासद्गुणार्णव !। अकुर्वतःस्यात्को दोषस्तन्मेवक्तुमिहाऽर्हसि

व्यास उवाच ।

एकादश्याः फलं सर्वं वक्तुं नारायणादृते । शक्नोति नान्यो विप्रर्षे!तस्माद्वच्मिसमासतः
सृष्ट्वाऽऽदौपुरुषश्रेष्ठः संसारं सचराचरम् । सर्वेषां दमनार्थाय सृष्टवान्पापपूरुषम् ॥
द्विजातिहत्यामूर्धानं मदिरापानलोचनम् । स्वर्णस्तेयं च वदनं गुरुतल्पगतिः श्रुतिः ॥
स्त्रीहत्यानासिकं चैवगोहत्यादोषबाहुकम् । न्यासापहरणग्रीवं भ्रूणहत्यागलं तथा ॥
परस्त्रीगतिबुक्काग्रं सुहृल्लोकवधोदरम् । शरणापन्नहत्यादिनाभिगर्तावधिकटिम् ॥१०॥
गुरुनिन्दासक्थिभागं कन्याविक्रयशेफसम् ।
विश्वासवाक्यकथनपायुं प्रीतिवधाङ्घ्रिकम् ॥ ११ ॥
उपपातकरोमाणं महाकायं भयङ्करम् । कृष्णवर्णपिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदम् ॥
तं दृष्ट्वा पापपुरुषमत्युग्रं पुरुषोत्तमः । सदयश्चिन्तयामास प्रजाक्लेशहरः प्रभुः ॥ १३ ॥
सृष्टोऽयं दुर्जन क्रूरःस्वाश्रयक्लेशदायकः । प्रजानां दमनार्थाय सृजाम्येतस्य कारणम्
अथाऽसौ भगवान्विष्णुर्बभूवस्वयमन्तकः । ससर्ज रौरवादींश्च निरयान्पापिदुःखदान्
पापं यः सेवते मूढो न याति परमं पदम् । यमाज्ञया व्रजेत्तत्र नरकं रौरवादिकम् ॥

एकदा भगवान्विष्णुः प्रजानां दुःखनाशनः । वैनतेयं समारुह्य जगाम यममन्दिरम् ॥
तं दृष्ट्वा जगतामीशं नारायणमनामयम् । धूपाद्यैः पूजयामास भास्करिस्तुष्टमानसः ॥
यमेनाऽभ्यर्चितो विष्णुः सर्वलोकैकनायकः । उवास द्विजशार्दूल! पीठे कनकनिर्मिते
तत्रोपविष्टो भगवान्यमेन सह दैत्यहा । शुश्राव क्रन्दनध्वानं दक्षिणस्यांदिशि प्रभो!

अथाऽसौ कमलाकान्तो विस्मयाविष्टमानसः ।
उवाचेति यमं केषां कुतोऽयं क्रन्दनध्वनिः २१

यम उवाच ।

देव!पातकिनो मर्त्या निरयेऽत्यन्तदुःखदे । स्वहस्तार्जितदोषेणसीदन्ति च यमाऽऽलये
पापवृक्षफलंविष्णो!भोक्तुमत्यन्तदुःखदम् । रुदन्तिपापिनस्तस्मात्तेषां ध्वनिरसौमहान्
इत्युक्तः सूर्यपुत्रेण कृष्णः कमललोचनः । जगाम सहसा यत्र पापवन्तो रुदन्ति ते ॥
तान्दृष्ट्वा पापिनोमर्त्यान्रौरवादिषु संस्थितान् । भगवांश्चिन्तयामास हृदि जातदयःप्रभुः

मया सृष्टाः प्रजाः सर्वादोषेण निजकर्मणाम् ।
मयि स्थितेऽपि नरके सीदन्त्येकान्तदुःखदे ॥ २६ ॥

एतच्चाऽन्यच्च विप्रेन्द्र! विचिन्त्य करुणामयः । बभूव सहसा तत्र स्वयमेकादशीतिथिः
ततस्तान्पापिनः सर्वान्कारयामास तद्व्रतम् । ते च सर्वे परं धाम ययुर्गलितकल्मषाः
तस्मादेकादशीं विष्णोर्मूर्तिंविद्धिपरात्मनः । समस्तदुष्कृतिध्वंसि व्रतानां व्रतमुत्तमम्
एकादशीं तिथिं कृत्वा पावयन्तीं जगत्त्रयम् । शङ्कितः पापपुरुषोविष्णुंस्तोतुमुपाययौ
ततो बद्धाञ्जलिर्भक्त्या स पापपुरुषो द्विज !। तुष्टाव कमलाकान्त भगवन्तं जनार्दनम्

तस्य स्तवं समाकर्ण्य प्रसन्नः परमेश्वरः ।
उवाचाऽहं प्रसन्नोऽस्मि किन्तेऽभिमतमुच्यताम् ॥३२ ॥

पापपुरुष उवाच ।

सृष्टो भगवता विष्णो! निजानुग्रहदुःखदः । एकादश्याःप्रभावेण क्षयंप्राप्नोमिसाम्प्रतम्
मृते मयि जगत्यस्मिन्सर्वेतेच शरीरिणः । भविष्यन्ति विनिर्मुक्ता भवबन्धैः शरीरिणः
सर्वेषु च विमुक्तेषु देहि श्रेष्ठेषु पूरुष !। संसारकौतुकागारे कैस्त्वं क्रीडिष्यसे प्रभो!

क्रीडितुं यदि ते वाञ्छा जगत्कौतुकमन्दिरे । एकादशीतिथिभयात्तदा मां त्राहि केशव!
अन्यैः पुण्यसहस्रैस्तु मां हन्तुं नहि शक्यते ।। शक्नोत्येकादशी पुण्या मां हन्तुं वरदो भव
मनुष्यपशुकीटेषु तथाऽन्येषु च जन्तुषु । पर्वतेषु च वृक्षेषु स्थानेषु च जलेषु च ॥३८
नदीषु च समुद्रेषु वनेषु प्रान्तरेषु च । स्वर्गे मर्त्ये च पाताले देवगन्धर्वपक्षिषु ॥३९॥

एकादशीतिथिभयाद्भूयान्विष्णो ! पलायितः ।
कुत्राऽपि निर्भयस्थानं न च तेन च कुत्रचित् ॥ ४० ॥

कोटिब्रह्माण्डमध्येषु देवदेवसनातन ।। एकादश्यां तिथौ स्थातुं मया स्थानं न लभ्यते
एकादश्यामहं कुत्र वत्स्यामि निर्भयःप्रभो ।। तन्मे कथय देवेशत्वयासृष्टोऽस्म्यहेतुकः

व्यास उवाच ।

इत्युक्त्वा पापपुरुषः क्लेनाशनमच्युतम् । भूमौ निपत्य चक्रन्द स्रवद्बाष्पविलोचनः॥
ततः प्रहस्य भगवान्मधुकैटभमर्दनः । एकादशीभयात्त्रस्तमुवाच पापपूरुषम् ॥ ४४ ॥

श्रीभगवानुवाच ।

उत्तिष्ठ पापपुरुष ! त्यज शोकं मुदं कुरु । एकादश्यां तिथौ यत्र तव स्थानं वदामि ते ॥
एकादश्यां समायान्त्यां प्रपुनन्त्यां जगत्त्रयम् । स्थातव्यमन्नमाश्रित्य भवता पापपूरुष
अन्नमाश्रित्य तिष्ठन्तं भवन्तं पापपूरुषम् । न हनिष्यति मन्मूर्तिरियमेकादशी तिथिः ॥
ततो देवोऽपि विप्रर्षे तत्रैवाऽन्तर्हितोऽभवत् । कृतार्थः पापपुरुषो ययौ च स यथागतः
तस्मादन्नं न भोक्तव्यं कदाचिदपि सत्तमैः । आत्मनो हितमिच्छद्भिः सम्प्राप्ते हरिवासरे
संसारे यानि पापानि तान्येवैकादशीदिने । अन्नमाश्रित्य तिष्ठन्ति श्रीमन्नारायणाज्ञया
कुर्वतां सर्वपापानि नरकान्निष्कृतिर्भवेत् । ये चान्नं भुञ्जतेऽत्रापि ते ज्ञेयाः पापिनां वराः॥
भूयो भूयो दृढं वच्मि श्रूयतां श्रूयतां जनाः । न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं कदाचन
ब्रह्मक्षत्रियविट्छूद्रैरन्यैश्च द्विजसत्तम । सर्वैरेकादशी कार्या चतुर्वर्गफलप्रदा ॥५३ ॥
अष्टादशनिमेषास्तु काष्ठा प्रोक्ता मनीषिभिः । त्रिंशत्काष्ठाभिरुक्ता च कला सर्वार्थदर्शिभिः
क्षणं त्रिंशत्कलाभिः स्यान्मुहूर्तो द्वादशक्षणैः । त्रिंशन्मुहूर्ता लोकानामहोरात्रः प्रकीर्तितः
तैः पञ्चदशभिः पक्षो विज्ञेयो द्विजसत्तम ।। पक्षाभ्यां शुक्लकृष्णाभ्यां मासस्तु परिकल्पितः

तस्मिन्मासेद्विजश्रेष्ठ! पक्षयोः शुक्लकृष्णयोः । महापातकयुक्तोऽपि करोत्येकादशींयदि
सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात्। मातानप्रोच्यते मातामाताह्येकादशीतिथिः
इहैवपालयेन्माता सर्वत्रैकादशी तिथिः । एकादशीव्रतं त्यक्त्वा व्रतमन्यत्करोति यः
स्वकरस्थं मणिं त्यक्त्वालोष्टंगृह्णातिमूढधीः । एकादशीव्रतंयैस्तु कृतं भक्तिसमन्वितैः
तैस्तु यज्ञाःकृताःसर्वेव्रतानि सकलानिच । एकादश्यांच भुञ्जन्तिये मोहात्पापिनोनराः

शुक्लायां वाऽपि कृष्णायां तेषां रुष्टः सदा हरिः ।
तेनाऽधर्माः कृताः सर्वे लङ्घिता येन सा(चैव) तिथिः ॥ ६२ ॥

यथासमस्तदेवानां श्रेष्ठो विष्णुः प्रकीर्तितः । तथासर्वव्रतानां च श्रेष्ठमेकादशीव्रतम्
आदित्यानां यथा सूर्यो नक्षत्राणां यथा शशी । तथा सर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम्
वृक्षाणांच यथाऽश्वत्थो वेदानां सामकीर्तितम् । तथासर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम्
कवीनामुशनाःश्रेष्ठो वर्णानां ब्राह्मणो यथा । तथा सर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ॥
व्यासः श्रेष्ठो मुनीनांच देवर्षीणांचनारदः । तथा व्रतानांसर्वेषांश्रेष्ठमेकादशीव्रतम् ॥
यथासमस्तदानानामन्नदानं वरं स्मृतम् । तथा सर्वव्रतश्रेष्ठंप्रोक्तमेकादशीव्रतम् ॥६८
यथा पुण्यसमं मित्रं नास्ति शास्त्रसमो गुरुः । तथैवैकादशीतुल्यं व्रतं नास्तिजगत्त्रये

इन्द्रियाणां यथा श्रेष्ठं मनः प्रोक्तं मनीषिभिः ।
मासानां कार्तिकः श्रेष्ठः पाण्डवानां यथाऽर्जुनः ॥७० ॥

यथा समस्तशास्त्राणां श्रेष्ठा वेदाःप्रकीर्त्तिताः । तथा व्रतानांप्रवरंस्मृतमेकादशीव्रतम्
वेदागमपुराणेषु शास्त्रेष्वन्येषु च द्विज !। कुत्राऽप्येकादशीतुल्यं व्रतं प्रोक्तं न कोविदैः

निर्भया मानवाः सर्वे तिष्ठन्ति क्षितिमण्डले ।
एकादशीव्रतं कृत्वा किं करिष्यति भास्करिः ॥७३ ॥

एकामेकादशींसम्यक्कुर्वतां किङ्करो यमः । एकादशीव्रतं तस्मात्कर्तव्यं हि शुभप्रदम्
एकादशीव्रतविधिं संक्षेपात्कथयाम्यहम् । समाहितमना भूत्वा शृणु सत्तमजैमिने !
दशम्यामप्रातरुत्थाय कर्तव्यं दन्तधावनम् । ततस्तैलादृते स्नानं कर्तव्यंमन्त्रवज्जलैः॥
ततो विष्णुं समभ्यर्च्य पाद्याद्यैर्जगदीश्वरम् । हरिध्यानपरोभूत्वाएकभोजनमाचरेत्

आमिषंलवणंचैव तथा मांसंमसूरकम् । वृहन्माषंतथाशाकं दशम्यां परिवर्जयेत् ॥
द्विर्भोजनंपरान्नं च मधूनि मैथुनं तथा । भोजनं कांस्यपात्रेषु दशम्यां परिवर्जयेत् ॥
निम्बपत्रं च वृन्ताकं दग्धं जम्बीरमेवच । घृतहीनं तथा गव्यं दशम्यां परिवर्जयेत् ॥
अत्यन्तभोजनं चैव अत्यन्ताशनभोजनम् । ताम्बूलभक्षणञ्चैव दशम्यां परिवर्जयेत् ॥
दशम्यां यानिवस्तूनिनिषिद्धानि द्विजोत्तम ! द्वादश्यामपि तान्येव निषिद्धानिनसंशयः
दशम्यांविप्रशार्दूलद्वादश्यामपिवैष्णवः । सम्यग्व्रतफलप्रेप्सुर्न कुर्यान्निशिभोजनम् ॥
अतो हविष्यं कृत्वा तु दशम्यां सत्वरो व्रति । अपराह्णे पुनः कुर्याद्विधिनादन्तधावनम्
सायं देवालयं गत्वा गृहीत्वा कुसुमाञ्जलिम् । केशवं मनसाध्यायन्मन्त्रमेतमुदीरयेत्
एतद्गृहीतं गोविन्द!मयात्वत्पुरतो व्रतम् । सिद्धिंगच्छतुनिर्विघ्नंतवपादानुकम्पया ॥
अतिचञ्चलचित्तोऽहं लोभमोहमयो नरः । शक्नोम्येतद्व्रतं कर्तुंकितवानुग्रहादृते ॥८७॥
इमौ मन्त्रौ पठित्वा तु तमेव कुसुमाञ्जलिम् । दत्त्वानारायणायाथदण्डवत्प्रणमेद्भुवि॥
तस्मिन्नेव गृहे विष्णोर्विष्णुस्मरणतत्परः । कुशेन शय्यामास्तीर्य भूमौ शयनमाचरेत्
ततः प्रभाते विमले न कुर्याद्दन्तधावनम् । गण्डूषैर्मुखशुद्धिं तु कुर्याद्द्वादशभिर्बुधः ॥
नित्यक्रियांप्रकुर्वीत विष्णुपूजादिकक्रियाम् । ततोनिशायां विप्रेन्द्र! सकलैर्व्रतिभिर्जनैः
एकत्र जागरं कुर्यात्पुरतो जगतां पतेः । समातृकः सभार्यश्च सभ्राता सपिता तथा ॥
तथा सपुत्रमित्रश्च कुरुते जागरं हरेः । सतिष्ठेद्विष्णुभवने चिरंव्रतकरो द्विज ! ॥९३
शङ्खचक्रादिकं चित्रं यो लिखेद्विष्णुमन्दिरे । बहुजन्मकृतं पापं हरेत्तस्य जनार्दनः ॥
तण्डुलचूर्णपङ्केन विष्णोरायतनेषु च । अन्यैर्वन्यैश्च वा चित्रं लिखेत्तस्य फलं श्रृणु ॥
पुत्रपौत्रप्रपौत्रैश्च भुङ्क्तेच सकलं शुभम् । शेषे विष्णुपुरं गत्वा तत्र मोक्षमवाप्नुयात्
वासरे कमलाभर्तुर्ध्वजारोपणकृन्नरः । उद्धृत्य कोटिपुरुषान्नारायणपुरं व्रजेत् ॥९७॥
पताकावल्लिभिर्युक्तं विष्णोरायतनं जनः । मण्डयत्यवनीपालः स भवेत्परजन्मनि ॥
पताका प्रचलन्ती च यावद्भवति वायुना । तत्कर्तुः पातकं सर्वं तावदेव विनश्यति ॥
पताकाचलयाः प्राज्ञैर्नानावर्णा हरेर्गृहे । स्थापितव्याः परं स्थानमिच्छद्भिर्हरिवासरे ॥
विष्णोः शिरसि यच्छत्रं धत्ते चारुतरं जनः । परजन्मनि विप्रर्षे! छत्रीभवति स क्षितौ

वासरे वासुदेवस्य पुष्पमण्डपकृन्नरः । प्रतिपुष्पं लभेत्पुण्यं वाजिमेधशतोत्तरम् ॥
वासुदेवदिनेपुष्पैः सुगन्धैर्मण्डनं बुधैः । यत्नादपि च कर्तव्यं चतुर्वर्गफलाप्तये ॥१०३॥
यो वस्त्रगृहनिर्माणं कुरुते हरिवासरे । स सौधवासी विप्रर्षे ! भवति त्रिदशालये ॥

निर्माय वस्त्रभवनं तत्र बध्नाति मानवः ।
श्वेतं वा लोहितं वाऽपि कृष्णं वा सोऽच्युतप्रियः ॥ १०५ ॥

शालग्रामशिलां तत्र प्रतिमां वा श्रियःपतेः । पञ्चामृतेन संस्नाप्य स्थापयेद्भक्तितो व्रती
आदौ स्वस्त्ययनं कुर्यात्सङ्कल्पं च तथा बुधः । यत्नादपि च कर्तव्यंचतुर्वर्गफलाप्तये

भूतशुद्धिं निजां विप्र! विधिना शास्त्रभाषितैः ।
ततश्चैकमना भूत्वा गृहीत्वा पुष्पमुत्तमम् ॥ १०८ ॥

ध्यायन्नारायणं देवं हृदयाम्भोजवासिनम् । आसीनं हेमपीठे च तथा मणिमयेऽपि च

आसीनं हेमपीठे मणिमयज्वलनालङ्कृतं क्रीडवेशं-
विभ्रल्लेखोज्ज्वलाभ्रद्युतिरुचिरतनुं दीर्घदोर्भिश्चतुर्भिः ।
नित्यं विभ्राजमानं सकलकरलयैः सायुधैः पद्मनेत्रैः-
पश्यन्तं श्रीमुखं तत्क्रमनुदमनिशं तं भजेऽपाङ्गदृष्ट्या ॥११०॥

आगच्छ भगवन्देव! सहितःश्रीपतेःप्रिय !। कर्तव्या हि मयाभक्तयासपर्याऽस्मिन्व्रतेतव
सर्वलक्षणसम्पन्न लक्ष्म्या,सह जगद्गुरो !। अस्मिन्वरासने तिष्ठ यावत्पूजांकरोमिते
समस्तलोकविख्यातकीर्ते ! नारायण! प्रभो !। कच्चित्ते कुशलंसर्वं सर्वं वद सुरार्चित!
पाद्यं गृहाण देवेश ! नारायणसुवासितम् । पादद्वयरजोहारि पवित्रमतिशीतलम् ॥
अर्घ्यं ददामि ते विष्णो! दूर्वापल्लवसंयुतम् । अखण्डतण्डुलोपेतं पुण्डरीकनिभेक्षण!॥
इदमाचमनीयन्ते सुपवित्रं ददाम्यहम् ! गृहाण परमानन्द! परमानन्दवर्धनम् ॥११६ ॥
मया दत्तेन गन्धेन जरासन्धविनाशन !। तवाऽस्तु भूषितं गात्रं लक्ष्मीनाथ!सुगन्धिना
ददाम्यहं पवित्रार्थं जगतामादिकारक !। इदमाचमनं देव! तद्गृहाण सुरेश्वर!॥११८॥
सुगोऽयं विधिना पूर्वं देवानान्तुष्टिवृद्धये । अतस्तुभ्यं सुरश्रेष्ठ! धूपोऽयं दीयते मया॥
तमसः स्तोमसंहर्ता घृतपूर्णो;जनार्दन !। तवाऽस्तु प्रीतये देव! एष दीपो जनार्दन !॥

सोत्तरीयमिदं वस्त्रं वस्तिश्रोणिसुशोभनम् ।
दद्राम्यहं ते देवेश ! सोपवीतं जगद्गुरो ! ॥ १२१ ॥
अन्नं चतुर्विधं स्वादुरसैः षड्भिःसमन्वितम् । मया निवेदितं भक्त्या गृहाण परमेश्वर!
मुखदुर्गन्धहरणं कर्पूरखदिरान्वितम् । गृहाण विष्णो! ताम्बूलं कैवल्यद! महामते ! ॥
विधिनाऽनेन गोविन्दमुपहारैरनुत्तमैः । पूजयेत्सम्वृतो भक्त्या प्रहरेषु चतुर्ष्वपि ॥
नानोपहारान्हरये यो यच्छेद्धरिवासरे । वित्तशाठ्यं न कर्तव्यं कर्मणां फलमिच्छता॥
ततस्तु व्रतिभिः सर्वैर्नारायणपरायणैः । निशि जागरणं कार्यं नृत्यगीतस्तवादिभिः॥
प्रदक्षिणं द्विजश्रेष्ठ! नामानि कमलापतेः । सर्वपापविनाशीनि स्मर्तव्यानि व्रते रतः ॥

स्फुरन्तं प्रतिवक्त्रेभ्यो हरिनामध्वनिं जनाः ।
शृण्वन्ति ते विमुक्ताः स्युर्महद्भिः पापसञ्चयैः ॥ १२८ ॥
न पाखण्डजनालापः कर्तव्यो हरिवासरे । पाखण्डालापमात्रेण सर्वधर्मो विनश्यति॥
नारायणयशोगीतं प्रतिकण्ठंविनिःसृतम् । श्रुत्वा मूढा न तृप्यन्तिश्वानोर्वाणाक्कणंयथा
सन्तो हर्षं समायान्तिश्रुत्वागीतंजगत्पतेः । समस्तपापविध्वंसिर्वीणाक्काणंयथामृगाः
गायन्तं हरिगीतानि नृत्यन्तिनृत्यमुत्तमम् । तृप्यन्ति व्रतिनोदृष्ट्वातृप्यन्ति कमलापतेः॥
व्रतिनो ये न तृप्यन्तिविष्णोरायतने द्विज ! । प्रतिजन्मनिवैतेषां पशुताशाश्वती भवेत्
न ये गीतानि गायन्तिव्रतिनो हरिवासरे । विहीना वचनैस्ते च भ्रमन्ति प्रतिजन्मनि॥
मृदङ्गादीनिवाद्यानि कर्तव्यानि हरेः पुरः । यतोवाद्यैर्भवेत्तुष्टो भगवान्मधुसूदनः ॥ ३५
कुर्वद्भिर्जागरं विष्णोर्वेदाध्ययनमुत्तमम् । पुराणपठनं वाऽपिकर्तव्यं वैष्णवैर्जनैः॥३६॥
रामायणं भागवतं भारतं व्यासभाषितम् । अन्यानि च पुराणानिपाठ्यानिहरिवासरे
ये पठन्ति पुरो विष्णोर्येश्रृण्वन्ति हरेर्दिने । प्रत्यक्षरं लभन्ते ते कपिलादानजं फलम्
निशिजागरणंकुर्यात्सानन्दो वैष्णवो जनः । जितनिद्रो भवेत्सम्यग्ध्यायतेकेशवंहृदा॥
प्रदक्षिणाकारतयाभूयोभूयो हरेर्दिने । निपत्य दण्डवद्भूमौ प्रणमेच्च जनार्दनम् ॥ ४०
ततःप्रभातेविमले कृतपञ्चमहाध्वरः । हरिंसंस्नाप्य दुग्धेन पूजयेद्भक्तिमान्व्रती ॥ ४१ ॥
व्रतस्य दक्षिणां दद्यान्निजशक्त्या द्विजन्मने । ततस्तुद्वादशीमध्ये व्रती पारणमाचरेत्

पारणंकुरुतेयस्तु विलङ्घ्य द्वादशीतिथिम् । जन्मकोट्यर्जितंपुण्यंतस्यचैव विनश्यति
द्वादशीतिथिमध्ये तु कर्तव्यंपारणं बुधैः । न कदाचित्त्रयोदश्यां व्रतस्यफलमिच्छुभिः
उपवासदिनेविप्र ! निशायामपि वैष्णवः । उपवासफलप्रेप्सुर्यत्नात्स्वापंविवर्जयेत् ॥
विनाजागरणंनूनमुपवासो निरर्थकः । अतोजागरणं कार्यमुभयोरपिपक्षयोः ॥ ४६ ॥
एकादशीव्रतं ये च विधिनाऽनेन कुर्वते । सत्यंसत्यं द्विजश्रेष्ठ ! सर्वे तेमोक्षगामिनः ॥

जन्ममृत्युहरणैकनिदानं सेन्द्रदेवनिकरैरपि कार्यम् ।
वासुदेवदिवसव्रतसारं जैमिने ! त्वमनिशं कुरु यत्नात् ॥ १४८ ॥

इति श्रीपाद्मेमहापुराणेपञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे एकादशी-माहात्म्ये द्वाविंशोऽध्यायः ॥ २२ ॥

# त्रयोविंशोऽध्यायः

## एकादशीमाहात्म्यप्रसङ्गे कोचरशराजमहिषीसुप्रज्ञयोःपूर्वजन्मवृत्तान्तवर्णनं धर्मात्मनांपापात्मनाञ्चगतिनिरूपणम्

व्यास उवाच ।

पूर्वंकोचरशोनाम राजाऽभूत्क्षितिमण्डले । शान्तः परमधर्मज्ञो राजनीतिविदाम्वरः ॥
सत्यवादी जितक्रोधो जितवैरिसमुच्चयः । नारायणार्चनपरो हरिसेवारतः परः ॥२ ॥
सुप्रज्ञा नाममहिषी तस्याऽसीत्प्रियवादिनी । सर्वलक्षणसंपन्नापतिसेवापरायणा ॥
एकादशीव्रतरता सर्वप्राणिहितैषिणी । जातिस्मरा महाभागा सुशीला वरवर्णिनी ॥
स राजा दशमीं कृत्वा सदारः परमार्थवित् । एकादशीं निशीथिन्यां जागरं कर्तुमुद्यतः
तत्रान्तरेद्विजः कश्चिच्छौरिर्नाम महीपतेः । आजगाम महातेजास्तस्य जागरमण्डपम्
तमायान्तं स भूपालो नारायणपरायणः । पाद्याद्यैः पूजयामास सदारोऽत्यन्तहर्षितः

तेषां मध्ये सूपविष्टः स विप्रोऽखिलतत्त्ववित् । विष्णुपूजापरांस्तत्र ददर्श व्रतिनो बहून्
पूजयन्ति हरिं केचिन्नानापुष्पैर्मनोरमैः । गन्धैर्धूपैस्तथा दीपैरुपहारैरनुत्तमैः ॥ ६ ॥
गङ्गामृद्भूषिताः केचित्तुलसीपत्रमालया । अलङ्कृता हरेरग्रे नृत्यन्ति व्रतिनो मुदा ॥
केचिद्गायन्ति गीतानि ललितानि हरेः पुनः । करतालं समादाय व्रतिनो भगवत्प्रियाः॥
स्तवैरनुत्तमैः केचिन्नारायणमनामयम् । स्तुवन्ति जगतामीशं दिव्यार्थैर्मृदुलाक्षरैः ॥
श्वेतचामरवातेन शीतलेन जगत्पतिम् । वीजयन्ति हरेः प्रीताः केचिच्च व्रतिनस्तदा ॥
केचिद्वीणादिकं वाद्यं ललितंशुचिमङ्गलम् । वादयन्तो महात्मानः केचिद्गायन्तिकेशवम्
स राजा राजमहिषी द्वावप्यत्यन्तहर्षितौ । गायतो ललितं गीतं नृत्यतो नृत्यमुत्तमम्
तौ दम्पती महात्मानौ नृत्यगीतादिकारिणौ । वाचामधुरयाप्राह सशौरिर्ब्राह्मणोत्तमः

शौरिरुवाच ।

धन्योऽसि त्वं महीपाल! धन्या च महिषी तव । चरित्रंयुवयोरेतन्मङ्गलं भुविदुर्लभम्
त्वांवक्ष्यामियतः कश्चिन्नदृष्टो वैष्णवोत्तमः । त्वया भूमिभुजापृथ्वीधन्येयं नात्रसंशयः
एकादशीव्रतमिदंपवित्रंभगवत्प्रियम् । सदारः कुरुषे भूप! तस्मात्त्वं वैष्णवाग्रणीः ॥
सप्तद्वीपैकनाथश्च सदारस्त्वंनृपोत्तम !। नारायणाग्रतः प्रीत्या यतोनृत्यसिगायसि ॥
चरित्रं युवयोरेतद्दम्पत्योर्दृष्टमद्भुतम् । कस्माद्बुद्धिरियंजाता युवयोरतिनिर्मला॥२१॥

व्यास उवाच ।

तस्येदं वाक्यमाकर्ण्यशौरिनाम्नो द्विजन्मनः । ईषद्धास्यमुखीप्राह सुप्राज्ञातमथोद्विजम्

सुप्राज्ञोवाच ।

एकादशीप्रभावेण पूर्वमावां द्विजोत्तम !। अतिपातकिनौ मुक्तौ सूर्यजेन महात्मना ॥
जातिस्मृतिप्रभावेण दिव्यमेकादशीव्रतम् । कुर्वःसम्प्रति विप्रेन्द्र परमस्थानकाङ्क्षया

शौरिरुवाच ।

यदि नूनं वरारोहे! पूर्वांजातिंत्वमात्मनः । वेत्सिमेब्रूहितांश्रोतुं जायते कौतुकंहृदि ॥
पूर्वं स्थिता का भवती पतिर्वा कः स्थितस्तव ? ।
कथं भास्करिणा त्यक्तौ युवां पातकिनावपि ॥ २६ ॥

सुप्राज्ञोवाच ।

अप्रकाश्यमिदंवाक्यंयद्यपिद्विजसत्तम !। स्थिताऽस्मिवारमुख्याऽहंरतिशास्त्रविशारदा
तस्मिञ्जन्मनिपापानिघोराणि सुबहूनिच । मयाकृतानिविप्रेन्द्रनरकक्लेशदानिवै॥२८॥
अयं नित्योदयो नाम शूद्रः स्वाचारवर्जितः । परदारहरःक्रूरः परद्रव्यापहारकः ॥२९॥
सुरापो मित्रहन्ता च भ्रूणहापरहिंसकः । अत्यहङ्कारयुक्तश्चधर्मनिन्दाकरः सदा॥३०॥
एकदा ज्ञातिभिःसर्वैःपरित्यक्तोहिसद्व्रतैः । आजगाममामाऽऽगारंवेश्याविभ्रमलोलुपः
युवानं सुन्दरं दृष्ट्वा तमेनं द्विजसत्तम ! । मयाऽपिप्रीतिमत्याऽयं तोषितःसुरतैरपि ॥
ततोऽनुभूय सुरतं मयासहतपोधन !। अयमाह च मां प्रेम्णा विनयावनतोवचः॥३३ ॥
अहं सुरतशास्त्रज्ञः परित्यक्तः स्वबन्धुभिः । यदित्वंमन्यसेतस्मिंस्तिष्ठाम्यत्रत्वयासह॥
विनयोपनतं वाक्यमिदंश्रुत्वात्वहं द्विज !। दम्पतीभावमासाद्यसहानेनस्थिताऽस्म्यहम्
कदाचिद्द्विजशार्दूल! एकादश्यांतिथौ हरेः । रोगेण पीडिताऽहं च सर्वदेहावघातिना
तस्मिन्नेव द्विजश्रेष्ठ! ज्वरजर्जरदेहया । न पीतमुदकं नान्नंभुक्तं च परया भिया ॥३७ ॥
मयि स्नेहादयंचापि तस्मिन्नेवदिने हरेः । तत्याजाऽन्नं च तोयंच विषण्णइवजन्मना॥
अथ रात्रौ द्विजश्रेष्ठ! दीपं प्रज्वाल्य सर्पिषा । मया कृतं जागरणंज्वरापहृतचेतसा॥३६
नारायण!हरे कृष्ण! रक्षमामितिजल्पता । मुहुर्मुहुरनेनापिकृतं जागरणंनिशि ॥ ४० ॥
उपवासप्रभावेण केशवोच्चारणेन च । आवयोः सकलं पापंविनष्टमभवद्द्विज ॥ ४१ ॥
ततः प्रभाते विमले भगवत्युदितेरवौ । ज्वरार्दिताऽहं पञ्चत्वंगताब्राह्मणसत्तम !॥ ४२
संप्राप्तपञ्चतांदृष्ट्वामामयं च सुदुःखितः । सहैव मरणं भेजे निन्दितः सकलैर्जनैः ॥४३॥
सूर्यजस्य ततः प्रेष्यैर्ज्वलदग्निनिभेक्षणैः । बद्ध्वा दृढेन पाशेननीतौदुर्गमवर्त्मना॥४४
शुभकर्मा शुभंवापिचित्रगुप्तो यमाज्ञया । सर्वं विचारयामास मूलात्स तु विचक्षणः ॥

चित्रगुप्त उवाच ।

यद्यप्येतौ महाबाहो ! महापातकिनाम्वरौ । तथापि पातकैर्मुक्तौह्येकादश्यामुपोषणात्
अनिच्छयाऽपियः कुर्यात्पुण्यमेकादशीव्रतम् । सोऽपिगच्छेत्परंस्थानंसर्वपापविवर्जितः
इत्युक्तश्चित्रगुप्तेन धर्मराजो महायशाः । आसनात्सहसोत्थायववन्देमाममुं च सः ॥

सुगन्धैश्चन्दनैर्दिव्यैर्धूपैः पुष्पैश्चमृत्युना । सुवर्णाभरणैरेव मण्डितौ पापवर्जितौ ॥
फलैर्नानाविधैस्तत्र मधुरैरमृतोपमैः भास्करिः कारयामासप्रीत्या भोजनमावयोः॥
अथस्तुत्वास्तवैर्दिव्यैः स्वयमावांयमः प्रभुः । समारोप्यरथेदिव्येप्रोवाचेतिकृताञ्जलिः

यम उवाच ।

युवांपुण्यवतांश्रेष्ठौ सर्वपापविवर्जितौ । यत्राऽऽस्तेभगवान्विष्णुर्गच्छतं तत्र सम्प्रति
इत्युक्तौ धर्मराजेन विनयावनतेनवै । अथैतदुक्तमावाभ्यां नत्वा तत्पादपङ्कजे ॥'०३ ॥
गन्तव्यंनान्यथादेव!तद्विष्णोःपरमंपदम् । किंत्वस्तिनरकंद्रष्टुंत्वद्गृहस्थंस्पृहाऽऽवयोः
यमाज्ञया ततोविप्र!रथमारुह्यशोभनम् । दुष्प्रेक्ष्या निरयाद्रृष्टाआवाभ्यांतत्रविस्तराः ॥

ब्राह्मण उवाच ।

तत्रावस्थापापवतांयायाद्दृष्टाःपतिव्रते ! । विस्तरेणसमाख्यातंतास्ताः सर्वास्त्वमर्हसि
पुण्यात्मानः पथायेनव्रजन्ति यममन्दिरम् । पापात्मानश्चसुश्रोणि!तन्मेकथयविस्तरात्
पुण्यात्मा कीदृशंपश्येत्तत्रवैवस्वतं प्रभुम् । पुण्यात्मनांपापिनांचपन्थानंसुखदुःखदम्

सुप्राज्ञोवाच ।

आदौब्रवीमिपन्थानंनृणां पुण्यवतामहम् । श्रृणुष्वद्विजशार्दूलश्रृण्वतांप्रीतिवर्धनम् ॥

प्रस्तरैर्विस्तरैर्बद्धो दिव्यवस्त्रैः समावृतः ।
भाति पुण्यवतां पन्थाः सर्वोपद्रववर्जितः ॥ ६० ॥

क्वचिद्गन्धर्वकन्याभिर्गीयतेगानमद्भुतम् । क्वचिन्मञ्जुशरीराभिरप्सरोभिश्च नृत्यते ॥
क्वचिद्वीणाक्वणं नानावाद्यं चक्रुर्मनोरमम् । क्वचित्कुसुमवृष्टिश्च क्वचिद्वायुश्च शीतलः ॥
क्वचित्प्रपाशीततोया क्वचिच्चभुक्तिशालिकाः । क्वचिद्देवाश्चगन्धर्वाः पठन्तिस्तवमुत्तमम्
क्वचित्क्वचिद्दीर्घिकाश्चफुल्लपद्माःसुशोभनाः। सुच्छायाःपादपाःक्वापिपुष्पितावञ्जुलादयः
ततस्तुसुखसम्पन्नाःपथि गच्छन्तिमानवाः । पुण्यात्मानो द्विजश्रेष्ठ सुखमृत्युमवाप्यच
केचित्तुरङ्गमारुढा नानालङ्कारभूषिताः । उद्दण्डधवलच्छत्रैर्गच्छन्त्यावृत्यमस्तकम् ॥
केचिद्यान्ति गजारूढा रथारूढाश्चकेचन । यानारूढा जनाःकेचित्सुखेन यममन्दिरम्
केचिद्देवाङ्गनाहस्तन्यस्तचामरवायुभिः । गच्छन्तिवीजितामर्त्याःस्तूयमानाःसुरर्षिभि

केचिद्दिव्यायुधधराःस्रक्चन्दनविभूषिताः। भुञ्जन्तोयान्तिताम्बूलंपुण्यात्मानोयमालयम्
निजगात्रत्विषा केचिज्ज्वालयन्तो दिशो दश। व्रजन्तिशमनागारं जलग्रहनिवासिनः
केचिच्चपायसंदिव्यंभुञ्जन्तो यान्ति सत्तम!। सुभक्षणं प्रकुर्वन्तः पथि यान्तःसुखेनच
केचिद्दुग्धं पिबन्तश्च केचिदिक्षुरसं तथा। केचित्तक्रंपिबन्तश्च गच्छन्ति यममन्दिरम्
केचिद्दधीनिभक्षन्तः केचिन्नानाफलानिच। केचिन्मधु पिबन्तश्चपुण्यवन्तोव्रजन्तिवै॥
तानागतांस्ततो दृष्ट्वाबहून्धर्मपरायणान्। भास्करिःप्रीतिमासाद्य स्वयं नारायणोभवेत्
चतुर्बाहुः श्यामवर्णः प्रफुल्लकमलेक्षणः। शङ्खचक्रगदापद्मधारीगरुडवाहनः॥ ७५॥
स्वर्णयज्ञोपवीती च स्मरचारुमहाननः। किरीटी कुण्डलीचैववनमालाविभूषितः॥
चित्रगुप्तो महाप्राज्ञश्चण्डाद्या यमकिङ्कराः। सर्वे नारायणाकाराबभूवुर्मधुरोक्तयः॥७७
ततःस्वयं धर्मराजस्तान्सर्वान्मनुजोत्तमान्। परमाम्प्रीतिमासाद्य मित्रवच्चाऽर्चयेद्द्विज!
दिव्यगन्धैःफलैश्चैवतेषांपुण्यवतांनृणाम्। भोजनंकारयित्वातुतानुवाचाऽथभास्करिः

यम उवाच।

यूयं सर्वे महात्मानो नरकक्लेशभीरवः। निजकर्मप्रभावेणगम्यतांपरमं पदम् ॥८०॥
संसारे जन्म संप्राप्य पुण्यं यः कुरुतेनरः स मे पिता स मे भ्राता समेबन्धुसमःसुहृत्
इत्युक्ता धर्मराजेन ते सर्वे द्विजसत्तम!। दिव्यं रथं समारुह्य नारायणपुरंगताः॥८२॥
पुण्यात्मनां गतिःप्रोक्तासमासेनद्विजोत्तम!। पापात्मनांशृणुगतिंविस्तरेणवदाम्यहम्
षडशीतिसहस्राणियोजनानिदुरात्मनाम्। प्रोक्तोमार्गस्यविस्तारःसर्वदुःखान्वितः स च
क्वचित्क्वचिद्द्विजश्रेष्ठ! सन्तप्तं तप्तवालुकम् ॥ ८५ ॥
क्वचित्क्वचित्तीक्ष्णशिलाःक्वचित्तप्तशिलास्तथा।क्वचित्क्वचिच्छस्त्रवृष्टिःक्वचिदङ्गारवर्षणम्
क्वचिदग्निगिराऽर्तावसन्तप्तावान्तिमारुताः। गम्भीरान्धकराःक्वाऽपितृणावर्तमुखाद्विज!
क्वचित्कण्टकवृष्टिश्च नाराचमयकण्टकैः। पाषाणश्रेणयःक्वाऽपि दुःखरोहाःसपन्नगाः॥
गच्छन्तिपापिनस्तत्र शुष्ककण्ठोष्ठतालुकाः। एवंबहुविधक्लेशे छायाजलविवर्जिते
तस्मिन्मार्गे द्विजश्रेष्ठ!पापिनोयान्तिदुःखिता। नग्नाविमुक्तकेशाश्च प्रेताकाराभयङ्कराः
रुधिरौघप्लुताः केचित्केचित्कर्दमभूषिताः।

केचित्केचिच्च कृष्णाङ्गाः पथि गच्छन्ति पापिनः ॥ ६१ ॥
क्रन्दन्तो व्यथया केचित्स्रवद्बाष्पाकुलेक्षणाः ।
शोचन्तः स्वानि कर्माणि केचिद्गच्छन्ति पापिनः ॥ ६२ ॥
कस्यचिद्धर्मपाशस्य बन्धनं पापिनां गले । कङ्काले कस्यचिद्बद्धाः कस्यचिच्चपदद्वये
गले सूचीसमुत्कीर्णपाशंदत्त्वा दृढं रुषा । आकृष्यन्ते यमप्रेष्यैः केषाञ्चिच्च कृतैनसाम्
वर्त्मस्थान्गुरुपाषाणान्वहन्तः कर्णरन्ध्रकैः । अयोभारांश्चशीर्षाग्रैर्व्रजन्तिपथिपापिनः॥
पाशबद्धभुजान्कांश्चिन्नयन्ति यमकिङ्कराः । ग्रीवासु पापिनःकेचित्करप्रहरणैर्दृढैः ॥
क्षिप्तक्षिप्तायमप्रेष्यानयन्ति यमकिङ्कराः । यान्त्यधः शिरसः केचिदूर्ध्वपादास्तथाऽपरे
गच्छन्ति बाहुभिः केचिदेकपादाश्च केचन । इत्येवंविकृताकाराआर्तरावविरावणाः ॥
यमदूतैस्ताड्यमानाः पापिनोयान्ति तत्पथे । तेष्वागतेषु सर्वेषु पापात्मसु रुषा यमः
दिव्यांमूर्तिपरित्यज्यबभूवात्यन्तभैरवः । त्रिंशद्योजनदीर्घाङ्गो वापीसदृशलोचनः ॥
धूम्रवर्णो महातेजाः प्रलम्बोघर्घरध्वनिः । सुदीर्घदशनश्रेणिःशूर्पोपमनखावलिः॥१०१॥
प्रचण्डमहिषारूढः संदष्टदशनच्छदः । दण्डहस्तश्चर्मपाशो भ्रुकुटीकुटिलाननः ॥१०२॥
चित्रगुप्तोमहामायः क्रोधारुणितलोचनः । अट्टाट्टहासं कुर्वाणः समवर्ती विराजते ॥
चण्डाद्याःकिङ्कराः सर्वे पाशमुद्गरपाणयः । बभूवुर्भैरवाः क्रुद्धागर्जन्तोजलदाइव॥१०४॥
जहि जह्याशुपापिष्ठान्भिन्धिछिन्धिविदारय । समन्तादेवधावन्तोवल्गन्तियमकिङ्कराः॥
तानाह पततः सर्वान्पापिनोधर्मराट्प्रभुः । तर्जयेत्कालदण्डेनत्यजन्हुङ्कारनिःस्वनम् ॥

यम उवाच ।

रेरे पापादुराचारा युष्माभिरविवेकिभिः । अहोकृतानिपापानिआत्मपीडाकराण्यपि॥
मस्तकोपरि तिष्ठन्तंनेक्षध्वं समवर्तिनम् । ज्ञात्वाऽपिमांजीवितेशंयुष्माभिःपातकंकृतम्
पुण्यात्मनामहंबन्धुरहंपापात्मनां रिपुः । इतिकुत्राऽपि युष्माभिर्नश्रुतंश्रवणैःस्वकैः ॥
निरया दुःसहाःसन्ति नानादुःखसमन्विताः । पापिनोभुञ्जतेतांश्चयुष्माभिर्नेतिविश्रुतम्
मत्वा मिथ्यैव युष्माभिश्चर्चाममदुराशयाः । अद्यसैवस्वकैर्नेत्रैर्दृश्यतांकृतपातकाः ॥
विस्तान्ध्येन वचो मत्ता यूयं सर्वेसदैवहि । चक्रिरेपापजालानियुष्माभिः सततंयथा ॥

तथापापफलं दुष्टा भुज्यतां क्रन्दनेन किम् ॥ ११२ ॥

सुप्राज्ञोवाच ।

इत्युक्त्वा भास्करिर्देवश्चित्रगुप्तमुवाच ह । एतेषांपापकर्माणि महाभाग! विचारय ॥
धर्मराजवचःश्रुत्वाचित्रगुप्तोमहायशाः । तेषांयावन्तिपापानितावन्ति! प्राह चोदितः ॥
ततस्ते पापिनः सर्वे क्रन्दन्ति द्विजसत्तम !। इत्यूचुः शमनं भीताश्चर्मपाशे नियन्त्रिताः

पापिनऊचुः ।

अस्माभिर्यानि पापानि कृतानि भास्करात्मज ! ।
के स्थिताः साक्षिणस्तत्र केर्वा यूयं निवेदिताः ?॥ ११६ ॥

अशुभंवाशुभंवाऽपियतोऽस्माभिःकृतम्पुरा । तथाचदृष्टंकेनाऽत्रपुरोऽस्माकंनिगद्यताम्
ततः प्रहस्य भगवान्कोपेन महता द्विज !। आहूय साक्षिणः सर्वानिदं वचनमब्रवीत् ॥

यम उवाच ।

यूयं सर्वे यथावृत्तं सन्निधौ साक्षिणस्तथा । आकाशं पृथिवींचैव जलञ्च तिथयस्तथा
दिनं रात्रिरुभे सन्ध्ये धर्मश्चैते तु साक्षिणः । तेषां पापात्मनामूचुःसर्वंकर्मशुभाशुभम्
यस्यां यस्यां च वेलायां कर्म यद्यच्चवैकृतम् । स स साक्षीतस्यतस्यजगादयमसन्निधौ

तच्छ्रुत्वा पापिनः सर्वे साध्वसाः क्लिष्टमानसाः ।
सकम्पहृदयास्तस्थुर्मेघं दृष्ट्वा मृगाइव ॥ १२२ ॥

ततस्तु दन्तावलिभिः कुर्वन्कडकडध्वनिम् । धर्मराट्कालदण्डेन ताञ्जघान पृथक्पृथक्
ताडिता धर्मराजेन तेसर्वे कृतपातकाः । क्रन्दन्ति निजकर्माणि शोचन्तःप्राप्तसाध्वसाः
ततस्तान्पापिनः सर्वान्दूताश्चण्डादयो रुषा । नरकेषु यमादेशाद्रौरवादिषु चिक्षिपुः ॥
तपने चिक्षिपुः कांश्चिदवीचौ कृतपातकान् । सङ्घाते कालसूत्रे च महारौरवके तथा ॥
सन्तप्ते वालुकाकुण्डे कुम्भीपाकेतथाऽपरान् । निरुच्छ्वासे महाघोरेचिक्षिपुश्चप्रमर्दने
असिपत्रवने घोरे नानाभक्षेषु पापिनः । वैतरण्यां तथा कांश्चिच्चिक्षिपुर्यमकिङ्कराः ॥
घोरे विष्ठाह्रदे कांश्चित्तुषाङ्गारास्थिकण्टकैः । पूर्णे नितान्तसन्तप्ते चिक्षिपुर्यमकिङ्कराः
पुरीषलेपने चैव पुरीषभोजने तथा । स्वमांसभोजने चैव स्थापिता यमकिङ्करैः ॥

श्लेष्माणं भुञ्जते केचित्केचिद्वीर्यं च भुञ्जते ।
पिबन्ति केचिन्मूत्राणि केचिद्रक्तानि पापिनः ॥ १३१ ॥
केषाञ्चिद्वदनेष्वेव जलौकाः पन्नगोपमाः । पूर्यन्ते पन्नगाश्चैव यमदूतैर्भयङ्करैः ॥१३२॥
उत्पाद्यन्तेऽतिसन्तप्तैर्जिह्वाश्च द्विजसत्तम !। केषाञ्चित्कर्णरन्ध्रेषु मुखेषु च कृतैनसाम्
तप्ततैलानि पूर्यन्ते निर्दयैर्यमकिङ्करैः । केषांचित्खड्गधाराभिर्बाहुं च चरणं तथा ॥३४
कर्णादिनासिकाश्चैवच्छिन्दन्ति च दुरात्मनाम् । शयनंकुर्वते केचिज्ज्वलदङ्गारसञ्चये
केचिन्नाराचतुल्येषु शयनंकण्टकेषुच । कर्दमेषुचतप्तेषुकांश्चिच्छमनकिङ्कराः ॥ ३६ ॥
पातयन्तिद्विजश्रेष्ठ!केशेष्वाकृष्य पापिनः । वमनेषु च केषाञ्चिन्नखसन्धिषुपापिनाम् ॥
तप्तसूचिसहस्राणि प्रक्षिपन्ति मुहुर्मुहुः । संतप्तलोहशूलाग्रे कांश्चिदारोपयन्ति वै॥३८॥
क्रदन्तिकण्टकैस्तीक्ष्णैःकेषांचिन्मस्तकानिवै । गृहीत्वाहस्तपादेषुशाल्मलिद्रुमकण्टकैः
निष्कुषन्तिरुषाकांश्चिदार्तरावविराविणः । बद्ध्वागलेषुपाषाणंकांश्चिच्छमनकिङ्कराः
रक्तगर्ते पयोगर्ते पातयन्ति पुनःपुनः । क्रूराः केषाञ्चिदन्येषांशिरांसिसिपापिनांनृणाम्
चूर्णयन्त्युपलैर्याम्या मुहुर्मुहुरतिक्रुधा । वक्षोमध्येषु केषांचिल्लोहकीलकसञ्चयान् ॥
आरोपयन्ति लोकानां क्रन्दतां दुरितात्मनाम् ।
चक्षूंषि बडिशैः केषामुत्पाट्यन्ते कृतैनसाम् ॥ १४३ ॥
केषाञ्चिन्नासिकाप्वपूर्यन्तेवृश्चिकैर्द्विज!। केषांचिद्वृक्षशाखायांबद्ध्वापादांश्चपाशकैः
ज्वलयन्तितलेवह्निंसधूमंयमकिङ्कराः । धूमपानं प्रकुर्वन्तितेतत्रकृतकिल्बिषाः ॥१४५ ॥
अधोमुखाऊर्ध्वपादास्तस्थुराचन्द्रतारकम् । मुसलैर्मुद्गरैः केचित्ताड्यमानाः पुनः पुनः
याम्यैर्दूतैरुद्गिरन्ति शोणितानिव्यथाकुलाः । अन्धकारमये गेहे पूतिगन्धवति द्विज!॥
दंशैश्च मशकैश्चैवकेचित्सीदन्ति पापिनः । भस्मानिभुञ्जते केचित्कृमीन्केचिच्चभुञ्जते ॥
केचिद्दुर्गन्धमांसानिकेचिच्चपूतिमृत्तिकाम् । श्वभिर्व्याघ्रैःशृगालैश्चवज्रदन्तनखैस्तथा
ऋक्षैः केचिद्भक्ष्यमाणाः क्रन्दन्ति रुधिराप्लुताः ।
नितान्तोग्रविषैः सर्पैर्भक्ष्यमाणास्तथाऽपरे ॥ १५० ॥
अन्येमहिषशृङ्गाग्रनिर्भिन्नवक्षसो द्विज !। पतन्तिमूर्च्छिताःपृथ्व्यांसिञ्चन्तोरुधिरैर्महीम्

यमदूतधनुर्मुक्तैश्शरैराशीविषोपमैः । जर्जराखिलदेहाश्च लुठन्त्यन्ये महीतले ॥१५२॥
तप्तायःपिण्डनिलयं तप्तपाषाणमेव च । दंशशस्त्रेण केषाचित्कृष्णन्तद्वदनेषु च ॥
नासारन्ध्रेषुकेषाश्चिद्यमदूता मुखेषु च । श्वासानिलनिरोधार्थंनासारन्ध्रंवयन्तिवै ॥
केषांचित्तीक्ष्णधाराभिर्यमशक्तिभिरुद्धतैः । उत्पाद्यन्तोऽङ्गचर्माणि यमदूतैर्महाबलैः ॥
कांश्चिद्गृहीत्वाकेशेषुनिपात्यपृथिवीतले । कीलैः पादादिभिर्घातैस्ताडयन्ति सदैवहि
केचित्क्षाराम्बुधाराभिःसन्तप्ताःकृतपातकाः । क्षाराम्बुपानंकुर्वन्ति क्रन्दन्तोबहुधाद्विज!
पित्तपानं महाभाग!केचित्कुर्वन्तिपापिनः । स्नुहीक्षीराणिकेचिच्च पिबन्तिपापिनांवराः
केषांचित्स्वपतांभूमौ वक्षःसु यमकिङ्करैः । दीयन्ते गुरुपाषाणाः संतप्ताः पर्वतोपमाः॥
काष्ठखण्डद्वयं दत्वा ग्रीवायाञ्च गले तथा । उदग्रमुखं बध्नन्ति केषाश्चिद्दृढपाशकैः॥
आरोप्यवृक्षशाखायां कांश्चिद्भूमौक्षिपन्तिच । उत्थापयन्तिभूमौचप्रक्षिपन्तिपुनःपुनः
एवं ते पापिनःसर्वे क्षुधितास्तृषितास्तथा । त्राहित्राहीति जल्पन्तो रुदन्ति यातनागृहे
युगकल्पान्तपर्यन्तं भुक्त्वा निरययातनाम् । नातिभुक्त्वा पापशेषे जायन्तेपापयोनिषु

पापयोनौ समुत्पन्ना भवन्ति व्याधिपीड़िताः ।
हीनाङ्गा अधिकाङ्गाश्च दुःखिनः पापसेवकाः ॥१६४॥

अपुत्रा अतिमूर्खाश्चपर हिंसापरायणाः । अल्पायुषोऽल्पमतयः कुभार्यापतयस्तथा ॥
नित्यं पापानि कुर्वन्ति कर्मणामनसागिरा । पुनः पापप्रभावेण निरयं यान्तिपूर्ववत्
तस्मात्पापं न कर्त्तव्यं कदाचिदपिसत्तमैः । नराणांकृतपापानां नरकान्नास्तिनिष्कृतिः
संक्षेपात्पापिनां दुःखं निरुक्तंद्विजसत्तम ! । सम्यग्वक्तुं कः क्षमोऽस्ति वर्षायुतशतैरपि
दुर्गतीनांततोदृष्ट्वामनुजानांकृतैनसाम् । आवांविमानमारुह्य नारायणपुरंगतौ ॥१६६॥
कल्पकोटिसहस्राणि भुक्त्वा भोगान्हरेर्गृहे । जातौवैराजवंशेऽस्मिन्विशुद्धे द्विजसत्तम

अत्रभुक्त्वाऽखिलान्भोगान्सर्वसंपत्समन्वितान् ।
सुखमृत्युं समासाद्य गन्तव्यं परमम्पदम् ॥ १७१ ॥
एकादशीव्रतसमं व्रतंनास्ति जगत्त्रये ।

अनिच्छयापिऽयत्कृत्वागतिरेवं विधाऽऽवयोः । एकादशीव्रतं ये तु भक्तिभावेनकुर्वते

न जाने किं भवेत्तेषां वासुदेवानुकम्पया । इति ते कथितं सर्वं पृष्टं ब्राह्मणसत्तम!॥
विष्णोर्दिवसमाहात्म्यं किमन्यच्छ्रोतुमर्हसि ॥१७४॥

व्यासउवाच ।

तस्यैतद्वचनं श्रुत्वा स विप्रः परमार्थवित् । एकादशीव्रते चिरं चकार सुदृढं निजम्
सराजाराजमहिषी चिरं भुक्त्वा वसुन्धराम् । अन्ते विष्णुपुरंगत्वा प्राप्तवन्तौपरंपदम्
व्रतराजस्य माहात्म्यं ये श्रृण्वन्तिपठन्तिच । पापजालैर्विनिर्मुक्ता लभन्तेहरसिन्निधिम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे एकादशीमाहात्म्यं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्विंशोऽध्यायः

## तुलसीमाहात्म्यवर्णनम्

सूत उवाच ।

एकादश्याः फलं श्रुत्वा सुप्रीतो जैमिनिस्ततः । कृताञ्जलिरुवाचेदंकृष्णद्वैपायनम्प्रभुम्

जैमिनिरुवाच ।

विष्णोर्दिनस्यमाहात्म्यंत्वत्प्रसादाच्छ्रुतंमया ।
तुलस्या ब्रूहिमाहात्म्यं श्रृण्वतांपापनाशनम् ॥२ ॥

व्यासउवाच ।

इन्द्राद्यैर्दैवतैः सर्वैस्तुलसी भगवत्यसौ । संसेव्या सर्वदा विप्र ! चतुर्वर्गफलप्रदा ॥
स्वर्गे मर्त्येच पाताले तुलसी दुर्लभा सताम् । चतुर्वर्गफलप्राप्तिं तस्यां भक्तिःकरोतिवै
यत्रैकस्तुलसीवृक्षस्तिष्ठत्यपि च सत्तम !। तत्रैव त्रिदशाः सर्वे ब्रह्मविष्णुशिवादयः
केशवः पत्रमध्ये च पत्राग्रे च प्रजापतिः । पत्रवृन्ते शिवस्तिष्ठेत्तुलस्याः सर्वदैव हि

लक्ष्मीःसरस्वतीचैवगायत्री चण्डिकातथा । सर्वाश्चान्या देवपत्न्यस्तत्पत्रेषु वसन्तिच
इन्द्रोऽग्निः शमनश्चैवनैरृतिर्वरुणस्तथा । पवनश्च कुबेरश्च तच्छाखायां वसन्त्यमी
आदित्यादिग्रहाः सर्वे विश्वेदेवाश्च सर्वदा । वसवो मुनयश्चैव तथा देवर्षयोऽखिलाः
कोटिब्रह्माण्डमध्येषु यानि तीर्थानि भूतले । तुलसीदलमाश्रित्य तान्येव निवसन्ति वै
तुलसीं सेवते यस्तु भक्तिभावसमन्वितः । सेवितास्तेन तीर्थाश्च देवा ब्रह्मादयस्तथा
छिन्दन्ति तृणजालानितुलसीमूलजानि ये । तद्देहस्थां ब्रह्महत्यां क्षिणत्तितत्क्षणाद्धरिः
ग्रीष्मकालेद्विजश्रेष्ठसुगन्धैः शीतलैर्जलैः । तुलसीसेचनं कृत्वा नरोनिर्वाणमाप्नुयात्
चन्द्रातपं वा छत्रं वा तस्यै यस्तु प्रयच्छति । विशेषतो निदाघेषु समुक्तः सर्वपातकैः
वैशाखेऽक्षतधाराभिरद्भिर्यस्तुलसीं जनः । सेचयेत्सोऽश्वमेधस्यफलंप्राप्नोतिनित्यशः
प्रसृतोदकमात्रेण तुलसीं यस्तु सेचयेत् । सोऽपि स्वर्गमवाप्नोति सर्वपापविवर्जितः
कदाचित्तुलसीं दुग्धैः सेचयेद्यो नरोत्तमः । तस्य वेश्मनि विप्रर्षे! लक्ष्मीर्भवतिनिश्चला
गोमयैस्तुलसीमूले यः कुर्यादुपलेपनम् । सम्मार्जनञ्च विप्रर्षे ! तस्य पुण्यफलं शृणु ॥
रजांसि तत्र यावन्ति दूरीभूतानि जैमिने !। तावत्कल्पसहस्राणि मोदते विष्णुना सह
प्रदीपं यस्तुसन्ध्यायांस्थापयेत्तुलसीतले । स यातिमन्दिरंविष्णोः कुलकोटिसमन्वितः
गोभ्यःश्वभ्यःखरेभ्यश्च मनुष्येभ्यश्च रक्षति । शिशुभ्यस्तुलसीं यस्तु तं रक्षेत्केशवःसदा
तुलस्यारोपणं यस्तु भक्तितः कुरुते नरः। स मृतः परमं मोक्षं प्राप्नोत्येव न संशयः॥
प्रभाते तुलसीं पश्येद्भक्तिमान्यो नरोत्तमः । सविष्णुदर्शनस्यैव फलंप्राप्नोतिचाऽक्षयम्
तुलसीं प्रणमेद्यस्तु नरो भक्तिसमन्वितः । आयुर्बलं यशोवित्तं सन्ततिस्तस्य वर्धते ॥
तुलसीस्मरणेनैव सर्वपापं विनश्यति । तुलसीस्पर्शनेनैव नश्यन्ति व्याधयो नृणाम्
योऽश्नाति तुलसीपत्रंसर्वपापहरंशुभम् । तच्छरीरान्तरस्थायि पापं नश्यति तत्क्षणात्
तुलसीकाष्ठसम्भूतां मालां वहति यो नरः । तद्देहे पातकं नास्ति सत्यमेतन्मयोच्यते॥
तुलसीपत्रगलितं यस्तोयं शिरसावहेत् । गङ्गायाः स्नानजं पुण्यं लभतेनाऽत्रसंशयः ॥
दूर्वाभिरक्षतैःपुष्पैर्नैवेद्यैस्तुलसींशुभाम् । समाराध्य नरो भक्त्या विष्णुपूजाफलंलभेत

येनाऽर्चिता भगवती तुलसी कदाचिन्नैवेद्यपुष्पवरधूपघृतप्रदीपैः ।

धर्मार्थकामपरमामृतदायिविप्राः किं तस्य विष्णुचरणापचितिप्रयोगैः ॥३०
स्थानेषु दोषरहितेषु सुरौघसेव्यामारोपयन्ति तुलसीं हरितुष्टिकर्त्रीम् ।
तुष्टो हरिस्त्रिजगतामधिपो मुरारिस्तेभ्यो ददाति परमं पदमाशु विप्र!॥३१
यज्ञं व्रतं च पितृपूजनमच्युतार्चां दानं यदन्यदपि कर्मशुभं मनुष्याः ।
कुर्वन्तिदोषरहितेतुलसीतले च तान्यक्षयाणि सकलानि भवन्ति नूनम् ॥
यद्धर्मकर्म कुरुते मनुजः पृथिव्यां नारायणप्रियतमां तुलसी विना च ।
तत्सर्वमेव विफलं भवति द्विजेन्द्र! पद्मेक्षणोऽपि न हि तुष्यति देवदेवः ॥
यात्रासु पश्यति शुभां तुलसीं पवित्रां यो भक्तिभावसहितोमनुजोहिनूनम्
यात्राफलं सकलमेव हरिप्रसादात्तस्याऽऽशु सिध्यति वचः सुदृढं ममैतत्
त्यक्त्वा सुगन्धि कुसुमं भुवनैकनाथो मन्दारकुन्दनलिनादिकमप्यनन्तः ।
गृह्णाति सद्गुणमयीं तुलसींप्रमोदैः शुष्कामपि प्रचुरपापविनाशदक्षाम् ॥
उत्पाट्य चैव तुलसीं भुवि निक्षिपन्ति पापाशया मृतलताभनिदानभूताम्
अज्ञानतो नरहरिस्तुलसीप्रियोऽसौ तेषां श्रियं हरति सन्ततमेव सत्यम् ॥
मूत्रंपुरीषं तुलसीतलेषु कुर्वन्ति ये वै सततं मनुष्याः ।
देवाश्रये सञ्चितपातकानां तेषां हरत्याशु हरिर्धनानि ॥३७ ॥

नारायणस्य पूजार्थंचिनोमित्वां नमोऽस्तु ते । कुसुमैःपारिजाताद्यैर्गन्धाद्यैरपिकेशवः त्वयाविनानैतितृप्तिंचिनोमित्वामतःशुभे !। त्वयाविनामहाभागे समस्तंकर्म निष्फलम् अतस्तु तुलसी देवी चिनोमि वरदा भव । चयनोद्भवदुःखं ते यद्देवि! हृदि जायते ॥ तत्क्षमस्वजगन्नाथेतुलसीत्वांनमाम्यहम् । कृताञ्जलिरिमान्मन्त्रान्पठित्वावैष्णवोजनः करतालद्वयं दत्त्वा चिनोति तुलसीदलम् । यथा न कम्पते शाखा तुलस्याद्विजसत्तम! पत्रस्य चयने देवी भग्नशाखा यदा भवेत् । तदा हृद्व्यथा विष्णोर्जायते तुलसीपतेः शाखाग्रात्पतितं भूमौ पत्रं पत्रं पुरातनम् । तेनाऽपि पूज्यो गोविन्दो मधुकैटभमर्दनः

कोमलैस्तुलसीपत्रैर्योऽर्चयेदच्युतं प्रभुम् ।
सर्वं स लभते शीघ्रं यद्यदिच्छति चेतसा ॥ ४५ ॥

जैमिनिरुवाच ।

तुलसीवृक्षसदृशः को वृक्षोऽस्तिद्विजर्षभ !। तमहं ज्ञातुमिच्छामिब्रूहिसत्यवतीसुत! ॥

व्यास उवाच ।

यथाप्रियतमाविष्णोस्तुलसी सततं द्विज !। तथाप्रियतमा धात्रीसर्वपापप्रणाशिनी ॥
तुलसीवृक्षमासाद्ययायास्तिष्ठन्तिदेवताः । आमलक्यास्तलेतास्तानिवसन्ति द्विजोत्तम ॥
गङ्गादीनि च तीर्थानि तत्रैव द्विजसत्तम !। विष्णुप्रियतमा धात्री पवित्रा यत्र तिष्ठति
अशुभंवाशुभावाऽपियत्कर्माऽऽमलकीतले । क्रियतेमानवैर्विप्रभवेत्तत्सत्यमक्षयम् ॥
पवित्रैर्नूतनैः पत्रैर्धात्र्या यः पूजयेद्धरिम् । समुक्तः पापजालेनसायुज्यंलभतेहरेः ॥५१॥
धात्री च तुलसी देवी न तिष्ठेद्यत्रजैमिने । स्थानंतदपवित्रंस्यान्नच क्रियाफलं लभेत्
नतिष्ठत्याश्रमे यस्य धात्री च तुलसीशुभा । तेनकर्म कृतं सर्वं नूनंभवतिनिष्फलम् ॥
धात्र्यातुलस्याहीनं च निलयंयस्यभूसुर !। अलक्ष्मीः पातकं सर्वं कलिश्चतेनतोषिताः
स्थानेयस्मिन्द्विजश्रेष्ठ!न धात्री तुलसी न च । श्मशानतुल्यंस्थानंतद्विज्ञेयंतत्त्वदर्शिभिः॥
धात्रीचतुलसीयत्रतिष्ठेत्तत्राखिलाः सुराः । नधात्रीतुलसीयत्रतत्रैवाखिलपातकम् ॥
धात्रीफलस्रजंयस्तुपापहर्त्रीवहेद्बुधः । तस्याऽऽश्रित्यतनुंविष्णुःसदातिष्ठेच्छ्रियासह
धात्रीकाष्ठस्यमालां च धारयेन्मतिमान्नरः । तस्यदेहंसमाश्रित्य तिष्ठन्ति सर्वदेवताः ॥
धात्रीफलस्रजंगृह्णन्यत्कर्मकुरुतेनरः । तत्सर्वमक्षयं प्रोक्तंशुभंवायदि वाऽशुभम् ॥५६ ॥
यस्तुधात्रीफलंभुङ्क्ते मानवोऽखिलतत्त्ववित् । तद्देहाभ्यन्तरस्थायीसर्वंपापंविनश्यति
धात्रीफलमयीमालां यो दद्याद्द्विजसत्तम ! । ब्रवीमिशृणुमाहात्म्यंसर्वपापहरंपरम् ॥
श्मशानेऽपियदामृत्युस्तस्य स्याद्दैवयोगतः । गङ्गामरणजं पुण्यंसंप्राप्नोति न संशयः
तं दृष्ट्वा पापिनः सर्वे पापजालैः सुदारुणैः । सद्यएव प्रमुच्यन्ते जन्मकोटिकृतैरपि ॥
नित्यंगृह्णातिविप्रेन्द्रयोधात्रीफलकर्दमम् । दिने दिने लभेत्पुण्यं संप्राप्नोति न संशयः॥
धात्रीतरुंचयोहन्तिसर्वदेवागणाश्रयम् । स ददातिहरेरङ्गेघातंनास्त्यत्रसंशयः ॥६५ ॥
सर्वदेवमयीधात्रीविशेषात्केशवप्रिया । सम्यग्वक्तुं गुणंतस्या ब्रह्मणाऽपिनशक्यते ॥

धात्र्यास्तुलस्या विदधाति भक्तिं यो मानवो ज्ञातसमस्ततत्त्वः ।
भुक्त्वा च भोगान्सकलांस्ततोऽन्ते स मुक्तिमाप्नोति हरेः प्रसादात् ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे धात्रीतुलस्योर्माहात्म्यं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

# पञ्चविंशोऽध्यायः

## अतिथिपूजनप्रसङ्गे लोमशब्राह्मणकथावर्णनम्

व्यास उवाच ।

[माहात्म्यंतुलसीधात्र्याःप्रोक्तमेतत्समासतः।जैमिने द्विजशार्दूल!किमन्यच्छ्रोतुमिच्छसि]

जैमिनिरुवाच ।

भूयएवमहाभाग!तुलस्याः पापनाशनम् । अतिथेःपूजनस्याऽपिमाहात्म्यंब्रूहिविस्तरात्

सूत उवाच ।

ततोव्यासोमहातेजास्तुलस्या द्विजसत्तम !। माहात्म्यंवक्तुमारेभेश्रृण्वतांपापनाशनम्

व्यास उवाच ।

इयं साक्षान्महालक्ष्मीस्तुलसीभगवत्प्रिया । तस्मादिमां न पश्यन्तिवृक्षज्ञानेनजैमिने!॥

सदैव तुलसींमर्त्योयथैव भुवि सेवते । तथैव सेन्द्रा विबुधाः सेवन्ते तं सुरालये॥४॥

परब्रह्मस्वरूपेयं तुलसी यत्र तिष्ठति । तत्रैव कुशलं सर्वं सुदृढं प्रोच्यते मया ॥५॥

प्राप्नोतिमृत्युकालेयस्तोयंपातकवानपि । तुलसीपत्रगलितंसयातिहरिसन्निधिम् ॥६॥

तुलसीमृत्तिकापुण्ड्रं योमृत्युसमयेवहेत् । समुक्तःसकलःपापैःपुरंगच्छति चक्रिणः॥७॥

यस्यस्यात्तुलसीपत्रंमुखेशिरसिकर्णयोः । मृत्युकालेद्विजश्रेष्ठतस्यस्वामी न भास्करिः

[ इतिहासमहंवच्मि तुलस्यागुणसंयुतम् । आकर्णय द्विजश्रेष्ठ ! चतुर्वर्गफलप्रदम् ॥

आर्यावर्त्ते द्विजः कश्चित् पवित्रकुलसम्भवः । ]

पवित्रनामा सुमतिर्बभूव परमार्थवित् । बभूव ब्राह्मणी तस्य बहुलानामधारिणी ॥९॥

सद्वंशप्रभवासाध्वीपतिसेवापरायणा । अनायन्तमतिर्नामतत्रैकोऽस्तिद्विजोत्तमः॥१०॥

सख्यंतेनपवित्रोऽसौचकारद्विजसेविना । ततोऽनपत्यपतिना कथालापेनसत्तम ॥ ११

उपविष्टःपवित्रोऽसौ स्नेहादेकवरासने । अत्रान्तरेमहातेजालोमशोनामसद्द्विजः ॥१२॥

कथयन्तौकथाश्चित्राः समागत्यददर्शतौ । अथतंलोमशंविप्रंविप्रावुत्थायपीठतः॥१३॥

पाद्यार्घ्याचमनीयाद्यैः पूजयामासतुश्चतौ । सुप्रीतोलोमशस्ताभ्यांनारायणपरायणः ॥

उवासब्राह्मणश्रेष्ठ आसने कीर्तयन्हरिम् । आसनस्थं महात्मानं लोमशन्तं कृताञ्जलिम्

पवित्रानायन्तमतीभक्त्याप्राहतुरुत्तमौ ।

पवित्रानायन्तमतीऊचतुः ।

भगवन्सर्वधर्मज्ञत्वत्पादयुगलाम्बुभिः ॥ १६ ॥

सद्भिर्ग्राह्यैराश्रमोऽयंपूतोऽभून्नूनमावयोः । कृतानियानिपापानिआवाभ्यांमोहतः पुरा॥

तानिसर्वाणिनष्टानित्वत्पादयुगदर्शनात् । भवान्नारायणः साक्षात्पूजनीयोऽमरैरपि ॥

सम्यक्ते पूजनंकर्तुं किमावांमानुषौक्षमौ । अतिथेर्याकृतापूजातेऽस्माभिर्निजशक्तितः॥
अनया भव सुप्रीतः क्षमस्वदोषमावयोः । इत्युक्त्वातौ महात्मानौतस्यगन्तोः पदद्वये
निपेततुर्द्विजश्रेष्ठ ! वयस्यौ गृहमेधिनौ ॥ २० ॥

व्यास उवाच ।

तयोर्भक्त्यासुसंतुष्टोलोमशो मुनिरब्रवीत् । युवांविनयिनांश्रेष्ठौ द्विजाग्र्यौ धर्मतत्परौ ॥
आप्यायितोस्मिसुतरांयुवयोर्विनयोक्तिभिः।साक्षाद्ब्रह्माशिवोविष्णुरतिथिःप्रोच्यतेबुधैः
तस्मिन्नेतावती भक्तिर्युवयोरस्तुमङ्गलम् । आराधितोऽस्म्यहसम्यगतिथिर्भूरिभोजनैः॥

व्यास उवाच ।

ततउत्थाय तौविप्रौ तत्पादकमलद्वयम् । भूयोऽपितंनमस्कृत्यप्राहतुर्लोमशं मुनिम् ॥

ब्राह्मणावूचतुः ।

ब्रह्मन्नतिथिपूजाया माहात्म्यंवक्तुमर्हसि । यांकृत्वाप्राप्यतेमुक्तिर्दुःखलभ्याऽपिमानवैः॥
कोऽतिथिःप्रोच्यतेलोकेतस्यपूजाचकीदृशी।आतिथेयोऽतिथिश्चैमौलभेतेकामुभोगतिम्

लोमश उवाच ।

वानप्रस्थो ब्रह्मचारीभिक्षुश्चैषांप्रपूजनात् । निरुच्यते गृहं श्रेष्ठमाश्रमेषु चतुर्ष्वपि ॥
चतुराश्रममध्ये तु प्रधानागृहिणोमताः । तैश्चाऽतिथीनांकर्तव्या पूजाभक्तिसमन्वितैः
गृहीणां परमो धर्मःप्रोक्तश्चाऽतिथिपूजनम् । आश्रमाचारतोभ्रष्टास्तद्धनेगृहिणोमताः ॥
वहन्त्यतिथिपूजायांदक्षतांगृहिणोयदि । तदाप्रयोजनंतेषांकिमन्यैः पुण्यकर्मभिः ॥३०
यस्य न श्रूयते नाम न च गोत्रं न च स्थितिः ॥ ३० ॥
अकस्माद्गृहमागच्छेत्सोऽतिथिःप्रोच्यतेबुधैः।ब्राह्मणाःक्षत्रियावापिवैश्यावावृषलास्तथा
गृहागताः पूजिताश्च विष्णुवत्तत्त्वदर्शिभिः । चाण्डालप्रमुखा येऽन्येर्हीनवर्णसमुद्भवाः
विष्णुवत्पूजितव्यास्ते पाद्यार्घ्यैर्भूरिभोजनैः । समागतेष्वतिथिषु प्रयाणं कुरुते गृही
अपि स त्वरया दद्यात्पाद्यार्घ्यादीनि चद्विजः । कुर्याच्चकुशलप्रश्नं वचनैः कोमलाक्षरैः
कारयेद्भोजनं वापि दिव्यैरन्नैर्मुदा गृही । सुखदे मन्दिरे तस्य शयनं कारयेद्बुधः ॥
प्रातर्जिगमिषुं भक्त्या समागन्तुं विसर्जयेत् । यदि कर्मविपाकेन वित्तशून्योगृही भवेत्
आतिथ्येनातिथिःपूज्यस्तदहंवच्मि सत्तमौ । समागतेष्वतिथिषुभक्त्यादद्यात्तृणासनम्
तृणाभावेन वै ब्रूयाद्भूमौ तिष्ठेतिभक्तितः । पादप्रक्षालनार्थं तु दद्यादुदकमुत्तमम् ॥
ततो मधुरया वाचा पृच्छेच्च कुशलादिकम् । फलादिकं ततो दद्याद्भक्त्याभोजनहेतवे
तदभावेन मतिमान्स्वदारिद्र्यं प्रकाशयेत् । वदेच्चाऽहं महापापी दरिद्रप्रवरोऽतिथे ! ॥

कर्त्तुमिच्छामिभक्तिते दैवं तत्र विरोधकम् । अनेनविधिनादीनः सत्कृत्यातिथिपूजनम्
स्वाचारात्पतितोनस्याद्यथोक्तंफलमाप्नुयात्।अनर्चितोतिथिर्यस्यगच्छेद्वैगृहिणोगृहात्
जन्मकोट्यर्जितं पुण्यं तस्य गच्छति संक्षयम् । एकएवाऽतिथिर्येनभक्तिभावेन पूज्यते
हरेत्तस्य हरिःसद्यः पातकं कोटिजन्मजम् । सत्यंवच्मि हितंवच्मि दृढंवच्मि प्रयत्नतः
विनाऽतिथिसपर्याभिर्गृहिणोनास्तिवैगतिः । सत्यं सत्यं पुनःसत्यमागन्तुःपूजयाविना
गतिर्नास्त्येवनास्त्येवनास्त्येवगृहधर्मिणाम् । ज्ञातिधर्म इतिख्यातो वल्लवोद्वापरेयुगे
बभूव सर्वधर्मज्ञः पत्नीश्रीवल्लभाह्वया । तेन सर्वाणि कर्माणि कृतानि ज्ञातिसेविना
सौराष्ट्रे वसतिं चक्रे तया सह सभार्यया । तत्र दुर्ग्रहसंचारा द्वादशाब्दं च वासवः
न ववर्षाऽम्बुतेनासीद्दुर्भिक्षंसुमहाद्द्विज !। तस्मिन्महतिदुर्भिक्षे लोकास्तद्देशवासिनः
बभूवुर्दुःखिताः सर्वे मर्यादामपितत्यजुः । ज्ञानभद्रो महायोगी युगेद्वापरसञ्ज्ञके ॥
दुर्भिक्षहृतसंपत्तिर्बभूवाऽत्यन्तदुःखितः । क्षुधाकुलान्सुतान्दृष्ट्वा दारांश्च द्विजसत्तमौ ॥
फलमूलादनार्थाय जगामोपत्यकां गिरेः । गिरेरुपत्यकाप्रान्ते चिरायुः स बुभुक्षितः ॥
कूष्माण्डफलमेकं च लेभे ब्राह्मणसत्तमौ । समादायफलं तच्च हर्षितोऽसौनिजालयम्
जवैर्जगाम विप्रेन्द्रो ज्ञानभद्रो महायशाः । एतस्मिन्नन्तरे विप्र! मेघैर्नीलपदैरिव ॥
आवृते गगने वृष्टिर्महासारैर्बभूवह । स मुनिश्च तया वृष्ट्या प्लावितास्विलविग्रहः ॥

वनाद्वनचरः कश्चिच्छीतार्तश्चाययौगृहम् ।

[ प्रज्वाल्यपावकं चक्रे गोपस्तच्छीतवारणम् । गतशीतंतमतिथिंववन्देशिरसाचतम् ]

दृष्ट्वाऽतिथिं तु शीतार्तं ववन्दे शिरसा ततः ॥ ५६ ॥

ददौ तृणासनं भक्त्यातस्मै पाद्यादिकं ततः । ततो मधुरया वाचा तेनैवाऽतिथिनासह
तस्थौ स्वस्थेन मनसा प्रश्नालापं प्रकुर्वता । गृहिण्यासह गोपेन स्वामिसेवासुदक्षया
ततः कूष्माण्डकं नव्यं पक्वमत्यन्तयत्नतः । संप्राप्यहर्षितासाध्वीददौभागंविधाय सा
अथाऽसौ दुर्बलो गोपो दिनविंशमुपोषणात् । आतिथेयोनिजंभागंददौचाऽतिथयेमुदा
ततस्तद्गृहिणी साध्वी स्वामिभक्तिपरायणा । ददौसापिनिजंभागंतस्मैचातिथयेमुदा
अथाऽतिथेस्तयोस्तत्र दम्पत्योः सुमहात्मनोः । अभूद्भागद्वयंभुक्त्वासुप्रीतोद्विजसत्तम

विष्णुवत्पूजितस्ताभ्यांसोऽतिथिर्दृढभक्तितः। विश्राम्यरात्रौतत्रैवप्रातःस्नात्वाचिरंययौ
गतैवमुपवासेनदिनानामेकविंशतिः। दम्पती तौ महात्मानौ पञ्चतां ययतुस्ततः ॥
तेन पुण्यप्रभावेण दम्पती तौ महाशयौ। प्रापतुर्विष्णुसायुज्यं दुर्लभं योगिनामपि
तयोः पुण्यप्रभावेण विहितातिथिपूजया। तस्मिन्राज्ये तु दुर्भिक्षंविनष्टमभवत्ततः
अत्यन्तसुखिनो लोकाःशोकव्याधिविवर्जिताः। धनधान्यादिसम्पन्नाबभूवुर्धर्मतत्पराः
विनष्टादस्यवस्तत्र नृपोऽभूल्लोकपालकः। निजाचाररता लोका जलदाः कामवर्षिणः
पूर्वजाः कोटिपुरुषास्तथैवाऽपरजास्तयोः। तेनैवकर्मणा मुक्ति जग्मुः पापविवर्जिताः
निर्दोषा धनसम्पन्नाः सर्वलोकैकपूजिताः। शोकव्याधिविहीनाच ववृधेसन्ततिस्तयोः

लोमश उवाच।

आगन्तुपूजामाहात्म्यंसेतिहासंमयोदितम्। युवयोःप्रीतयोर्विप्रौकिमन्यच्छ्रोतुमिच्छथ

व्यास उवाच।

इतिब्रुवति वैतस्मिँल्लोमशेतपसांधने। कालग्रस्तःकृष्णआखुस्तत्रोत्तस्थौबिलान्निजात्
तमुत्थितंबिलात्कृष्णमूषकं क्रोधविह्वलः। पवित्रस्तत्रचोत्तस्थौ वदन्निति मुहुर्मुहुः ॥
अयं पापाशयो दुष्टो मूषकोनिशिचाऽऽश्रमम्। खनते तीक्ष्णदन्तौघैर्गृहद्रव्यंचकृन्तति
सर्वेषामेव वर्णानां कृपा श्रेष्ठा प्रकीर्त्तिता। सा च सर्वेषु कर्तव्या न च दुष्टेषु जन्तषु
इत्युक्त्वाऽसौ मूषिकं तंद्विजश्रेष्ठ! कृतैनसम्। नाराचेनातितीक्ष्णेनप्राप्तकालंजघान ह
स्रवच्छोणितधाराभिः प्लाविताङ्गः स मूषकः। पपात भूमौ विप्रर्षे!व्यथया हतचेतनः
आखौनिपतितेतस्मिन्दयालुर्द्विजसत्तमः। हाहाकारं ततः कृत्वा समुत्तस्थौ जवेन सः
निजकर्णात्समानीय तुलसीपत्रमुत्तमम्। तस्याखोर्वदने शीर्षे कर्णयोश्च प्रदत्तवान् ॥
मातस्तुतुलसीदेवि! गोविन्दाह्लादकारिणि !। अस्याखोःकृतपापस्यकुरुत्वंगतिमुत्तमाम्
इत्युक्त्वा स द्विजश्रेष्ठ! सर्वलोकोपकारकः। हरेनारायणानन्तइत्युच्चैरकरोद्ध्वनिम्
तुलसीपत्रसंस्पर्शान्मूषकोवीतकल्मषः। श्रवणाद्धरिनाम्नश्च मुक्तोऽभूद्भवबन्धनात् ॥
ततो दूता महाविष्णोः सर्वलक्षणसंयुताः। आजग्मुः सरथाःशीघ्रंनेतुंतंगतकल्मषम् ॥
समारुह्य रथं दिव्यं विष्णुदूतगणैर्वृतः। जगाम परमं स्थानं मूषको द्विजसत्तम!॥८४
युगकोटिसहस्राणि स्थित्वा नारायणाश्रमे। ज्ञानमासाद्य तत्रैव मोक्षमाखुर्जगामसः

व्यास उवाच ।

माहात्म्यंतुलसीदेव्याः कथितंते द्विजोत्तम !। इदानींब्रूहिकिंश्रोतुंमहाभाग!त्वमिच्छसि

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे अतिथिमाहात्म्यं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

# षड्विंशोऽध्यायः

## युगधर्मनिरूपणपूर्वकं पुराणमाहात्म्यवर्णनम्

जैमिनिरुवाच ।

कलौयुगेमहाभाग।समायातेसुदारुणे । भविष्यन्ति जनाः सर्वेकीदृशास्तद्वदस्व मे ॥ १॥

व्यास उवाच ।

आद्यंसत्ययुगं प्राहुस्तत्रविप्रादयोजनाः । नारायणार्चनपराः शोकव्याधिविवर्जिताः ॥
सत्योक्तिभाषिणः सर्वेसदयादीर्घजीविनः । धनधान्यादिसम्पन्ना हिंसादम्भविवर्जिताः
परोपकरणाश्चैव सर्वशास्त्रविदस्तथा । एवंविधाः सत्ययुगेसर्वेलोका द्विजोत्तम ! ॥
राजधर्मग्राहिणश्चभूपालाजनपालनाः । अहोसत्ययुगस्यास्तिकोव्याख्यातुंगुणं क्षमः ॥
अधर्मोच्चारणं यत्र जनाःकेऽपिनकुर्वते । त्रेतायुगेसमायाते धर्मः पादोनतांगतः ॥ ४ ॥
अल्पशोकान्वितालोकाःकेचित्केचिदधाश्रयाः। विष्णुध्यानरतालोकायज्ञदानपरायणाः
वर्णाश्रमाचाररताः सुखिनः स्वस्थचेतसः । क्षेत्रभूमिकृतः शूद्राः सर्वे ब्राह्मणसेविनः ॥
ब्राह्मणाश्चमहात्मानोवेदवेदाङ्गपारगाः । प्रतिग्रहनिवृत्ताश्च सत्यसन्धाजितेन्द्रियाः ॥
तपोव्रतरतानित्यं दातारो विष्णुसेविनः । त्रेतायुगस्याऽवसानेद्वापरेयुगआगते ॥१०॥
द्विपादहीनोधर्मःस्यात्सुखदुःखान्वितानराः। केचित्केचित्पापरताःकेचित्केचिच्चधर्मिणः
केचित्केचिद्गुणैर्हीनाःकेचित्केचिन्महागुणाः।अत्यन्तदुःखिनःकेचित्केचिच्चसुखिनस्तथा
प्रतिग्रहे ब्राह्मणश्च कदाचित्कुरुतेस्पृहाम् । भूभुजैर्धनलोभेनकदाचित्पीड्यते प्रजा ॥
विष्णुपूजापराविप्राः शूद्राश्च द्विजसेविनः । युगेयुगेयदाधर्मोययौपादोनतांद्विज!॥१४॥
तदा व्यासो विष्णुरूपोवेदभागंचकारह । कलौयुगेचविप्रेन्द्र!सर्वपापैकमन्दिरे ॥ १५॥
एकपादोभवेद्धर्मः सर्वपापरताजनाः । ब्राह्मणाः क्षत्रियावैश्याः शूद्राः पापपरायणाः ॥

अत्यन्तकामिनः क्रूराभविष्यन्तिकलौ युगे । वेदनिन्दाकराश्चैव द्यूतचौर्यकरास्तथा ॥
विधवासङ्गलुब्धाश्चभविष्यन्तिकलौयुगे । वृत्त्यर्थं ब्राह्मणाः केचिन्महाकपटधर्मिणः ॥
सर्वे स्त्रैणा भविष्यन्ति मादकद्रव्यसेविनः । सदा स्त्रीयोनिनिरताः परद्रव्यंहरन्ति च
परान्नलोलुपा नित्यं तपोव्रतपराङ्मुखाः । पाखण्डसङ्गवद्धाश्च भविष्यन्ति कलौ युगे
रक्ताम्बराभविष्यन्तिब्राह्मणाःशूद्रधर्मिणः । कलौयास्यन्तिनिर्वृत्ताउत्तमाअतिनीचताम्
नीचाश्च धनसम्पन्ना यास्यन्त्युच्चपदं प्रति ।
प्रदास्यन्त्युपकारिभ्यो दानानि सकला जनाः । यत्नादपिचनेष्यन्तिवृषलाविप्रवर्त्तनम्
मित्रस्नेहाद्वदिष्यन्ति कूटसाक्ष्यं कलौ जनाः । अधर्मबुद्धिलपना धर्मबुद्धिविलासिनः
परोक्षनिन्दकाःक्रूराः सम्मुखेप्रियवादिनः । साध्वीवादंवदिष्यन्तिभर्तारं पुंश्चलीस्त्रियः
परस्त्रीहिंसकाश्चैवगोत्रविक्रयिणोद्विजाः । कन्याविक्रयिणश्चैवभविष्यन्ति कलौयुगे
स्त्रीजिताःपुरुषाःसर्वेस्त्रियोऽप्यत्यन्तचञ्चलाः। कलौयुगेभविष्यन्तिकलौमर्त्यादुराशयाः
अल्पसस्यावसुमतीमेघाःस्वल्पोदकास्तथा । अकालवर्षिणश्चाऽपिभविष्यन्तिकलौयुगे
कलौविड्भोजिनोगावःस्वल्पक्षीराश्चजैमिने !। घृतहीनं च तत्क्षीरं भविष्यतिनसंशयः
आत्मस्तुतिपरा लोकाः परनिन्दापरायणाः । भविष्यन्तिचखर्वाङ्गाबालाबह्वन्नभोजनाः
पितृयज्ञं करिष्यन्ति दम्भार्थंब्राह्मणाःकलौ । सर्वेवचःस्नेहिनःस्युर्यावत्कार्यंनसिध्यति
नरान्धर्मपरान्दृष्ट्वा सर्वे चोपहसन्ति वै ॥ ३१ ॥
वर्धन्तेऽधर्मतो लोकास्तस्मात्पापरता जनाः । दशद्वादशवर्षेच समूलोऽप्येति संक्षयम्
जलस्येव भविष्यन्ति यथा वर्षासुवृद्धयः । ततोलोका भविष्यन्ति कलौगलितयौवनाः
पञ्चमेवाऽपि षष्ठे वा वर्षे स्त्रीगर्भधारिणी । बह्वपत्याश्च पुरुषा भविष्यन्त्यतिदुःखिनः
नेतुकामाश्चसर्वेऽपिदातुकामानकेऽपिच । कलौम्लेच्छाभविष्यन्तिराजानःपापतत्पराः
एकवर्णा भविष्यन्तिविषयार्थंकलौजनाः । कलेःप्रथमसन्ध्यायांहरिंनिन्दन्ति मानवाः
कलेर्मध्ये न पश्यन्ति हरेर्नामानि केवलम् । ब्राह्मणाःक्षत्रियावैश्यावृषलाश्चकलौयुगे
एकवर्णा भविष्यन्ति वर्णाश्चत्वारएव च । यदायदा द्विजश्रेष्ठ! हानिःसुकृतिनांभवेत्
वृद्धिश्च पापिनां नृणां ज्ञेयावृद्धिस्तदा कलौ । यद्यप्ययंकलिर्घोरोमयाप्रोक्तोद्विजोत्तम
तथाप्यस्ति महानस्यगुणो गुणवताम्वर ! । सत्ये द्वादशभिर्वर्षैर्भवेत्पुण्यस्य साधनम्

तदर्धेन च त्रेतायां मासेन द्वापरे भवेत् । अहोरात्रेण वै विप्र!भवेत्तच्चकलौयुगे ॥४१॥
तस्मात्कलियुगेनृणांदिनेनैवोत्तमागतिः । द्वादशाब्दैर्युगेऽन्यस्मिन्हरिमभ्यर्च्ययत्फलम्
तत्फलं लभते मर्त्यो हरिमुच्चार्य वै कलौ । हरेर्नामैकमप्यत्र कलौ वदति यो नरः ॥
कलिर्न बाधते तं च सत्यं सत्यं न संशयः ॥ ४३ ॥

जैमिनिरुवाच ।

मनः शुद्धिविहीनत्वात्समस्तं कर्म निष्फलम् । इतिपूर्वंत्वया प्रोक्तं मनोविस्मयदं मम
कलौ सर्वे भविष्यन्ति मनःशुद्धिविवर्जिताः । तेषां यथा भवेत्कर्मसकलं ब्रूहि तद्गुरो

व्यास उवाच ।

यत्किंचित्कुरुते कर्म मर्त्यो धर्मं कलौयुगे । तदर्पयेन्महाविष्णौ भक्तिभावसमन्वितः
विष्णौ समर्पितं कर्म सर्वमेवाऽक्षयं भवेत् ॥ ४७ ॥

व्यास उवाच ।

इतिते कथितं सर्वं वृत्तं ब्राह्मणसत्तम !। यच्छ्रुत्वा भक्तिभावेन नरो मोक्षमवाप्नुयात्

सूत उवाच ।

एवंप्रबोधितस्तेन जैमिनिः परमात्मना । क्रियायोगरतोभूत्वा जगामपरमंपदम् ॥४६॥
इमंक्रियायोगसारंव्यासेनोक्तंमहात्मना । ये पठन्ति जनाभक्त्या शृण्वन्ति च मुमुक्षवः
तेसर्वेपातकैर्घोरैर्बहुजन्मार्जितैरपि । विमुक्ताः परमां मुक्तिं लभन्ते नाऽत्रसंशयः॥५१॥
यत्रदिष्टं पठन्त्येतच्छृण्वन्ति च मुमुक्षवः । लभन्ते तत्तदेवाऽऽशुप्रसादात्कमलापतेः ॥
श्लोकार्धंश्लोकमेकंवाश्लोकपादमथापिवा । नरः पठित्वाश्रुत्वाच लभतेवाञ्छितंफलम्
लिखित्वालेखयित्वावा यःशास्त्रमिदमर्चयेत् । सविष्णुपूजनस्यैव फलं प्राप्नोतिमानवः

इदमतिशयगुह्यं निःसृतं व्यासवक्त्राद्रुचिरतरपुराणं प्रीतिदं वैष्णवानाम् ।
चिरममरवराद्यैर्वन्दिताङ्घ्रेर्मुरारेः सकलभुवनभर्त्तुश्चक्रिणःप्रीतयेऽस्तु ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां क्रियायोगसारखण्डे व्यास-जैमिनिसम्वादेयुगधर्मनिरूपणपूर्वकंपुराणमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः॥२६॥

शुभम्भवतु । श्रीवेङ्कटेश्वरार्पणमस्तु